# किरातार्जुनीयम्

महाकवि-भारविप्रणीतम्

—o—

महामहोपाध्याय-कोलाचलमल्लिनाथसूरिविरचितया घण्टापथसमाख्यया व्याख्यया तथा अन्वय-वाच्यपरिवर्त्तन-दोषादिनिर्देश-हिन्दी-वङ्गभाषानुवाद-श्लोकानुक्रमणिका-विस्तृतकविजीवन-पौराणिकेतिवृत्त-भूगोलचित्रैर्विवरणा-दिभिश्च परिशोभितम्

साहित्याचार्य्योपाधिकेन

श्रीमता रेवतीकान्तभट्टाचार्य्येण

सम्पादितम्

सांख्यतीर्थोपाधिक-

श्रीमता रोहिणीकान्तसिद्धान्तवागीशेन

परिशोधितम्




कलिकातातः—५८ संख्यक-कर्णओयालिस्ष्ट्रीट्स्थित-संस्कृतपुस्तकालयात्

श्रीअखिलबन्धुभट्टाचार्य्येण प्रकाशितम्

१३३२ वङ्गाब्दे



C. m V. ... Mahajan

## निवेदम् :—

दीर्घदिनादारभ्य मुद्रणयन्त्राधीने नीते किल किरातार्जुनीये तमिमं ग्रन्थं सुबहुचेष्टयापि यथासमयं वहिरानेतुं नाशकद् अयं खलु वराकः। परमद्य दिष्ट्या महामहिमकालसीमया तदेव कार्य्यं सुसमाप्तिमुपगतम्। अतो भूयमेव मौलिना तमेवानादिनिधनाननुगतं सुचिरं महान्तं कालमभ्यर्थयामहे, विदधातु स एव चिरकल्याणं प्रभूतामपि च शान्तिं मदीयप्रियदर्शनानां पाठार्थिनां तथा मदेकान्तानुरक्तानां सामाजिकानां ज्ञानविवृद्धये सुखप्रतिपत्तये च सम्यक्।

परमस्य तावद्ग्रन्थस्य सौन्दर्य्यार्थं तथा पाठसङ्गत्यर्थञ्च विभिन्नदेशमुद्रिते द्वे, अस्मद्देशजैकं, हस्तलिखितपञ्चमसर्गावधि प्राप्तमेकमित्येतावन्ति पुस्तकानि संगृह्य यथायथं मूलस्य टीकायाश्च पाठं सङ्गमय्य भ्रान्त्यादिदूषणं सर्वथास्य दूरीकर्त्तुं संयतामहे। अस्मिन् प्रथमतः मूलश्लोकः, ततः श्लोकानामन्वयः, वाच्यान्तरः, मल्लिनाथेनानुक्तानामलङ्काराणां सन्निवेशनं, दोषस्य समुल्लेखः, तत्परिहारः, मल्लिनाथटीका. हिन्दी-वङ्गभाषयानुवादः, प्रयोजनानुरूपे स्थानविशेषे व्याकरणादीनां समुल्लेखः, गवेषणानुप्राणिता कविकथा, काव्यकथा, सर्गकथा, भूगोलस्थानकथा, पौराणिकस्थानकथा, महाभारतीयकथा, बहुवत्सरगृहीतपरीक्षाणां प्रश्नाः, श्लोकानुक्रमणिकादीन् विषयान् संयोज्यात्मानमिदानीं मुक्तमनुभवामहे। मन्यामहे च एतस्मिन् सम्यगधीते पर्य्यालोचिते वा आर्य्यावर्त्तादिभूखण्डमधिवसतां तथा वङ्गीयानामपि सुकुमारमतीनां छात्राणामतःपरं किरातविषये कोऽपि ज्ञातव्यशेषः मनागपि भवेदिति मामकानां विश्वासभूमिः। इतःपरं सकलशास्त्रनिकषायमानाः महान्तः, असेचनकाः मानवका एव सुष्ठु प्रमाणम्।

परिशिष्टे च वक्तव्यं यद्यपि बहुलमायासमङ्गीकृत्य सर्वथास्य विशुद्धत्वप्रतिपादने यथामतिदत्तप्रयत्नोऽयं जनः, तथाप्ययमप्यस्ति वक्तव्यशेषः यदस्य संशोधनार्थमनेकशः स्थलमन्येषामवलोकनाय कारणशतप्राबल्येन दातुं प्राभवम् प्राक्। अतः स्थलविशेषे स्खलनशङ्कयाकुलीभूय सविनयमभ्यर्थये साम्प्रतं सहृदयसभ्यवृन्दं यच्चात्र स्खलितं दृश्येत तत्कृपया विज्ञापयितव्यम् भवद्भिरिति।

कलिकाता,<br>१३२३ वङ्गाब्दीया<br>रासपूर्णिमा

विधेय—<br>श्रीरेवतीकान्तस्य



## कविकथा :—

सन्ति तावदिह हि भारते वर्षे बहवः काव्यग्रन्थाः, बहवश्च तद्-कवयः। तेषु किलार्थगौरवपूर्णवचनरचनपटीयसो भारवेः काव्यं कवित्वञ्च अन्यतमे। ते च खलु सर्व्वथा समाकर्षतः सुबहुप्रकर्षतया महोच्चभावसद्भावतया ललितपदविलासबहुलतया च काव्यरसरसिकानां सामाजिकानां भृशमेव मानसतलम्। परं तस्य कवेरानन्द-सन्दोहगम्भीरपदसम्भाररसवत्याः शुद्धसत्त्ववर्णाभरणायाः भारत्याः निखिलनयनवीनशान्तसौम्यमूर्त्तिः स्वर्गसुधास्रावधारया सुरधुनी-वारिधाराप्लुतपुलिनप्रदेशस्थलीव संप्लावयति रात्रिन्दिवं केषां न हृदय-चेतम्?

यद्यपि प्रकीर्णकीर्त्तिकाष्ठोदरसंलग्नकानां भारतीपदाङ्घ्रिपङ्केरुह-चुम्बितमधुजपुलकोद्गमगुञ्जदरोलम्बानां व्यासवाल्मीकिप्रभृतिकवि-मुख्यानां कवित्वविपञ्चीविनिक्वणप्रतिमो नासीदस्य कवित्वझङ्कारः, तथापि तदनुजकविजनमध्ये नायमप्रशस्यतमः कनिष्ठश्च कथं कथमपि वा कविकुलकोकिलः कविवरो भारविरत्र जगति।

स च कविर्भारतभूमेः क्वचन पत्तने प्रदेशे वा जन्माभिलभ्य कम-न्वयमलमकार्षीत्, प्रकर्षयिष्यति च महाप्रलयपर्य्यन्तमिति सर्व्वं ज्ञातुं स्वतएव कौतुकं महत्यपि च स्पृहा समवर्त्तते सहृदयानां किन्तु तन्निर्व्वाचनमतीव दुःसाध्यं सुसूक्ष्मविचारणापेक्षा च धारावाहिक-वृत्ताभावात्। अस्मदीयानां तादृशशक्तेरप्राचुर्य्याच्च; तथापि प्रचलित-प्रवादवादानामुत अनुसन्धाननैपुण्यवतां पुरावृत्तज्ञानां वचनमवलम्ब्य कवयितुराविर्भावकालादिसङ्कलनप्रयत्नं न किल कथं कथमपि दोषा-श्रयणं निन्दास्पदञ्च भवेदिति मामकानां हृदयम्।

दृश्यते तावत् प्राचीनलेखमालाग्रन्थगर्भे त्रयोदशप्राचीनलेखे

महाकवेरस्य रचितायां सुभाषितवल्ल्यां किरातार्जुनीयस्य नाम तच्च यथा "किरातार्जुनीयपञ्चदशसर्गादिकारको दुर्व्विनीतनामधेयः" इति। अन्यच्च तत्रैव षोड़शप्राचीनलेखे :—

"येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः॥" इति

यच्च रविकीर्त्तिलिखिते पुलकेशिन् द्वितीयस्य ताम्रशासनफलके भारवेर्णाम प्रथमं समुल्लिखितमस्ति। तत्तु शासनपत्रम् षट्पञ्चादशदधिकपञ्चशततमे शकसंवत्सरे (५६५) खृष्टीयषट्शताधिकचतुस्त्रिंशतिशरदि (६३४) कालिदासप्रसङ्गेन सम्यग्विवृतम्। तेनोंद्धृतेनैव श्लोकेन रविकीर्त्तेः कवित्वयशः कालिदासभारविकवित्वयशसोपमितम् स्फुटत एव प्रतिपत्तिरापाद्यते, नितरां तत्कालपूर्व्ववर्त्तिनोः खलु तयोरिति कः सन्देहस्यावसरः? पूर्व्वोक्तचयोदशलेखस्तु अष्टनवत्युत्तरषट्शततमे शकमिते उत्कीर्णः, नितरामनुमातुं शक्यते, यत् खृष्टीयसप्तमशतकारम्भे कालिदासस्येव भारवेः कीर्त्तिगौरवं जनतो जनं दिशतो दिशं परिव्याप्तमासीत्। नहि कस्य स्वल्पेनैव दिनेन प्रतिष्ठामुपपद्यत इति लोकव्यवहारविधिमधीता खृष्टीयषष्ठशकात् पूर्व्वतनोऽयं भारविरिति निर्द्धार्य्यते, अनुमन्यते च ज्याकविप्रभृतिभिः जर्म्मणदेशीयैः पाश्चात्यसभ्यैर्यत् खृष्टीयषष्ठशरदो मध्यभागस्तस्य कवेराविर्भावः काल इति। एवं यत् :—

"तावद्भाभारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥" इति पद्ये

नैषधस्तावकानां पूर्व्वतनानां केषाञ्चिद्वचनेन समं भारविमाघयोर्नामोत्कीर्णं समीक्ष्य केचन पर्य्यालोचका एवमेवसुपकल्पयन्ति यन्माघकविर्भारवेः समकालवर्त्तीति तन्न समीचीनमभ्रान्तस्य वक्तुमुपयुज्यते; यतो माघकवेरूर्द्धतनकालरचिते ग्रन्थे भारवेः सुभाषितमुपलभ्य तस्मादूर्द्धतनकालस्तु भारवेराविर्भावसमय इति सहजधियानुमातुं

शक्यते। न च तेनैव हि वक्तुमर्हति यन्माघकविरत्यर्व्वाचीनः। तस्यानेके श्लोकाः प्राचीनालङ्कारिकस्य मम्मटभट्टस्य कृतौ काव्यप्रकाशे तथान्यान्यग्रन्थे च उत्कीर्णतया तस्माच्च पूर्व्वतनकाल एव माघकवेर्जन्मसमयः। मम्मटभट्टस्य जीवनकालः खृष्टीयैकादशशतकमिति नितरां माघकवेरुत्पत्तिस्तु तत्पूर्व्वस्यां नवमशरदि किमु दशमशरदो मध्यभाग इति निर्णीतं प्रत्नतत्वविदा, नितरां भारविर्माघकवेरपि पूर्व्वतनवर्त्ती। तेनापि च सर्व्वतो भारविपदपङ्क्तिमनुकृत्य स्वीयकाव्यमसाधारणप्रतिभया काव्यगुणेन च पुष्कलत्वं नीतम्। यथाहि शिशुपालवधस्य प्रथमे सर्गे देवर्षिनारदेन मदगर्व्वितस्य कृष्णद्वेषिणः चेदिभूपतेरवस्थायाः संकीर्त्तनम्। तच्छ्रवणेनैवानुस्मृतमहावैरस्य वलदेवस्यातिशयौद्धत्यम्, तदुपशान्तये च उद्धवस्याविचलितभावेन सुष्ठु नयवचनप्रपञ्चीकरणम्। भारविकाव्ये च प्रथमतो वर्णिवेशधारिणो वनेचरस्य मुखेन प्रतिनायकस्य दुर्य्योधनस्य सर्व्वावस्थाविज्ञापनम्। ततश्चानुस्मृतवैरस्य भीमादेरोजस्विनीवाग्विस्तारः। तत् सान्त्वनार्थञ्च अनौद्धत्यभावेन युधिष्ठिरप्रयुक्तं युक्तियुक्तसान्त्वनवाक्यमित्यादि ग्रन्थस्याप्रथमं समाप्तिं यावत् प्रतिसर्गारम्भे सर्गशेषे च परस्परं सादृश्यं समीक्ष्यानुमातुं शक्यते यन्माघेनापि तत्पूर्व्ववर्त्तिनो भारवेरनुकृत्य स्वकीयं काव्यं पर्य्यचायि।

अलमलं तत्; अपरं यन्महाराष्ट्रप्रदेशोद्भवेन राजारामरामकृष्णभागवतपण्डितेन महाराष्ट्रभाषाग्रथिते—"मार्हाटा-चासंवधाने चार उद्गार" नामकनिबन्धे :—भारवेराविर्भावेनालङ्कृता परमधन्या च महाराष्ट्रस्थली, द्राविड़भूमिर्व्वेति विज्ञाप्य किरातार्जुनीयस्य श्लोक उपश्लोकितः। तच्च :—

"उरसि शूलभृतः प्रतिहता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्म्मयः॥" इति

अत्र 'सह्यमहीभृतः' इति पदमुपलभ्य तेनापि पण्डितेनोप-

कल्पितं व्याकृतञ्च सह्याद्रिरेव कवेरावासभूमिः। सा च महाराष्ट्र-प्रदेशोद्भवतया सुनिश्चितं कविरपि महाराष्ट्रदेशीयः; नितरां तादृशस्य कवेर्जन्मभूमितया धन्यो महाराष्ट्रप्रदेशः, धन्याश्च तद्देशवासीया इति। एवमेवञ्च सर्व्वं वृत्तजातं महामहोपाध्यायेन श्रीमता दुर्गाप्रसादपण्डितेन सर्वं पर्य्यालोच्य तमेव महाराष्ट्रीयपण्डितं प्रति कटाक्षी-कृतम्। उच्यते च तेन यदि सह्यगिरेर्नामोल्लेखेनापि सैव भूमिः, तत्सन्निधाना कापि वा वसुधा किमपि जनपदं वा कवेरुत्पत्ति-प्रदेशतया समुलभ्येत, तर्हि परेतदिगुद्भाषितानां सह्यसुवेशमलयादि-शैलमालाबहुलस्थलीनां भीमा-वेणा-गोदावरी-कावेरीताम्रपर्णीप्रभृति स्रोतस्विनीनां कतीनां कतीनां वनोपवनलक्ष्मीणां जनपदसुसम्पदाञ्च वर्णयितुः हरविजयकाव्यरचयितुः काश्मीररत्नाकरस्यापि तत्तद्देशावासः इति परिकल्पितुं युक्तः। एवं विन्ध्याद्रेर्वननिर्झरसरिदारामादीनां महा-महीरुहमण्डनैश्वर्य्याणां महिमोपवर्णयिता कविकुलभूषणाचार्य्यो बाण-स्तत्रत्यभूधराधित्यकापरिचरोवनेचरसहचर इति वक्तुं क एव वा प्रभवन्ति प्रज्ञावन्तः? अपि वा लङ्काद्वीपस्य बहुलवर्णनादर्शनात् कालिदास-भवभूति-भट्टिप्रभृति कवीनामपि तत्रैव निवासस्थलमिति कल्पना यथा सर्व्वथैवामूला बालप्रलापः उत प्रमत्तस्यैव तुच्छा अश्रद्धेया च वाक् प्रज्ञावतां तथैवाचेति किमधिकवचसोऽवकाशः?

अन्यच्च केऽप्येवमेवं वदन्ति—दृश्यते दाक्षिणात्यजनपदे बहूनां विपश्चितामुद्भवः आवासश्च, अतः विदुषोभारवेरपि तत्रैव जन्म इति, तच्च शैलीविचारेण निरङ्कुशत्वं सुस्फुटं प्रतिभाति। यतोमहाराष्ट्रेतरेष्वपि आर्य्यावर्त्तादिभूभागेषु बहूनां कवीनां तथा ज्ञानविज्ञानोपचितमन-स्विनां भारतभूमिं मण्डयतामुत्पत्तिं समीक्ष्य सैव हि युक्तिर्नानुकूलतया सर्व्वथा हेया अग्रहणीया च सहृदयानाम्।

अन्ये तावत् केचन सूरिसत्तमाः महामहीभ्रस्यासीमर्महिमकीर्त्तन-मभीक्ष्य किरातार्जुनीये तत्सन्निधौ क्वापि पत्तने जनाश्रये वा भारवि-

कवेर्निवासभूमिरिति समुपदिशन्ति कथयन्ति च ते उदीच्यन्तर्गत-जनपदेषु सिक्किमाभिधेयस्य नगरस्याविदूरतः अद्यापि वर्त्तते इन्द्रकीलसंज्ञको हिमालयस्यांशविशेषः। तत्रेदानीमपि विद्यन्ते गिरिगात्रे बहवः शबरजातीयाः। तेषामूर्द्धतनान् कान् कानेव सहायीकृत्य धृतशबरपतिशरीरपरिग्रहो हरः फाल्गुणिना युयुधे किं न वा वक्तुं क एव प्रभवन्ति विद्वांसः? विशेषतो दूरावस्थितेन तु केनापि तादृशीं स्वभावसुषमां वस्तुविभूतिञ्च असमीक्ष्य वर्णयितुं न शक्यते, सुतरां तत्प्रदेश एव कवेर्जन्मस्थानम्। परमैतिह्यमपि वर्त्तते यदध्ययनकाले गुरुगृहे निवसतो गोचारणप्रसङ्गेन हिमवदुपत्यका-धित्यकादिदेशं पर्य्यटतस्तद्विभूतिपर्य्यवेक्षणेन भारवेर्मनसि कवित्वप्रभा समजनि। ततो महाभारतस्य वनपर्व्वीय-षड्विंशाध्यायादेकचत्वा-रिंशदध्यायान्तर्गतं वृत्तमवलम्ब्य प्रतिदिनमेकैकं पद्यं निर्म्माय भूर्जपत्रे योजयामास। तदनन्तरन्तु गच्छता कालेन तदेव च पद्यमेकीकृत्य किरातार्जुनीयमिति नाम्ना प्रख्यापितवान्। परतश्च "कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा" इत्यालङ्कारिकवचसा कविनाम्नेव काव्यस्य संज्ञा प्रसिद्धिमवापेति जनश्रुतिः।

अपास्तु तन्नानागवेषणकारिणां नानाधारासुसम्बाहिणी सुस-माहिता विविधा कथा, युक्तितर्कानुकूला वा। परमस्माभिस्तु पर्य्या-लोक्यते नवाविष्कृतायां काव्यादर्श-दशकुमारादिग्रन्थप्रणेतुः दण्ड्या-चार्य्यस्य संरचितायामवन्तीसुन्दरीकथायाम्, अवन्तीसुन्दरीकथासार-ग्रन्थे च महाकवेर्भारविविषयिणी एतावती कथा—यत् पुरा काञ्ची नाम जनपदस्य पश्चिमोत्तरदिगुपान्ते आनन्दपुराख्ये पत्तने अधुनातन गुजराटाभिधेये नगरे निवसन्ति स्म बहवः कौशिकगोत्रीयाः ब्राह्मणाः। तन्मध्यात् केचन नासिक्यप्रदेशीयमचलपुरं ( वर्त्तमानमध्यप्रदेशीय-इलिच्पुरं ) समेत्य स्वावासं पर्य्यकल्पन्। परं तेषु तावन्नारायणस्वामि-नाम्नः कस्यचित् ब्राह्मणस्य दामोदरो भारविरपर नाम सुतः समजनि।

तेन च तत्रत्यराजनन्दनविष्णुवर्द्धनेन सह मैत्रीसम्बन्धः समुपनायि। ततश्चैकदा तस्य राजकुमारस्यानुरोधेन महाटवीमाखेटार्थं गत्वा तत्र भक्ष्याभावाद् गुरुजठरयन्त्रणयात्मकुलप्रणालीमुल्लङ्घ्य पशुपिशितमशित्वा प्राणान् परिररक्ष। समनन्तरञ्च तत्पापविनिवृत्तये तीर्थयात्राप्रसङ्गेन गाङ्गवंशीयदुर्विनीतनाम्ना केनचन ब्राह्मणनन्दनेन सार्द्धं तस्य दर्शनमभूत्। ततश्च गच्छता कालेन काञ्चयाः पल्लववंशीयेन राज्ञा सिंहविष्णुना समाहूतो भारविर्जीवनावशेषं तत्रैवोवास। तस्य त्रयः पुत्राः जाताः ; तेषु च मध्यमस्य मनोरथस्यापि चत्वारस्तनयाः तेषाञ्च सर्वकनिष्ठो वीरदत्तः। वीरदत्तस्य जाया गौरी ; तस्यां वीरदत्ताद्दण्डिन उद्भव इति धारावाहिकवंशविवृतिः। तथा हि अवन्तीसुन्दरीकथासारे:—

"अस्त्यानन्दपुरं नाम प्रदेशे पश्चिमोत्तरे।
आर्य्यदेशशिखारत्नं तत्रासन् बहवो द्विजाः॥
ततोऽभिनिःसृता काचित् कौशिकब्रह्मसन्ततिः।
ब्रह्मलोकादिवायान्तो पुण्यतीर्था सरस्वती॥
नासिक्यभूमावौत्सुक्यान्मूलदेवनिवेशितान्।
प्राप्याचलपुरं नाम पुरीमधिवसत्यसौ॥
तस्यां नारायणस्वामिनाम्नो नारायणोदरात्।
दामोदर इति श्रीमानादिदेव इवाभवत्॥
स मेधावी कविर्विद्वान् भारविः प्रभवो गिराम्।
अनुरुध्याकरान्मैत्री नरेन्द्रे विष्णुवर्द्धने॥
क्षुधाविष्टेन तद्दिष्टमामिषं मृगयान्तरे।
अनिष्टशिष्टं हा! कष्टं तेनाभोज्यमभुज्यत॥
अगच्छन्नन्तिकं पित्रोः सत्रपस्तीर्थयात्रया।
चरन् मेवर-(?) मापेदे कस्यापि शुभजन्मनः॥
स दुर्विनीतनामासीदनन्वर्थाभिधानवान्।

तस्यान्तिके वसत्येष तेनार्थेयमुदीरिता ॥
इति श्रुत्वा महीपालस्तदालोकनलोलुपः ।
अनेकश्रीसुखाकृष्टमकरोदमुमात्मसात् ॥
स्वविशेषैरुर्विंगतैस्तमाचारैरतोषयत् ।
अभूषयच्च भूपालमग्राम्यैः स सुभाषितैः ॥
नृपनिर्बन्धनिर्दिष्टे प्रकृष्टविभवे गृहे ।
वहतः पैतृकीं वृत्तिं तस्यासीत्तनयत्रयम् ॥
मनोरथाह्वयस्तेषां मध्यमो वंशवर्द्धनः ।
ततस्तनुजाश्चत्वारः स्रष्टुर्वेदा इवाभवन् ॥
श्रीवीरदत्त इत्येषामुत्तमस्तत्त्ववेदिनाम् ।
यवीयानस्य च श्लाघ्या गौरीनामाभवत् प्रिया ॥
ततः कथञ्चित् सा गौरी द्विजाधिपशिखामणेः ।
कुमारं दण्डिनामानं व्यक्तशक्तिमजीजनत् ।" इति

एष्वेव वागुपन्यासेषु प्रथमं तावदस्माकं नयनपथे निपतन्ति सुप्रशस्ततया तिस्रः कथाः। या हि कविसमयादिनिरूपणे सातिशयानुकूलाः प्रमाणार्हाश्च सम्यक्। तदेव हि प्राक् पल्लववंशीयसिंहविष्णुभूपतेः परतो दुर्विनीतस्य ततश्च विष्णुवर्द्धनस्याह्वयः। स हि कविनाम्ना सुसंश्लिष्टतया तस्य तस्य नृपतेः समयनिरूपणेन कविसमयस्यापि संविज्ञानं सहजं स्यात्, भविष्यति च तत् सुनिश्चितं सर्वथा प्रमाणग्राह्यञ्च मनीषिणाम्। तच्च श्रूयते तावत् सिंहविष्णुराजस्य खृष्टीयषष्ठशरदः परिशेषभागे दुर्विनीतस्य च खृष्टसप्तमशतकादिमांशे राज्यशासनकालः। तत्र च दुर्विनीतस्य स्ववंशगणनाक्रमेण तृतीयस्थलम्, राज्यशासकपर्य्यायेण च चतुर्थस्थानम्, परं तस्य खृष्टत्रयोदशाधिकसप्तशती-(७१३)-समायां समवस्थितिरिति समुत्कीर्णप्रस्तरफलकात् प्रतिपन्नोऽस्ति। परमेतावता च स्फुटं प्रतिभाति यत्तदेव हि लिपिः दुर्विनीतात् शतवत्सरदेश्या, एवमपि चालुक्यवंश-

प्रतिष्ठातुर्विष्णुवर्धनस्यापि च प्रायः स एक एव शासनसमयः। एवमेवमभोच्य कविभारवेरपि समयस्तु खृष्टीयषष्ठशकस्य पश्चिमार्द्धे किंतु खृष्टसप्तमशकस्य प्रागेवेति सर्व्वथानुमातुं शक्यते। यतो विंशतिवर्षवयःक्रमवेलायां तस्य प्रथमं सिंहविष्णुराजस्य परिषदि गमनमुपश्रुयते। परतो विष्णुवर्द्धनेन सह यदा तस्य प्रथमाभिभाषणं तदा किल विष्णुवर्द्धनो राजनन्दनः न तु राजपदवीत्वेन विशेषितः; सुतरामुपश्लोकितया गिरा त्रयाणामपि भूपालानां प्रायः एक एव समयः अस्माभिरुपलभ्यते। परमेतावता यदि भारविदामोदरयोः पृथक्कपरिकल्पने न किञ्चित् विकल्पावकाशः केषां तर्हि प्रतिपादितं सर्व्वमवितथत्वमपि स्वीकरणीयम्। तत्र न च तर्कस्य सन्देहस्यापि वा क्षुद्रमपि स्थानं सम्भवतितरामिति मामकानां हृदयम्।

एवञ्च चैनिकपरिव्राजक-इ-ट्सिंग् (It-sing) महोदयेन स्वाभिज्ञातोऽनुमितं यत् खृष्टीयसप्तशततमसंवत्सरस्य मध्यस्थले भारवेराविर्भावक्षणम्, प्रदर्शितञ्च तेन "प्रकाशनस्थेयाख्ययोश्च" इति पाणिनीयसूत्रस्य काशिकावृत्तौ भारविकृतं पद्यमुद्धृत्य दृष्टान्तितं तच्च—"संशय्य कर्णादिषु तिष्ठते यः" इति। अस्य प्रामाण्यमनुमन्य काशिकावृत्तिकारेण प्रमाणत्वेनोट्टङ्कितया तत्र हायने तदुर्द्धे हायने वा कवेर्जीवनसमय इति सहजतः प्रतीतिरस्ति। परं काशिकायाः विरचनकालः खृष्टसप्तशततमायां शरदि समवलम्ब्य तच्छके ततः पूर्व्वं वा कवेर्जन्म इति अनुमातुं शक्यते। दृश्यते च लोकव्यवहारविषये प्रमाणानुकूलाय च कस्यचित् वचसि स्वल्पेनैव दिनेन प्रचावतामास्था प्रवृत्तिश्च कथमपि नोत्पद्यते, नितरां काशिकावृत्तिवत् प्रामाणिकग्रन्थोदरे भारविवाक्यस्य स्थानं तस्य सुप्रतिष्ठानन्तरमेव प्रतिभाति। न हि कस्यचिदिह पञ्चाशत् शतं वा वत्सरमन्तरा प्रतिष्ठोपपन्ना, अतः काशिकावृत्तेर्बहुपूर्व्वतने काले तस्य स्थितिरिति स्थिरसिद्धान्तः।

अनेनानेन खृष्टजन्मनः षट्शततमवत्सराभ्यन्तरे भारवेर्जन्म इति अनुमानं नासङ्गतं न युक्तितर्कविपथगञ्च मनाक्।

एवमपि श्रुयते क्वापि शिलाफलके यत् पश्चिमचालुक्यवंशीयपुलकेशिन्द्वितीयेन खृष्टजन्मनः षष्ठशताधिकचतुस्त्रिंशत् वत्सरे कवये प्रदत्तमभिभाषणं "येनायोजि न वेश्म" इत्यादि प्रागुल्लिखितं पद्यम्। सोऽयं पुलकेशिन्द्वितीयः पूर्व्वचालुक्यवंशप्रतिष्ठातुः विष्णुवर्द्धनस्य ज्येष्ठभ्राता स एव कवेः सुहृत्, नितरामुभययोः समकालीनत्वे नास्ति सन्देहः, अनुमानस्यापि वा कियान् प्रत्यवकाशः। परं भारविशिलालिपिमध्ये चापि नास्ति कियत् व्यवधानम्, अस्ति चेदतिक्षुद्रतममेव तत्। इत्थमित्थं प्रमाणकोटिकेनैव सिद्धान्तः समुदायातः यत् खृष्टीयषट्शततमसंवत्सरे भारवेः प्रतिष्ठाकालः इति।

अपि हि प्रागुल्लिखितदण्डिकृतकथाग्रन्थपाठेनेयं प्रतीतिरस्ति यत् दण्डी भारवेः प्रपौत्रत्वेनात्मानं व्यपदिश्य भारवितस्तस्य त्रिपुरुषान्तरमेव बोधमापाद्यते, नितरां तेनापि च भारवेः खृष्टीयषट्शततमे सप्तशततमे वा वत्सरे स्थितिकालमवधारयितुं न किमपि युक्तितर्कपरिपन्थिनी वाधा विप्रतिपत्तिश्च विद्यतेतराम्। परन्तु यदि वा दण्डिसमयनिरूपणे वर्त्तते गवेषणकारिणां बहुतरो मतभेदः तथापि तन्मध्ये षट्शततमहायनोत्पन्नमतवादिनां सप्तशततमवत्सरजातवादिनाञ्च मतं समीचीनं प्रमाणतर्कानुकूलत्वात् ग्राह्यञ्च परमविधेयानां सम्यक्।

अपि नाम प्रागुक्तम्—"उरसि शूलभृतः प्रहिता मुहु"रित्यष्टादशसर्गस्थे श्लोके यत् सागरोच्छ्वसितधौतपदपल्लवस्य सह्यशिखरिणः मर्म्मानुसंस्पर्शिनो सद्भावसमुद्गीर्णवर्णनाचातुरी विद्यते तामधिगम्य तदद्रिसन्निधानावसुधायां कविर्जात इति सकलप्रत्नतत्त्वमनुशीलयतां पण्डितानां मतम्। उच्यते च तैः सह्यपर्वतो हि वर्त्तमानपश्चिमघाटस्थप्रदेशे तत्सुसन्निधिश्च नासिच्यदेशः; सोऽयञ्चापि देशः सह्यस्यासन्नोत्तरसीमायाम्, नितरां तद्देश एव कवेर्जन्मभूमिरिति सर्व्वथा प्रति-

पद्यते, एवञ्चापि नानायुक्तिप्रमाणेन सोऽयं प्रतिपादितः सिद्धान्तपक्षः वाढ़मेव लोकार्य्यैः प्रत्त्यावताम्। परमिदमेवावितथं सत्यं यत् किमपि शिलोत्कीर्णादि समुपलभ्यते भारविसंवादसंभृतोदरं तत्सर्वं पश्चिम-दक्षिणपथस्थनृपानुग्रहप्रदत्तम्। नितरां तत् तत् देशवासिना सह भारविरतिसुसंश्लिष्ट एवासीदिति सहजधिया प्रतिपत्तुं शक्यते। अत एव इत्थमित्थं युक्तिप्रमाणानुकूलवाचामियानेवास्तु सुपरिशेष इति।

---

## काव्यकथा :—

किरातार्ज्जुनीयं हि नाम महाकाव्यं महामहिमशालिनो महाकवेर्भारवेर्लेखन्युद्गतम्। तच्च काव्यं श्रीमन्महाभारतस्य वनपर्वतः कुरुराजदुर्य्योधन-निर्जितानां द्वैतवनमधिवसतां युधिष्ठिरप्रमुखपाण्डवानां तात्कालिकवृत्तान्तविशेषमवलम्ब्य विरचितम्। तत्र च तेषां पाण्डवानामन्यतमस्यामोघवीर्य्यशालिनोऽर्जुनस्य परिगृहीतकिरातपतिवेशात् पशुपतेरस्त्रलाभरूपमिति फलम्।

अथवा शिवपुराणीय-ज्ञानसंहितायाः त्रिषष्टीतमाध्यायात् सप्तषष्टीतमाध्यायं यावत् वर्णितविषयाणां सुसन्निवेशः।

काव्यस्यास्य प्रथमतः समाप्तिं यावत् सर्वत्र गुरुगम्भीरार्थसद्भावतया परिणाममधुरतया च टीकाकृता सूरिसत्तमेन श्रीमता मल्लिनाथेनोक्तम् :—"नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते। स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥" इति वस्तुत आपातकठोरमयमप्यस्य पद्यं धीरधिया पर्य्यालोचिते समोच्यते—यदुक्तं "नारिकेलफलसम्मितम्" तदन्वर्थं एव सर्वत्र विलसतितराम्। यथा नारिकेलफलस्य बहिर्देशो गुरुकठिनकर्कशत्वचा परिवृतस्तदपसारिते किल सुपेयं जलं, सुखसेव्यं भक्ष्यञ्च अर्थिनासुपपत्तिः, तथास्मिन् काव्ये पुष्कलमेवेति तन्मतम्।

शक्यते। न च तेनैव हि वक्तुमर्हति यन्माघकविरत्यर्व्वाचीनः। तस्यानेके श्लोकाः प्राचीनालङ्कारिकस्य मम्मठभट्टस्य कृतौ काव्यप्रकाशे तथान्यान्यग्रन्थे च उत्कीर्णतया तस्माच्च पूर्व्वतनकाल एव माघकवेर्जन्मसमयः। मम्मठभट्टस्य जीवनकालः खृष्टीयैकादशशकमिति नितरां माघकवेरुत्पत्तिस्तु तत्पूर्व्वस्यां नवमशरदि किमु दशमशरदो मध्यभाग इति निर्णीतं प्रत्नतत्वविदा, नितरां भारविर्माघकवेरपि पूर्व्वतनवर्त्ती। तेनापि च सर्व्वतो भारविपदपङ्क्तिमनुकृत्य स्वीयकाव्यमसाधारणप्रतिभया काव्यगुणेन च पुष्कलत्वं नीतम्। यथाहि शिशुपालवधस्य प्रथमे सर्गे देवर्षिनारदेन मदगर्व्वितस्य कृष्णद्वेषिणः चेदिभूपतेरवस्थायाः संकीर्त्तनम्। तच्छ्रवणेनैवानुस्मृतमहावैरस्य बलदेवस्यातिशयौद्धत्यम्, तदुपशान्तये च उद्धवस्याविचलितभावेन सुष्ठु नयवचनप्रपञ्चीकरणम्। भारविकाव्ये च प्रथमतो वर्णिवेशधारिणो वनेचरस्य मुखेन प्रतिनायकस्य दुर्य्योधनस्य सर्व्वावस्थाविज्ञापनम्। ततश्चानुस्मृतवैरस्य भीमादेरोजस्विनीवाग्विस्तारः। तत् सान्त्वनार्थञ्च अनौद्धत्यभावेन युधिष्ठिरप्रयुक्तं युक्तियुक्तसान्त्वनवाक्यमित्यादि ग्रन्थस्याप्रथमं समाप्तिं यावत् प्रतिसर्गारम्भे सर्गशेषे च परस्परं सादृश्यं समीक्ष्यानुमातुं शक्यते यन्माघेनापि तत्पूर्व्ववर्त्तिनो भारवेरनुकृत्य स्वकीयं काव्यं पर्य्यचायि।

अलमलं तत्; अपरं यन्महाराष्ट्रप्रदेशोद्भवेन राजारामरामकृष्णभागवतपण्डितेन महाराष्ट्रभाषाग्रथिते—"माहाट्टां-चार्सवधाने चार उद्गार" नामकनिबन्धे:—भारवेराविर्भावेनालङ्कृता परमधन्या च महाराष्ट्रस्थली, द्राविड़भूमिर्व्वेति विज्ञाप्य किरातार्जुनीयस्य श्लोक उपश्लोकितः। तच्च:—

"उरसि शूलभृतः प्रतिहता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्म्मयः॥" इति

अत्र 'सह्यमहीभृतः' इति पदमुपलभ्य तेनापि पण्डितेनोप-

कल्पितं व्याहृतञ्च सह्याद्रिरेव कवेरावासभूमिः। सा च महाराष्ट्रप्रदेशोद्भवतया सुनिश्चितं कविरपि महाराष्ट्रदेशीयः ; नितरां तादृशस्य कवेर्जन्मभूमितया धन्यो महाराष्ट्रप्रदेशः, धन्याश्च तद्देशवासीया इति। एवमेवञ्च सर्व्वं वृत्तजातं महामहोपाध्यायेन श्रीमता दुर्गाप्रसादपण्डितेन सर्वं पर्य्यालोच्य तमेव महाराष्ट्रीयपण्डितं प्रति कटाक्षीकृतम्। उच्यते च तेन यदि सह्यगिरेर्नामोल्लेखेनापि सैव भूमिः, तत्सन्निधाना कापि वा वसुधा किमपि जनपदं वा कवेरुत्पत्तिप्रदेशतया समुलभ्येत, तर्हि परैतद्गुणभाषितानां सह्यसुवेलमलयादिशैलमालाबहुलस्थलीनां भीमा-वेणा-गोदावरी-कावेरीताम्रपर्णीप्रभृति स्रोतस्विनीनां कतीनां कतीनां वनोपवनलक्ष्मीणां जनपदसुसम्पदाञ्च वर्णयितुः हरविजयकाव्यरचयितुः काश्मीररत्नाकरस्यापि तत्तद्देशावासः इति परिकल्पितुं युक्तः। एवं विन्ध्याद्रेर्वननिर्झरसरिदारामादीनां महामहीरुहमण्डनैश्वर्य्याणां महिमोपवर्णयिता कविकुलभूषणाचार्य्यो बाणस्तत्रत्यभूधराधित्यकापरिचरोवनेचरसहचर इति वक्तुं क एव वा प्रभवन्ति प्रज्ञावन्तः ? अपि वा लङ्काद्वीपस्य बहुलवर्णनादर्शनात् कालिदास-भवभूति-भट्टिप्रभृति कवीनामपि तत्रैव निवासस्थलमिति कल्पना यथा सर्व्वथैवामूला बालप्रलापः उत प्रमत्तस्यैव तुच्छा अश्रद्धेया च वाक् प्रज्ञावतां तथैवाचेति किमधिकवचसोऽवकाशः ?

अन्यच्च केऽप्येवमेवं वदन्ति—दृश्यते दाक्षिणात्यजनपदे बहूनां विपश्चितामुद्भवः आवासश्च, अतः विदुषोभारवेरपि तत्रैव जन्म इति, तच्च शैलीविचारेण निरङ्कुशत्वं सुस्फुटं प्रतिभाति। यतोमहाराष्ट्रेतरेष्वपि आर्य्यावर्त्तादिभूभागेषु बहूनां कवीनां तथा ज्ञानविज्ञानोपचितमनस्विनां भारतभूमिं मण्डयतामुत्पत्तिं समीक्ष्य सैव हि युक्तिर्नानुकूलतया सर्व्वथा हेया अग्रहणीया च सहृदयानाम्।

अन्ये तावत् केचन सूरिसत्तमाः महामहीभ्रस्यासीममहिमकीर्त्तनमभीक्ष्य किरातार्जुनीये तत्सन्निधौ क्वापि पत्तने जनाश्रये वा भारवि-

कवेर्निवासभूमिरिति समुपदिशन्ति कथयन्ति च ते उदीच्यन्तर्गत-जनपदेषु सिक्किमाभिधेयस्य नगरस्याविदूरतः अद्यापि वर्त्तते इन्द्रकीलसंज्ञको हिमालयस्यांशविशेषः। तत्रेदानीमपि विद्यन्ते गिरिगात्रे बहवः शबरजातीयाः। तेषामूर्द्ध्वतनान् कान् कानेव सहायीकृत्य धृतशबरपतिशरीरपरिग्रहो हरः फाल्गुणिना युयुधे किं न वा वक्तुं क एव प्रभवन्ति विद्वांसः? विशेषतो दूरावस्थितेन तु केनापि तादृशीं स्वभावसुषमां वस्तुविभूतिञ्च असमीक्ष्य वर्णयितुं न शक्यते, सुतरां तत्प्रदेश एव कवेर्जन्मस्थानम्। परमैतिह्यमपि वर्त्तते यदध्ययनकाले गुरुगृहे निवसतो गोचारणप्रसङ्गेन हिमवदुपत्यका-धित्यकादिदेशं पर्य्यटतस्तद्विभूतिपर्य्यवेक्षणेन भारवेर्मनसि कवित्वप्रभा समजनि। ततो महाभारतस्य वनपर्व्वीय-षड्विंशाध्यायादेकचत्वा-रिंशदध्यायान्तर्गतं वृत्तमवलम्ब्य प्रतिदिनमेकैकं पद्यं निर्माय भूर्जपत्रे योजयामास। तदनन्तरन्तु गच्छता कालेन तदेव च पद्यमेकीकृत्य किरातार्जुनीयमिति नाम्ना प्रख्यापितवान्। परतश्च "कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा" इत्यालङ्कारिकवचसा कविनाम्नैव काव्यस्य संज्ञा प्रसिद्धिमवापेति जनश्रुतिः।

अपरास्तु तन्नानागवेषणकारिणां नानाधारासुसम्वाहिणो सुस-माहिता विविधा कथा, युक्तितर्कानुकूला वा। परमस्माभिस्तु पर्य्या-लोक्यते नवाविष्कृतायां काव्यादर्श-दशकुमारादिग्रन्थप्रणेतुः दण्ड्या-चार्य्यस्य संरचितायामवन्तीसुन्दरीकथायाम्, अवन्तीसुन्दरीकथासार-ग्रन्थे च महाकवेर्भारविविषयिणी एतावती कथा—यत् पुरा काञ्ची नाम जनपदस्य पश्चिमोत्तरदिगुपान्ते आनन्दपुराख्ये पत्तने अधुनातन गुजराटाभिधेये नगरे निवसन्ति स्म बहवः कौशिकगोत्रीयाः ब्राह्मणाः। तन्मध्यात् केचन नासिक्यप्रदेशीयमचलपुरं (वर्त्तमानमध्यप्रदेशीय-इलिच्पुरं) समेत्य स्वावासं पर्य्यकल्पन्। परं तेषु तावन्नारायणस्वामि-नाम्नः कस्यचित् ब्राह्मणस्य दामोदरो भारविपर नाम सुतः समजनि।

तेन च तत्रत्यराजनन्दनविष्णुवर्द्धनेन सह मैत्रीसम्बन्धः समुपनायि। ततश्चैकदा तस्य राजकुमारस्यानुरोधेन महाटवीमाखेटार्थं गत्वा तत्र भक्ष्याभावाद् गुरुजठरयन्त्रणयात्मकुलप्रणालीमुल्लङ्घ्य पशुपिशितमश्नित्वा प्राणान् परिररक्ष। समनन्तरश्च तत्पापविनिवृत्तये तीर्थयात्राप्रसङ्गेन गाङ्गवंशीयदुर्विनीतनाम्ना केनचन ब्राह्मणनन्दनेन सार्द्धं तस्य दर्शन-मभूत्। ततश्च गच्छता कालेन काञ्च्याः पल्लववंशीयेन राज्ञा सिंह-विष्णुना समाहूतो भारविर्जीवनावशेषं तत्रैवोवास। तस्य त्रयः पुत्राः जाताः; तेषु च मध्यमस्य मनोरथस्यापि चत्वारस्तनयाः तेषाञ्च सर्वकनिष्ठो वीरदत्तः। वीरदत्तस्य जाया गौरी; तस्यां वीरदत्ता-द्दण्डिन उद्भव इति धारावाहिकवंशविवृतिः। तथा हि अवन्ती-सुन्दरीकथासारे:—

"अस्त्यानन्दपुरं नाम प्रदेशे पश्चिमोत्तरे।
आर्य्यदेशशिखारत्नं तत्रासन् बहवो द्विजाः॥
ततोऽभिनिःसृता काचित् कौशिकब्रह्मसन्ततिः।
ब्रह्मलोकादिवायान्ती पुण्यतीर्था सरस्वती॥
नासिक्यभूमावौत्सुक्यान्मूलदेवनिवेशितान्।
प्राप्याचलपुरं नाम पुरीमध्यवसत्यसौ॥
तस्यां नारायणस्वामिनाम्नो नारायणोदरात्।
दामोदर इति श्रीमानादिदेव इवाभवत्॥
स मेधावी कविर्विद्वान् भारविः प्रभवो गिराम्।
अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्द्धने॥
क्षुधाविष्टेन तद्दिष्टमामिषं मृगयान्तरे।
अनिष्टशिष्टं हा! कष्टं तेनाभोज्यमभुज्यत॥
अगच्छदन्तिकं पित्रोः सत्रपस्तीर्थयात्रया।
चरन् मेवर-(?) मापेदे कस्यापि शुभजन्मनः॥
स दुर्विनीतनामासीदनन्वर्थाभिधानवान्।

तस्यान्तिके वसत्येष तेनार्थेयमुदीरिता ॥
इति श्रुत्वा महीपालस्तदालोकनलोलुपः ।
अनेकश्रीमुखाकृष्टमकरोदमुमात्मसात् ॥
स्वविशेषैरर्विगतैस्तमाचारैरतोषयत् ।
अभूषयच्च भूपालमग्राम्यैः स सुभाषितैः ॥
नृपनिर्बन्धनिर्दिष्टे प्रकृष्टविभवे गृहे ।
वहतः पैतृकीं वृत्तिं तस्यासीत्तनयत्रयम् ॥
मनोरथाह्वयस्तेषां मध्यमो वंशवर्द्धनः ।
ततस्तनुजाश्चत्वारः स्रष्टुर्वेदा इवाभवन् ॥
श्रीवीरदत्त इत्येषामुत्तमस्तत्त्ववेदिनाम् ।
यवीयानस्य च श्लाघ्या गौरीनामाभवत् प्रिया ॥
ततः कथञ्चित् सा गौरी द्विजाधिपशिखामणेः ।
कुमारं दण्डिनामानं व्यक्तशक्तिमजीजनत् ।" इति

एष्वेव वागुपन्यासेषु प्रथमं तावदस्माकं नयनपथे निपतन्ति सुप्रशस्ततया तिस्रः कथाः। या हि कविसमयादिनिरूपणे सातिशयानुकूलाः प्रमाणार्हाश्च सम्यक्। तदेव हि प्राक् पल्लववंशीयसिंहविष्णुभूपतेः परतो दुर्विनीतस्य ततश्च विष्णुवर्धनस्याह्वयः। स हि कविनाम्ना सुसंश्लिष्टतया तस्य तस्य नृपतेः समयनिरूपणेन कविसमयस्यापि संविज्ञानं सहजं स्यात्, भविष्यति च तत् सुनिश्चितं सर्वथा प्रमाणग्राह्यञ्च मनीषिणाम्। तच्च श्रूयते तावत् सिंहविष्णुराजस्य खृष्टीयषष्ठशरदः परिशेषभागे दुर्विनीतस्य च खृष्टसप्तमशतकादिमांशे राज्यशासनकालः। तत्र च दुर्विनीतस्य स्ववंशगणनाक्रमेण तृतीयस्थलम्, राज्यशासकपर्य्यायेण च चतुर्थस्थानम्, परं तस्य खृष्टत्रयोदशाधिकसप्तशती-(७१३)-समायां समवस्थितिरिति समुत्कीर्णप्रस्तरफलकात् प्रतिपन्नोऽस्ति। परमेतावता च स्फुटं प्रतिभाति यत्तदेव हि लिपिः दुर्विनीतात् शतवत्सरदेश्या, एवमपि चालुक्यवंश-

प्रतिष्ठातुर्विष्णुवर्धनस्यापि च प्रायः स एक एव शासनसमयः। एवमेवमभोच्य कविभारवेरपि समयस्तु खृष्टीयषष्ठशकस्य पश्चिमार्द्धे किम्वा खृष्टसप्तमशकस्य प्रागेवेति सर्व्वथानुमातुं शक्यते। यतो विंशतिवर्षवयःक्रमवेलायां तस्य प्रथमं सिंहविष्णुराजस्य परिषदि गमनमुपश्रुयते। परतो विष्णुवर्द्धनेन सह यदा तस्य प्रथमाभिभाषणं तदा किल विष्णुवर्द्धनो राजनन्दनः न तु राजपदवोल्लेन विशेषितः; सुतरामुपश्लोकितया गिरा त्रयाणामपि भूपालानां प्रायः एक एव समयः अस्माभिरुपलभ्यते। परमेतावता यदि भारविदामोदरयोः पृथक्त्वपरिकल्पने न किञ्चित् विकल्पावकाशः केषां तर्हि प्रतिपादितं सर्व्वमवितथत्वमपि स्वीकरणीयम्। तत्र न च तर्कस्य सन्देहस्यापि वा क्षुद्रमपि स्थानं सम्भवतितरामिति मामकानां हृदयम्।

एवञ्च चैनिकपरिव्राजक-इ-ट्सिंग् (It-sing) महोदयेन स्वाभिज्ञातोऽनुमितं यत् खृष्टीयसप्तशततमसंवत्सरस्य मध्यस्थले भारवेराविर्भावक्षणम्, प्रदर्शितञ्च तेन "प्रकाशनस्थेयाख्ययोश्च" इति पाणिनीयसूत्रस्य काशिकावृत्तौ भारविकृतं पद्यमुद्धृत्य दृष्टान्तितं तच्च—"संशय्य कर्णादिषु तिष्ठते यः" इति। अस्य प्रामाण्यमनुमन्य काशिकावृत्तिकारेण प्रमाणत्वेनोट्टङ्कितया तत्र क्षायने तदुर्द्धे क्षायने वा कवेर्जीवनसमय इति सहजतः प्रतीतिरस्ति। परं काशिकायाः विरचनकालः खृष्टसप्तशततमायां शरदि समवलम्ब्य तच्छके ततः पूर्व्वं वा कवेर्जन्म इति अनुमातुं शक्यते। दृश्यते च लोकव्यवहारविषये प्रमाणानुकूलाय च कस्यचित् वचसि स्वल्पेनैव दिनेन प्रच्छावतामास्था प्रवृत्तिश्च कथमपि नोत्पद्यते, नितरां काशिकावृत्तिवत् प्रामाणिकग्रन्थोदरे भारविवाक्यस्य स्थानं तस्य सुप्रतिष्ठानन्तरमेव प्रतिभाति। न हि कस्यचिदिह पञ्चाशत् शतं वा वत्सरमन्तरा प्रतिष्ठोपपन्ना, अतः काशिकावृत्तेर्बहुपूर्व्वतने काले तस्य स्थितिरिति स्थिरसिद्धान्तः।

अनेनानेन खृष्टजन्मनः षट्शततमवत्सराभ्यन्तरे भारवेर्जन्म इति अनुमानं नासङ्गतं न युक्तितर्कविपथगञ्च मनाक्।

एवमपि श्रूयते क्वापि शिलाफलके यत् पश्चिमचालुक्यवंशीयपुलकेशिन्द्वितीयेन खृष्टजन्मनः षष्ठशताधिकचतुस्त्रिंशत् वत्सरे कवये प्रदत्तमभिभाषणं "येनायोजि न वेश्म" इत्यादि प्रागुल्लिखितं पद्यम्। सोऽयं पुलकेशिन्द्वितीयः पूर्व्वचालुक्यवंशप्रतिष्ठातुः विष्णुवर्द्धनस्य ज्येष्ठभ्राता स एव कवेः सुहृत्, नितरामुभययोः समकालीनत्वे नास्ति सन्देहः, अनुमानस्यापि वा कियान् प्रत्यवकाशः। परं भारविशिलालिपिमध्ये चापि नास्ति कियत् व्यवधानम्, अस्ति चेदतिक्षुद्रतममेव तत्। इत्यमित्थं प्रमाणकोटिकेनैव सिद्धान्तः समुदायातः यत् खृष्टीयषट्शततमसंवत्सरे भारवेः प्रतिष्ठाकालः इति।

अपि हि प्रागुल्लिखितदण्डिवृत्तकथाग्रन्थपाठेनेयं प्रतीतिरस्ति यत् दण्डी भारवेः प्रपौत्रेणात्मानं व्यपदिश्य भारवितस्तस्य त्रिपुरुषान्तरमेव बोधमापाद्यते, नितरां तेनापि च भारवेः खृष्टीयषट्शततमे सप्तशततमे वा वत्सरे स्थितिकालमवधारयितु' न किमपि युक्तितर्कपरिपन्थिनी बाधा विप्रतिपत्तिश्च विद्यतेतराम्। परन्तु यदि वा दण्डिसमयनिरूपणे वर्त्तते गवेषणकारिणां बहुतरो मतभेदः तथापि तन्मध्ये षट्शततमहायनोत्पन्नमतवादिनां सप्तशततमवत्सरजातवादिनाञ्च मतं समीचीनं प्रमाणतर्कानुकूलत्वात् ग्राह्यञ्च परमविधेयानां सम्यक्।

अपि नाम प्रागुक्तम्—"उरसि शूलभृतः प्रहिता मुहु"रित्यष्टादशसर्गस्थे श्लोके यत् सागरोच्छ्वसितधौतपदपल्लवस्य सह्यशिखरिणः मर्म्मानुसंस्पर्शिनो सद्भावसमुद्गीर्णवर्णनाचातुरी विद्यते तामधिगम्य तदद्रिसन्निधानावसुधायां कविर्जात इति सकलप्रवतत्त्वमनुशीलयतां पण्डितानां मतम्। उच्यते च तैः सह्यपर्वतो हि वर्त्तमानपश्चिमघाटस्थप्रदेशे तत्सुसन्निधिश्च नासिच्यदेशः; सोऽयञ्चापि देशः सह्यस्यासन्नोत्तरसीमायाम्, नितरां तद्देश एव कवेर्जन्मभूमिरिति सर्व्वथा प्रति-

पद्यते, एवञ्चापि नानायुक्तिप्रमाणेन सोऽयं प्रतिपादितः सिद्धान्तपक्षः बाढ़मेव स्वीकार्य्यः प्रज्ञावताम्। परमिदमेवावितथं सत्यं यत् किमपि त्रिलोकीर्य्यादि समुपलभ्यते भारविसंवादसंभृतोदरं तत्सर्वं पश्चिम-दक्षिणपथस्थनृपानुग्रहप्रदत्तम्। नितरां तत् तत् देशवासिना सह भारविरतिसुसंश्लिष्ट एवासीदिति सहजधिया प्रतिपत्तुं शक्यते। अत एव इत्थमित्थं युक्तिप्रमाणानुकूलवाचामियानेवास्तु सुपरिशेष इति।

———

## काव्यकथा :—

किरातार्ज्जुनीयं हि नाम महाकाव्यं महामहिमशालिनो महाकवेर्भारवेर्लेखन्युद्गतम्। तच्च काव्यं श्रीमन्महाभारतस्य वनपर्वतः कुरुराजदुर्य्योधन-निर्जितानां द्वैतवनमधिवसतां युधिष्ठिरप्रमुखपाण्डवानां तात्कालिकवृत्तान्तविशेषमवलम्ब्य विरचितम्। तत्र च तेषां पाण्डवानामन्यतमस्यामोघवीर्य्यशालिनोऽर्ज्जुनस्य परिगृहीतकिरातपतिवेशात् पशुपतेरस्त्रलाभरूपमिति फलम्।

अथवा शिवपुराणीय-ज्ञानसंहितायाः त्रिषष्टीतमाध्यायात् सप्तषष्टीतमाध्यायं यावत् वर्णितविषयाणां सुसन्निवेशः।

काव्यस्यास्य प्रथमतः समाप्तिं यावत् सर्वत्र गुरुगम्भीरार्थसद्भावतया परिणाममधुरतया च टीकाकृता सूरिसत्तमेन श्रीमता मल्लिनाथेनोक्तम् :—"नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते। स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥" इति वस्तुत आपातकठोरमयमप्यस्य पद्यं धीरधिया पर्य्यालोचिते समोच्यते—यदुक्तं "नारिकेलफलसम्मितम्" तदन्वर्थं एव सर्वत्र विलसतितराम्। यथा नारिकेलफलस्य बहिर्देशो गुरुकठिनकर्कशत्वचा परिवृतस्तदपसारिते किल सुपेयं जलं, सुखसेव्यं भक्ष्यञ्च अर्थिनामुपपत्तिः, तथास्मिन् काव्ये पुष्कलमेवेति तन्मतम्।

ईदृशांश्च तथा बाणान् बहून् दातुं क्षम. स्वयम् ॥ * * *

उपकारं परित्यज्य ह्यपकारं समीहसे ॥ * * *

अर्ज्जुनस्योक्तिः— * * *

"युद्धं मैत्रञ्च समैः कार्य्यं नाधमे हि कदाचन। * * *

आजगाम ससैन्येन शङ्करो भिल्लरूपधृक् ॥ * * *

शिवस्यैवार्जुनस्यैव युयुधाते परस्परम् ॥"

इत्यादि सर्व्वं समीक्ष्य कवेर्घटनानिर्म्माणपटुत्वं कविजनोचितं स्वीकर्त्तुं नोत्सहामहे ; किन्तु भाषाया गाम्भीर्य्यादिकमन्यकविस्थान-मलभ्यं हि भारविकवेः, येनोद्धृतवस्तुचयानां तथा परम्परितघटनानाञ्च प्रायो निःशेषानुकरणेनापि केवलं भाषागाम्भीर्य्यं संवीक्ष्य महाकविपदवित्वेन विभूषयते सकलशास्त्रनिकषग्रमानैः कविमुख्यैः। हंहो! किमपूर्व्वा नयसद्भावसमुद्भवभावधारावाहिनी वाणी भारवि-कवेः—"सहसा विदधीत न क्रियाम्" "हितं मनोहारि च दुर्लभं वचः" इत्यादि शतशो हि वचनजातम्।

ग्रन्थेऽस्मिन् कवेः परिकल्पिता नायिका पाञ्चालराजतनया द्रौपदी सम्पत्काले शिरिशकुसुमपेलवा विपदि च समुत्तेजःपरिपूर्णभावबहुला प्रतिपक्ष-विनिर्यातनाय स्वामिमन्युव्यवसायोद्दीपकवाक्प्रयोगपटीयसी महीयसी रमणी नाम। सा हि न केवलं कोमलताया एक एव समाश्रयः, नापि वा मूर्त्तिमती करुणैकभूमिः ; सर्व्वत्रैव सम्राजी-जनोचितहृदयभावा, तदुपयुक्तानि च कार्य्याणि यथा यथैवोपयुज्यन्ते तथा तथैव परिकल्पिता कविना तस्या अङ्गनायाः हृदयवृत्तिः।

अहो! किमपूर्व्वं स्त्रीरत्नं द्रौपदी !! सा हि न द्विषतो दुर्य्यो-धनस्य राजकार्य्ये सुशृङ्खलतां शृण्वत्यपि वैरोन्नतिमसहमाना ईर्य्या-प्रणोदिता, युधिष्ठिरस्य मन्युकरं वचनरचनमारचितवती, परं वाढ़मेव तया नाम विपदि स्वजनसकलानामाश्रितानाञ्च पुनर्व्विभूत्यै यथा यथा कल्याणमभिभवितुमर्हति तथा तथैवाकाङ्क्षिणा विपदतिक्रमणेन

भूयः सुचिरं तेषां तेषामिवाभ्युदयमवेक्षितुमेकान्ततः आसक्तिसत्या सुप्रशस्तनयधर्म्मानुदिताः प्रौढ़ाः वाचः प्रयुज्यन्ते। ता एव च प्रत्यक्ष-शरीरं परिगृह्य प्रोत्साहयन् अवेक्षयंश्च पाण्डूनां हस्तमादाय वैर-निर्य्यातनस्य सातिशयं विस्तीर्णमार्गप्रदेशम्। तस्यैव हि साहायकः महर्षिव्यासदेवस्य समागमः, तेन च क्रमेण पार्थस्य पाशुपतास्त्रलाभः, तदस्त्रेणापि च शत्रुकुलविमर्दनं ततो निर्मूलताञ्च गत इति परम्य-रितघटनानां सुसमावेशः तस्या भक्तिरेव मुख्यतो हेतुरत्र।

रामायणमहाभारतादिनिबद्धं वस्तुजातमवलम्ब्य ये कवयः काव्यं निर्म्मितवन्तः; तेषु भवभूतिकालिदासादीन् कतिपयः कवीन् अपहाय एवमेवं वाग्वैभवेन सर्वतो विजयते कविवरो भारविरत्र जगति। यस्य हि प्रतिकविताः संसारक्लेशविदग्धस्य तप्तोषरभुवमिव निर्ज्जीवशुष्क-हृदयतलं प्रत्यभिवर्ष्य सुधानिष्यन्दरितप्लावनधारया सञ्जीवयन्ते प्रति-क्षणम्। तत् सर्व्वमालोच्य मधुरायन्ते सर्व्वथास्माकमन्तःकरणम्। अतएव समनुनयमभ्यर्थयामहे समवलोकयन्तु समनुशीलयन्तु भवन्तः काव्यमेतत्; परन्तु कवेरस्य सदुपदेशान् परिगृह्य शोधयन्तु चरि-त्रम्; मनुष्यसहजचापल्यञ्च तीव्राः मधुराः भवन्तु, अमृताः सन्तु काव्यानुशीलयन्तः अशेचनकाः प्रियच्छायाः मदीया इति सुधाधिक-प्रपञ्चितया गिरा।

---

## महाभारतीयालम्बितानुक्रमणिकाकथा :—

चन्द्रमसोऽनुक्रमेणासन् पुरा हस्तिनापुराख्यनगरे बहवो भूपतयः। तेष्वन्यतमस्य प्रख्यातकीर्त्तिमतः कुरुराजस्य वंशे सर्वस्वामिगुणोपेतः शान्तनुर्नाम नरपतिरासीत्। तमेव नृपतिं त्रिलोकपावनी त्रिपथगा गङ्गा पतित्वेनाङ्गीकृत्य देवव्रतनामानं सुतमजीजनत्। अपरा च तन्नरपतेरासीत् सत्यवती नाम काचित् सहधर्म्मिणी। तस्यां राज्ञी

विचित्रवीर्य्यश्चित्राङ्गदश्च द्वौ पुत्रौ जज्ञाते। तत्तनयमध्ये तु पितुः सत्यवतीरूपद्वितीयदारपरिग्रहाभिलाषसम्पूरणार्थं गाङ्गेयः देवव्रतः प्रतिज्ञाय चिरकौमारव्रतं गृहीत्वा राज्यं न जग्राह। ततः प्रभृति तस्य दृढ़सन्धत्वात् भीष्माख्या समजनि। अपरस्मिन्नाङ्गदः अल्पायुष्कतया अपूर्णयौवनेन परेतपुराधिपतेरातिथ्यमलभत। तेन हि कनिष्ठस्यापि विचित्रवीर्य्यो राज्यं सिंहासनञ्च समवाप्य काशीराजनन्दिनीमम्बिकामम्बालिकाञ्चोद्वाह्य यमसदनमुपगतः। समनन्तरञ्च तत्क्षेत्रयोर्महर्षिव्यासो यथाक्रमं धृतराष्ट्रं पाण्डुञ्च द्वौ पुत्रौ, दास्यां विदुरं समुत्पादयामास। तेषु ज्येष्ठो धृतराष्ट्रः कनीयान् पाण्डुः।

धृतराष्ट्रः जन्मान्धतया राज्यं न प्राप। पाण्डुरेव राज्यं गृहीत्वा प्रजाः पालयामास। तस्यास्ताम् कुन्ती माद्रीति नाम द्वे पत्नौ। तयोः कुन्त्यां युधिष्ठिर-भीमार्जुनास्त्रयः पुत्राः, माद्र्यां नकुल-सहदेवनामानौ तनयौ सम्भूताः। एते तावत् पञ्चपाण्डवसंज्ञया प्रख्यातवन्तः। अपरः सूर्य्यसंसर्गेण च कन्यकावस्थायां कुन्त्यां कर्णोनाम सूतः समजनि। स च शास्त्रदृष्ट्या कानीनत्वेन कन्यकावस्थयैव कुन्त्या ताम्रकरण्डके संस्थाप्य यमुनास्रोतसि प्रोज्झितः। अधिरथनामा कश्चित् सूत्रधरः तं प्राप्य पत्न्यै राधायै समर्पयत्। सा च पुत्रनिर्विशेषेण तं पर्य्यपुषत्। तेन तस्य 'सूतपुत्रः राधेयश्च' इत्यपरौ नामास्ताम्। धृतराष्ट्रस्य पत्नी गान्धारी, तस्यां धृतराष्ट्रात् दुर्य्योधनादयः शतपुत्राः जाताः। तान् हि कुरोर्नामानुसारेण 'कौरवाः' धृतराष्ट्राज्जातत्वात् 'धार्त्तराष्ट्राः' इत्यभिधया विशेषयन्ति विद्वांसः।

अथ ब्रह्मशापादकाले निधनमुपगते पाण्डौ, धृतराष्ट्रः बालान् पाण्डवान् अपत्यनिर्विशेषैः पालयामास। सर्वे एव ते कौरवाः पाण्डवाश्च विविधगुणोपचिताः अमितबलशालिनश्चापि आसन्, तन्मध्येषु कुन्तीपुत्रं युधिष्ठिरं सर्वगुणोपपन्नं ज्ञात्वा तस्मावेव कुरुसिंहासनं दातुं धृतराष्ट्रः समभिलषत्। किन्तु क्रूरमतिरीर्ष्यापरिपुष्टो दुर्य्योधनः पितु-

रभिलाषमवमन्य स्वमातुलशकुनिमन्त्रणया वारणावतनगर्य्यां जतुगृहं निर्म्माय कौशलेन कुन्त्या सह तानेव पाण्डवान् तत्र प्रेषयत्।

समनन्तरञ्च विदुरमुखात् तादृशं वृत्तमवगम्य ते हि पाण्डवाः स्वयमेव वह्निना तज्जतुगृहं विदह्य तस्मात् प्रतस्थिरे। तन्निलयदहनानलेन पाण्डवानामवश्यमेव मृत्युरासीदिति मत्वा दुर्य्योधनादयः कौरवाः हृष्टाः निःशङ्कमनसश्च बभूवुः। ते च युधिष्ठिरादयः पञ्चपाण्डवाः दुर्य्योधनाक्रमणशङ्कया छद्मवेशं परिगृह्य कति दिनान्युषित्वा कालक्रमेण द्रौपदीस्वयम्बरसभां समासेदुः। तत्र पाञ्चालराजस्याङ्गीकृतं मत्स्यलक्ष्यमर्जुनो भित्वा पाञ्चालतनयां लेभे। ततः परं जननीनिदेशेन ते खलु भ्रातरः पञ्चपाण्डवाः तामेकामेव द्रौपदीमर्द्धाङ्गिनीत्वेनाङ्गीचक्रुः। विवाहानन्तरञ्च समुपस्थितानां युधिष्ठिरादीनां प्रार्थनया धृतराष्ट्रः स्वराज्यं द्विधा विभज्य दुर्य्योधनाय हस्तिनापुरम्, युधिष्ठिराय च इन्द्रप्रस्थं नाम नगरीं दत्वा कुरुपाण्डवयोः पृथक्स्थानं विनिर्द्दिदेश।

ततश्च कतितिथावपचिते दुर्य्योधनः स्वमातुलस्य शकुनेः कुमन्त्रणया अक्षक्रीड़नार्थं युधिष्ठिरमाहूय कपटक्रीड़या तं पराजयामास। धर्म्ममूर्त्तिः युधिष्ठिरश्च दिष्ट्या व्यसनदोषमनालोचयन् पाशकपणानुसारेण त्रयोदशवर्षं वनवासमङ्गीचकार। तेष्वपि वर्षमेकमज्ञातं द्वादशवर्षमनज्ञातवनवास एव नियमो व्यवस्थितः। तच्च स्मृत्वा चिरेण सत्यसन्धो युधिष्ठिरः भ्रातृपत्नीमात्रसहायीकृत्य स्वराज्यमैश्वर्य्यञ्च विहाय क्लेशांश्च मौलीकृत्य काम्यकवनं द्वैतवनञ्च अध्युवास। तदधिकृत्य भारवेर्वर्णनोपक्रमश्चैषः। तथा हि "युधिष्ठिरं द्वैतवने वनेचरः" इत्यादि श्लोकाश्रयकाव्यहृदयम् इति।

---

## पौराणिकीकथा :—

"त्रिः सप्तकृत्वो जगतीपतीनाम्" [३।१८] अथ कदाचिन्मृगयानुरक्तः कार्त्तवीर्य्यार्जुनोऽटवीं पर्य्यटन् जमदग्नेराश्रमं प्राप्य मुनिसत्कृतोऽसौ तं महीयसीं विभवरूपां कामधेनुं ययाचे। किन्तु प्रागव्ययेनापि तामदित्सन्तं मुनिमाहवे हत्वा कामधेनुं स्वपुरं नीतवान्। परन्तु प्रत्यावर्त्तनवेलायां मुनिपत्नीं रेणुकामपि त्रिःसप्तकृत्वः प्रहृत्य आश्रमदेशात् प्रस्थितः। अत्रान्तरे पुष्करतीर्थात् प्रत्यावर्त्त्य कुपितो रामः जननीप्रहारसंख्यया त्रिःसप्तकृत्वः क्षत्रवधमङ्गीकृत्य पितृद्वेषिणं हैहयं सबान्धवं प्रतिज्ञासंख्यया च सबालक्षात्त्रवीरान् निहत्य स्यमन्तपञ्चके (कुरुक्षेत्रे) पञ्चसरःसु सञ्चितेन तच्छोणितेन पितृपुरुषान् तर्पयति स्म।

"वीर्य्यावधूतः स्म तदा विवेद" [३।१८] अम्बाम्बिकाम्बालिका नाम कन्यात्रयाणां विवाहार्थं काशीपतिना स्वयम्बरसभा समाहृता। तत्र कुरुपितामहो भीष्मः सर्व्वानेव भूपालान् पराजित्य तास्तिस्रः कन्यकाः परिजग्राह। ततो विचित्रवीर्य्येण सह विवाहोद्युक्तया अम्बया उक्तं "शैल्वराजविवाहकामिताहम्" इत्याकर्ण्य स तदर्थं तां मुमोच। शैल्वेनापि सा अवीर्य्यशुल्कतया प्रत्याख्याता। ततस्तस्याः प्रार्थनया परशुरामः तद्ग्रहणार्थं भीष्मं संयाच्य कथं कथमपि तां ग्रहितुमशक्यतया उभयोर्युद्धमभवत्। तत्र भीष्मात् परशुरामस्य पराभवोऽभवदिति संक्षेपा कथा।

"निपुणमिति मूकदानवः" [१२।३६] मूको नाम दानवः तपस्यन्तमर्जुनं समीक्ष्य तत् तपो देवकृत्यमिति मत्वा शौकररूपं परिगृह्य तद्विघट्टनकामः पार्थं हिंसन् किरातार्जुनयोर्बाणेनासून् तत्याज। उभयोरेकलक्ष्ये शरक्षेपं मृगयाधर्म्मविरोधितया प्रथमं परस्परं द्वन्द्व-

युद्धं ततः तच्च शरयुद्धेन पर्य्यवसितम्। तत्रार्जुनशरपरिचालनकौशलेन परितुष्टः परिगृहीतकिरातपतिवेशः पशुपतिस्तस्मै पाशुपतं नाम महास्त्रं प्रायच्छदिति कथासंग्रहः।

—००—

## भारतभू-विवरणम्—

भूविज्ञाने प्रयोजनीयतया भारतीयप्रसिद्धस्थानानां प्राचीनाधुनिकनामसंस्थानमत्र ज्ञातव्यम्। तत्र :—

भारतवर्षम्, यदाह विष्णौ :—

"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छताम्॥" इति

अपि च :—

"हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता।
तस्माच्च भारतं वर्षं तस्य नाम्ना महात्मनः॥" इति

वर्त्तमाने अस्य प्रायो दैर्घ्ये विस्तारः सार्द्धनवशततमक्रोशं (१९००, माइल) प्रस्थेऽपि च तदनुरूपः। क्षेत्रफलं प्रायः सप्तदशलक्षवर्गः, इति।

आर्य्यावर्त्तः—(अधुनातन हिन्दुस्थान)

"आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात्।
हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रचक्षते॥" इति

ब्रह्मावर्त्तः—(देवभूमि, कुरुक्षेत्रादिदेश)

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥" इति

अत्रोक्तेयं सरस्वती न प्रयागोपपन्ना नावगन्तव्या; तदन्या काचित् सिन्धूपनद्येषा भाव्या। ये च प्राभवतां पुरा सरस्वतीदृषद्वत्यौ नाम

सिन्धोरुपनद्यौ ते हि मरुप्रदेशेन प्रतिहतप्रवाहतया संप्रति केवलं नाममात्रं लोकस्मृतौ संस्थाय सुचिरं विलुप्तमुपगते। परं वर्त्तते तयोरिदानीं मरुस्थलोर्द्धंगता यैव तोयधारा सा हि 'घागर्' नाम्ना प्रसिद्धा। सरस्वत्या उत्पत्तिराह मात्स्ये :—

"हेमकूटस्य पृष्ठे तु सर्पाणां तत्सरः स्मृतम्।

सरस्वती प्रभवति तस्माज्ज्योतिष्मती तु या॥" इति वाचा एवमेवं प्रत्ययो भवति यत् हिमाद्रेरुत्तरस्थे किम्पुरुषवर्षे हेमकूटोपरि सर्पसरो (सिर्मार्) विद्यते, तस्मादेव रसमयी सरस्वती संभूय भारतमभिप्रविशति। अपि हि दृश्यते तावदस्माभिरेका सरस्वती हिमाद्रेर्दक्षिणतः क्षरित्वा गङ्गायमुनाभ्यां समं दक्षिणाभिमुखं समेत्य प्रयागे प्रयुक्तपूर्व्वा। अन्यापि च तद्भूधरोत्तरदेशान्निःसृत्य मरुस्थलीमभितो गत्वा संप्रति विलुप्तविग्रहोपपन्ना; एतद्विरुद्धदिगन्तर्गतयाः सरस्वत्योरुत्पत्तिमेकहिमवतः समालभ्य सहजत एव मनसि समुदेति यद्धितयोः सरस्वत्योरुत्पत्तिभूमिरेकैव सर्पसरः, तस्मादेव विनिर्गत्य विभिन्नप्रदेशेन प्रवाहिता, सुतरां पुरा तत्सरः प्रभवनीरधारा सरस्वतीसंज्ञया अभिहिता; तदुदकं यत्र यत्र प्रसरति तत्र तत्रैव सरस्वतीनाम्ना व्यपदिश्यति, अतो दक्षिणोत्तरगतः सर्पसरसः प्रवाहः एकयैवाख्यया व्यवहार्य्यते सद्भिरिति मामकानां हृदयम्। दृषद्वती चापि हिमवतः समुत्पन्ना। तदुक्तं मार्कण्डेयपुराणे :—

"गोमती धौतपापा च बहुदा च दृषद्वती। ***

कौशिकी चापगा विप्र हिमवत्पादनिःसृता॥" इति

कुरुदेशः—(अधुना दिल्लीनगरी)

"हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे।

पाञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः॥"

कुरुक्षेत्रम् :—(अधुना थानेश्वर, पाणिपथ, कर्णाल)

"धर्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि॥"

अस्मिन्नेव स्थले त्रीणि महायुद्धान्येव सूचितपूर्वाणि। तत्र प्रथमे कुरुपाण्डवयोर्भारतमहायुद्धम्। द्वितीये तु माहाम्मदघोरीपृथ्वी-राजयोः समराभिनयम्। तृतीये तावत् मोगलवंशीयवीरवावर-शूर-इब्राहिमलोधिनामकम्लेच्छपत्योरगणितलोकक्षयकरणरणावतरणम्। स्थानमिदं तीर्थतया इतिहासप्रसङ्गतया च भुवनविश्रुतम्। दर्शनार्हञ्च मुक्तिमार्गजिगमीषूणां ज्ञानमभिप्सूनां प्रत्नतत्त्वसंग्रहीतॄणाञ्च सर्व्वथा। कलिकातानगरीतः स्थानमिदं सार्द्धपञ्चविंशत्यधिकपञ्चशततमक्रोश-मन्तरम् ( १०५१ माइल )।

पाञ्चालाः, कान्यकुब्जाः—( अधुनातन फरक्कावादं ) * मत्स्याः ( जयपुर ) * शूरसेनाः ( मथुरा ) * काशी ( वाराणसी ) * कोशलाः ( अयोध्या ) * विदेहाः ( उत्तरविहार ) * मगधाः (दक्षिणविहार) * अङ्गाः ( भागलपुरविभाग ) * द्वारका ( आधुनिक गुजराट् ) * गौड़-देशः ( वङ्ग ) "रत्नाकरं समारभ्य ब्रह्मपुत्रान्तरं प्रिये। वङ्गदेश इति प्रोक्तम्॥" * कलिङ्गाः ( उड़िष्या ) "जगन्नाथात् पूर्व्वभागे कृष्णातीरां-न्तरं प्रिये। कलिङ्गदेशः संप्रोक्तः—॥" * प्राग्ज्योतिषः ( कामरूप )।

विन्ध्यस्य दक्षिणस्थजनपदाः—विदर्भाः ( वेरार ) * मधुराः ( मादुरा ) * पाण्ड्याः ( तामिल ) * वेराः ( महीशूर ) * चोलाः ( तामिल ) * चेदी ( मालवार ) * केरलाः ( त्रिवाङ्कुर ) * काञ्ची ( काञ्चिभरम् ) * कर्णाट-अन्ध्र-राष्ट्रकूट-भोज-विदर्भाः ( वेरार ) * पञ्चवटी ( वर्त्तमान नासिकसहर ) * किष्किन्ध्या ( वेल्लेरीजिला, तत्सन्निहितदेश )।

दाक्षिणात्यदेशानाह ज्योतिस्तत्त्वे :—

"दक्षिणेऽवन्तिमाहेन्द्रमलया ऋष्यमूकका:।
चित्रकूटमहारण्यकाञ्चीसिंहलकोङ्कणाः॥
कावेरी ताम्रपर्णी च लङ्काचित्रकूटादयः॥".

विन्ध्यपृष्ठस्थदेशा :—

"मलयाश्च करुषाश्च मेकलाश्चोत्कलैः सह ।
उत्तमाशा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥
तोषलाः कौशलाश्चैव त्रैपुरा वैदिकास्तथा ।
तुमुरास्तुम्बुराश्चैव पटसान्निषधैः सह ॥
अनुपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः ।
एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिनः ॥" इति

भारतेऽस्मिन् वर्षे असंख्याताः नद्यः। तासु प्रयोजनीयतया मुख्यतश्च प्रधाननदनदीनां नामानि समुल्लिखितानि। तत्र तावत्-पञ्चनदे मद्रदेशे 'पञ्जाब'इति ख्याते पञ्चनद्यः—

"वितस्तैरावती चन्द्रभागा मद्रे सरिद्वरा ।
शतद्रुश्च विपाशा च तेन पञ्चनदः स्मृतः ॥"

मार्कण्डेयपुराणे च :—

"गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथापरा ।
यमुना च शतद्रुश्च वितस्तैरावती बहुः ॥"

देवीभागवते चापि :—

"तापीरेवा च सुरसा नर्म्मदा च सरस्वती ।
चर्म्मण्वती च सिन्धुश्च अन्ध-शोनौ महानदौ ।
कौशिकी यमुना चैव मन्दाकिनी दृषद्वती ॥" इत्यादि

उक्तास्वेतासु गङ्गा तावत् बहूनि जनपदान्युत्तीर्य्य सागरमभिगता । तच्चोक्तं मात्स्ये :—

* * * "किरातांश्च पुलिन्दांश्च कुरून् वै भारतानपि ।
पाञ्चालान् कौशिकान् मत्स्यान् मागधाङ्गांस्तथैव च ॥
ब्रह्मोत्तरांश्च वङ्गांश्च ताम्रलिप्तांस्तथैव च ।
एतान् जनपदानार्य्यान् गङ्गा भावयते शुभा ।
ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोदधिम् ॥" इति

पर्व्वताश्चाप्यसंख्याताः। तेषु प्रधानानां कति नामान्युल्लिखितानि देवीभागवते :—

"पारिपात्रस्तथा द्रोणश्चित्रकूटगिरिस्तथा।
गोवर्द्धनो रैवतकः ककुभो नीलपर्व्वतः॥
गौरमुखश्चेन्द्रकीलो गिरिः कामगिरिस्तथा।
एते चान्येऽप्यसंख्याता गिरयो बहुपुण्यदाः॥"

हिमालयो हि पर्व्वतप्रधानं तदुक्तम् :—"हिमालयो भारतवर्षस्य सीमापर्व्वतोऽयम्। अस्य दीर्घो दशसहस्रयोजनानि (८०,००० माइल)। प्रस्थे द्विसहस्रयोजनानि (१६,००० माइल) यथा दक्षिणेनेलावृत्तं निषधो हेमकूटो हिमालय इति प्रागायता। यथा नीलादयः। अयुतयोजनोत्सेधा, हरिवर्ष-किंपुरुष-भारतानां यथासंख्यम्।" इति भागवतम्। मार्कण्डेये च :—

"कैलासो हिमवांश्चैव दक्षिणेन महाचलौ।
पूर्व्वपश्चायतावेतावर्णवान्तव्यवस्थितौ॥"

अत्र भागवतोक्तमिलावृत्तं भारतस्य नववर्षान्तर्गतवर्षम्। तत्र निषधादयः पर्व्वताः सन्तीति तस्योक्तिः। शैवे तु विभिन्नरूपमाह यथा :—

"इलावृत्तमृषिश्रेष्ठ चत्वारस्तत्र पर्व्वताः।
पूर्व्वेण मन्दरो नाम दक्षिणे गन्धमादनः।
विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्थितः॥"

मात्स्येऽपि च :—

"विष्कम्भपर्व्वतास्तद्वन्मन्दरो गन्धमादनः।
विपुलश्च सुपार्श्वश्च सर्व्वरत्नविभूषितः॥
अरुणोदं मानसञ्च सितोदं भद्रसंज्ञितम्।
तेषामुपरि चत्वारि सरांसि च वनानि च॥" इति

विष्कम्भपर्व्वताः अतिविस्ताररूपाः। अथवा देशानां प्रतिबन्धकस्वरूपाः, सीमारूपा इत्यर्थः। एषु तावद् यो मन्दरो नाम पर्व्वतः

समुपलभ्यते, स हि किरातार्जुनीयोपवर्णितं पार्थस्य शिवाराधनस्थल-मिन्द्रकीलो नाम भूधरोत्तमः सर्वथा प्रतिभाति। यतः 'इन्द्रकीलस्तु मन्दरः' इति कोषकृता हेमचन्द्रेण शब्दपर्य्यायवाचकत्वेन संगृहीत-तया तदर्थसङ्गतेरप्रसङ्गात्; वक्ष्यमाणवचनार्थसङ्गतेश्चापि। नूनं श्रुतं हि मात्स्ये मन्दराद्रौ वर्त्तते अरुणोदं नाम सरः; गन्धमादन-महीध्रे च मानसं सरः, ब्रह्मणो मानसभूमेर्जाततयैव तस्येयं मानस-संज्ञा। तदुद्भूता गङ्गा सरयूप्रभृतिपुण्यतोया नद्यः भारतमलंकृत्वा समुद्रमगादिति श्रुतिस्मृतिभ्यां सहस्रमुखेनोद्गीतम्। यथा हि भाग-वते—"तथैवालकनन्दा दक्षिणेन ब्रह्मसदनात् बहूनि गिरिकूटा-न्यतिक्रम्य निषध-हेमकूट-हिमकूटान्यतिरभसतररंहसा लुण्ठन्ती भारतमपि वर्षं दक्षिणस्यां दिशि लवणजलधिमभिप्रविशति।" इति। रामायणे च :—

"कैलासपर्व्वते राम मनसा निर्म्मितं परम्।
ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः॥
तस्मात् सुस्राव सरसः सायोध्यामुपगूहते।
सरः प्रवृत्ता सरयूः पुण्या ब्रह्मसरश्च्युता॥"

इत्येतद्वचनप्रपञ्चेन इयमियमेव सतां प्रवृत्तिः सहजत एव समुदेति यदेकस्यापि गन्धमादनगिरेर्नामान्तरं कैलासाचल एव, यत इलावृता-न्तर्गतगिरिकूट एव मानससरस उत्पत्तिश्रवणादेकवृत्तप्रभवत्वोभयो-र्लब्धत्वात् पृथक्कल्पने मानाभावाद् गौरवबाहुल्यात् महर्षिवचनार्थ-सङ्गतेश्च। एवञ्चापि श्रूयते शैवे मात्स्ये च मानसजनयितुः कैलासा-द्रेरग्रदिगन्तवर्त्ती गिरिरिव इन्द्रकीलः, स च कैलासाचलस्यातिसन्नि-हित एव सर्वथा प्रतिभाति यतो धनञ्जयस्य गङ्गायाः सन्निधौ तपश्च-रणश्रवणात् इन्द्रकीले च जाह्नवीतीरविरहोपगमाच्च। यथाह शैवे :—

"इतो गच्छाधुना पार्थ इन्द्रकीले सुशोभने।
जाह्नव्याश्च समीपे वै स्थित्वा चैव तपः कुरु॥ * * *

मनसा हर्षयुक्तो वै जगामाचलमुत्तमम् ।
तत्र गत्वा च गङ्गायाः समीपं मन्दरं स्थलम् ॥
अशोककाननं यत्र तिष्ठति स्वर्गसन्निभम् ।
तत्र तस्थौ स्वयं स्नात्वा नत्वा च गुरुसत्तमम् ॥

इत्यनेन वाचा प्रागुल्लपितवाक्यानां यथार्थत्वं सम्यगुपपन्नम् । अपि च कैलासाचल एव, मन्दाकिन्याः समुद्भवश्रवणादिन्द्रकीले च तत्-सम्पर्काभावादियमेव तत्र सङ्गतिः समीचीना, यदुभयाचलयोः सुर-धुन्येव सीमारूपा । सा हि निजप्रवाहधारयैव मात्रमन्तरितमिन्द्र-कीलं नापि चेदेकत्वमेव प्रतिपद्येत । तेनोक्तम् :—

"तत्र गत्वा च गङ्गायाः समीपं मन्दरस्थलम् ।"

इत्यादि । तत्र आपातदृष्ट्या लोकव्युत्पादनार्थञ्च तयोः पर्वतयो-र्भिन्नत्वमुपकल्पितम् ; वस्तुतः परमार्थेनोभययोः समानत्वस्वीकारे न तत्सिद्धान्तस्य हानिरिति किं बहुना ।

---

## पाण्डववनाभिगमनम्

आसीत् पुरा यः कुरुर्नाम नरपतिः स हि पाण्डवधार्त्तराष्ट्राणा-मूर्द्ध्वतनः क एकः पुरुषः इत्युक्तम् । तस्य नामानुसारेण तदधीनप्रदेशस्य कुरुनाम्ना प्रसिद्धिरासीत् । तद्यदुच्यते :—

"हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ।
पाञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्त्तितः ॥" इति

प्रतीतेषु प्रख्यातभूप्रदेशेषु यत् कुरुक्षेत्रं नाम समुपलभ्यते तस्य पुराकृतं नाम पुरुजाङ्गलं समन्तपञ्चकं वा ; तच्चाह युधिष्ठिरादीनां वनगमनप्रक्रमे कुरुक्षेत्रे समुपस्थिते युधिष्ठिरे "सुख्याश्च सर्व्वे कुरु-जाङ्गलानाम्" "दृष्ट्वा जनौघं कुरुजाङ्गलानाम्" इत्यादि वाक्यसन्दर्भेण

तथार्थप्रतीतिः। परं कुरुजाङ्गलस्य समन्तपञ्चकं नाम श्रूयते महाभारते यत् पुरा जामदग्न्यः त्रिसप्तकृत्वः क्षत्रियान् निहत्य तेषां रुधिरैः कुरुजाङ्गले पञ्चह्रदान् प्रपूर्य्य तैः शोणितैरेव परेतपुरसंस्थान् पितॄनतृप्यत्। ततो रामप्रार्थनानुसारेण परितृप्तास्ते पितरस्तस्मै स्थानस्यैतस्य मुक्तिमार्गविधायकत्वं वरं प्रददुः। तदुक्तम् :—

"स सर्व्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः।
समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्॥
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः।
पितॄन् सन्तर्पयामास रुधिरेणेति नः श्रुतम्॥ * * *
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः॥" इति

एवमपि हि निर्णीतश्चास्यासीत् परिमाणं तत्र :—

"तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च।
एतत् कुरुक्षेत्रं समन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते॥" इति

एवमेवंवचनप्रपञ्चेनाप्येतत् स्थानस्य पावनतया ब्रह्मवेदितया कुरुपतेः कर्षणतया च क्षेत्रत्वमभिधायामन्यतमं कारणमुपपन्नम्। परं कुरुपतेश्चाप्येकदा तत्स्थानमसकृदेव कर्षणदर्शनात् 'ऐन्द्रिपदं चेदभिलषे'दिति भावनया शतक्रतुना बहुशः पृष्टेनापि तदुत्तरमनासाद्य ततो जिज्ञासितामरात् परिज्ञातेन तदभिप्रायेण परितुष्टेन मनसा राज्ञोऽभिप्रायानुरूपो वरो दत्तः 'यदेतदेवस्थलमविमुक्तक्षेत्रं भवेत्' इति। अविमुक्तत्वमस्योन्नमासीत् श्रुतौ 'अविमुक्तं वै कुरुक्षेत्रम्' इति। अस्मिन् मृते काश्यादिवन्निर्व्वाणमुक्तिरिति श्रुतिस्मृतिभ्यामुन्नीततया 'काशीक्षेत्रम्' 'श्रीक्षेत्रम्' 'पुष्करक्षेत्रम्' इत्यादिवत् क्षेत्रत्वसंज्ञाप्यस्यास्तीति श्रूयते नारसिंहे द्विषष्टीतमाध्याये भगवता विष्णुक्षेत्रवर्णनोपक्रमेणोक्तम् :—

"शृणुष्वावहितो ब्रह्मन् गुह्यनामानि मेऽधुना ।
क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि यत्नतः ॥ * * *
विश्वरूपः कुरुक्षेत्रे * * * * * *
क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः ।
द्रष्टव्यानि यथाशक्त्या क्षेत्राण्येतानि मानवैः ॥" इति

क्षेत्रस्यैतस्य दक्षिणोत्तरसीमे माहात्म्यञ्च प्रपञ्चितं बहुशो महर्षिणा भारते :—

"दक्षिणेन सरस्वत्या" इत्यादिवचनेन तल्लक्षितस्थलस्य
"कुरुक्षेत्रे गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते ॥
ब्रह्मवेदि कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ।
तस्मिन् वसन्ति ये मर्त्त्या न ते शोच्याः कथञ्चन ॥" इति

एवं देवनिर्म्मितदेशतयास्य पावनत्वमुक्तं मनुनापि :—"सरस्वती-दृषद्वत्यो"रित्यादि वाक्येन। अस्यैव च कुरुदेशस्य या हि पाश्चात्यसीमा विनिर्दिष्टा 'पाञ्चाल' इति वाचा तत्तु वर्त्तमान-'फरक्काबाद' इत्याख्यया विनिर्देशिततया फरक्कावादस्य पूर्ववर्त्तिकुरुक्षेत्रम्। तच्चेदानीं "थानेश्वर" नाम्ना विनिर्दिश्यते स्थानज्ञानविशेषज्ञैः ।

एतच्च स्थानमारभ्य मरुस्थलोपान्तभवसरस्वतीतीरान्तवर्त्ति काम्यककाननं तदूर्द्धञ्च द्वैतवनं यावत् समग्रभूप्रदेशवनभूमितयास्य अंश-विशेषं कुरुजाङ्गलं खाण्डवं काम्यं द्वैतवनमित्याख्यया तदानीं विनि-र्दिदिशुः पुरातनकालोद्भवीयाः सभ्याः ।

एषु च वनभूमिषु खाण्डवं तावत् वर्त्तमान-'भोँशोयाला'ख्य-वाष्पीयशकटगमनलोहवर्त्तनो लोकयात्रास्थानादारभ्य (ष्टेसनात्) खाण्डोयापर्य्यन्तां सुदूरव्यापिनीमरण्यानीं यावत् खाण्डवनाम्ना प्रथि-तिरस्ति। अस्य आधुनिकं नाम 'निमार' मरुप्रदेशान्तर्गतभूखण्डम्। इन्द्रप्रस्थासन्नभूमिरिति महर्षिणा सुबहुतया प्रपञ्चिता। दृश्यते हि

तदन्तरान्तरा संप्रत्यपि च नात्युच्चासंख्येया भूधरमाला, अगणिता प्रलुप्तप्राया गिरिनिर्झरिणी निर्म्मितपूर्वं चुद्रमचुद्रञ्च शतश इष्टक-मन्दिरञ्च यथायथं पुरातत्त्ववृत्तं स्मारयन्ति, प्रमाणयन्ति च भृशं समतीतानां तदानीन्तनीयानां सुपुष्कलामपि नानाकथाम्।

काम्यकन्तु श्रुयते मरुप्रदेशोपगतायाः सरस्वत्यास्तटान्तर्गताविदूरस्थनिविरवनभूमिखण्डम्। तच्च हस्तिनाजनपदान्तर्भवकुरुक्षेत्रदेशात् प्रतीचीदिगन्तर्गताया नातिदूरतराया नातिसमीपवर्त्तिन्या मरुभूमिः शिरस्थमिति प्रामाणिकानां सुसिद्धा सुदृढ़ा च धारणा। "मरुभूमेः शिरस्थानं तृणविन्दुसरः प्रति" इत्युक्तेः। एवञ्चापि हस्तिनातो वनवासमुद्दिश्य ते खलु पाण्डवाः प्रथमं गङ्गायमुनयोरवगाह्य कुरुक्षेत्रं गत्वा तस्मात् क्वचिद्विरलपादपच्छायाहतपथेन क्वचिद्वा सुघनविटपिपरिवृतवर्त्तना दुर्गतारण्यमार्गेण त्र्यहोरात्रैः काम्यकं विविशुरिति श्रुतिः। तदुक्तं भारते :—

"पाण्डवास्तु वनेवासमुद्दिश्य भरतर्षभाः।
प्रययुर्जाह्नवीकूलं कुरुक्षेत्रं सहानुगाः॥
सरस्वतीदृषद्वत्यौ यमुनाञ्च निषेव्यते।
ययुर्वनेनैव वनं सततं पश्चिमां दिशम्॥
ततः सरस्वतीकूले समेषु मरुधन्वसु।
काम्यकं नाम दद्दृशुर्वनं मुनिजनप्रियम्॥" इति

"मरुषु निर्जलदेशेषु धन्वसु जाङ्गलदेशेषु" इति टीकाकृद्वचनात्तथार्थप्रतीतिश्च। अथ तत्र मारुतिर्भीमः किर्म्मीरं व्यापाद्य सभ्रातृको द्वैतवनमगात्। तद्यथाह :—

तस्मिन् हते तोयदतुल्यरूपे कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः।
भीमं प्रशस्याथ गुणैरनेकैर्हृष्टास्ततो द्वैतवनाय जग्मुः॥" इति

एवञ्च विनिर्द्धारितं स्थानज्ञानकोविदा यद्द्वैतवनमुक्तं तत्तावद्वर्त्तमान-'आम्बला'-जनपदस्यासन्नारण्यस्थलम्। तत्र श्रुयते द्वादशवर्षाणि

वनवाससुपभुज्य ते च पाण्डवाः द्वैतवनादेव विराटराष्ट्रं समुपययुः। तद्विराटस्य पूर्वकृतं नाम मत्स्यदेशः। तद्देशस्तु वर्त्तमानजयपुरप्रदेशादारभ्य खाण्डववनभूमिपर्य्यन्तमतिविस्तीर्णं भूखण्डं विनिर्दिष्टं भूगोलविदा, सुतरां पाण्डवानां विराटनगरगमनप्रसङ्गतोऽपि तदेव स्थानं द्वैतवनं सहजत एव प्रतिपन्नमस्ति। दृश्यते हि वनवाससुपेत्य ते चापि पाण्डवा प्रथमं यमुनापुलिनमुपेत्य तद्दक्षिणतीरवर्त्ति गिरिदुर्गं वनदुर्गं वा समवस्थाय सिंह-शार्दूलं व्यापाद्य विन्ध्यदक्षिणस्थदशार्णानामुत्तरवर्त्तिना पाञ्चालानां दक्षिणस्थेन यकृल्लोममथुराणाञ्चान्तर्वर्त्तिनाध्वना विराटनगरं विविशुः। ततो युधिष्ठिराज्ञया धनञ्जयः पथश्रमपरिक्लान्तां पाञ्चालतनयां समुद्वाह्याविलम्बेन विराटनगरोपान्तमवापेति तत्रत्यसंक्षेपविवृतिः।

एतच्चापि सर्व्वं भूगोलपर्य्यवेक्षणेनानुमातुं शक्यते यद् द्वैतवनसुत्तं तस्माद्विराटराष्ट्रे (जयपुरे) पाण्डवानां वनवाससुन्नमनमार्गपर्य्यायविनिर्देशसंस्थापनव्यवस्थार्थोपपत्तेः सर्व्वथा स्वीकरणीयम्। अन्यथा एतदुक्तदेशानामपि पृष्ठतः पार्श्वतो मध्यतो वा गमनासम्भवात्।

परं 'पाण्डवगुहे'ति नाम्ना वर्त्तते पुणापत्तनस्थे—'फगुसन्' आख्येयविद्यालयाविदूरतरे नयनाभिरामे शैलकुञ्जे काचिद्गिरिगुहा; तां पुरा समध्युसयन् वनवासनिरताः पाण्डवाः; तेन 'पाण्डवगुहा' इत्यभिधया तच्छैलानद्यापि विशिषयन्ति सभ्याः, लोका अपि च तत्प्रवादमुपजीव्य तद्दर्शनलालसया समियन्ति, पूजयन्ति च भक्तिनम्रेणापि हि मौलिनेति समभिज्ञाय द्वैतादिवनं किमु तत्रेति संशयोऽपि कथं कथमपि नोचितः। तत्रत्ये देशे सरस्वतीतीरभूमेरवर्त्तमानात्। द्वैतविन्दुद्वैतसरसोरभावाच्च। अपि श्रुतं यद्वैतवनादेव तीर्थयात्रोपक्रमे भारतस्य सर्वमपि पुण्यस्थलं परिभ्रेमुः ते खलु पाण्डवाः, मन्ये तेन मिषेण तदानीं तद्गिरिगह्वरतलमध्युषुरिति मामकानां विश्वासभूमिः।

एवञ्चापि यन्महर्षिणा काम्यकद्वैतवनयोः सरस्वतीकूलवर्त्तित्व-

सुक्तम्; तेन स्वतएव प्रतिभाति यदुभयोरतिशयसान्निध्यमिति, किन्तु द्वैतवनस्थपाण्डवमृगयावशेषितैर्वीजीभूतैर्मृगैर्युधिष्ठिरो यत्-स्वप्नायितः "भवन्तो यदि वनमिदं नापहाय संप्रति गच्छेयुः, तर्हि मामकानां समूलोच्छेदो भविष्यति, अतो वनमिदं त्यज्यताम्" इति स्वप्नवृत्तं श्रुत्वा तद्वनं ते विहाय भूयः काम्यकवनं ययुरिति ज्ञात्वा अनुमातुं शक्यते काम्यकवनं द्वैतवनात् सम्यक् दूरतरम्, यतः आखेटार्थीभूतानां मृगाणां तत्र विरलतया काम्यकवनगमनश्रुतत्वात्। इयमेव प्रवृत्तिः स्वतः सतां समुदेति यद्द्वैतवनस्य दूरत एव काम्यक-वनम्। येन प्रथमतो वनगमनार्थिनां पाण्डवानां काम्यकवनगमनं महाभारते समभ्युपगमात् तदर्थस्य स्वभावत एव प्रतीतेर्बाधाभावात् तत्रैवाबाधं निर्विशङ्कञ्च स्वीकरणीयं प्रमाणकुशलिनां प्रमाणान्तर-प्रकटनप्रसङ्गसङ्गतिविरहादिति किं विस्तरशो वाक्यापेक्षा किमपि वा तत्र शङ्काविषयो वा।

एवं नाम दृश्यते हि महाभारते यत् द्वैतवने कियत् तिथावपचिते युधिष्ठिरे त्रिकालज्ञो मुनिर्व्यासस्तं समेत्य अर्जुनशिक्षार्थं मूर्त्तिमतीं प्रतिस्मृतिं नामधेयां विद्यां नयसद्भावबहुलां गिरञ्च समुपदिश्य द्वैतवन-मपहाय अन्यद् गन्तुं विनिर्दिश्य सपदि चान्तर्दधे। युधिष्ठिरोऽपि तदादेशं मौलीकृत्य तद्वनं विहाय काम्यके पुनरुपस्थितः। यथा :—

"स व्यासवाक्यमुदितो वनाद्द्वैतवनात् ततः।
ययौ सरस्वतीकूले काम्यकं नाम काननम्॥" इति

तत्र च व्यासाधीतविद्यामर्ज्जुनमुपदिश्य तदुपदिष्टमिन्द्रकीलं प्रति प्रेषितवान्। अर्जुनश्च काम्यकं त्यक्त्वा वनदुर्गं शैलदुर्गञ्चातिक्रम्य जातु मुनिजनपरिषेवितं पावनं हिमाचलं समनन्तरमगात्। तत-स्तमेव दुर्गतमार्गं हिमवन्तं गन्धमादनञ्च समतिक्रम्य परिशेषे व्यासो-पदिष्टमिन्द्रकीलमासादितः। उक्तञ्च :—

"सोऽगच्छत् पर्वतांस्तात तपोधननिषेवितान् ।
दिव्यं हैमवतं पुण्यं देवजुष्टं परन्तपः ॥
अगच्छत् पर्वतं पुण्यमेकाह्नैव महामनाः ।
मनोजवगतिर्भूत्वा योगयुक्तो यथानिलः ॥
हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रमत् स दुर्गाणि दिवारात्रमतन्द्रितः ।
इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनञ्जयः ॥" इति

स तत्र इन्द्रोपदेशात् शङ्करमाराध्य तस्मात् पाशुपतास्त्रं लेभे। इति अर्जुनास्त्रलाभस्य संक्षिप्तविवृतिः।

परं नाम श्रुतं हि किरातार्जुनीये काव्ये यद्द्वैतवनाधिवसन्तमर्जुनं महर्षिव्यासदेवेन समेत्य ऐन्द्रीविद्या समुपदिष्टा। सोऽर्जुनोऽपि तदधीत्य युधिष्ठिराज्ञप्तः द्वैतवनादेव शैलोच्चयमिन्द्रकीलं प्रति पशुपतेराराधनार्थं गत इति वचनप्रपञ्चेन ग्रन्थद्वययोरसामञ्जस्यमभीक्ष्य स्वतएव चेतसि समुदेति यत् कविभारविना भारतादेवाख्यानवस्तु नोपचितमत्र। येनो-भययोर्महदेवान्तरत्वं प्रतिभाति घटनायाः। अतो मन्ये शिवपुराणादेव समाहृतं यथायथं वस्तुजातमत्र किरातार्जुनीये ग्रन्थे येनोभयत्र तुल्यो-ल्लेखस्य समानोपक्रमोपसंहारयोश्चापि लाभतयेयं प्रज्ञावृत्तिर्मीमां-सकानाम्। अन्यच्च विस्तरशस्तद्व्याकृतत्वान्नेहोक्तमिति दिक्।

---

## किरातार्ज्जुनीयार्थं—श्रीमता रेवतीकान्तभट्टाचार्य्येण सङ्कलितं प्राचीन-भारत-भूचित्रम् ।



## किरातार्जुनीयस्य संक्षिप्तेतिवृत्तम् :—

प्रथमे सर्गे—द्वैतवनमधिवसतस्य युधिष्ठिरस्य सन्निधौ दौत्यनियुक्तस्य वनेचरस्य समागमः, वनेचरेण दुर्य्योधनस्य राजनीतिनैपुण्यकीर्त्तनम्, तस्य प्रस्थानम्, युधिष्ठिरं प्रति पाञ्चाल्या ओजस्विनी युद्धोद्दीपिनी वाक्‌विस्तृतिः।

द्वितीये सर्गे—युधिष्ठिरं प्रति भीमस्य ऊर्ज्जस्वलं समरपक्षपातिवाक्यम्, भीमं प्रति च युधिष्ठिरस्य शान्तिपूर्णं वचनजातम्, पाण्डवसमीपे महर्षेर्व्यासस्य समागमः, पाण्डवकृतस्तत्सत्कारश्च।

तृतीये सर्गे—व्यासदेवरूपवर्णनम्, व्यासं प्रति युधिष्ठिरस्य भक्तिपूर्णोक्तिः, युधिष्ठिरं प्रति व्यासस्य नीत्यात्मकमाश्वासवाक्यम्, व्यासस्यार्जुनाय विद्यादानपूर्वकं तपस्यार्थमुपदेशः, तस्य प्रस्थानम्, अर्ज्जुनसमीपे यक्षसमागमः, अर्जुनस्य प्रस्थानोपक्रमः, तद्विरहोपचितदुःखानां पाण्डवानां वैमनस्यम्, अर्जुनकृतद्रौपदीदर्शनम्, द्रौपद्या उद्दीपनोक्तिः, व्यासाज्ञप्तेन यक्षेण सहार्जुनस्य हिमालयस्थमिन्द्रकीलशैलं प्रति प्रस्थानम्।

चतुर्थे सर्गे—शरत्सुषमावर्णनम्, अर्जुनस्य हिमालयदर्शनम्।

पञ्चमे सर्गे—हिमाद्रिवर्णनम्, अर्जुनस्य हिमवतो मूलप्राप्तिः, यक्षस्य प्रस्थानम्।

षष्ठे सर्गे—इन्द्रकीलाद्रौ अर्जुनस्यारोहणादिवर्णनम्, तत्रार्जुनस्य तपश्चरणं, वनरक्षकमुखादिन्द्रस्य धनञ्जयकृततपस्याश्रवणम्, अर्जुनस्य तपोभङ्गार्थं गन्तव्यमित्यप्सरसां गणं प्रति शक्रनिदेशश्च।

सप्तमे सर्गे—गन्धर्वैः सहाप्सरसामिन्द्रकीले सविलासगमनादिकथनं, तत्रागतानां तेषां शिबिरसन्निवेशादिवर्णनञ्च।

अष्टमे सर्गे—गन्धर्वाणामप्सरसाञ्च कुसुमचयनादिविविधक्रीड़ावर्णनम्।

नवमे सर्गे—सायंसमयवर्णनं, चन्द्रोदयवर्णनं सुरतक्रीड़ावर्णनं, पानगोष्ठीवर्णनं, पुनरपि संक्षेपतः सुरतवर्णनं प्रभातवर्णनञ्च।

दशमे सर्गे—पार्थप्रलोभनार्थमप्सरसामनेकविधा विलासाः, अर्जुनस्य तात्कालिकी अवस्था, वर्षादि ऋतुवर्णनम्, अर्जुनतपोविघ्नार्थमप्सरसां प्रयासः, तासां प्रयासवैफल्यञ्च।

एकादशे सर्गे—अर्जुनाश्रमे विप्ररूपधारिणो वासवस्य समागमः, इन्द्रार्जुनयोः कथा, प्रत्यक्षमूर्त्तेरिन्द्रस्य पार्थं प्रति शिवाराधनोपदेशश्च।

द्वादशे सर्गे—अर्जुनकृतस्य शिवाराधनम्, अर्जुनतपसातितप्तानां सिद्धतापसानां शिवसमीपे गमनं तत्तपोवर्णनञ्च, शिवकृतं तापससान्त्वनमर्जुनस्य स्वरूपकथनञ्च, वराहमायया मूकदानवस्य धनञ्जयवधार्थं प्रयाणम्, सगणसैन्यस्य किरातवेशिनो शिवस्य मृगयाव्याजेनार्जुनाश्रमसमागमः।

त्रयोदशे सर्गे—मूकदानवार्जुनयोरन्योन्यमवलोकनं, तद्दर्शनेनार्जुनस्य मनसि नानावितर्काः, शूकरशरीरिणं मूकं प्रति पार्थस्य शरक्षेपः, मूकदानववधः, पार्थसमीपे शिवदूतागमः, तदुक्तपार्थाधिक्षेपश्च।

चतुर्दशे सर्गे—शिवदूतं प्रत्यर्जुनस्य जिगीषावचनं तच्छ्रुत्वागतस्य शिवचरस्य वचनमाकर्ण्य गृहीतकिरातपतिवेशस्य शिवस्य सदेवगणसैन्यमर्जुनविजयार्थमागमनम्, शिवार्जुनयोर्युद्धवर्णनम्।

पञ्चदशे सर्गे—चित्रयुद्धवर्णनम्।

षोड़शे सर्गे—किरातवेशस्य शिवस्यानन्यसाधारणसमरकौशलसन्दर्शनेनार्जुनस्य मनसि वितर्काः, शिवेन सहार्जुनस्यास्त्रयुद्धवर्णनम्।

सप्तदशे सर्गे—प्रथमतः शिवसेनया ततो भगवता सहार्जुनस्य युद्धम्।

अष्टादशे सर्गे—अर्जुनस्य सत्त्वातिशयदर्शनेन शिवस्य प्रसादः,

तत्रेन्द्रादिदेवानां समागमः, अर्जुनकृता भगवत्स्तुतिः, अर्जुनकृतं वरयाचनम्, पाशुपतास्त्रप्राप्तिः, इन्द्रादिदेवानामपि भगवदादेशेन वरदानपुरःसरं स्वस्वास्त्रप्रदानम्, कृतकार्य्यस्यार्जुनस्य युधिष्ठिरसमीपं समागमः, ग्रन्थसमाप्तिश्च ।

---

## कविकथादिसंग्रहे गृहीतसाहाय्यानां ग्रन्थानां नामानि :—

(१) अवन्तीसुन्दरीकथा, (२) अवन्तीसुन्दरीकथासारः, (३) प्राचीनलेखमाला, (४) रामायणम्, (५) महाभारतम्, (६) विष्णुपुराणम्, (७) शिवपुराणम्, (८) मत्स्यपुराणम्, (९) कूर्म्मपुराणम्, (१०) भागवतम्, (११) देवीभागवतम्, (१२) नृसिंहपुराणम्, (१३) मनुस्मृतिः, (१४) तन्त्रम्, (१५) ज्योतिस्तत्त्वम्, (१६) अभिधानचिन्तामणिः, (१७) वङ्गभाषया लिखितं भूगोलम्, (१८) एंग्लोभूचित्रम्, (१९) प्राचीनभूचित्रम्, (२०) वर्त्तमानभूचित्रम्, (२१) शिशुपालवधम्, (२२) भट्टिकाव्यम्, (२३) साहित्यदर्पणः, (२४) काव्यप्रकाशश्चेति ।

---

## किरातार्जुनीयश्लोकानामनुलोमादिवर्णक्रमेणोपक्रमणिका

इति किरातार्ज्जुनीयस्थश्लोकानामुपक्रमणिका समाप्ता ।

## विज्ञापनम् :—

**प्रबन्धकल्पलतिका**—[ प्रथमस्तवके 'रचनाशिक्षा' ] अयमेव अधुनातनरीत्यनुसारि रचनाविषयकसर्वोत्तमप्रबन्धादिरचनाविषयको ग्रन्थः। अत्र एते विषयाः सन्ति, यथा :—प्रबन्धस्वरूपम्, प्रबन्धप्रकारः, प्रबन्धस्य भाषा, तस्य भेदः, वाक्यम्, वाक्यांशः, पदान्वयः, गद्ये पदस्थापन-व्यवस्था, पदस्थापनादर्शः, वाक्यवृद्धिः, वाक्यसंक्षेपः अर्थविवृतिः, अर्थः, व्याख्या, भावार्थतात्पर्यं वा, संक्षेपार्थः, रूपकत्यागेनार्थः, अनुक्तपदपूरणं, सन्धिनियमः, चिह्नादीनां [, ; : । ! ? "—"] स्थापनव्यवस्था, तेषामुदाहरणम् आदर्शश्च। अलङ्कारांशे काव्यस्य दोषगुणरीतयः, अलङ्काराणाञ्च सरलसहजोपायेन लक्षणानि प्रदर्श्य तेषामुदाहरणं टीकाञ्च नियोज्य सुन्दरादतिसुन्दरं समानीतम्। स्पर्द्धया वक्तुमर्हामः यद् एतादृशः संग्रहः बालकादारभ्य सर्वेषामेव पाठार्थिनां महदुपकारं साधयिष्यति बाहुल्येन। अपिच प्रबन्धांशे विवरणात्मक-वृत्तान्तात्मक-चिन्तात्मकभेदेन बहवः प्रबन्धाः सन्निबद्धाः सन्ति। एतादृशमभिनवविषयसमलङ्कृतपुस्तकम् अद्यापि मुद्रणयन्त्राधीनं नासीदिति, मूल्यम् २)।

**प्रबन्ध-कल्पलतिका**—[ द्वितीयस्तवके 'समालोचना' ] अस्याः द्वितीयावृत्तिः। एतस्यामावृत्तौ पूर्व्वापेक्षया नानाविषये पुरुकस्योत्कर्षत्वं नीतम्, स्थूलं पत्रमक्षरञ्च। तथा पूर्वग्रन्थतो बहुनाटकनाटिकानां समालोचनामधिकां नियोज्य ग्रन्थस्य कलेवरं वर्द्धितमापादितम्, किन्तु प्रियपाठार्थिनां शिक्षार्थिनाञ्च सौकर्य्याय पूर्वनिर्द्धारितमूल्यमेव संरक्षितम्। अस्मिन् प्रथमतः रामायण-महाभारत-रघुवंश-कुमारसम्भव-किरातार्जुनीय-शिशुपालवध-नैषधचरित-मेघदूत-प्रमुखमहाकाव्य-खण्डकाव्य-नाटकादीनां समालोचना, तेषां सर्गाणाम् उत अङ्कानाञ्च वस्तुसंक्षेपः, नायकादिसिद्धान्तः, एवम् अन्येषामपि रूपवासवदत्त-अनर्घराघवप्रभृति-अस्मद्देशप्रचलितनाटकादीनां समालोचनादयः सन्ति, एतादृशो ग्रन्थः संस्कृतभाषासु द्वितीयो नासीत् मूल्यम् १॥०, तृतीयस्तवके 'प्राचीनकविजीवनी' (यन्त्रस्था)

**प्राकृतप्रकाशः**—(वररुचिकृतप्राकृतव्याकरणम्) भामहवृत्त्या तथा सम्पादककृतपरिशिष्टसमेतः—१।०।

**प्राकृतलक्षणम्**—(चण्डकृतप्राकृतव्याकरणम्) मूल-टीका-अनुक्रमणिका अतिविस्तृतभूमिकादिभिः सहितम् १)।

# किरातार्ज्जुनीयम् ।

## प्रथमः सर्गः ।

—:०:—

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

अन्वयः—कुरूणाम् अधिपस्य श्रियः पालनीं प्रजासु वृत्तिं वेदितुं यम् अयुङ्क्त, वर्णिलिङ्गी स वनेचरः विदितः ( सन् ) द्वैतवने युधिष्ठिरं समाययौ । वाच्यपरिवर्त्तनम्—यः अयुज्यत, वर्णिलिङ्गिना विदितेन तेन वनेचरेण युधिष्ठिरः समायये । अन्यत् सर्वं पदं तुल्यमेव, एवं सर्वत्र ज्ञेयम् । १

अथ तत्रभवान् भारविनामा कविः "काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ॥" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्य अनेकश्रेयःसाधनताम्, "काव्यालापांश्च वर्ज्जयेत्"इति निषेधशास्त्रस्य असत्काव्यविषयताञ्च पश्यन् किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन् कथामुपक्षिपति—श्रिय इति । आदितः श्रीशब्दप्रयोगाद् वर्णगणादिशुद्धिः अत्र उपयुज्यते । तदुक्तम्—"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा" इति । कुरूणां निवासाः कुरवो जनपदाः । "तस्य निवासः" इत्यण्प्रत्ययः । "जनपदे लुप्" । तेषामधिपस्य दुर्य्योधनस्य सम्बन्धिनीम् । शेषे षष्ठी । श्रियो राज्यलक्ष्म्याः । "कर्त्तृकर्म्मणोः कृति" इति कर्म्मणि षष्ठी । पाल्यतेऽनयेति पालनी तां, प्रतिष्ठापिकामित्यर्थः । प्रजारागमूलत्वात् सम्पद इति भावः । "करणाधिकरणयोश्च" इति सूत्रेण अत्र करणे ल्युट् । "ढिड्ढाणञ्" इत्यादिना ङीप् । प्रजासु जनेषु विषये । "प्रजा स्यात् सन्ततौ जने" इत्यमरः । वृत्तिं व्यवहारं वेदितुं ज्ञातुं यं वनेचरम् अयुङ्क्त नियुक्तवान् । वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी । तदुक्तम्—"स्मरणं कीर्त्तनं केलिः प्रेक्षणं

गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्" ॥ एतदष्टविधमैथुनाभावः प्रशस्तिः । "वर्णादब्रह्मचारिणि" इतीनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी, ब्रह्मचारिवेशवानित्यर्थः । स नियुक्तः, वने चरतीति वनेचरः किरातः । "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः । "चरेष्टः" इति टप्रत्ययः । "तत्पुरुषे कृति बहुलम्" इत्यलुक् । विदितं वेदनमस्यास्तीति विदितः, परवृत्तान्तज्ञानवान् इत्यर्थः । "अर्श आदिभ्योऽच्" इत्यच्प्रत्ययः । अथवा कर्त्तरि कर्मधर्म्मोपचारात् विदितवृत्तान्तो विदित इत्युच्यते । उभयत्रापि "पीता गावः" "भुक्ता ब्राह्मणाः" "विभक्ता भ्रातरः" इत्यादिवत् साधुत्वं, न तु कर्त्तरि क्तः । सकर्म्मकेभ्यस्तस्य विधानाभावात् । अतएव भाष्यकारः—"अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः, भुक्तमेषामस्तीति भुक्ताः इति सर्वत्र । अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः, पीतोदकाः पीता, भुक्तान्ना भुक्ता इति ।" अत्र लोपशब्दार्थमाह कैयटः—"गतार्थप्रयोग एव लोपोऽभिमतः । "विभक्ता भ्रातरः" इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्य्यते । "पीतोदका गावः" इत्यत्राप्युदकस्य पीतत्वं गोषु आरोप्यते । "भुक्ता ब्राह्मणाः" इत्यत्र "अन्नस्य भुक्तत्वं ब्राह्मणेषु उपचर्य्यते" इति । तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचरे उपचर्य्यते । एतेन "वनाय पीतप्रतिबद्धवत्साम्" इति "पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या" एवमादयो व्याख्याताः । अथवा विदितो विदितवान् सकर्म्मकादप्यविवक्षिते कर्म्मणि कर्त्तरि क्तः । यथा "आश्रितः कर्त्ता" इत्यादौ । यथाहुः—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया" इति । प्रतीहारादिना ज्ञापित इति वा । द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद्द्वीतं द्वीतमेव द्वैतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादिरहिते इत्यर्थः, युधि रणे स्थिरं युधिष्ठिरं धर्म्मराजम् । "हलन्तात् सप्तम्याः संज्ञायाम्" इत्यलुक् । "गवियुधिभ्यां स्थिरः" इति षत्वम् । समाययौ सम्प्रासः । अत्र "वने वनेचरः" इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदेवा-

१। কুরুজনপদের অধিপতি দুর্য্যোধনের রাজ্যলক্ষ্মী রক্ষার প্রধান কারণস্বরূপ প্রজার প্রতি ব্যবহার জানিবার জন্য যুধিষ্ঠির যাহাকে নিযুক্ত করিয়াছিলেন, ব্রহ্মচারীর বেশধারী সেই কিরাত সকল বৃত্তান্ত অবগত হইয়া দ্বৈতবনে যুধিষ্ঠিরের সমীপে আগমন করিল।

१। जो राजश्रीकी पालनेका प्रधान हेतु है, प्रजाके प्रति कुरुराज दुर्य्योधनका वही व्यवहार जाननेके लिये, युधिष्ठिरने जिस वनेचरको नियुक्त किया था; ब्रह्मचारीका वेषधारण किये वही वनेचर सब हाल जानकर युधिष्ठिरके पास आया।

कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो न हि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २ ॥
द्विषां विघाताय विधातुमिच्छतो-
रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्य्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥

अन्वयः । कृतप्रणामस्य सपत्नेन जितां महीं महीभुजे निवेदयिष्यतः तस्य मनो न विव्यथे, हि हितैषिणः मृषा प्रियं प्रवक्तुं न इच्छन्ति । वाच्य ।—मनसा विव्यथे । हितैषिभिः इष्यते । २

अन्वयः । सः रहसि द्विषां विघाताय विधातुमिच्छतः भूभृतः अनुज्ञाम् अधिगम्य सौष्ठवौदार्य्यविशेष-

वृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन् सर्गे प्रायो वंशस्थं वृत्तम्, तस्य लक्षणम्—"जतौ तु वंशस्थमुदीरितं जरौ" इति ॥ १ ॥

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—कृतप्रणामस्येति । कृतप्रणामस्य तत्कालोचितत्वात् कृतनमस्कारस्य सपत्नेन रिपुणा दुर्य्योधनेन । "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः । जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय, क्रियाग्रहणात् सम्प्रदानत्वम् । निवेदयिष्यतः ज्ञापयिष्यतः । "लृटः सद्वा" इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः । "व्यथ भयचलनयोः" इति व्यथधातोर्लिट् । उक्तमर्थमर्थान्तरोपन्यासेन समर्थयते—न हीति । हि यस्मात्, हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति । अन्यथा कार्य्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः । "अमौक्य-ममान्द्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः" इति नीतिवाक्यामृते ॥२॥

२ । वसुधाधिपতিকে প্রণাম করিয়া শত্রু কর্ত্তৃক ভূমণ্ডল আয়ত্তীকৃত হইয়াছে, এই বার্ত্তা নিবেদন করিতে উদ্যত সেই বনেচরের হৃদয় প্রকম্পিত হয় নাই। যেহেতু প্রভুর প্রিয়কারী ভৃত্যগণ মিথ্যা প্রিয়কথা বলিতে ইচ্ছা করে না।

२ । पृथ्वीशपति युधिष्ठिरसे यह अप्रिय विषय कहते, कि शत्रु दुर्योधन द्वारा वसुधा वशीकृत होगया है, उस प्रणत वनेचरका चित्त क्लेशित नहीं हुआ । कारण, प्रभूके प्रियकारी भृत्य कभी प्रिय झूट बात कहनेकी अभिलाष नहीं करते ।

क्रियासु युक्तैर्नृप, चारचक्षुषः
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

शालिनीं विनिश्चितार्थाम् इति वाचम् आददे। वाच्य—तेन…शालिनी विनिश्चितार्था वाक् आददे। [ आङ्पूर्व्वकदाधातोर्दानार्थे कथनार्थे वार्थः, तदकथनादत्वावाचकत्वदोषः ]। ३

अन्वयः। नृप! क्रियासु युक्तैः अनुजीविभिः चारचक्षुषः प्रभवः न वञ्चनीयाः। अतः साधु, असाधु वा क्षन्तुम् अर्हसि। हितं मनोहारि च वचः दुर्लभम्। वाच्य—युक्ताः अनुजीविनः प्रभून् न वञ्चयेयुः। अर्ह्यते हितेन मनोहारिणा च वचसा दुर्लभेन भूयते। [ अत्र काव्यलिङ्गमलङ्कारः। ] ४

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—द्विषामिति। रहसि एकान्ते सः वनेचरः द्विषां शत्रूणाम्, कर्म्मणि षष्ठी। विघाताय द्विषो विहन्तुमित्यर्थः। "तुमर्थाच्च भाववचनात्" इति चतुर्थी। "भाववचनाच्च" इति तुमर्थे घञ् प्रत्ययः। अत्र तादर्थ्ये चतुर्थ्यामपि न दोषः। तथापि प्रयोगवैचित्रीविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते। विधातुं व्यापारं कर्तुमिच्छतः। "समानकर्तृकेषु तुमुन्"। द्विषो विहन्तुमुद्युक्तमानस[ज्ञान]स्येत्यर्थः। अतएव भूभृतो युधिष्ठिरस्य अनुज्ञामधिगम्य। सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम्। सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ् प्रत्ययः। उदारस्य भाव औदार्य्यमर्थसम्पत्तिः,तयोर्द्वन्द्वः सौष्ठवौदार्य्ये। अत्र औदार्य्यशब्दस्याजाद्यदन्तत्वेऽपि "लक्षणहेत्वोः क्रियायाः" इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातशास्त्रस्य अनित्यत्वज्ञापनान्न पूर्वनिपातः। उक्तञ्च काशिकायाम्—"अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्" इति। ते एव विशेषः, तयोर्वा विशेषः। तेन शालते शोभत इति सौष्ठवौदार्य्यविशेषशालिनी तां, ताच्छील्ये णिनिः। विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् उवाच इत्यर्थः ॥ ३ ॥

७। शत्रुकुलের নির্মূলার্থ উদ্যোগ করিতে সমুৎসুক ভূপতির আজ্ঞা একান্তে লাভ করিয়া সেই বনেচর শব্দার্থের বৈচিত্র্য বিশেষাম্বিত অসন্দিগ্ধার্থ বচন বলিয়াছিল।

३। फिर भी, प्रियजनके प्रति अप्रिय निष्ठुर भाषण अच्छा नहीं। यही मनमें विचार, वनेचर शत्रुके विनाशकी अभिलाषा रखनेवाले राजा युधिष्ठिरकी आज्ञा लेकर, जिसका अर्थ सौष्ठव और विशेषतः औदार्य्ययुक्त प्रमाण द्वारा निर्णीत हुआ था, निर्जनमें वही वाक्य कहने लगा।

स किंसखा साधु न शास्ति योऽधिपं
हितान्न यः संशृणुते स किम्प्रभुः।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः॥ ५॥

अन्वयः। यः अधिपं साधु न शास्ति, सः किंसखा। यः हितात् न संशृणुते सः किम्प्रभुः। हि नृपेषु अमात्येषु च सदा अनुकूलेषु (सत्सु) सर्वसम्पदः रतिं कुर्वते। वाच्य—येन अधिपः न शिष्यते। तेन किंसख्या (भूयते), येन न संशृयते, तेन किम्प्रभुणा भूयते। सर्वसम्पद्भिः रतिः क्रियते। [अत्र संशृणुत इत्यनन्तरमेव नञ्स्थितिरुचिता तदनुपादानादस्थानपदतादोषः; किम्शब्दो विधेयः, स च समासे गुणीभावादनुवाच्यत्वप्रतीतिकृदिति विधेयाविमर्षदोषः, श्लोकेऽस्मिन् हितपदस्यानुपादानान्न्यू- नपदता दोषश्च]। ५

प्रथमं तावदप्रियनिवेदकमात्मानं प्रति अक्षोभं याचते—क्रियास्विति। हे नृप! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैः अनुजीविभिर्भृत्यैः चारादिभि- रित्यर्थः, चरन्तीति चराः प्रचाद्यच्। त एव चाराः, चरेः पचाद्यजन्तात् प्रज्ञादित्वादण्प्रत्ययः। त एव चक्षुर्येषां ते चारचक्षुषः। "स्वपरमण्डले कार्य्याकार्य्यविलोकने चाराश्चक्षूंषि क्षितिपतीनाम्" इति नीतिवाक्यामृते। तदुक्तम्—"गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति पण्डिताः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" इति। प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः, सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरप- चारवद्राज्ञां पदे पदे निपात इति भावः। अतोऽप्रतार्य्यत्वाद्धेतोः असाधु अप्रियं,साधु प्रियं वा,मदुक्तमिति शेषः, वाशब्दोऽप्यर्थे। क्षन्तुं सोढुं मर्हसि, कुतः, हितं पथ्यं मनोहारि प्रियञ्च वचो दुर्लभम्। अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः॥ ४॥

तर्हि तूष्णीम्भाव एव वरमित्याशङ्क्याह—स इति। यः सखा अमात्यादिः अधिपं स्वामिनं साधु हितं न शास्ति न उपदिशति। "ब्रूविशासिः" इत्या- दिना शासेर्दुहादिपाठाद्द्विकर्म्मकत्वम्। स हितानुपदेष्टा, कुत्सितः सखा किंसखा दुर्मन्त्रीत्यर्थः। "किमः क्षेपे" इति समासान्तप्रतिषेधः। तथा यः

४। হে মহারাজ, গূঢ়চরগণ ভূপতিদিগের চক্ষুঃস্বরূপ, এই হেতু কার্য্যে নিযুক্ত ভৃত্যদিগের তাঁহাদিগকে প্রবঞ্চিত করা উচিত নহে। অতএব আমার বাক্য প্রিয় বা অপ্রিয় যাহাই হউক ক্ষমা করিবেন। কেন না হিতকর অথচ মনোহর (শ্রুতিমধুর) বাক্য (জগতে) দুর্ল্লভ।

४। वनेचरने कहा,—हे महाराज! चर ही जिसकी आंख है, ऐसे प्रभुको वञ्चित करना कार्य्यमें नियुक्त नौकरोंको कभी उचित नहीं। इसलिये मैं प्रिय वा अप्रिय जो बात कहूं, उसकेलिये आप मुझे क्षमा करना; कारण, हितकर और मनोहर (श्रुतिमधुर) वचन (जगमें) दुर्लभ हैं।

निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥

अन्वयः । निसर्गदुर्बोधं भूपतीनां चरितं क्व, अबोधविक्लवाः जन्तवः क्व । ( तथापि ) निगूढतत्त्वं विद्विषां नयवर्त्म मया यत् अवेदि, अयं तव अनुभावः । वाच्य—निसर्गदुर्बोधेन चरितेन, अबोधविक्लवैः जन्तुभिः ( भूयते ) । अहं अवेदिषम्, अनेन अनुभावेन ( भूयते ) । [ अत्र जन्तुपदेन निकृष्टप्राणिसूचनादनुचितार्थतादोषः । कार्य्यकारणयोर्भिन्नाश्रयवृत्तित्वेन परस्परविरुद्धत्वकल्पनाद्विषमालङ्कारः ] ॥ ६ ॥

प्रभुः निग्रहानुग्रहसमर्थः स्वामी हितात् आप्तजनात् हितोपदेष्टुः सकाशात् "आख्यातोपयोगे" इत्यपादानत्वात् पञ्चमी । न संशृणुते न शृणोति, हितमिति शेषः । "समो गम्यृच्छि" इत्यादिना सम्पूर्वाच्छृणोतेरकर्म्मकत्वादात्मनेपदमकर्म्मकत्वं वैवचिकम् । स हितस्याश्रोता [ 'हितमश्रोता' इति च पाठो दृश्यते ] प्रभुः किंप्रभुः कुत्सितस्वामी । पूर्ववत् समासः । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं च स्वामिना । एवञ्च राजमन्त्रिणोः ऐकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह—सदेति । हि यस्मात् नृपेषु स्वामिषु । अमा सह भवा अमात्यास्तेषु च । "अव्ययात्त्यप्" । अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते कुर्वन्ति, न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्रैवं राजमन्त्रिणोर्हितानुपदेश-तदश्रवणनिन्दासामर्थ्यसिद्धैरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्य्येण समर्थनात् कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तम्—"सामान्यविशेषकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" इति ॥ ५ ॥

सम्प्रति स्वाहङ्कारं परिहरति—निसर्गेति । निसर्गदुर्बोधं स्वभावदुर्ग्रहम् । "ईषद्दुः" इत्यादिना खल्प्रत्ययः । भूपतीनां चरितं क्व ? अबोधविक्लवा अज्ञानोपहता जन्तवः, मादृशाः पामराजना इत्यर्थः, क्व,

५ । যিনি প্রভুকে হিতকর উপদেশ অর্পণ না করেন, তিনি কুৎসিত সখা ( দুঃসচিব )। যে প্রভু হিতকারী অমাত্যের উপদেশ গ্রহণ করেন না, তিনি নিন্দিত ভূপতি। নৃপ ও মন্ত্রী পরস্পর অনুরক্ত হইলে পূর্ণ সম্পদ্ চিরকাল অনুরক্তভাবে অবস্থান করে।

५ । जो मन्त्री स्वामीके प्रति साधु उपदेश नहीं देता, वह सचिव भला नहीं, और जो प्रभु हितकारी सचिवकी बात नहीं मानता, वह प्रभु भी अच्छा नहीं । राजा और मन्त्रिनिचयोंकी परस्पर अनुरक्त होनेसे ही सम्पद अनुरागसे बढ़ा करती हैं ।

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः॥ ७॥

अन्वयः। सुयोधनः नृपासनस्थः अपि वनाधिवासिनः भवतः पराभवं विशङ्कमानः दुरोदरच्छद्मजितां जगतीं नयेन जेतुं समीहते। वाच्य—सुयोधनेन नृपासनस्थेन अपि विशङ्कमानेन दुरोदरच्छद्मजिता मही समीह्यते। ७

नोभयं सङ्घटत इत्यर्थः। तथापि निगूढ़तत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोगः, "सन्धिविग्रहयानानि संस्थाप्यासनमेव च। द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम्" इत्यादिरूपो यत् मया अवेदि, ज्ञातमिति यावत्। विदेः कर्मणि लुङ्। अयम् इदं वेदनमित्यर्थः, विधेयप्राधान्यात् पुलिङ्गनिर्देशः। तव अनुभावः सामर्थ्यम्। अनुगतो भावोऽनुभाव इति घञन्तेन प्रादिसमासः। न तूपसृष्टात् घञ्प्रत्ययः। "श्रिणीभुवोऽनुपसर्गे" इत्यनुपसर्गाद्भवतेर्धातोर्घञ्विधानात्। अतएव काशिकायाम्—"कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमास" इति। दोषपरिहारो सम्यग् ज्ञात्वैव विज्ञापयामि; न तु वृथा कर्णकठोरं प्रलपामि इत्याशयः॥ ६॥

सम्प्रति यद्वक्तव्यं तदाह—विशङ्कमान इति। सुखेन युध्यते सुयोधनः। "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः"। इति युधेर्युच्। नृपासनस्थः सिंहासनस्थोऽपि वनमधिवसतीति वनाधिवासिनो वनस्थात् राज्यभ्रष्टादपीत्यर्थः। भवतस्त्वत्तः पराभवं पराजयं विशङ्कमान उत्प्रेक्षमाणः सन्, दुष्टमुदरमस्येति दुरोदरं द्यूतम्, पृषोदरादित्वात् साधु। "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः। तस्य छद्मना मिषेण जितां लब्धां दुर्नयार्ज्जितां जगतीं महीम्। "जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः" इति वैजयन्ती। नयेन नीत्या जेतुं वशीकर्त्तुं समीहते व्याप्रियते, न तूदास्त इत्यर्थः। बलवत्स्वामिकम् अविशुद्धागमं च

৬। স্বভাবতঃ দুর্জ্জেয় ভূপতিদিগের চরিত্রই বা কোথায়? অজ্ঞানোপহত জন্তরাই বা কোথায়? তথাপি আমি যে শত্রুগণের নিগূঢ়তত্ত্বনীতি প্রয়োগ জানিতে পারিয়াছি, ইহা আপনারই মহিমা।

६। कहां भूपतिका वह स्वाभाविक दुर्ज्ञेय चरित और कहां यह अज्ञ मेरा जैसा पामर प्राणी? फिर भी, मैं जो शत्रुओंकी निगूढ़ तत्त्व प्रभृति समझ सका हूं, यह आपहीकी महिमाका फल है।

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमाद्-
वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥

अन्वयः । तथापि जिह्मः सः भवज्जिगीषया गुणसम्पदा शुभ्रं यशः तनोति । भूतिं समुन्नयन् महात्मभिः समं विरोधः अपि अनार्यसङ्गमात् वरम् । वाच्य—जिह्मेन तेन यशः तन्यते । . समुन्नयता विरोधेन वरेण ( भूयते ) । ८

धनं भुञ्जानस्य कुतो मनसः समाधिरिति भावः । अत्र "दुरोदरच्छद्मजिताम्" इति विशेषणद्वारेण पदार्थस्य चतुर्थ-पादार्थं प्रति हेतुत्वेनोपन्यासाद्द्वितीयः काव्यलिङ्गमलङ्कारः । तदुक्तम्—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ ७ ॥

"नयेन जेतुं जगतीं सुयोधनः समीहते" इत्युक्तम्, तत्प्रकारमाह—तथापीति । तथापि साशङ्कोऽपि जिह्मो वक्रः वञ्चक इति यावत् । सः दुर्योधनः भवज्जिगीषया गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः । "हेतौ" इति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणगरिम्णा करणेन, शुभ्रं यशस्तनोति । स खलो गुणलोभनीयां त्वत्सम्पदमात्मसात् कर्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महान् दोष इत्याशङ्क्य सोऽपि सत्संसर्गलाभे नीचसङ्गमाद्वरमुत्कर्षावहत्वादित्याह—समिति । तथाहि भूतिं समुन्नयन् उत्कर्षमापादयन् । "लटः शतृशानचौ" इत्यादिना शतृप्रत्ययः । पुनर्लड्ग्रहणसामर्थ्यात् प्रथमासामानाधिकरण्यम् । महात्मभिः समं सहेत्यर्थः, "साकं सत्रा समं सह" इत्यमरः । अनार्यसङ्गमात् दुर्जनसंसर्गात् "पञ्चमी विभक्ते:" इति पञ्चमी । विरोधोऽपि वरं मनाक् प्रियः । "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः । अत्र मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य "भूतिं समुन्नयन्" इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात् समाप्तपुनरात्तत्वाख्यानदोषापत्तिः । तदुक्तं काव्यप्रकाशे—"समाप्तपुनरादानात् समाप्तपुनरात्तकम्" इति । न च वाक्यान्तरमेतत् येनोक्तदोषपरिहारः स्यात् ।

৭। দুর্য্যোধন সিংহাসনে সমাসীন হইয়াও বনবাসী আপনার নিকট পরাভব আশঙ্কা করিয়া কপটদ্যূতে অধিগত রাজ্যনীতি প্রয়োগ দ্বারা আয়ত্ত করিবার চেষ্টা করিতেছেন।

७। दुर्योधन सिंहासनपर समासीन है, आप निर्व्वासित वनवासी है, और इसपर भी वह आपसे पराजय होनेकी आशङ्काकर छलके पासोंसे जीती पृथिवीको नीतिमार्गमें आयत्त करनेकी चेष्टा करता हैं ।

कृतारिषड्वर्गजयेन मानवी-
मगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

अन्वयः । कृतारिषड्वर्गजयेन अगम्यरूपां मानवीं पदवीं प्रपित्सुना अस्ततन्द्रिणा तेन (दुर्य्योधनेन) नक्तन्दिवं विभज्य नयेन पौरुषं वितन्यते । वाच्य—कृतारिषड्वर्गजयः, मानवीं पदवीं प्रपित्सुः, अस्ततन्द्रिः सः तनोति । ९

अर्थान्तरन्यासोऽलङ्कारः । स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा य-
विरोधवत्त्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥ न-

ननु "कातर्य्यं केवला नीतिः, इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह— कृतेति । षण्णां वर्गः षड्वर्गः । अरीणामन्तःशत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः, शिवभागवतवत् समासः । तस्य जयः कृतो येन तथो-क्तेन विनीतेनेत्यर्थः । विनीताधिकारं प्रजापालनमिति भावः । अगम्याम् रूपां पुरुषमात्रदुष्प्राप्याम् । मनोरिमां मानवीं मनूपदिष्टसदाचारव्यवस्था-मित्यर्थः । पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रतिपत्तुमिच्छुना प्रपद्यतेः सन्नन्तादुप्रत्ययः । "सनि मीमा" इत्यादिनेसादेशः । "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः । अस्ता तन्द्रिः आलस्यं यस्य तेन अस्ततन्द्रिणा अनलसेनेत्यर्थः । तदिः सौत्रो धातुः । तस्मात् "वङ्क्यादयश्च" इत्यौणादिकः क्रिन्प्रत्ययः । "कृदिकारादक्तिनः" इति वा ङीष् । "तन्द्रीम् । तरीतन्द्रीति ङीषन्तोऽपि" इति क्षीरस्वामी । तथा रामायणप्रयोगश्च "निस्तन्द्रिरप्रमत्तश्च स्वदोषे परदोषवत्" इति । तेन दुर्य्योधनेन पुरुषस्य कर्म्म पौरुषं पुरुषकारः, उद्योग इति यावत् । युवादित्वादण्प्रत्ययः । "पौरुषं पुरुषस्योक्तं भावे कर्म्मणि तेजसि" इति विश्वः । नक्तं च दिवा च नक्तन्दिवम् अहोरात्रयोरित्यर्थः । "अचतुर" इत्यादिना सप्तम्यर्थवृत्त्योरनु-ययोर्द्वन्द्वनिपातेऽच्समासान्तः । विभज्य अस्यां वेलायामिदं कार्य्यम्,

৮। খলস্বভাব সেই দুর্য্যোধন শঙ্কিত হইয়াও আপনাকে অতিক্রম করিবার ইচ্ছায় গুণো...য়ি-
শুভ্র যশোবিস্তার করিতেছেন। মহাত্মাদিগের সহিত বিরোধ ও গৌরব বর্দ্ধক বলিয়া অনার্য্যদিগে প্রদর্শন ... প্রাপ্ত
অপেক্ষা বরং ভাল।

८। आपसे विशङ्कमान वह वञ्चक दुर्य्योधन धन अन्तरगुणसे आपको अतिक्रम करनेकी ... भाँति
कर दया दाक्षिण्यादि गुणगौरवमें निर्म्मल यशका विस्तार कर रहा है। जो हो दुर्जनके ... हैं जैसे
अपेक्षा महात्मालोग ओंके साथ गौरव बढ़ानेवाला विरोध भी अच्छा होता है।

**सखीनिव प्रीतियुजोऽनुजीविनः**
**समानमानान् सुहृदश्च बन्धुभिः ।**
**स सन्ततं दर्शयते गतस्मयः**
**कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥**

अन्वयः । गतस्मयः सः सन्ततम् अनुजीविनः प्रीतियुजः सखीनिव सुहृदः बन्धुभिः समानमा[नान्]
समं बन्धुतां च कृताधिपत्यामिव साधु दर्शयते । वाच्य—गतस्मयेन तेन सखाय इव समानमानाः ब[न्धु]
वरैः कृताधिपत्या इव तथ्यन्ते । [अत्र प्रक्रमभङ्गदोषः, एकावल्यलङ्कारश्च] । १०

[अ]कार्य्यमिदमकार्य्यमिदमिति ] विभागं कृत्वा नयेन नीत्या वितन्[यते]
[प्र]स्तार्य्यते ॥ ९ ॥

सम्प्रति भृत्याद्यनुरागमाह—सखीनिति । गतस्मयो निरहङ्कारोऽतए[व]
[द]ुर्य्योधनः सन्ततम् अनारतं साधु सम्यक् अकपटम् इत्यर्थः । अनुजीवि[नः]
[...]त्यान् प्रीतियुजः स्निग्धान् सखीनिव मित्राणि इव दर्शयते लोकस्यै[...]
[...]: "हेतुमति च" इति णिच् । "णिचश्च" इति आत्मनेपदम् । शोभन[...]
[...]यं येषां तान् सुहृदो मित्राणि च । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इ[ति]
[...]तः । बन्धुभिः भ्रात्रादिभिः समानमानान् तुल्यसत्कारान् दर्शयते
[...]नां समूहो बन्धुता ताम् । "ग्रामजनबन्धुसहायेभ्यस्तल् ।" कृतम् आधि[...]
स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते, बन्धून् अधिपतीनिव
[...]ते इत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य, तथा
सम्भावयतीत्यर्थः । अनुजीव्यादीनाम् "कर्त्तुरीप्सिततमं कर्म्म" इति
[...]म् । पूर्वं तस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति—स राजा
[अनुज]ीव्यादीन् सख्यादीनिव दर्शयते । सख्यादय इव ते तु तं पश्यन्ति ।
[...]दिभावेन पश्यतस्तांस्तथा दर्शयते, स्वयमेव छन्दानुवर्त्ति तया स्वदर्शनं
प्रयच्छतीत्यर्थः । अत्रापि स्वस्य (अर्थात्तस्य) ईप्सितकर्म्मत्वम्, अणि कर्त्तुरनु
[...]दे: "अभिवादिदृशोरात्मनेपदमुपसंख्यानम्" इति पाक्षिकं कर्म्मत्वम् ।
[...]त्राण्यन्तकर्म्मणो राज्ञोऽण्यन्ते कर्त्तृत्वेऽपि "आरोहयते हस्ती स्वय-

पुरুষমাত্রের পক্ষে মনুপদিষ্ট প্রজাপালন পদ্ধতি আশ্রয় করিতে অভিলাষী হইয়া দুর্য্যোধন কা[ম]
[ক্রো]ধাদি ষড়্‌রিপুবর্গের জয় সাধন ও আলস্য ত্যাগপূর্ব্বক (এই সময়ে এই কার্য্য সম্পন্ন করিতে হইবে এই
[রূপে অ]হোরাত্রের ভাগ করিয়া নয়শাস্ত্রোক্ত উপায়ে পুরুষকারের প্রয়োগ করিতেছেন।

कामक्रोधादि छः हो शत्रुओंको जीतनेवाला दुर्य्योधन अनन्यसुलभ मनूपदिष्ट प्रजापालन-
[क्र]म करनेके लिये आलस छोड़ रातदिन कर्त्तव्यकर्म्मसे विभागपूर्व्वक नीतिद्वारा अपनी
[वि]स्तार किया करता है ।

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्
न बाधतेऽस्य त्रिगणः परस्परम् ॥ ११ ॥

अन्वयः । यथायथं विभज्य समपक्षपातया भक्त्या असक्तम् आराधयतः अस्य त्रिगणः गुणानुरागात् सख्यम् ईयिवान् इव परस्परं न बाधते । वाच्य—त्रिगुणेन ईयुषा न बाध्यते । ११

मेव" इत्यादिवत् अश्रुयमाणकर्म्मान्तरत्वाभावात् नायं णेरणादिसूत्रस्य विषय इति मत्वा "णिचश्च" इत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु णेरणादिसूत्र-विषयत्वमपि अस्योक्तम्। यथाह—"पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा, दर्शयते भृत्यै राजा अत्र आत्मनेपदं सिद्धं भवति" इति। अत्राह कैयटः—"ननु कर्म्मान्तरसद्भावादत्रात्मनेपदेन सम्भाव्यम्। उच्यते— अस्मादेवोदाहरणाज्ज्ञाप्यकारस्यायमेवाभिप्राय उन्नीयते। अण्यन्तावस्थायां ये कर्त्तृकर्म्मणी तद्व्यतिरिक्तकर्म्मान्तरसद्भावात् आत्मनेपदं न भवति। यथा 'स्थलमारोहयति मनुष्यान्" इति, इह तु अण्यन्तावस्थायां कर्त्तॄणां भृत्यानां णौ कर्म्मत्वमिति भवत्येवात्मनेपदम्" इति ॥ १० ॥

न चायं त्रिवर्गात् प्रमाद्यतीत्याह—असक्तमिति। यथायथं यथास्वं विभज्य, सङ्कीर्णरूपं विविच्येत्यर्थः। "यथास्वे तु यथायथम्" इति निपातनाद्द्विर्भावो नपुंसकत्वञ्च। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वम्। पक्षे पातः पक्षपातः आसक्तिविशेषः समः तुल्यो यस्यां सा तथा तया समपक्षपातया, भक्त्या अनुरागविशेषेण,पूज्ये षु अनुरागो भक्तिरित्युपदेशः,पूज्यश्च अयं त्रिवर्ग इति भावः। असक्तमनासक्तम् अव्यसनितयेति यावत्, आराधयतः सेवमानस्य अस्य दुर्य्योधनस्य त्रयाणां धर्म्मार्थकामानां गणस्त्रिगणः त्रिवर्गः। "त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः। गुणानुरागात् तदीयगुणेषु अनुरागात् गुणवदाश्रयलोभादित्यर्थः। सख्यं मैत्रीम्, "सख्युर्यः" इति यप्रत्ययः। ईयिवान् उपगतवानिवं इति उत्प्रेक्षा। "उपेयि-

১০। দুর্য্যোধন অহঙ্কার পরিহারপূর্ব্বক নিরন্তর অনুজীবিগণকে প্রীতিপূর্ণ মিত্রের ন্যায় প্রদর্শন করান; সুহৃদ্বর্গকে বন্ধুর সহ তুল্য সম্মানবিশিষ্ট দেখান; এবং বন্ধুবর্গকে, তাহারাই আধিপত্য প্রাপ্ত হইয়াছে, এইরূপ দেখান।

१०। वह निरहङ्कार हो कर लोगोंके सामने भृत्यंको अकपट भावसे प्रिय मित्रोंकी भांति देखता, मित्रोंको अपने सगे भाईयों ऐसा सम्मान प्रदान करता और भाईयोंको एसा मानता है जैसे अपना आधिपत्य इसने उसीका दे दिया हो।

निरत्ययं साम न दानवर्जितं
न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्त्तते तस्य विशेषशालिनी
गुणानुरोधेन विना न सत्क्रिया ॥ १२ ॥

अन्वयः । तस्य निरत्ययं साम दानवर्जितं न, सत्क्रियां विरहय्य भूरिदानं न, विशेषशालिनी सत्क्रिया गुणानुरोधेन विना न प्रवर्त्तते ॥ वाच्य—निरत्ययेन साम्ना दानवर्जितेन, भूरिदानेन, विशेषशालिन्या सत्क्रियया प्रवृत्यते । १२

वाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तो निपातः, "नात्रोपसर्गस्तन्त्रम्" इति काशिकाकार आह स्म । परस्परं न बाधते, समवर्त्ति तादृस्य धर्म्मार्थकामाः परस्परानुपमर्देन वर्द्धन्ते इत्यर्थः । उक्तञ्च—"धर्म्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः" इति ॥ ११ ॥

अथ श्लोकत्रयेण उपायकौशलं दर्शयन् आदौ सामदाने दर्शयति—निरत्ययमिति । तस्य दुर्य्योधनस्य निरत्ययं निर्बाधम्, अमायिकमित्यर्थः । अन्यथा जनानां दुर्ग्रहत्वादिति भावः । साम सान्त्वम् । "साम सान्त्वमुभे समे" इत्यमरः । दानवर्जितं न प्रवर्त्तते, अन्यथा [लुब्धप्रवर्त्तनस्य] लुब्धाद्यावर्ज्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः । उक्तञ्च—"लुब्धमर्थेन गृह्णीयात् साधुमञ्जलिकर्म्मणा । मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम्" इति । तथा भूरि प्रभूतं, न तु कदाचित् स्वल्पमित्यर्थः । दानं धनत्यागः, सदित्यादरार्थेऽव्ययम्; "आदरानादरयोः सदसती" इति निपातसंज्ञास्मरणात् । तस्य क्रियां सत्क्रियां विरहय्य विहाय । "ल्यपि लघुपूर्वात्" इत्ययादेशः । न प्रवर्त्तते, अनादरे दानवैफल्यादिति भावः । न चैवं सर्वत्र येनाविवेकित्वं कोशहानिश्च स्यादित्याह—प्रवर्त्तते इति । विशेषशालिनी अतिशययोगिनी सत्क्रिया आदरक्रिया गुणानुरोधेन गुणानुरागेण विना न प्रवर्त्तते । "पृथग्विना—" इत्यादिना तृतीया । गुणेष्व-

১১। দুর্য্যোধন ধর্ম্মার্থকাম এই ত্রিবর্গকে যথাযথভাবে পৃথক্ করিয়া নির্ব্বিশেষ অনুরাগ সহকারে অনাসক্তভাবে তাহাদের অনুষ্ঠান করিতেছেন বলিয়া সেই ত্রিবর্গ যেন তদীয় গুণানুরাগভরেই পরস্পরের সহিত মিত্রতায় আবদ্ধ হইয়া কেহ কাহারও বাঁধা জন্মাইতেছে না।

११। दुर्य्योधन वह अनासक्त हो निरपेक्ष दृष्टिसे बराबर साम्राभ्युदका विचारकर जो धर्म्मार्थकामकी सेवा करता है, इसीसे वह त्रिवर्ग उसके अनुरागसे परस्पर मित्र बन कोई किसीको बाधा नहीं पहुंचाते ।

वसूनि वाञ्छन्न वशी न मन्युना
स्वधर्म्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
निहन्ति दण्डेन स धर्म्मविप्लवम् ॥ १३ ॥

अन्वयः । वशी स वसूनि वाञ्छन् न, मन्युना न, स्वधर्म्म इत्येव निवृत्तकारणः (सन्) रिपौ सुतेऽपि वा गुरूपदिष्टेन दण्डेन धर्म्मविप्लवं निहन्ति ॥ वाच्य—वशिना तेन वसूनि वाञ्छता न निवृत्त-कारणेन, धर्म्मविप्लवः निहन्यते । १३

वादरो भूरिदानञ्च इति न उक्तदोषावकाश इत्यर्थः । अत्र उत्तरोत्तरस्य पूर्वपूर्वविशेषणतया स्थापनात् एकावल्यलङ्कारः । तदुक्तं काव्यप्रकाशे—"स्थाप्यतेऽपोह्यते वापि यथापूर्वं परस्परम् । विशेषणतया वस्तु यत्र सैकावली द्विधा" इति ॥ १२ ॥

अथ दण्डप्रकारमाह—वसूनीति । वशी स दुर्य्योधनो वसूनि धनानि वाञ्छन् न, लोभात् न इत्यर्थः । "वसु तोये धने मणौ" इति वैजयन्ती । निहन्तीति शेषः । तथा मन्युना कोपेन न च "मन्युर्दैन्ये क्रतौ क्रुधि" इत्य-मरः । "धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितः" इति स्मरणादित्यर्थः । किन्तु निवृत्तकारणः निवृत्तलोभादिनिमित्तः सन् स्वधर्म्म इत्येव स्वस्य राज्ञः सतो 'मम अयं धर्म्मो ममेदं कर्त्तव्य' मित्यस्मादेव हेतोरित्यर्थः । "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥" इति स्मरणादिति भावः । गुरूपदिष्टेन प्राड्विवाको-पदिष्टेन । "धर्म्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येत् व्यवहारानुक्रमात्" इति नारदस्मरणात् । दण्डेन दमेन शिक्षये-त्यर्थः, रिपौ सुतेऽपि वा स्थितमिति शेषः । एतेन अस्य समदर्शित्वम् उक्तम् । धर्म्मविप्लवं धर्म्मव्यतिक्रमम्, अधर्म्ममिति यावत् । निहन्ति निवारयति । दुष्ट एव अस्य शत्रुः, शिष्ट एव बन्धुः ; न तु सम्बन्धनिब-न्धनः पक्षपातोऽस्तीत्यर्थः ॥ १३ ॥

১২। তাঁহার অমায়িক মধুরভাব দানবর্জ্জিত নহে ; (তিনি) আদর অভ্যর্থনাশূন্য প্রভূতদান এবং বিশিষ্ট গুণশালী ব্যক্তি ব্যতীত সবিশেষ আদর প্রদর্শন করেন না।

१२। उसका कपटताशून्य सन्धिप्रयोग दानसे वर्ज्जित नहीं। वह सदा आदर अभ्यर्थनापूर्वक दान क्रिया करता है। उसकी वह सविशेष समादरक्रिया और दोषादोष विवेचना पहलेसेही अनुष्ठित हो जाती हैं।

विधाय रक्षान् परितः परेतरान्
अशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः
कृतज्ञतामस्य वदन्ति सम्पदः ॥ १४ ॥

अन्वयः । शङ्कितः सन् परेतरान् परितो रक्षान् विधाय अशङ्किताकारम् उपैति । क्रियापवर्गेषु अनुजीविसात्कृताः सम्पदः अस्य कृतज्ञताम् वदन्ति ॥ वाच्य—शङ्कितेन सता अशङ्किताकार उपेयते । अनुजीविसात्कृताभिः सम्पद्भिः कृतज्ञता उद्यते । १४

सम्प्रति भेदकौशलं दर्शयति—विधायेति । शङ्का सञ्जाता अस्य शङ्कितोऽविश्वस्तः सन् परितः सर्वत्र स्वपरमण्डले परेतरान् आत्मीयान्, अवञ्चकान् इति यावत् । यद्वा परान् इतरयन्ति भेदेन आत्मसात्कुर्वन्तीति परेतरान्, तत्करोतीति ण्यन्तात् कर्म्मणि अण्प्रत्ययः । रक्षन्तीति रक्षान् रक्षकान् मन्त्रगुप्तिसमर्थान् इत्यर्थः । "नन्दिग्रहि" इत्यादिना पचाद्यच् । विधाय कृत्वा नियुज्य इत्यर्थः । अशङ्किताकारम् उपैति, स्वयम् अविश्वस्तोऽपि विश्वस्तवत् एव व्यवहरन् परमुखेनैव परान् भिनत्ति इत्यर्थः । न च तान् रक्षान् उपेक्षते येन तेऽपि विकुर्वीरन् इत्याह—क्रियेति । क्रियापवर्गेषु कर्म्मसमाप्तिषु अनुजीविसात्कृता भृत्याधीनाः कृताः अपरावर्त्तितया दत्ता इत्यर्थः । "देये त्रा च" इति सातिप्रत्ययः । सम्पदोऽस्य राज्ञः कृतज्ञताम् उपकारित्वं वदन्ति, प्रीतिदानैरेव अस्य कृतज्ञत्वं प्रकाशते, न तु वाङ्मात्रेणैव इत्यर्थः । कृतज्ञे राजनि अनुजीविनोऽनुरज्यन्ते अनुरक्ताश्च तं रक्षन्तीति भावः ॥१४॥

১৩। জিতেন্দ্রিয় সেই ভূপতি ধনলোভে বা ক্রোধপ্রযুক্ত দণ্ডপ্রদান করেন না। কিন্তু ক্রোধাদি বর্জিত হইয়া 'ইহা আমার করণীয়' এইরূপ জ্ঞান করিয়া শত্রু অথবা পুত্রকৃত অধর্ম্মাচরণ গুরূপদিষ্ট দণ্ডদ্বারা নিবারণ করেন।

১৪। তিনি সর্ব্বত্র আত্মীয়দিগকে রক্ষাকার্য্যে নিযুক্ত করিয়া অবিশ্বস্ত হইয়াও বিশ্বস্তের ন্যায় ব্যবহার করেন। ক্রিয়াসমাপ্তির পর অনুজীবীদিগকে যে সম্পদ প্রদান করেন, তাহাতেই তাঁহার কৃতজ্ঞতা প্রকাশিত হয়।

१३। जितेन्द्रिय सो भूपति धनलोभ और क्रोधसे विवर्जित हो और ऐसा समझ, कि यह मेरा स्वधर्म्म है" शत्रु या पुत्रका गुरूपदिष्ट दण्डद्वारा धर्म्मविप्लव दमन करता है।

१४। सो सर्व्वत्रही भृत्यको रक्षाकार्य्यमें नियुक्तकर उनके प्रति अविश्वस्त होकर भी विश्वस्तकी भाँति व्यवहार करता है। सम्पूर्ण कार्य्य सम्पन्न हो जाने पर अपने उसको धन देकर कृतज्ञता प्रकाशित किया करता है।

अनारतं तेन पदेषु लम्भिता
विभज्य सम्यग्विनियोगसत्क्रियाः।
फलन्त्युपायाः परिबृंहितायतीः
उपेत्य सङ्घर्षमिवार्थसम्पदः॥ १५॥
अनेकराजन्यरथाश्वसङ्कुलं
तदीयमास्थाननिकेतनाजिरम्।
नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः॥ १६॥

अन्वयः। तेन पदेषु सम्यक् विभज्य विनियोगसत्क्रियाः लम्भिताः उपायाः सङ्घर्षम् उपेत्य इव परिबृंहितायतीः अर्थसम्पदः अनारतं फलन्ति॥ वाच्य—विनियोगसत्क्रियैः लम्भितैः उपायैः परिबृंहितायत्यः अर्थसम्पदः फल्यन्ते। १५

अन्वयः। अयुग्मच्छदगन्धिः नृपोपायनदन्तिनां मदः अनेकराजन्यरथाश्वसङ्कुलं तदीयम् आस्थाननिकेतनाजिरं भृशम् आर्द्रतां नयति॥ वाच्य—अयुग्मच्छदगन्धिना मदेन आर्द्रता नीयते। १६

अथ उपायप्रयोगस्य फलवत्तां दर्शयति—अनारतमिति। तेन राज्ञा दुर्योधनेन पदेषु उपा[दे]यवस्तुषु। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। सम्यक् असङ्कीर्णम् अव्यस्तं च विभज्य विविच्य विनियोग एव सत्क्रिया अनुग्रहः सत्कार इति यावत्, यासां ता लम्भिताः स्थानेषु सम्यक् प्रयुक्ता इत्यर्थः। उपायविशेषणं वा, उपायाः सामादयः, सङ्घर्षं परस्परस्पर्द्धामुपेत्य इव इति उत्प्रेक्षा। परिबृंहितायतीः प्रचितोत्तरकालाः, स्थिरा इत्यर्थः। अर्थसम्पदोऽनारतम् अजस्रं फलन्ति प्रसुवते इत्यर्थः॥१५॥

अर्थसम्पदमेवाह—अनेकेति। अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्य असौ अयुग्मच्छदगन्धिः। "सप्तम्युपमान—"इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च। "उपमानाच्च" इति समासान्त इकारः। नृपाणाम् उपायनानि उपहारभूता ये दन्तिनः तेषां मदः। "उपायनमुपग्राह्यमुपहार-

১৫। তিনি সম্যক বিবেচনাপূর্ব্বক সামাদি উপায়চতুষ্টয়কে যথাযোগ্য পাত্রে বিন্যস্তপূর্ব্বক সৎকৃত করিতেছেন বলিয়া উপায়সমূহ পরস্পরের সহিত স্পর্দ্ধা সহকারেই যেন উত্তরকালেও অবিনাশী বিভবরাশি অজস্র উৎপন্ন করিতেছে।

१५। सो वो सम्यक् विवेचनापूर्व्वक सामादि चारो उपाय यथायोग्य पात्रके प्रति अनुग्रह सत्कारादिका नियोग क्रिया करता है, इसलिये उसकि उपायेपरस्पर स्पर्द्धा-सहकारमें अजस्र परिणामवृद्धियोग्य धनराशि प्रसव किया करते है।

**सुखेन लभ्या दधतः कृषीवलै-**
**रकृष्टपच्या इव शस्यसम्पदः।**
**वितन्वति क्षेममदेवमातृका-**
**श्चिराय तस्मिन् कुरवश्चकासति *॥ १७॥**

अन्वयः। तस्मिन् चिराय क्षेमं वितन्वति (सति) अदेवमातृकाः कुरवः अकृष्टपच्या इव कृषीवलैः सुखेन लभ्याः शस्यसम्पदः दधतः (सन्तः) चकासति॥ वाच्य—अदेवमातृकैः कुरुभिः दधद्भिः चकास्यते। १७

स्तथोपदा" इत्यमरः। राज्ञाम् अपत्यानि पुमांसो राजन्याः क्षत्रियाः। "राजश्वशुराद्यत्" इति यत्प्रत्ययः। राज्ञोऽपत्ये जातिग्रहणात् अण्, रथा अश्वाश्च रथाश्वं, सेनाङ्गत्वादेकवद्भावः। अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं व्याप्तं तदीयम् आस्थाननिकेतनाजिरं सभामण्डपाङ्गणम्। "अङ्गणं चत्वराजिरे" इत्यमरः। भृशम् अत्यर्थम् आर्द्रतां पङ्किलत्वं नयति। एतेन महासमृद्धिः अस्य उक्ता। अत एव उदात्तालङ्कारः। तथा चालङ्कारसूत्रम्। "समृद्धिमद्वस्तुवर्णनमुदात्तः" इति॥ १६॥

सम्प्रति जनपदक्षेमकरत्वमाह—सुखेनेति। चिराय तस्मिन् दुर्योधने क्षेमं वितन्वति क्षेमङ्करे सति देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः, ते न भवन्ति इति अदेवमातृकाः, नदीमातृका इत्यर्थः। "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यात् नदीमातृको देवमातृकश्च यथाक्रमम्॥" इत्यमरः। एतेन अस्य कुल्यादिपूर्त्तप्रवर्त्तकत्वमुक्तम्। कुरूणां निवासाः कुरवो जनपदविशेषाः। कृष्टेन पच्यन्त इति कृष्टपच्याः। "राजसूय—" इत्यादिना कर्म्मकर्त्तरि क्यप्प्रत्ययान्तो निपातः। तद्विपरीता अकृष्टपच्या इव, कृषिः एषाम् अस्तीति कृषीवलाः कर्षकैरित्यर्थः। "रजःकृषि" इत्यादिना वलच्प्रत्ययः, "वले" इति दीर्घः। सुखेन अक्लेशेन लभ्या लब्धुं शक्याः शस्यसम्पदो दधतः धारयन्तः। "नास्य-

১৬। ভূপতিবৃন্দকর্তৃক উপঢৌকনস্বরূপ প্রদত্ত হস্তিসমূহের সপ্তপর্ণপুষ্পের ন্যায় গন্ধযুক্ত মদবারি অসংখ্য রাজন্যবর্গের রথ ও অশ্বদ্বারা সমাকীর্ণ তাঁহার সভামণ্ডপের চত্বরপ্রদেশকে সাতিশয় সিক্ত ও পঙ্কিল করিয়া থাকে।

१६। राजाओंके रथों और घोड़ोंसे दुर्योधनकी सभा-स्थलका प्राङ्गण समाकीर्ण हो जाता है, और राजाओंके दुर्योधनको दिये हुये उपढौकनस्वरूप हाथियोंके सप्तपर्ण पुष्पका माफिक सुगन्धित मदसे धरणी आर्द्र हो जाती हैं।

* 'चकासते' इति वा पाठः।

उदारकीर्त्तेरुदयं दयावतः
प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता
वसूपमानस्य वसूनि मेदिनी ॥ १८ ॥

अन्वयः । उदारकीर्त्तेः दयावतः प्रशान्तबाधं अभिरक्षया उदयं दिशतः वसूपमानस्य अस्य गुणैः उपस्नुता मेदिनी वसूनि स्वयं प्रदुग्धे ॥ वाच्य—परिवर्त्तनं न भवति । १८

स्ताच्छतुः" इति नुमागमप्रतिषेधः । चकासति सर्वोत्कर्षेण वर्त्तन्ते इत्यर्थः । "अदभ्यस्तात्" इति झेरदादेशः । "जक्षित्यादयः षट्" इति अभ्यस्तसंज्ञा । सम्पन्नजनपदत्वात् असन्तापकरत्वाच्च दुःसाध्योऽयमिति भावः ॥ १७ ॥

ननु एवं जनपदानुवर्त्ति नः कथम् अर्थलाभ इत्यत आह—उदारेति । उदारकीर्त्तेः महायशसः । "उदारो दातृमहतोः" इत्यमरः । दयावतः परदुःखप्रहरणेच्छोः । अतएव प्रशान्तबाधं प्रशमितोपद्रवं यथा स्यात् तथेति क्रियाविशेषणम्, उदयविशेषणं वा । "वा दान्तशान्त" इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । अभिरक्षया सर्वतस्त्राणेन उदयं वृद्धिं दिशतः सम्पादयतः वसूपमानस्य कुवेरोपमस्य । "वसुर्मयूखाग्निधनाधिपेषु" इति विश्वः । अस्य दुर्य्योधनस्य गुणैर्दयादाक्षिण्यादिभिः उपस्नुता द्राविता मेदिनी वसूनि धनानि । "वसु तोये धने मणौ" इति वैजयन्ती । स्वयं प्रदुग्धे अक्लेशेन दुह्यते इत्यर्थः । दुहेः कर्म्मकर्त्तरि लट् । "न दुहस्नुनमां यक्चिणौ" इति यक्प्रतिषेधः । यथा केनचिद्विदग्धेन नवप्रसूता रक्षिता च गौः स्वयं प्रदुग्धे तद्वत् इति भावः । अलङ्कारस्तु—"विशेषणमात्रसाम्यात् अप्रस्तुतस्य गम्यत्वे समासोक्तिः" इति सर्वस्वकारः । अत्र प्रतीयमानया गवा सह प्रकृताङ्गया मेदिन्या भेदेऽभेदलक्षणातिशयोक्तिवशाद्दोग्धृत्वेनोक्तिरिति संक्षेपः ॥ १८ ॥

১৭। দুর্য্যোধন সুদীর্ঘদিন প্রজাবৃন্দের মঙ্গলবিধান করিতেছেন বলিয়া নদীমাতৃক কুরুজনপদ কৃষিজীবিগণের পক্ষে হলকর্ষণাদি ভিন্ন প্রত্যুৎপন্ন শস্তের স্থায় অল্পায়াসেও সুখে লভ্য শস্যরাশি উৎপন্ন করিয়া নিরতিশয় শোভাসম্পন্ন হইয়াছে।

১৮। অগণ্যবাধা নিবৃত্তিপূর্ব্বক পালনদ্বারা শ্রীবৃদ্ধি সম্পাদন কর্ত্তা দয়াবান্, উদারকীর্ত্তি, কুবেরোপম সেই নৃপতির গুণগ্রাম দ্বারা বসুমতী মুগ্ধ ও আর্দ্র হইয়াই যেন স্বয়ং ধনরত্নাদি দোহন করিয়া থাকেন।

१७। दुर्य्योधनकी राजत्व दैवमातृक नहीं, उसने कुएं, तालाब और नहरें बनवा बड़ा प्रवर्त्तन कर दिया है। उसकी राज्यमें रहनेवाले कृषक सर्व्वदा शस्यसम्पत् पाया करते हैं और सभी जगह अन्न उत्पन्न होता हैं। उनके अविरत-हितकर अनुष्ठानसे कौरव बड़ा ही उत्कर्ष लाभ कर रहे हैं।

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः।
न संहतास्तस्य नभिन्नवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥१९॥

अन्वयः। महौजसः मानधनाः धनार्चिताः संयति लब्धकीर्त्तयः नसंहताः नभिन्नवृत्तयः धनुर्भृतः असुभिः तस्य प्रियाणि समीहितुं वाञ्छन्ति॥ वाच्य—महौजोभिः मानधनैः धनार्चितैः लब्धकीर्त्तिभिः नसंहतैः नभिन्नवृत्तिभिः धनुर्भृद्भिः प्रियाणि वाञ्छ्यन्ते। १९

वीरभटानुकूल्यमाह—महौजस इति। महौजसो महाबलाः, अन्यथा दुर्ब्बलानाम् अनुपकारित्वादिति भावः। मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः, अन्यथा कदाचिद्बलदर्पाद्विकुर्वीरन् इति भावः। धनार्चिताः धनैरर्चिताः सत्कृताः। अन्यथा दारिद्र्यात् एनं जह्युरिति भावः। संयति संग्रामे लब्धकीर्त्तयः बहुयशस इत्यर्थः। अन्यथा कदाचित् मुह्येयुरिति भावः। संहता मिथः सङ्गताः स्वार्थनिष्ठा न भवन्तीति नसंहताः, नञर्थस्य नशब्दस्य सुपसुपेति समासः। भिन्नवृत्तयो मिथो विरोधात् स्वामिकार्य्यविघातकरा न भवन्तीति नभिन्नवृत्तयः पूर्ववत्समासः, अन्यथा स्वामिकार्य्यविघातकतया स्वामिद्रोहिणः स्युः इति उभयत्रापि तात्पर्य्यार्थः। धनुर्भृतो धानुष्काः। आयुधीयमात्रोपलक्षणमेतत्। प्राधान्यात् धनुर्ग्रहणम्। यस्य दुर्य्योधनस्य असुभिः प्राणैः प्रियाणि समीहितुं कर्त्तुं वाञ्छन्ति आनृण्यार्थं प्राणान् दातुमिच्छन्ति, अन्यथा दोषस्मरणादिति भावः। अत्र महौजसादिपदार्थानां प्राणदानकर्त्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात् काव्यलिङ्गम् अलङ्कारः लक्षणन्तु उक्तम्। तथा साभिप्रायविशेषणत्वात् परिकरालङ्कार इति द्वयोस्तिलतण्डुलवत् विभक्ततया स्फुरणात् संसृष्टिः॥ १९॥

১৯। কুলাভিমানী, মহাবল, যুদ্ধক্ষেত্রে লব্ধকীর্ত্তি, ধনদ্বারা পুরস্কৃত ধনুর্দ্ধরগণ স্বার্থপরতা শূন্য হইয়া এবং পরস্পরের মধ্যে বিরোধ না করিয়া প্রাণ বিসর্জ্জন করিয়াও তাঁহার অভীষ্ট সম্পাদন করিতে অভিলাষ করেন।

१८। उदारकीर्त्ति दयावान् कुवेरोपम राजा दुर्य्योधन अच्छीतरह सबदिक रत्नाकर अबाधरूपसे उन्नतिका सम्पादन करता हैं। वसुमती उनके दयादि गुणसे आर्द्रा हो आपनसे उनके लिये धन दोहन करती हैं।

१९। अमितबलशाली, कुलशीलादिके विषयमें अभिमानी, युद्धक्षेत्रोमें लब्धकीर्त्ति, धनसे पुरस्कृत, परस्पर स्वार्थपरताशून्य, ऐकमत्यसम्पन्न, धनुष्मा, शूरवीर प्राण विसर्ज्जन कर भी उनके अभीष्टके सम्पादनके अभिलाषी हैं।

महीभृतां सच्चरितैश्चरैः क्रियाः
स वेद निःशेषमशेषितक्रियः।
महोदयैस्तस्य हितानुबन्धिभिः
प्रतीयते धातुरिवेहितं फलैः॥ २०॥
न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम्।

अन्वयः। अशेषितक्रियः सः सच्चरितैः चरैः महीभृतां क्रियाः निःशेषं वेद। धातुरिव तस्य ईहितं महोदयैः हितानुबन्धिभिः फलैः प्रतीयते॥ वाच्य—तेन विद्यन्ते। प्रतियन्ति प्रत्ययन्ति वा। [ अत्रोपमालङ्कारः ]। २०

अन्वयः। तेन क्वचित् सज्यं धनुः न उद्यतम्; आननं वा कोपविजिह्मं न कृतम्। नराधिपैः गुणानुरागेण अस्य शासनं माल्यमिव शिरोभिः उह्यते। वाच्य—सः उद्यतवान्। कृतवान्। नराधिपाः वहन्ति। [ अत्रापि उपमालङ्कारः ]। २१

सम्प्रति स्वराष्ट्रवत् परराष्ट्रवृत्तान्तमपि वेत्तीत्याह—महीभृतामिति। अशेषितक्रियः समापितकृत्यः, आफलोदयकर्मेत्यर्थः। सः दुर्य्योधनः, सच्चरितैः शुद्धचरितैः, अवञ्चकैरित्यर्थः। चरन्तीति चराः तैः चरैः प्रणिधिभिः, पचाद्यच्। महीभृतां क्रियाः प्रारम्भान् निःशेषं वेद वेत्ति। "विदो लटो वा" इति णलादेशः। स्वरहस्यं तु न कश्चिद्वेद इत्याह—महोदयैरिति। धातुरिव तस्य दुर्य्योधनस्येहितम् उद्योगो महोदयैः महावृद्धिभिः,हितानुबन्धिभिः हितम् अनुबध्नन्ति अनुरुन्धन्ति इति हितानुबन्धिनः तैः स्वन्तैः इत्यर्थः। फलैः कार्य्यसिद्धिभिः प्रतीयते ज्ञायते। फलानुमेयाः तस्य प्रारम्भा इत्यर्थः॥ २०॥

मित्रबलमाह—नेति। तेन राज्ञा क्वचित् कुत्रापि सह ज्यया मौर्व्या सज्यम्। "मौर्वी ज्या सिञ्जिनी गुणः" इत्यमरः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। धनुः न उद्यतं न ऊर्द्धीकृतम्, आननं वा कोपविजिह्मं कोपेन कुटिलं न कृतं, यस्य कोप एव न उदेति कुतस्तस्य युद्धप्रसक्तिरिति

२०। समस्त स्वकीय कृत्य निष्पन्न करिया तिनि शुद्धचरित चर द्वारा अपर राजन्यवर्गेर कार्य्यावलि अशेषरूपे अवगत हइया थाकेन। विधातार चेष्टितेर न्याय ताँहार कार्य्यसमूह हितजनक ओ समृद्धफल-द्वारा अनुमित हय।

२०। सुचतुर दुर्य्योधन विशुद्धचरित चरों द्वारा राजाओंका कार्य्य कलाप अशेषरूपसे जान लेता हैं, किन्तु विधाताकी तरह दुर्य्योधनका क्रियाकार्य्य; प्रभूत, श्रेयस्कर, परिणामशोभन फल देखकर ही दूसरे राजा जानते हैं।

गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥ २१ ॥
स यौवराज्ये नवयौवनोद्धतं
निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम् ॥ २२ ॥

अन्वयः। इद्धशासनः सः नवयौवनोद्धतं दुःशासनं यौवराज्ये निधाय पुरोधसा अनुमत अखिन्नः (सन्) मखेषु हव्येन हिरण्यरेतसं धिनोति ॥ वाच्य—इद्धशासनेन तेन अनुमतेन अखिन्नेन हिरण्यरेताः धिन्व्यते। [ अत्रार्थान्तरन्यासोऽलङ्कारः ]। २२

भावः। कथं तर्हि आज्ञां कारयति राज्ञ इत्यत्राह—गुणेति। गुणेषु दयादाक्षिण्यादिषु अनुरागेण प्रेम्णा, माल्यपक्षे सूत्रानुषङ्गेण, यद्वा सौरभ्यगुणलोभेन, नराधिपैः अन्यभूपालैः अस्य शासनम् आज्ञा, माला एव माल्यं, तदिव। "चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्" इति क्षीरस्वामी। शिरोभिः उह्यते धार्य्यते। "वचिस्वपियजादीनां किति" इति यकि सम्प्रसारणम्। अत्र उपमा स्फुटा इव ॥ २१ ॥

सम्प्रति तस्य धार्म्मिकत्वमाह—स इति। इद्धशासनोऽप्रतिहताज्ञः स दुर्य्योधनो नवयौवनोद्धतं प्रगल्भं धुरन्धरम् इत्यर्थः। दुःखेन शास्यते इति दुःशासनः तम्। "भाषायां शासियुधि" इत्यादिना खलर्थे युच्प्रत्ययः। यौवराज्ये युवराजकर्म्मणि, ब्राह्मणादित्वात् ष्यञ्। निधाय नियुज्य इत्यर्थः। पुरोधसा पुरोहितेन अनुमतोऽनुज्ञातः तस्मिन् याजके सति इत्यर्थः, तदुल्लङ्घने दोषस्मरणादिति भावः। "निष्ठा" इति भूतार्थे क्तः, नतु "मतिबुद्धि" इत्यादिना वर्त्तमानार्थे ; अन्यथा "पुरोधसा" इत्यत्र "क्तस्य च वर्त्तमाने" इति षष्ठी स्यात्। अखिन्नोऽनलसो मखेषु क्रतुषु हव्येन हविषा। हिरण्यं रेतो यस्य तं हिरण्यरेतसम् अनलं धिनोति प्रीणयति। धिन्वेः प्रीणनार्थात् "धिन्विकृण्व्योरच" इत्युप्रत्ययः। अकारस्यान्तादेशः ॥ २२ ॥

२१। তিনি কখনও কাহার প্রতি জ্যাযুক্ত ধনুঃ উদ্যত করেন না। কিংবা আস্য ক্রোধে ভ্রূকুটী কুটিল করেন না। ভূপতিবৃন্দ তাঁহার গুণে অনুরাগ প্রযুক্ত তাঁহার শাসন মালার ন্যায় মস্তকে ধারণ করেন।

२१। सो राजा कभी युद्धमें किसीको प्रति धनुष नहीं उठाता या किसीसे कोपकर मुंह टेढ़ा नहीं करता। भूपतिगण उसके सद्‌गुणोंसे मुग्ध हो उसकी आज्ञा मालाकी माफिक शिरपर धारण करते हैं।

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यती-
रहो दुरन्ता बलवद्विरोधिता ॥ २३ ॥

अन्वयः । स प्रलीनभूपालम् स्थिरायति भुवो मण्डलं आवारिधि प्रशासत् अपि त्वदेष्यतीः भियः चिन्तयति एव । अहो ! बलवद्विरोधिता दुरन्ता ॥ वाच्य—तेन प्रशासता त्वदेष्यत्यः भियः चिन्त्यन्ते । बलवद्विरोधितया दुरन्तया ( भूयते )। २३

स चेत् तादृश उद्योगी तर्हि अस्माभिर्न निरुद्योगैर्भाव्यमित्याशङ्क्य उद्योगाशां दर्शयति—प्रलीनेति । स दुर्य्योधनः प्रलीनभूपालं निःसपत्नम् इत्यर्थः । स्थिरायति चिरस्थायि इत्यर्थः । भुवो मण्डलम् आ वारिधिभ्यः आवारिधि । "आङ्मर्य्यादाभिविध्योः" इति अव्ययीभावः । प्रशासत् आज्ञापयन्नपि । "जक्षित्यादयः षट्" इति अभ्यस्तसंज्ञा । "नाभ्यस्ताच्छतुः" इति नुमागमप्रतिषेधः । त्वत् त्वत्त एष्यतीः आगमिष्यतीः आगामिनीरिति यावत् । धातूनामनेकार्थत्वादुक्तार्थसिद्धिः, अथवा आङ्पूर्वः पाठः । "एत्येधत्यूठ्सु" इति वृद्धिः, "लृटः सद्वा" इति शतृप्रत्ययः । "उगितश्च" इति ङीप । "आच्छीनद्योर्नुम्" इति विकल्पान्नुमभावः । भियो भयहेतून् विपद इत्यर्थः । चिन्तयति आलोचयति एव । स एवाह—अहो ! बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्वभौमस्यापि प्रबलैः सपत्नैः सह वैरम्[वैरायःमाणत्वं] अनर्थपर्य्यवसायि एवेति तात्पर्य्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २३ ॥

२२। सर्ब्बत्र অপ্রতিহত শাসন ভূপতি দুর্য্যোধন নবযৌবনোদ্ধত দুঃশাসনকে যৌবরাজ্যে নিয়োগ করিয়া পুরোহিতের উপদেশ ক্রমে আলস্য প্রত্যাহার করিয়া যজ্ঞে হব্যাহুতি দ্বারা বৈশ্বানরের প্রীতি বিধান করিতেছেন।

২৩। প্রতিপক্ষ রাজন্যগণ যথায় বিলীন হইয়াছে; যাহার উত্তর কাল স্থির ও নাশশূন্য, ঈদৃশ সাগরান্তভূমণ্ডল শাসন করিয়াও দুর্য্যোধন আপনার নিকট হইতে যে ভয় উৎপন্ন হইবে তাহাই চিন্তা করিয়া থাকেন। অহো! প্রবল ব্যক্তির সহিত বিরোধের পরিণাম কি অশুভ।

२२। सर्वोंमें अप्रतिहतशासन राजा दुर्य्योधन नवयौवनोद्धत छोटे भाई दुःशासनको युवराज बनानेको पुरोहितकी अनुमति ले आलस छोड़ यज्ञमें हव्यसे अग्निदेवको प्रीतिविधान करता हैं।

२३। वह निःसपत्न सागरान्त भूमण्डलमें स्थायी भावसे शासन दण्ड परिचालन कर भी सचेत रहता और डरा करता हैं। अहो! प्रबलका साथ विरोध बड़ा ही भयङ्कर समझता है।

कथाप्रसङ्गेन जनैरुदाहृतात्
अनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः
स दुःसहात् मन्त्रपदादिवोरगः ॥२४॥

अन्वयः । सः कथाप्रसङ्गेन जनैः उदाहृतात् तवाभिधानात् अनुस्मृताखण्डलसूनुविक्रमः नताननः ( सन् ) दुःसहात् मन्त्रपदात् उरग इव व्यथते ॥ वाच्य—तेन विक्रमेण नताननेन उरगेण व्यथ्यते । [ अत्रोत्प्रेक्षानामालङ्कारः ] । २४

ननु गूढ़ाकारेङ्गितस्य तस्य भयं त्वया कथं निरधारीत्यत्राह—कथेति। कथाप्रसङ्गेन गोष्ठीवचनेन जनैः तत्रत्यैः इत्यर्थः । अन्यत्र कथाप्रसङ्गेन विषवैद्येन । "कथाप्रसङ्गो वार्त्तायां विषवैद्येऽपि वाच्यवत्" इति विश्वः । एकवचनस्य अतन्त्रत्वात् जनविशेषणम् । यद्वा कथाप्रसङ्गे इनाश्च ते जनाश्च इत्येकं पदम् । उदाहृतात् उच्चारितात् तवाभिधानात् नामधेयस्मरणाद्धेतोः । 'हेतौ' इति पञ्चमी । "आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः । अन्यत्र तवाभिधानात्, "नामैकदेशग्रहणे नाममात्रग्रहणम्" इति न्यायात्—तश्च वश्च तवौ तार्क्ष्यवासुकी, तयोः अभिधानं यस्मिन् पदे तस्मात् अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्जुनपराक्रमः सन् दुःसहात् अतिदुःसहात् मन्त्रपदात् मन्त्रशब्दात् स्मारकाद्धेतोः । आखण्डलसूनुः इन्द्रानुजः उपेन्द्रो विष्णुरिति यावत् । "सूनुः पुत्त्रेऽनुजे रवौ" इति विश्वः । तस्य विः पक्षी गरुड़ इत्यर्थः, तस्य क्रमः पादविक्षेपः सोऽनुस्मृतो येन स तथोक्तः । स्मृतगरुड़महिमा उरग इव नताननः सन् । "उरगः पन्नगो भोगी" इत्यमरः । व्यथते दुःखायते, "पीड़ा बाधा व्यथा दुःखम्" इत्यमरः । अतुल्यकटभयदोषादिविकारा दुर्वारा इति भावः । "सर्वतो जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इति न्यायादर्ज्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्व्वमवदातम् ॥ २४ ॥

२४ । কথাপ্রসঙ্গে লোকে আপনার নাম উচ্চারণ করিলে দুর্য্যোধন, দেবরাজতনয় অর্জ্জুনের বিক্রম স্মরণ করিয়া অধোবদনে রহেন ও অত্যন্ত বেদনা অনুভব করেন। সর্প যেমন বিষবৈদ্য-মুখোচ্চারিত তার্ক্ষ্য ও বাসুকির নামাক্ষরযুক্ত দুঃসহ মন্ত্র শ্রবণে, ইন্দ্রবরাজ বিষ্ণুর বাহন খগপতির পাদবিক্ষেপ স্মরণ পূর্ব্বক বিনতফণ হইয়া ব্যথিত হয়।

२४ । वैसे ही वहांके मनुष्योंके बातचित करते आपका नाम सुन राजा दुर्योधन, देवराजतनय अर्जुनके विक्रमका स्मरण कर मुंह लटका सोच विचार करता है । सांप जैसे सपेरेके मुंहसे गरुड़जीका नाम सुन नीचा फनकर व्यथित होता है ।

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां गिरः ॥२५॥
इतीरयित्वा गिरमात्तसत्क्रिये
गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा
तदाचचक्षेऽनुजसन्निधौ वचः ॥२६॥

अन्वयः । तत् त्वयि जिह्मं कर्त्तुम् उद्यते तत्र विधेयम् उत्तरं आशु विधीयताम् । परप्रणीतानि वचांसि चिन्वताम् मादृशां गिरः प्रवृत्तिसाराः खलु ॥ वाच्य—विधेहि । प्रवृत्तिसाराभिः गीर्भिः (भूयते)। २५

अन्वयः । अथ वनसन्निवासिनाम् पत्यौ इति गिरम् ईरयित्वा आत्तसत्क्रिये गते (सति) महीभुजा कृष्णासदनं प्रविश्य अनुजसन्निधौ तत् वचः आचचक्षे । वाच्य—महीभुक् । २६

निगमयति—तदिति । तत् तस्मात् कारणात् त्वयि जिह्मं कपटं कर्त्तुम् उद्यते त्वां जिघांसौ इत्यर्थः, तत्र तस्मिन् दुर्य्योधने विधेयं कर्त्तव्यम् उत्तरं प्रतिक्रिया आशु विधीयतां क्रियताम् । ननु कर्त्तव्यमपि त्वयैव उच्यतामिति चेत् तत्राह—परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशां वार्त्ताहारिणामित्यर्थः । गिरः प्रवृत्तिसाराः वार्त्तामात्रसाराः खलु । "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः । वार्त्तामात्रवादिनो वयं, नतु कर्त्तव्यार्थोपदेशसमर्थाः । अतस्त्वयैव निर्धार्य्यं कार्य्यमिति भावः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥ २५ ॥

इतीति । वनसन्निवासिनां पत्यौ वनेचराधिपे इति गिरम् ईरयित्वा उक्त्वा आत्तसत्क्रिये गृहीतपारितोषिके गते सति । "तुष्टिदानमेव चाराणां हि वेतनं । ते हि तल्लोभात् स्वामिकार्य्येषु अतीव त्वरयन्ते" इति नीतिवाक्यास्मृते । अथ महीभुजा राज्ञा कृष्णासदनं द्रौपदीभवनं प्रविश्य अनुज-

২৫। আপনার প্রতি কুটিলাচরণ করিতে সমুদ্যত দুর্য্যোধনের প্রতি যথাযোগ্য প্রতিবিধান করিতে হয় শীঘ্র করুন। আমরা কেবল পরপ্রযোজ্য বাক্যসংগ্রাহক; পরবার্ত্তা সংগ্রহই আমাদের বাক্য দ্বারা হইয়া থাকে (উপদেশ নহে)।

२५। इसलिये आप सत्वर ही उस कपटताचारी जिघांसु दुर्य्योधनके प्रति यथायोग्य प्रतिक्रियाका प्रयोग करें। हम वार्त्तावह हैं, परवार्त्ता संग्रह ही हमारे वाक्य द्वारा सकता है।

निशम्य सिद्धिं द्विषतामपाकृती-
स्ततस्ततस्त्या विनियन्तुमक्षमा।
नृपस्य मन्युव्यवसायदीपिनी-
रुदाजहार द्रुपदात्मजा गिरः ॥२७॥

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम्।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥२८॥

अन्वयः। अथ द्रुपदात्मजा द्विषतां सिद्धिं निशम्य ततः ततस्त्याः अपाकृतीः विनियन्तुम् अक्षमा (सती) नृपस्य मन्युव्यवसायदीपिनीः गिरः उदाजहार। वाच्य—द्रुपदात्मजया अक्षमया मन्युव्यवसायदीपिन्यः उदाजह्रिरे। २७

अन्वयः। भवादृशेषु प्रमदाजनोदितं अनुशासनम् अधिक्षेप इव भवति। तथापि निरस्तनारीसमया दुराधयः मां वक्तुं व्यवसाययन्ति ॥ वाच्य—प्रमदाजनोदितेन अनुशासनेन अधिक्षेपेणेव भूयते निरस्तनारीसमयैः दुराधिभिः अहं व्यवसाय्ये। २८

सन्निधौ तद्वनेचरोक्तं वचो वाक्यम् आचचक्षे आख्यातम्। अथवा कृष्णेति पदच्छेदः। सदनं प्रविश्य अनुजसन्निधौ तद्वचः कृष्णा आचचक्षे आख्याता वचिङो दुहादेर्द्विकर्म्मकत्वादप्रधानकर्म्मणि लिट्॥ २६॥

निशम्येति। अथ द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं वृद्धिरूपां निशम्य ततस्तदनन्तरं, ततो द्विषद्भ्य आगतास्ततस्त्याः। "अव्ययात् त्यप्" इति त्यप्। अपाकृतीर्विकारान् विनियन्तुं निरोद्धुम् अक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोः दीपिनीः संवर्द्धिनीर्गिरो वाक्यानि उदाजहार जगाद इत्यर्थः॥ २७॥

भवादृशेष्विति। भवादृशा भवद्विधाः पण्डिता इत्यर्थः। तेषु विषये। "त्यदादिषु" इत्यादिना कञ्। "आ सर्वनाम्नः" इत्याकारादेशः। प्रमदाजनोदितं स्त्रीजनोक्तम्। वदेः क्तः। "वचिस्वपि" इत्यादिना सम्प्रसारणम्।

२७। অনন্তর বনে চরপতি কিরাত এইরূপ বাক্য বলিয়া পারিতোষিক লাভ করতঃ প্রতিগমন করিলে, মহীপতি যুধিষ্ঠির দ্রৌপদীর আবাসভবনে প্রবিষ্ট হইয়া অনুজগণের সন্নিধানে কিরাত কথিত সেই বাক্য ব্যক্ত করিলেন।

२६। इसके बाद वनेचरपति किरात एसितरह वाक्यबोलके पुरस्कार ले चला गया और महीपतिने भी द्रौपदीके आवास भवनमें जा भाइयोंसे वनेचरकी बातें कहीं।

अखण्डमाखण्डलतुल्यधामभिः
चिरं धृता भूपतिभिः स्ववंशजैः।
त्वयात्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्ज्जिता ॥ २९ ॥

अन्वयः। आखण्डलतुल्यधामभिः स्ववंशजैः भूपतिभिः चिरम् अखण्डं धृता मही त्वया मदच्युता मतङ्गजेन स्रगिव आत्महस्तेन अपवर्जिता ॥ वाच्य—धृतां महीं मदच्युत् मतङ्गजः स्रजमिव त्वम् अपवर्जितवान्। [ अत्रोपमा स्पष्टा ]। २९

अनुशासनं नियोगवचनम् अधिक्षेपः तिरस्कार इव भवति। अतो न युक्तं वक्तुमित्यर्थः। तथापि वक्तुमनुचितत्वेऽपि निरस्तनारीसमयाः त्याजित-शालीनतारूपस्त्रीसमाचाराः। "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः। दुराधयः समयोल्लङ्घनहेतुत्वात् दुष्टा मनोव्यथाः। "पुंस्याधि-र्मानसी व्यथा" इत्यमरः। मां वक्तुं व्यवसाययन्ति प्रेरयन्ति। न किञ्चिदयुक्तं दुःखिनामिति भावः ॥ २८ ॥

अखण्डमिति। आखण्डलतुल्यधामभिः इन्द्रतुल्यप्रभावैः। "धाम रश्मि गृहे देहे स्थाने जन्मप्रभावयोः" इति हेमः। स्ववंशजैः भूपतिभिः भरता-दिभिः चिरम् अखण्डम् अविच्छिन्नं धृता मही त्वया, मदं च्योततीति मद-च्युत्, क्विप्. तेन मदस्राविणा मतङ्गजेन स्रगिव आत्महस्तेन स्वकरेण स्वचापल्येन इत्यर्थः। अपवर्जिता परिहृता त्यक्ता। स्वदोषादेव अयम् अनर्थागम इत्यर्थः ॥ २९ ॥

২৭। অনন্তর শত্রুদিগের অভ্যুদয় বার্ত্তা শ্রবণ করিয়া তজ্জন্য ক্রোধ নিমিত্তক বিকার নিরোধ করিতে অসমর্থ দ্রুপদনন্দিনী নৃপতির ক্রোধ ও উদ্যমের উদ্দীপক বাক্য বলিতে লাগিলেন।

২৮। ভবাদৃশ পণ্ডিত ব্যক্তির প্রতি প্রমদাজনের উপদেশদান তিরস্কার বাক্যের ন্যায়। তথাপি অতিনিদারুণ মনোবেদনা নারীজনোচিত লজ্জাপদ্ধতিকে ত্যাগ করাইয়া আমাকে এই বিষয়ে কথা-কহিতে উদ্যত করিতেছে।

২৯। স্বীয়বংশজাত ইন্দ্রতুল্য পরাক্রমশালী নৃপতিগণ দীর্ঘদিন অখণ্ডভাবে যে মহীকে অধিকৃত করিয়া পালন করিয়াছেন; আপনি সেই মহীকে, মদস্রাবী হস্তীশুণ্ডদ্বারা মালা পরিত্যাগের ন্যায় হেলায় পরিত্যাগ করিয়াছেন।

२७। अनन्तर द्रुपदनन्दिनी शत्रुओंकी समृद्धि सिद्धिको सुन, उनके किये अपकारको स्मरणकर हृदयके आवेगको रोकनेमें असक्त हो नृपतिके क्रोध और उद्यमको उद्दीपना करने कहने लगीं।

२८। आप जैसे ज्ञानियोंसे प्रमदाजनयोंका कहा अनुशासन :तिरस्कारस्वरूपमें समझा जा सकता है; फिर भी, मेरी यह निदारुण चित्तोवेदना स्त्रियोंकी आचारपद्धतिको लांघ इस विषयमें कुछ कहनेको मुझे उद्यत करती है।

व्रजन्ति ते मूढ़धियः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्
असंवृताङ्गान्निशिता इवेषवः ॥३०॥

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां नराधिपः।

अन्वयः। ते मूढ़धियः पराभवं व्रजन्ति, ये मायाविषु मायिनः न भवन्ति। शठाः तथाविधान् असंवृताङ्गान् निशिता इषव इव प्रविश्य घ्नन्ति॥ वाच्य—तैः मूढ़धीभिः पराभवः व्रज्यते, यैः मायिभिः न भूयते। शठैः तथाविधा असंवृताङ्गाः निशितैः इषुभिः इव हन्यन्ते। [ अत्रोपमार्थान्तरन्यासावलङ्कारौ। मतान्तरे—काव्यलिङ्गमलङ्कारः ]। ३०

अन्वयः। अनुरक्तसाधनः कुलाभिमानी त्वदन्यः कः इव नराधिपः गुणानुरक्ताम् कुलजां मनोरमां श्रियम् आत्मवधूमिव परैः अपहारयेत्॥ वाच्य—अनुरक्तसाधनेन कुलाभिमानिना त्वदन्येन केन इव नराधिपेन मनोरमा गुणानुरक्ता कुलजा आत्मवधूरिव श्रीः अपहार्य्येत। [ अत्रोपमालङ्कारः ]। ३१

स्वदोषादेवायमनर्थागम इत्युक्तम्। स च दोषः कुटिलेषु अकौटिल्यमेव इत्याह—व्रजन्तीति। मूढ़धियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति। ये मायाविषु मायावत्सु विषये। "अस्मायामेधा" इत्यादिना विनिप्रत्ययः। मायिनो मायावन्तः, व्रीह्यादित्वात् इनिप्रत्ययः। न भवन्ति। अत्रैव अर्थान्तरं न्यस्यति—प्रविश्येति। शठाः अपकारिणो धूर्त्ताः तथाविधान् अकुटिलान् असंवृताङ्गान् अवर्मितशरीरान् निशिता इषव इव प्रविश्य प्रवेशं कृत्वा आत्मीया भूत्वा घ्नन्ति हि। 'आर्जवं हि कुटिलेषु न नीतिः" इति भावः॥ ३०॥

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः, किन्तु स्वोपेक्षादोषमूलत्वादित्याशयेनाह—गुणेति। अनुरक्तसाधनोऽनुकूलसहायवान्, उक्तञ्च कामन्दकीये—"उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः

৩০। যে মূঢ়মতি ব্যক্তিগণ মায়াবীদিগের প্রতি শঠতাচরণ করে না, তাহারা পরাভব প্রাপ্ত হইয়া থাকে। যেহেতু ধূর্ত্তেরা তাদৃশ ব্যক্তিবর্গের অভ্যন্তরের তত্ত্ব পরিজ্ঞাত হইয়া শানিতশর যেরূপ বর্ম্মহীন দেহের অভ্যন্তরে প্রবেশ করিয়া বিনাশ সাধন করে। সেইরূপ তাহাদিগের বিনাশ সাধন করিয়া থাকে।

२९। आपकी वंशोद्भव इन्द्र माफिक प्रभवशाली भरतादि राजाओं द्वारा अविच्छिन्न भावसे विराजित महीको आपने क्यों, मदस्रावी मत्तहस्तिके माला फेंकनेकी भांति अपने हाथ परित्याग किया।

परैस्त्वदन्यः क इवापहारयेत्
मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥
भवन्तमेतर्हि मनस्विगर्हिते
विवर्त्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः
शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥३२॥

अन्वयः । हे नरदेव ! एतर्हि मनस्विगर्हिते वर्त्मनि विवर्त्तमानं भवन्तम् उदीरितः मन्युः शुष्कं शमीतरुम् उच्छिखः अग्निरिव कथं न ज्वलयति ॥ वाच्य—विवर्त्तमानः भवान् उदीरितेन मन्युना शुष्कः शमीतरुः उच्छिखेन अग्निना इव ज्वल्यते । [ अत्रापि उपमा स्पष्टा ]। ३२

सहचारिणी ॥" इति । कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च, त्वदन्यस्त्वत्तोऽन्यः । "अन्यारात्" इत्यादिना पञ्चमी । क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्य्यादिभिश्च अनुरक्ताम् अनुरागिणीं कुलजां कुलक्रमादागतां कुलीनाञ्च मनोरमां श्रियम् आत्मवधूमिव स्वभार्य्यामिव । "वधूर्जाया स्नुषा स्त्री च" इत्यमरः । परैः शत्रुभिः अन्यैश्च अपहारयेत् स्वयमेव अपहारं कारयेदित्यर्थः । कलत्रापहारवत् लक्ष्म्यपहारोऽपि राज्ञां मानहानिकरत्वात् अनुपेक्षणीय इति भावः ॥ ३१ ॥

अथ दशभिः कोपोद्दीपनं करोति—भवन्तमिति । हे नरदेव ! नरेन्द्र ! एतर्हि इदानीम् अस्मिन् आपत्कालेऽपीत्यर्थः । "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः । "इदमोर्हिल्" इति र्हिल्प्रत्ययः । "एतेतौ रथोः" इत्येतादेशः । आपदमेवाह—मनस्विगर्हिते शूरजनजुगुप्सिते वर्त्मनि मार्गे विवर्त्तमानं शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः । भवन्तं त्वाम् उदीरितः उद्दीपितो मन्युः क्रोधः शुष्कं नीरसम् । "शुषेः कः" इति निष्ठातकारस्य ककारः । शमी चासौ तरुश्चेति विशेषणसमासः, तं । शमीग्रहणं

৩১। যাহার সহায়কগণ অনুরক্ত ও যাহার কুলমর্য্যাদা'র অভিমান আছে এরূপ আপনি ভিন্ন কোন ভূপতি গুণানুরক্তা কুলজা মনোরমা নিজভার্য্যার ন্যায় রাজলক্ষ্মীকে অন্যের দ্বারা অপহৃত করাইতে পারে ?

३०। जो व्यक्तिगण मायावियोंसे माया नहीं करता, वह अविवेकी मानव पराभूत होता है। धूर्त लोग अकुटिल व्यक्तियोंके हृदयमें प्रवेशकर उन्हें शाणित तीर जैसे वर्म्म द्वारा अनाहत देहको छेद करता है, वैसे ही नष्ट करते हैं।

३१। आपके सिवा और कौन कुलाभिमानी अनुकूल सहायसम्पन्न नरपति, गुणानुरक्ता, कुलजा, मनोरमा अपनी भार्य्या जैसी राजलक्ष्मीको शत्रुसे अपहरण कराता ?

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥३३॥

अन्वयः । देहिनः स्वयम् एव अवन्ध्यकोपस्य आपदां विहन्तुः वश्याः भवन्ति । अमर्षशून्येन जन्तुना विद्विषा ( सता ) न, जातहार्देन ( सता च ) न जनस्य आदरो भवति ॥ वाच्य—देहिभिः वश्यैः भूयते । आदरेण ( भूयते ) । [ अत्राप्रस्तुतप्रशंसालङ्कारः । ] ३३

शीघ्रज्वलनस्वभावात् क्षतम् । उच्छिख उद्गतज्वालः । "शिखिज्वाले शिखे" इत्यमरः । वह्निरिव कथं न ज्वलयति, ज्वलयितुमुचितमित्यर्थः । "मितां ह्रस्वः" इति ह्रस्वः ॥ ३२ ॥

ननु अन्तःशत्रुत्वादयं क्रोधः त्याज्य एव इत्याशङ्क्याह—अवन्ध्येति । अवन्ध्यः कोपो यस्य तस्य अवन्ध्यकोपस्य अतएव आपदां विहन्तुः निग्रहानुग्रहसमर्थस्य इत्यर्थः, पुंस इति शेषः । देहिनो जन्तवः स्वयमेव वश्या वशङ्गता भवन्ति । "वशङ्गत" इति यत् प्रत्ययः । अतस्त्वया कोपिना भवितव्यमित्यर्थः । व्यतिरेके तु अनिष्टमाचष्टे,—अमर्षशून्येन निष्कोपेन जन्तुना, कन्याया शोक इतिवत् /"हेतौ" इति तृतीया । हृदयस्य कर्म हार्दं स्नेहः । "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः । युवादित्वादण् । "हृदयस्य हृल्लेखयदणलासेषु" इति हृदादेशः । जातहार्देन जातस्नेहेन सता जनस्य आदरो न, विद्विषा द्विषता च सतादरो न । अमर्षहीनस्य रागद्वेषौ अकिञ्चित्करत्वादगण्यौ इत्यर्थः । अथवा विद्विषा सता दरो भयं न । 'दरोऽस्त्रियां भये शभ्रे" इत्यमरः । एतस्मिन्नेव प्रयोगे सन्धिवशाद्द्विधा पदच्छेदः । पुंवाक्येषु न दोषः । अतः स्थाने कोपः कार्य्यस्त्याज्यस्तु अस्थाने कोप इति भावः ॥ ३३ ॥

৩২। হে নরদেব, এইক্ষণ বীরবিগর্হিত এই অবস্থায় পতিত আপনার ক্রোধানল প্রজ্বলিত হইয়া উন্নতজ্বালহুতাশন যেরূপ শুষ্কশমীবৃক্ষকে প্রদীপ্ত করে, সেই রূপে আপনাকে কেন উদ্দীপিত করিতেছে না!!

৩৩। যাঁহার কোপ নিষ্ফল হয় না, যিনি আপদ বিনাশে সমর্থ, শরীরিগণ স্বয়ং তাঁহার বশতাপন্ন হয়। কোপহীন ব্যক্তি স্নেহ সম্পন্ন হইলেও লোকে আদর করে না, কিংবা শত্রু হইলেও লোকে আদর বা ভয় করে না।

३२। हे नरदेव, आप इस विपत्कालमें भी वीर-विगर्हित राहमें चल अनुन्नत दुर्दशाको भोग कर रहे हैं। आपका क्रोध उत्पन्न हो जैसे आग शुखे शमीतरुको जलाती है, आपको क्या नहीं जलाता ?

परिभ्रमँल्लोहितचन्दनोचित:
पदातिरन्तर्गिरि रेणुरूषित:।
महारथ: सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदर: ?॥ ३४॥
विजित्य य: प्राज्यमयच्छदुत्तरान्
कुरूनकुप्यं वसु वासवोपम:।

अन्वय:। (प्राक्) लोहितचन्दनोचित: महारथ: (इदानीं) रेणुरूषित: पदाति: अन्तर्गिरि परिभ्रमन् अयं वृकोदर: सत्यधनस्य (तव) मानसं नो दुनोति कच्चित्॥ वाच्य—लोहितचन्दनोचितेन महारथेन रेणुरूषितेन अन्तर्गिरि पदातिना परिभ्रमता अनेन वृकोदरेण दूयते। [अत्र काव्यलिङ्गालङ्कार:] ३४

परिभ्रमन्निति। लोहितचन्दनोचित: उचितलोहितचन्दन:। "वाहिताग्न्यादिषु" इति साधु:। अभ्यस्तरक्तचन्दन: इत्यर्थ:। "अभ्यस्ते त्युचितं न्याय्यम्" इति यादव:। महारथो रथचारी। उभयत्रापि प्रागिति शेष:। अद्य तु रेणुरूषितो धूलिच्छुरित:। पादाभ्यामतति गच्छतीति पदाति: पादचारी। "अज्यतिभ्यां च" इत्यनुवृत्तौ "पादे च" इति औणादिक इन् प्रत्यय:। "पादस्य पदाज्यातिगोपहतेषु" इति पदादेश:। अन्तर्गिरि गिरिषु अन्त:। विभक्त्यर्थेऽव्ययीभाव:। "गिरेश्च सेनकस्य" इति विकल्पात् समासान्ताभाव:। परिभ्रमन् अयं वृकोदरो भीम:। सत्यधनस्य इति सोल्लुण्ठनवचनम्। अद्यापि त्वया सत्यमेव रक्ष्यते, न तु भ्रातर इति भाव:। तवेति शेष: मानसं नो दुनोति ? "स्वान्तं हृत् मानसं मन:" इत्यमर:। कच्चित् न परितापयति ? "कच्चित् कामप्रवेदने" इत्यमर:। स्वाभिप्रायाविष्करणं कामप्रवेदनम्॥ ३४॥

३४। যে বৃকোদর রক্তচন্দনচর্চ্চিত হইয়া বিপুল রথবর আরোহণে বিচরণ করিতেন, তিনি এক্ষণে ধূলিধূসরিত হইয়া পাদচারে শৈল-প্রদেশে পরিভ্রমণ করিতেছেন, ইনিও কি সত্যধন আপনার চিত্তে পীড়া আনয়ন করিতেছেন না ?

३३। जिसका कोप निष्फल नहीं, जो आपद दुर करनेको समर्थ है, देहधारिलोग स्वत: उसके वशीभूत हो जाते है। जो व्यक्ति निष्कोप है, ऐसे पुरुषका मित्र होने पर भी कोई आदर नहीं करता और शत्रु होने पर भी उसे कोई भय नहीं देखाता।

३४। जो वृकोदर रक्तचन्दन-चर्च्चित हो, विपुल रथपर चढ़ घूमते थे, वही इस समय धूलिधूसरित हो पैदल पर्व्वतसे पर्व्वतपर आते जाते हैं, क्या यह भी सत्यधन आपके हृदयको पीड़ा नहीं करते ?

स वल्कवासांसि तवाधुनाहरन्
करोति मन्युं न कथं धनञ्जयः ॥ ३५ ॥
वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न वाधितुम् ॥ ३६ ॥

अन्वयः । वासवोपमः यः उत्तरान् कुरून् विजित्य प्राज्यम् अकुप्यम् वसु अयच्छत्, सः धनञ्जयः अधुना तव वल्कवासांसि आहरन् कथं न मन्युं करोति ॥ वाच्य—येन वासवोपमेन वसु अदायि तेन धनञ्जयेन आहरता मन्युः न क्रियते । [ अत्रापि काव्यलिङ्गालङ्कारः ] ३५

अन्वयः । वनान्तशय्याकठिनीकृताकृती विष्वक् कचाचितौ अगजौ गजौ इव एतौ यमौ विलोकयन् त्वं कथं धृतिसंयमौ वाधितुं न उत्सहसे ॥ वाच्य—विलोकयता त्वया कथं उत्सह्यते । [ उपमाकाव्यलिङ्गालङ्कारौ । ३६

विजित्येति । वासवः इन्द्रः उपमानं यस्य स वासवोपम इन्द्रतुल्यो यो धनञ्जयः । उत्तरान् कुरून् मेरोरुत्तरान् मानुषान् देशविशेषान् विजित्य प्राज्यं प्रभूतम् । "प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः । कुप्यात् अन्यत् अकुप्यं हेमरूप्यात्मकम् । "स्यात् कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यत् अन्यत् तत्कुप्यम्" इत्यमरः । वसु धनम् अयच्छत् दत्तवान् । "पाघ्रा" इत्यादिना दाणो यच्छादेशः । स धनं जयतीति धनञ्जयोऽर्जुनः । "संज्ञायां भृतवृजि" इत्यादिना खच्प्रत्ययः । "अरुर्द्विषत्" इत्यादिना मुमागमः । अधुना अस्मिन् काले । "अधुना" इति निपातनात् साधुः । तव वल्कवासांसि आहरन् कथं तव मन्युं क्रोधं दुःखं वा न करोति ? ॥ ३५ ॥

वनान्तेति । वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । "आकारो देह आकृतिः" इति वैजयन्ती । विष्वक् समन्तात् । "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः । कचाचितौ कचव्याप्तौ

৩৫। শক্রোপম যে ধনঞ্জয় উত্তর কুরু জয় করিয়া প্রভূত স্বর্ণরৌপ্যাদি ধন আনয়ন করিয়া দিয়াছিলেন, তিনি সম্প্রতি আপনার পরিধানার্থ বল্কল আহরণ করিতেছেন, তাঁহার এইরূপ দশাতেও আপনার ক্রোধ কেন উদ্দীপ্ত হইতেছে না ?

३५। इन्द्रतुल्य जो धनञ्जय उत्तरकुरु जय किया बहुतसा सोना चांदी ला दिया था, वह आजकालबल्कल वसन पहनते हैं। क्या यह देखकर भी आपको क्रोध नों आता ?

इमामहं वेद न तावकीं धियं
विचित्ररूपाः खलु चित्तवृत्तयः।
विचिन्तयन्त्या भवदापदं परां
रुजन्ति चेतः प्रसभं ममाधयः॥ ३७॥

अन्वयः। अहम् इमां तावकीं धियं न वेद। चित्तवृत्तयः विचित्ररूपाः खलु। परां भवदापदं विचिन्तयन्त्या मम आधयः चेतः प्रसभं रुजन्ति॥ वाच्य—एषा तावकी धीः मया न विद्यते। विचित्ररूपाभिः चित्तवृत्तिभिः खलु भूयते। [ अत्र काव्यलिङ्गालङ्कारः ] ३७

विशीर्णकेशौ इत्यर्थः। अतएव अगजौ गिरिसम्भवौ गजौ इव स्थितौ एतौ यमौ युग्मजातौ माद्रीपुत्रौ इत्यर्थः। "यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च" इति विश्वः। विलोकयन् त्वं कथं धृतिसंयमौ सन्तोषनियमौ। "धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु" इति विश्वः। बाधितुं न उत्सहसे ? न प्रवर्त्तसे। "शकधृष" इत्यादिना तुमुन्। अहो ते महत् धैर्य्यमिति भावः॥ ३६॥

अथ राज्ञो दुर्दशां दर्शयितुमुपोद्घातमाह। प्रकृतार्थं वर्णयितुम् अर्थान्तरवर्णनम् उपोद्घातः। इमामिति। इमां वर्त्तमानाम् तव इमां तावकीं त्वदीयाम्। "तस्येदम्" इति अण्प्रत्ययः। "तवकममकावेकवचने" इति तवकादेशः। धियं त्वदापद्विषयां चित्तवृत्तिम् अहं न वेद कीदृशीं न वेद्मि। परबुद्धेरप्रत्यक्षत्वादिति भावः। "विदो लटो वा" इति णलादेशः। न चात्मदृष्टान्तेनापन्नत्वाद्दुःखित्वमनुमातुं शक्यते धीरादिष्वनैकान्तिकत्वादित्याशयेनाह—चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेकप्रकाराः खलु, किन्तु पराम् उत्कृष्टां भवदापदं विचिन्तयन्त्या भावयन्त्या मम चेतः चित्तम्, आधयो मनो व्यथाः। "उपसर्गे घोः किः" इति किप्रत्ययः। प्रसभं प्रसह्य रुजन्ति भञ्जन्ति। "रुजो भङ्गे" इति धातोर्लट्। पश्यतामपि दुःसहा दुःखजननी त्वद्विपत्तिः अनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः।

৩৬। বনভূমিতে শয়ন করিয়া যাহাদিগের শরীর কঠিন হইয়াছে, যাঁহাদিগের কেশ ইতস্ততঃ বিকীর্ণ হওয়ায় গিরিপ্রদেশজাত গজযুগলের ন্যায় পরিদৃশ্যমান সেই এই যমজ মাদ্রীতনয় নকুল সহদেবকে অবলোকন করিয়া আপনি ধৈর্য্য ও সংযম পরিত্যাগ করিতে কেন প্রবৃত্ত হইতেছেন না ?

३६। वनशय्यामें शयन कर जिसको देह कठिन हो गये हैं, जिसके बाल इधर उधर बिखर जानेसे यह शैलजात हाथी जैसे देख पड़ते हैं। यह यमज माद्रीसुत नकुल और सहदेवको अवलोकन किया आपको धैर्य्य और अङ्गीकार भङ्ग करनेका क्या उत्साह नहीं होता ?

पुराधिरूढ़ः शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैः शिवारुतैः॥ ३८॥

अन्वयः। यः त्वम् पुरा महाधनं शयनं अधिरूढ़ः स्तुतिगीतिमङ्गलैः विबोध्यसे। सः अदभ्रदर्भाम् स्थलीम् अधिशय्य अशिवैः शिवारुतैः निद्रां जहासि॥ वाच्य—यं अधिरूढ़ं विबोधयसि. तेन निद्रा हीयते। [अत्र पर्य्यायालङ्कारः] ३८

चेत इति "रुजार्थानां भाववचनानामज्वरेः" इति षष्ठी न भवति। तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति॥ ३७॥

तदापदमेव श्लोकत्रयेणाह—पुरेति। यस्त्वं महाधनं बहुमूल्यं श्रेष्ठम्। "महाधनं महाभूल्ये" इति विश्वः। शयनं शय्यामधिरूढ़ः सन् स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः, पुरा विबोध्यसे वैतालिकैरिति शेषः, पूर्वं बोधित इत्यर्थः। "पुरी लुङ् चास्मे" इति भूतार्थे लट्। स त्वमदभ्रदर्भां बहुकुशाम्। 'अस्त्री कुशं कुशो दर्भः" इति। "अदभ्रं बहुलं बहु" इति उभयत्राप्यमरः। स्थलीम् अकृत्रिमभूमिम्। "जानपद इत्यादिना कृत्रिमार्थे ङीष्। एतेन दुःसहस्पर्शत्वमुक्तम्। "अधिशीङ् स्थासां कर्म" इति कर्मत्वम् अधिशय्य शयित्वा। "अयङ्यिक्ङिति" इत्ययङादेशः। अशिवैः अमङ्गलैः शिवारुतैः। "शिवा हरीतकी क्रोष्टा शमी नद्यामलकुशभे" इति वैजयन्ती। निद्रां जहासि, त्यजेति शेषः॥ ३८॥

৩৭। আমি আপনার কিরূপ বুদ্ধি বুঝিতে পারিতেছি না। যেহেতু চিত্তবৃত্তিগুলির ভাব অতি বিচিত্র রূপ। আপনার এই নিরতিশয় বিপদের বিষয় ভাবিলে আমার চিত্ত দুঃখভারে নিতান্ত পীড়িত ও ব্যথিত হয়।

৩৮। পূর্ব্বে বৈতালিকগণ বহুমূল্য শয্যায় শয়ান আপনাকে মঙ্গলস্তুতিগীতি দ্বারা জাগরিত করিত। সংপ্রতি আপনি কুশবহুল ভূমিতে শয়ন করিয়া অশুভ শিবাগণের শব্দে নিদ্রা ত্যাগ করিয়া থাকেন।

३७। यह मैं नहीं जान सकती, कि आपकी यह कैसी बुद्धि है? आपकी मनोवृत्ति अतिशय विचित्र है। आपकी घोरतर विपत्तिकी भावना करनेसे असह्य दुःख मेरे हृदयको विदीर्ण करता है।

३८। जो पहले आप बहुमूल्य शय्यामें शयन करते थे, गवैये मङ्गलगाथा द्वारा आपको प्रबुद्ध करते थे, वही आप आज कुशकी शय्या पर सोते और शृगालोंके अशुभ ध्वनिसे जगाये जाते हैं।

पुरोपनीतं नृप रामणीयकं
द्विजातिशेषेण यदेतदन्धसा।
तदद्य ते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः॥ ३९॥
अनारतं यौ मणिपीठशायिना-
वरञ्जयद्राजशिरःस्रजां रजः।
निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु बर्हिषाम्॥ ४०॥

अन्वयः। हे नृप! यत् एतत् वपुः पुरा द्विजातिशेषेण अन्धसा रामणीयकं उपनीतम्, तत् अद्य वन्यफलाशिनः ते यशसा समं कार्श्यम् उपैति॥ वाच्य—द्विजातिशेषम्, अन्धः उपनीतवत्। तेन उपेयते। ३९

अन्वयः। अनारतम् मणिपीठशायिनौ यौ चरणौ राजशिरःस्रजां रजः अरञ्जयत्। तौ ते चरणौ

पुरेति। हे नृप! यदेतत् पुरोवर्त्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेन अन्धसा अन्नेन। "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। द्वे जाती येषां ते द्विजातयः। तदुक्तम्—"जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते" इति। "दन्तविप्राण्डजा द्विजाः" इत्यमरः। रमणीयस्य भावो रामणीयकं मनोहरत्वम् उपनीतं प्रापितम्। नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि क्तः। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति वचनात्। अद्य वन्यफलाशिनस्ते तव तत् वपुः यशसा समं परम् अतिमात्रं कार्श्यं परैति प्राप्नोति। उभयमपि क्षीयते इत्यर्थः। अत्र सहोक्तिरलङ्कारः। तदुक्तं काव्यप्रकाशे—"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति॥ ३९॥

अनारतमिति। अनारतम् अजस्रं मणिपीठशायिनौ मणिमयपीठस्थितौ यौ चरणौ राजशिरःस्रजां नमन्नृपालमौलिस्रजां रजः परागोऽरञ्जयत्,

৩৯। হে নৃপ, আপনার যে এই শরীর পূর্ব্বে বিপ্রদিগের ভুক্তাবশিষ্ট অন্নদ্বারা রমণীয়তা প্রাপ্ত হইয়াছিল, ইদানীং বন্যফল ভোজী আপনার সেই শরীর যশের সহিত অতিশয় কৃশতা প্রাপ্ত হইতেছে।

३९। हे नृप! पहले विप्रोंके भुक्तावशिष्ट अन्न द्वारा आपकी जो इस शरीरकी रमणीयता सम्पादित हुई थी, आज क्या वही शरीर आपके यशके साथ वन्यफल खानेसे दुर्बल नहीं हो रहा है।

द्विषन्निमित्ता यदियं दशा ततः
समूलमुन्मूलयतीव मे मनः ।
परैरपर्य्यासितवीर्य्यसम्पदां
पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥

मृगद्विजालूनशिखेषु बर्हिषाम् वनेषु निषीदतः ॥ वाच्य—रजसा सरञ्जि तास्, ताभ्यां चरणाभ्यां निषद्यते। [ अत्र पर्य्यायालङ्कारः ] । ४०

अन्वयः । यत् इयं दशा द्विषन्निमित्ता ततः मे मनः समूलम् उन्मूलयतीव । परैरपर्य्यासित-वीर्य्यसम्पदां मानिनां पराभवोऽपि उत्सव एव ॥ वाच्य—अनया दशया द्विषन्निमित्तया ( भूयते ) उन्मूल्यते। पराभवेणापि उत्सवेन ( भूयते ) । ४१

तौ ते चरणौ मृगैर्द्विजैश्च तपस्विभिः आलूनशिखेषु छिन्नाग्रेषु बर्हिषां कुशानाम् । "बर्हिः कुशहुताशयोः" इति विश्वः । वनेषु निषीदतः तिष्ठतः ॥ ४० ॥

ननु सर्वप्राणिसाधारणामापदि का परिदेवना इत्यत्राह—द्विषदिति। यत् यतः कारणात् इयं दशा अवस्था । "दशा वर्त्ताववस्थायाम्" इति विश्वः। द्विषन्तो निमित्तं यस्याः सा। "द्विषोऽमित्रे" इति शतृप्रत्ययः। अतो मे मनः समूलं निःशेषम् उन्मूलयति इव उत्पाटयति इव। दैविकी तु आपत् न दुःखायेत्याह—परैरिति। परैः शत्रुभिः अपर्य्यासिता अपर्य्यावर्त्तिता वीर्य्यसम्पद् येषां तेषां मानिनां पराभवो विपदपि उत्सव एवेति वैधर्म्येण अर्थान्तरन्यासः। मानहानिर्दुःसहा नतु आपत् इति भावः ॥४१॥

৪০। মণিময় পাদপীঠে নিরন্তর প্রতিষ্ঠিত আপনার যে পদযুগল রাজগণের শিরোস্থিত মালার পরাগ-দ্বারা রঞ্জিত হইত সেই চরণদ্বয় সংপ্রতি মৃগ ও তাপসগণকর্ত্তৃক ছিন্নাগ্র কুশবনে বিন্যস্ত হইতেছে।

৪১। আপনার এই দুর্দ্দশা শত্রুগণ হইতে ঘটিয়াছে ; এইহেতু আমার হৃদয় সমূলে উন্মূলিত হইতেছে। শত্রুকর্ত্তৃক যাহাদের বীর্য্য ও প্রভাব বিপর্য্যস্ত হয় নাই তাদৃশ মানিগণের বিপদও উৎসবের ন্যায় পরিগণিত হইয়া থাকে।

४०। मणिमयपीठमें निरन्तर अवस्थित आपके जो दोनो पैर रहते और प्रणत राजाओंके शिरस्थित मालाओंकी परागसे रञ्जित रहते थे, आज क्या आपके वही दोनो पैर वन प्रदेशमें मृगों और ब्राह्मणोंके छिन्नाग्र कुशों पर नहीं पड़ते।

४१। आपकी यह दीन दशा शत्रुओं द्वारा ही हुई है, इसीसे मेरा हृदय समूल उन्मूलित हो रहा है। शत्रु जिनकी वीर्य्य और सम्पदको विपर्य्यस्त नहीं कर सकते, ऐसे मानियोंका विपद भी उत्सवकी माफिक ही विवेचित होता है।

विहाय शान्तिं नृप धाम तत् पुनः
प्रसीद सन्धेहि वधाय विद्विषाम्।
व्रजन्ति शत्रूनवधूय निस्पृहाः
शमेन सिद्धिं मुनयो न भूभृतः॥ ४२॥
पुरःसरा धामवतां यशोधना
सुदुःसहं प्राप्य निकारमीदृशम्।
भवादृशाश्चेदधिकुर्वते रतिं
निराश्रया हन्त हता मनस्विता॥ ४३॥

अन्वयः। हे नृप! शान्तिं विहाय विद्विषां वधाय तत् धाम पुनः सन्धेहि। निस्पृहाः मुनयः शत्रून् अवधूय शमेन सिद्धिं व्रजन्ति, भूभृतः न॥ वाच्य—सन्धीयताम्। निस्पृहैः मुनिभिः सिद्धिः व्रज्यते। भूभृद्भिः। [ अर्थान्तरन्यासोऽलङ्कारः ]। ४२

अन्वयः। धामवतां पुरःसराः यशोधनाः भवादृशाः सुदुःसहम् ईदृशं निकारं प्राप्य चेत् रतिम् अधिकुर्वते। तर्हि हन्त मनस्विता निराश्रया ( सती ) हता। वाच्य—पुरःसरैः यशोधनैः भवादृशैः रतिः अधिक्रियते। मनस्वितया निराश्रयया हतया (भूयते)। [ अत्र काव्यलिङ्गालङ्कारः ]। ४३

विहायेति। हे नृप! शान्तिं शमं विहाय तत् प्रसिद्धं धाम तेजः विद्विषां वधाय पुनः सन्धेहि अङ्गीकुरु प्रसीद, प्रार्थनायां लोट्। ननु शमेन कार्य्यसिद्धौ किं क्रोधेन इत्यत्र आह—व्रजन्तीति। निस्पृहा मुनयः शत्रून् कामादीन् अवधूय निर्जित्य शमेन क्रोधवर्जनेन सिद्धिं मोक्षाख्यां व्रजन्ति, भूभृतस्तु न। कैवल्यकार्य्यवद्राजकार्य्यं न शान्तिसाध्यमित्यर्थः॥ ४२॥

पुर इति। किं च धामवतां तेजस्विनाम् परापकारासहिष्णूनामित्यर्थः। पुरः सरन्तीति पुरःसराः अग्रेसराः। "पुरोऽग्रतोऽग्रेषु सर्त्तेः" इति टप्रत्ययः। यशोधना भवादृशाः सुदुःसहम् अतिदुःसहम् ईदृशम् उक्त-

४२। হে নৃপ, শত্রুগণের নিধন জন্য শান্তি ত্যাগ করিয়া পুনরায় আপনার সুপ্রসিদ্ধ তেজঃ গ্রহণ করুন। নিস্পৃহ মুনিগণ কামাদি শত্রুদিগকে শান্তি দ্বারা সিদ্ধি লাভ করেন। ভূপতিগণ শমদ্বারা সিদ্ধি লাভ করেন না।

४२। हे नृप! शत्रुओंके विनाशके लिये शान्तिको छोड़ फिर अपने उसी तेजको परिग्रहण कीजिये। निस्पृह मुनि ही कामक्रोधादिरिपुओंको जीत शान्ति द्वारा सिद्धिलाभ करते हैं, राजगण समद्वारा सिद्धिलाभ नहीं करते सकते है।

**अथ क्षमामेव निरस्तविक्रमः**
**चिराय पर्य्येषि सुखस्य साधनम् ।**
**विहाय लक्ष्मीपतिलक्ष्म कार्मुकं**
**जटाधरः सन् जुहुधीह पावकम् ॥ ४४ ॥**

अन्वयः। अथ निरस्तविक्रमः चिराय क्षमाम् एव सुखस्य साधनं प्रर्य्येषि। (तर्हि त्वं) लक्ष्मीपति-लक्ष्म कार्मुकं विहाय जटाधरः सन् इह पावकं जुहुधि॥ वाच्य—निरस्तविक्रमेण (त्वया) क्षमा-परीयते (तर्हि) जटाधरेण सता पावकः हूयताम्। [अत्रापि काव्यलिङ्गालङ्कारः]। ४४

प्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषं अधिकुर्वते चेत् तर्हि हन्त इति खेदे। मनस्विता अभिमानिता निराश्रया सती हता, तेजस्विजनैक-शरणत्वात् मनस्वितायाः इत्यर्थः। अतः पराक्रमितव्यमिति भावः। यद्यपि अत्र प्रसहनस्य असङ्गतेः अधिपूर्वात् करोतेः "अधेः प्रहसने" इत्यात्मनेपदं न भवति। "प्रसहनं परिभवः" इति काशिका। तथापि अस्याः कर्त्रभि-प्रायविवक्षायामेव प्रयोजकत्वात् कर्त्रभिप्राये "स्वरितञितः" इति आत्मने-पदं प्रसिद्धम् ॥ ४३ ॥

अथेति। अथ पक्षान्तरे निरस्तविक्रमः सन् चिराय चिरकालेनापि क्षमां क्षान्तिमेव। "क्षितिक्षान्त्योः क्षमा" इत्यमरः। सुखस्य साधनं पर्य्येषि अवगच्छसि तर्हि लक्ष्मीपतिलक्ष्म राजचिह्नं कार्मुकं विहाय। धरतीति धरः, पचाद्यच्। जटानां धरो जटाधरः सन् इह वने पावकं जुहुधि पावके होमं कुरु इत्यर्थः। अधिकरणे कर्मत्वोपचारः। विरक्तस्य किं धनुषा इत्यर्थः। "हुझल्भ्यो हेर्धिः ॥ ४४ ॥

৪৩। তেজস্বীদিগের মধ্যে অগ্রগামী-যশোধন ভবাদৃশব্যক্তিগণ যদি এইরূপ দুঃসহ পরাভবপ্রাপ্ত হইয়াও সন্তুষ্টচিত্তে অবস্থান করেন; তাহা হইলে হায়! মনস্বিতা আশ্রয় অভাবে বিলুপ্ত হইল!

৪৪। অথবা যদি বিক্রম পরিত্যাগ করিয়া দীর্ঘদিন ক্ষমাবলম্বনই সুখের সাধন বলিয়া বুঝিয়া থাকেন, তাহা হইলে রাজচিহ্নধনুঃ পরিত্যাগ করিয়া শিরে জটাধারণপূর্ব্বক এই বনপ্রদেশে বহ্নিতে হোম করুন।

४३। तेजस्विलोगकों मध्ये अग्रगामी यशोधन आप लोग हो यदि ऐसा दुःसह पराभव प्राप्त है भी तब प्रसन्न रहे, हाय! मनस्विता निराश्रय हो हत हो जायेगी।

४४। किंवा यदि विक्रम परित्याग कर दीर्घकाल क्षमाको ही चिरसुखका साधन कह मनको बहलाते रहो तो इस राजचिह्न धनुकको छोड़ और जटाधारी हो इस वनमें वह्निमें होम करो।

न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि ॥४५॥
विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ।

अन्वयः। परेषु निकृतिपरेषु (सत्सु) भूरिधाम्नः ते समयपरिरक्षणं क्षमं न। हि विजयार्थिनः क्षितीशा अरिषु सोपधि सन्धिदूषणानि विदधति॥ वाच्य—समयपरिरक्षणेन क्षमेण (भूयते), विजयार्थिभिः क्षितीशैः विधीयन्ते। ४५

अथ समयोल्लङ्घनाद्बिभेषि तदपि न किञ्चित् इत्याह—नेति। परेषु शत्रुषु निकृतिः शाठ्यं परं प्रधानं येषु तेषु तथोक्तेषु अपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयः त्रयोदशसंवत्सरान् वने वत्स्यामि इत्येवंरूपा संवित्। "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः। तस्य परिरक्षणं प्रतीक्षणं न क्षमं न युक्तम्। "युक्ते क्षमं शक्ते हिते त्रिषु" इत्यमरः। हि यस्माद् विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपटं यथा तथा। "कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे" इत्यमरः। सन्धिदूषणानि विदधति। केनचित् व्याजेन दोषमापाद्य सन्धिं दूषयन्ति विघट्टयन्ति इत्यर्थः, शक्तस्य विजिगीषोः सर्वथा कार्य्यसाधनं प्रधानम्, अन्यत् समयरक्षणादिकम् अशक्तस्य इति भावः। अर्थान्तरन्यासोऽलङ्कारः। पुष्पिताग्रावृत्तम् ॥ ४५॥

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति—विधीति। विधिर्दैवम्। "विधिर्विधाने दैवे च" इत्यमरः। समयः कालः नियोगात् नियमाद्धेतोः तयोर्दुरतिक्रमत्वादिति भावः। अगाधे दुस्तरे आपत्पयोधिरिवेत्युपमितसमासः। दिनकृतमिवेति वक्ष्यमाणानुसारात् तस्मिन् आपत्पयोधौ मग्नम्। सूर्य्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जति इत्यागमः। दीप्तिः प्रताप

৪৫। শত্রুগণ যখন শঠতাচরণে প্রবৃত্ত তখন তেজঃসম্পন্ন আপনার সময় প্রতিপালন করা উচিত নহে। বিজয়ার্থী রাজগণ শত্রুর সহ সংস্থাপিত সন্ধি ছলপূর্ব্বক বিচ্ছিন্ন করিয়া থাকেন।

४५। शत्रुगण जैसे कपटाचरणोंमें प्रवृत्त हैं ऐसे तेजः सम्पन्न आपको समय प्रतिज्ञा करणे की उचित नहीं हैं। विजय चाहनेवाले राजा शत्रुको जीतनेके लिये छलका अवलम्बन कर, सन्धिको तोड़ देते हैं।

रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

इति श्रीभारविकृतौ किरातार्जुनीये
महाकाव्ये प्रथमः सर्गः ॥ १ ॥

अन्वयः । विधिसमयनियोगात् 'अगाधे आपत्पयोधौ मग्नं दीप्तिसंहारजिह्मं शिथिलवसुं रिपुतिमिरम् उदस्य उदीयमानं त्वां दिनादौ दिनकृतमिव लक्ष्मीः भूयः समभ्येतु ॥ वाच्य—शिथिलवसुः मग्नः दिनकृत् इव उदीयमानः त्वं लक्ष्म्या समभीयस्व ॥ ४६

आतपस्य तस्याः संहारेण जिह्मम् अप्रसन्नं शिथिलवसुं शिथिलधनम् अन्यत्र शिथिलरश्मिम् । "वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ" इति वैजयन्ती । "शिथिलबलम्" इति पाठे तु उभयत्रापि शिथिलशक्तिकमित्यर्थः । रिपुस्तिमिरमिवेति रिपुतिमिरम् उदस्य निरस्य उदीयमानम् उद्यन्तम् । "इङ्गतौ" इति धातोर्दैवादिकात् कर्त्तरि शानच् । त्वां दिनादौ दिनकृतमिव लक्ष्मीः भूयः समभ्येतु भजतु । "आशिषि लिङ्लोटौ" इति लोट् । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोकेषु लक्ष्मीशब्दप्रयोगः । यथाह भगवान् भाष्यकारः—"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि आयुष्मत्पुरुषाणि च भवन्ति अध्येतारश्च प्रवक्तारो भवन्ति" इति । पूर्णोपमेयम् । मालिनीवृत्तम् । सर्गान्तत्वाद्वृत्तभेदः । यथाह दण्डी—"सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्" इति ॥ ४६ ॥

अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति—इतीति । इतिशब्दः सर्गपरिसमाप्तौ । भारविकृतौ इति कविनामकथनम् । महाकाव्य इति महच्छब्देन लक्षणसम्पत्तिः सूचिता । किरातार्जुनीय इति काव्यवर्णनीययोः कथनम् । प्रथमः सर्गः, समाप्त इति शेषः । एवमुत्तरत्रापि

४৬। বিধির বিধান ও সময়ের নিয়মানুসারে তাপনাশ হেতু মলিন ক্ষীণরশ্মিও অতল সাগরে নিমজ্জিত সূর্য্য তিমিররাশি সমুচ্ছেদ করিয়া প্রভাতে উদিত হইবার সময় যেরূপ পুনরায় প্রাতঃশ্রীদ্বারা অন্বিত হইয়া থাকেন, তদ্রূপ ভাগ্য ও কালের প্রভাবে প্রভাব লোপহেতু মলিন, ক্ষীণকোষ ও প্রবল ব্যসনে নিপতিত আপনি রিপুদিগকে উন্মূলিত করিয়া উদয়লাভ করিবার কালে পুনর্ব্বার রাজ্যলক্ষ্মী দ্বারা অন্বিত হউন।

४६। विधियोंके विधान और समयके नियमानुसारोंमें जैसे सन्ध्याको सूर्य्य अगाध सागरमें डूब जाता है, प्रताप और किरणविहीन हो जाता है, फिर प्रभात अन्धकारराशिको समुच्छेद करने और उदय होने पर प्रातःश्री आ उसे आलिङ्गन करती है, आप ऐसे ही घोरतर विपदमें गिर निष्प्रताप और निर्धन हो गये हैं, अब रिपुकुलको उन्मूलित कर उन्नत हो, राजश्री फिर आपका आश्रय ग्रहण करेगी।

# द्वितीयः सर्गः।

विहितां प्रियया मनःप्रियाम्
अथ निश्चित्य गिरं गरीयसीम्।
उपपत्तिमदूर्जिताश्रयं
नृपमूचे वचनं वृकोदरः॥ १॥

अन्वयः। अथ वृकोदरः प्रियया विहितां मनःप्रियां गिरं गरीयसीं निश्चित्य नृपम् उपपत्तिमत् ऊर्जिताश्रयं वचनम् ऊचे॥ वाच्य—वृकोदरेण नृपः (ऊचे) [वृकनामाग्निः उदरे यस्य स वृकोदरः। तदुक्तं महाभारते—'यस्य तीक्ष्णोवृकोनाम जठरे हव्यवाहनः। मया दत्तः सधर्मात्मा तेन वृकोदरः स्मृतः॥' सर्गेऽस्मिन् सुन्दरीनाम वृत्तम्, वियोगिनी वृत्तं वा, क्रमाल्लक्षणम् 'अयुजो यदि सौ जगौ युजोः सभराल्गौ यदि सुन्दरी तदा॥' 'विषमे सनजा गुरुः समे, सभरालोऽथगुरुर्वियोगिनी॥' काव्यालिङ्गालङ्कारः। ]॥ २

द्रष्टव्यम्। किरातार्जुनौ अधिकृत्य कृतोऽपं ग्रन्थः किरातार्जुनीयम्। "शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" इति द्वन्द्वाच्छप्रत्ययः। राघवपाण्डवीयशब्दवत्। तथाहि—अर्जुन एव अत्र नायकः, किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः। यथाह दण्डी—"वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि। तज्जयान्नायकोत्कर्षवर्णनञ्च धिनोति नः॥"

अथ अयं संग्रहश्लोकः—

"नेता मध्यमपाण्डवो भगवतो नारायणस्यांशज-
स्तस्योत्कर्षकृतेऽनुवर्ण्यचरितो दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरप्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्॥" इति।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
प्रथमः सर्गः समाप्तः॥ १॥

विहितामिति। अथ वृकोदरो भीमः, प्रियया द्रौपद्या। प्रियग्रहणम् अस्या हितोपदेशतात्पर्यसूचनार्थम्। विहिताम्, अभिहिताम्, इत्यर्थः, विपूर्वस्य दधातेः क्रियासामान्यवाचिनो योग्यविशेषपर्यवसानात्। मनः-

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद्विदधीत विस्मयम् ॥२॥

अन्वयः । मानिनी स्नेहमयेन चक्षुषा परितो वीक्ष्य यत् अवोचत, वागधिपस्य अपि दुर्वचं तत् विस्मयं विदधीत ॥ वाच्य—मानिन्या अवाचि । दुर्वचेन तेन वचनेन विस्मयो विधीयेत । [ अत्र काव्यलिङ्गालङ्कारः ] । २

प्रियाम् अभिमतार्थयोगात् मनोहरां, विशेषणद्वयेनापि गिरो ग्राह्यत्वम् उक्तम् । गिरं गरीयसीं सारवत्तरां निश्चित्य, नृपं धर्मराजम् उपपत्तिमत् युक्तियुक्तम् ऊर्जिताश्रयम् उदारार्थं वचनम् ऊचे उक्तवान् । कर्तरि लिट् ब्रुवो वचिरादेशः । "ब्रुविशासि" इत्यादिना द्विकर्मकत्वम् । "अकथितञ्च" इति नृपस्य कर्मत्वम् ॥ १ ॥

किं तद्वचनं तदाह—यदिति । मानिनी क्षत्रियकुलाभिमानवती द्रौपदी स्नेहमयेन स्नेहप्रचुरेण । "तत्प्रकृतवचने मयट् ।" चक्षुषा ज्ञान-चक्षुषा । एतेन आप्तत्वम् उक्तम् । परितो वीक्ष्य समन्ताद्विविच्य यत् वचनम् अवोचत । ब्रुवो वचेर्वा लुङ् । 'वच उम्" इति उमागमः । वागधिपस्य बृहस्पतेः अपि दुर्वचं वक्तुम् अशक्यम् । शेषे षष्ठी इयम्, न कर्मयोगलक्षणा । अतो "न लोक" इत्यादिना षष्ठीनिषेधो नास्ति । तत् वचनं विस्मयं विदधीत सर्वस्य अपीति शेषः । अथवा वागधिपस्य अपि विस्मयं विदधीत इति सम्बन्धः । दुर्वचं न केन अपि वक्तुं शक्यम् इति शेषः । यतः स्त्रीणामपि शास्त्रम् अनुरुणद्धि हितं च अनुबध्नाति अतो विस्मयकरं ग्राह्यं च एतद्वचनम् इति तात्पर्य्यार्थः ॥ २ ॥

१। অনন্তর বৃকোদর, প্রিয়া দ্রৌপদী কর্তৃক উক্ত মনোহর উপদেশ বাক্য শ্রেয়স্কর ও সারবান্ নিশ্চয় করিয়া ধর্ম্মরাজ যুধিষ্ঠিরকে উদারার্থ সমন্বিত যুক্তিযুক্ত বাক্য বলিতে লাগিলেন।

২। ক্ষত্রিয়কুলাভিমানিনী দ্রৌপদী স্নেহপূর্ণ দৃষ্টিতে সকল দিক দর্শন করিয়া যে বাক্য বলিলেন বৃহস্পতিও যাহা বলিতে সমর্থ নহেন, সেই বাক্য ( সকলেরই ) বিস্ময় উৎপাদন করিবার যোগ্য।

१। अनन्तर भीमसेन प्रियतमा द्रौपदीकी कहि हितोपदेशपूर्ण मनोहर उपदेश वाक्यकी श्रेष्ठ सारवत्ता उपलक्षितकर धर्मराज युधिष्ठिरसे उदार अर्थसे सम्बलित युक्तियुक्त वाक्य कहने लगे।

२। क्षत्रियकुलाभिमानिनी द्रौपदीने स्नेहपूर्ण ज्ञान आखसे सब और देख जो बाते कहीं, बृहस्पति भी वह कहनेमें समर्थ नहीं। उनकी यह उपदेशवाणी सबको ही विस्मित करती है।

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः॥ ३॥
परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम्।
अतिवीर्य्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः॥ ४॥

अन्वयः। विषमोऽपि नयः कृततीर्थः सन् पयसाम् आशय इव विगाह्यते (जनैः)। तु तत्र यः कृत्यवर्त्म सदुपन्यस्यति स विशेषदुर्लभः। वाच्य—विषममपि नयं कृततीर्थम् आशयमिव विगाहन्ते (जनाः)। येन उपन्यस्यते, तेन विशेषदुर्लभेन (भूयते) [अत्र श्लेषो पमालङ्कारौ]॥ ३

अन्वयः। परिणामसुखे गरीयसि क्षतौजसां व्यथके अल्पीयसि अस्मिन् वचसि अतिवीर्य्यवति भेषजे इव बहुः गुणः दृश्यते॥ वाच्य—बहुं गुणं पश्यति [अत्राप्युपमाश्लेषालङ्कारौ]॥ ४

विस्मयकरत्वे हेतुमाह—विषम इति। विषमोऽपि दुर्बोधोऽपि अथच दुष्प्रवेशोऽपि नयो नीतिशास्त्रं पयसाम् आशयो ह्रद इव कृततीर्थः कृताभ्यासाद्युपायः सन्। "तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि" इति विश्वः। अन्यत्र कृतजलावतारः सन्। "तीर्थं योनौ जलावतारे च" इति हलायुधः। विगाह्यते विलोड्यते प्रविश्यते च। किन्तु तत्र नये जलाशये च स तादृशः पुरुषो विशेषदुर्लभः अत्यन्तदुर्लभः यः कृत्यं सन्धिविग्रहादिकार्य्यं स्नानादिकं च तस्य वर्त्म सत् साधु देशकालाद्यविरुद्धं यथा तथा यथार्थम् इत्यर्थः, अन्यत्र च गर्त्तग्राहपाषाणादिरहितम् यथा तथा उपन्यस्यति उदाहरति। "उपन्यासस्तु वाङ्मुखम् उपोद्घात उदाहारः" इत्यमरः। यथा केचित् कृततीर्थे पयसि गभीरेऽपि प्रवेष्टारः सन्ति, तीर्थकरस्तु विरलः; तद्वत् नीतौ अपि निगूढ़मपि तत्त्वं सति वक्तरि बोद्धारः सन्ति वक्ता तु न सुलभः। अपठित्वापि इयच्च साधु वक्तीति युज्यते विस्मय इति तात्पर्य्यार्थः॥ ३॥

৩। জলাশয় গভীর হইলেও জলাবতরণোপায় সোপানাদি নির্ম্মাণ করিয়া দিলে যেইরূপ তাহাতে অবগাহন করিতে পারা যায়; তদ্রূপ নীতিশাস্ত্র দুর্ব্বোধ হইলেও অভ্যাসের উপায় প্রদর্শিত হইলে তাহা বোধগম্য হয়। কিন্তু যিনি স্নানার্থীকে গর্ত্ত, পাষাণ ও কুম্ভীরাদি বিঘ্নপরিশূন্য জলাশয় বলিয়া দেন, তাদৃশ পুরুষের ন্যায় নীতিপথে গমনেচ্ছু মানবকে সন্ধি বিগ্রহাদির দেশকালোচিত সাধু উপদেশ প্রদান করে ঈদৃশ লোক নিতান্ত দুর্ল্লভ।

३। जैसे अवतरनेके लिये सीढ़ियोंके सुगमसे दुर्गम जलाशयमें पहुंच सकते हैं, वैसे ही अभ्यासादि प्रदर्शित होनेसे दुरधिगम्य नीतिपथमें भी लोग प्रवेश करनेको समर्थ हो जाते हैं। परन्तु जो स्नानार्थीको गर्त्त पाषाण और कुम्भीरादिको विघ्नपरिरहित जलाशय कह देता है, पुरुषकी

इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः ॥५॥

अन्वयः । रुचिरार्था इयं भारती इष्टगुणाय भवते अपि रोचताम् । गुणगृह्याः विपश्चित वचने वक्तृविशेषनिस्पृहाः ननु ॥ वाच्य—रुचिरार्थया अनया भारत्या रुच्यताम् । विपश्चिद्भिः वक्तृविशेषनिस्पृहैः भूयते [ अर्थान्तरन्यासोऽलङ्कारः ] ॥ ५

अथ ग्राह्यत्वे हेतुमाह—परिणामेति । परिणामः फलकालः परिपाकावस्था च, तत्र सुखे हिते । "ग्रस्तं चाथ त्रिषु द्रव्ये पापपुण्यं सुखादि च" इत्यमरः । सुखशब्दस्य विशेष्यलिङ्गत्वम् । गरीयसि गुर्वर्थप्रतिपादके अर्थभूयिष्ठे श्रेष्ठे च चतौजसाम् उभयत्र अपि क्षीणशक्तीनां व्यथके युद्धोपोद्बलकत्वात् भयङ्करे अन्यत्र आदौ सन्तापादिदुःखजनके अल्पीयसि अल्पाक्षरे अल्पमात्रे च । उक्तञ्च—"स्वल्पा च मात्रा बहुलो गुणश्च" इति । अस्मिन् वचसि द्रौपदीवाक्ये अतिवीर्य्यवति अत्यन्तसामर्थ्यवति भेषजे औषधे इव । "भेषजौषधभैषज्यानि" इत्यमरः । बहुरधिको गुणः मानत्राणराज्यलाभादिः आरोग्यबलपोषादिश्च दृश्यते । अतो ग्राह्यमस्या वचनमिति भावः ॥ ४ ॥

सत्यमेवं तथापि मह्यं न रोचते किं करोमि इति अत्राह—इयमिति । रुचिरार्था हितार्थसम्पन्ना इति रुचिहेतूक्तिः । इयं भारती द्रौपदीवाक्यम् इष्टगुणाय अभिमतगुणाय गुणग्राहिणे इत्यर्थः, भवते तुभ्यम् अपि । "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वात् चतुर्थी । रोचतां स्वदताम् । विध्यर्थे लोट् । हितवचने बलादपि इच्छां कुर्य्यात् औषधवत् इति भावः । तथापि स्त्रैणे वचसि का श्रद्धा तत्राह—ननु इति । गुणानां गृह्या गुणगृह्याः गुणपक्षपातिन इत्यर्थः । "पदास्वैरिबाह्यापक्ष्येषु च" इति ग्रहेः क्यप् । विप-

४ । পরিণামে সুখকর, মহোপকারক ও ক্ষীণশক্তিদিগের পক্ষে ভয়ঙ্কর ও সন্তাপপ্রদ এই সংক্ষিপ্ত বাক্যে অতি তীব্র বীর্য্যান্বিত অল্পমাত্রায় উপযুক্ত ঔষধের প্রভূতগুণ পরিদৃষ্ট হইতেছে।
भ्रांति नीतिपथमें गमनेच्छु मानवको सन्धिविग्रहादिका देशकालोचित साधु उपदेश देनेवाला लोग नितान्त दुर्लभ है ।

४ । परिणाममें सुख कर, सन्ताप आदि दुःख जानेवाला अतिवीर्य्यशालियोड़ीसी भी औषधं जैसे चीणबल रोगियोंको बल-पोषण आदि बहुतसे गुण दिखलाई देते हैं, वैसे ही द्रौपदीके परिणाम-सुखकर, अर्थभूयिष्ठ, आपातभयङ्कर, अल्पाचर वाक्यसे शक्तिहीन भूपतियोंके मान-त्राण-राज्यलाभादि प्रभूत गुण परिदृष्ट हो रहे हैं ।

चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढ़िमागता ।
कथमेत्य मतिर्विपर्य्ययं करिणी पङ्कमिवावसीदति ॥ ६ ॥
विधुरं किमतःपरं परैरवगीतां गमिते दशामिमाम् ।
अवसीदति यत् सुरैरपि त्वयि सम्भावितवृत्ति पौरुषम् ॥७॥

अन्वयः । नृप ! चतसृषु अपि विद्यासु निरूढ़िम् आगता, विवेकिनी ते मतिः कथं करिणी पङ्कमिव विपर्य्ययम् एत्य अवसीदति ? वाच्य—आगतया विवेकिन्या मत्या करिण्या इव अवसद्यते ? [ अत्रोपमा स्पष्टा ] ॥ ६

अन्वयः । त्वयि परैः इमाम् अवगीतां दशां गमिते ( सति ) सुरैः अपि सम्भावितवृत्ति पौरुषम् अवसीदति इति यत् अतःपरं किं विधुरम् ( भवति ) ? ॥ वाच्य—सम्भावितवृत्तिना पौरुषेण अवसद्यते । विधुरेण ( भूयते ) [ अत्र विधेयाविमर्षदोषः ] ॥ ७

स्थितो विद्वांसः । "विद्वान् विपश्चिद् दोषज्ञः" इत्यमरः । वचने विषये वक्तृविशेषे स्त्रीपुंसादिलक्षणे निस्पृहाः ननु निरास्थाः खलु । "बालादपि सुभाषितं ग्राह्यम्" इति न्यायादिति भावः ॥ ५ ॥

सम्प्रति स्वयम् उपालभते—चतसृष्विति । हे नृप ! चतसृषु अपि विद्यासु आन्वीक्षिक्यादिषु । "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः" इति कामन्दकः । निरूढ़िमागता प्रसिद्धिं गता अतएव विवेकिनी सदसद्विवेकवती, यथाह मनुः—"आन्वीक्षिक्यां तु विज्ञानं धर्म्माधर्म्मौ त्रयीस्थितौ । अर्थानर्थौ च वार्त्तायां दण्डनीत्यां नयानयौ" इति । ते मतिः कथं करिणी पङ्कमिव विपर्य्ययं वैपरीत्यम् अविवेकरूपम् एत्य अवसीदति नश्यति । तत् न युक्तमिति भावः ॥ ६ ॥

৫। দ্রৌপদীর এই বাক্য মনোরম অর্থযুক্ত ইহা আপনার প্রীতি উৎপাদন করুক; কারণ আপনি গুণপক্ষপাতী। গুণের পক্ষপাতী পণ্ডিতগণ উপদেশ বাক্য সম্বন্ধে বক্তৃবিশেষের অনুসন্ধানে আস্থা প্রদর্শন করেন না। ( অর্থাৎ বক্তা স্ত্রী কি পুরুষ সে বিষয়ে তাঁহারা উদাসীন থাকেন। )

৬। হে নৃপ, আপনার বুদ্ধি আন্বীক্ষিকী প্রভৃতি বিদ্যাচতুষ্টয়ে বিচক্ষণতা লাভ করিয়াছে এবং সদসৎ বিচারে নিপুণ। তথাপি কেন অবিবেচনা ও মূঢ়তা আশ্রয় করিয়া উহা পঙ্কমগ্না করিণীর ন্যায় অবসন্না হইতেছে ?

५। आप गुणग्राही हैं, द्रौपदीका एसि मनोरम बात हितार्थयुक्त आपको प्रीतिउत्पादन करेगा ( इनकी इस बातको स्त्रीकी बात कह अग्राह्य न करना चाहिये ) कारण, गुणपक्षपाती पण्डित वाक्यकी गुणका विचार करते हैं। वह यह नहीं देखते, कि कहनेवाला स्त्री हैं या पुरुष।

**द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः।**
**न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः॥८॥**

अन्वयः। भूतिम् इच्छता सुमेधसा गुरुः अस्वन्ततरः द्विषताम् उदयः सुमर्षणः, महानपि फलसम्पत्प्रवणः परिक्षयः न सुमर्षणः॥ वाच्य—गुरुणा अस्वन्ततरेण उदयेन सुमर्षणेन (भूयते)। महता फल···प्रवणेन परिक्षयेण न सुमर्षणेन (भूयते)॥ ८

किं नः छिन्नम् इदानीं येन इत्थम् उपालभ्यसे इत्यत आह—विधुरमिति। त्वयि परैः शत्रुभिः इमाम् ईदृशीम् अवगीतां गर्हिताम्। "अवगीतश्च निर्वादे मुहुर्दृष्टे च गर्हिते" इति विश्वः। दशां गमिते प्रापिते सति। सुरैरपि सम्भावितवृत्ति बहुकृतप्रसारम्। अथवा निश्चितसद्भावम् पौरुषं पुरुषकारः। युवादित्वादण्प्रत्ययः। अवसीदति नश्यति इति यत् अतःपरम् अतोऽन्यत् अधिकं किं विधुरं किं कष्टं, न किञ्चिदित्यर्थः। "विधुरं प्रत्यवाये स्यात् कष्टविश्लेषयोरपि" इति वैजयन्ती। अस्तीति शेषः। "अस्तिर्भवन्ती परः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्यकारः, भवन्तीति लटः पूर्वाचार्याणां संज्ञा। यत् पुरुषाधिकारस्य दुर्दशा सा च शत्रुकृता तदुपरि महत्कष्टं तच्च त्वदुपेक्षया इति उपालभ्यसे इत्यर्थः॥ ७॥

अथ उपेक्षाकालत्वात् इयम् उपेक्षा इत्याशङ्क्य न अयम् उपेक्षाकाल इति वक्तुं तदेव तावत् श्लोकद्वयेन विविनक्ति—द्विषतामिति। भूतिम् उदयम् इच्छता, शोभना मेधा यस्य तेन सुमेधसा सुधिया। "नित्यमसिच् प्रजामेधयोः" इति असिच् प्रत्ययः। गुरुः महान् अपि अस्वन्ततरः अत्यन्तदुरन्तः क्षयोन्मुख इत्यर्थः; द्विषताम् उदयः वृद्धिः सुखेन मृष्यत इति सुमर्षणः सुसहः उपेक्ष्य इत्यर्थः। स्वन्तश्चेत् दुर्मर्षण इति भावः। "भाषायां

१। आपनि शत्रुगण कर्तृक एই निन्दनीय दशाय आनीत हओयाय सुरगणओ ये पुरुषकारेर बहुमान करिया थाकेन सेइ पुरुषकार ये अवसाद प्राप्त हइतेछे इहा अपेक्षा अन्य क्लेशेर विषय कि हइते पारे?

६। हे नृप! आपकी जो बुद्धि आन्वीक्षिकी प्रभृति चारों विद्याओंमें प्रसिद्धि लाभकर विवेकशालिनी हुई थी, वही बुद्धि इस समय अविवेकरूप विपर्यय प्राप्त हो पङ्कमग्ना करिणीकी तरह क्यों अवसन्ना हुई?

७। आप शत्रुओं द्वारा की गई दुरवस्थाको प्राप्त हो देवता भी जिस पुरुषकारकी बहुमान करते हैं, उसी पुरुषकार विनष्ट हुए। इससे बढ़कर और क्या दुःख हो सकता है?

अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥९॥

अन्वयः। कृती परस्य क्षययुक्तिम् अचिरेण भूयसीं आत्मनः (क्षययुक्तिं) विपरीतां विगणय्य उपेक्षते, अन्यथा तत्प्रतिकारं कुरुते॥ वाच्य—कृतिना—उपेक्ष्यते। प्रतिकारः क्रियते॥ ९

शासि" इत्यादिना खलर्थे युच्। महानपि फलसम्पत्प्रवणः फलसम्पदुन्मुखः। "प्रनिरन्तर्" इत्यादिना णत्वम्। परिक्षयो न सुमर्षणः न उपेक्ष्य इत्यर्थः। अन्यथा तु उपेक्ष्य इति भावः। न हि उदय एव प्रतिकार्य्यः, न च क्षय एव उपेक्ष्यः, किन्तु स्वन्तत्वास्वन्तत्वाभ्याम् उभौ अपि प्रतिकार्य्यौ उपेक्ष्यौ च भवत इत्यर्थः॥ ८॥

अथ उभयोरपि मध्ये एकतरस्य उदयक्षययोः गतिमुक्त्वा इदानीं युगपत्परिक्षयागमे गतिमाह—अचिरेति। कृतम् अनेन इति कृती कुशल इत्यर्थः। "इष्टादिभ्यश्च" इति इनिप्रत्ययः। परस्य शत्रोः क्षययुक्तिं क्षययोगम् अचिरेण आशुभाविनीं भूयसीं दुरन्तां च तथा आत्मनः क्षययुक्तिं विपरीतां चिरभाविनीम् अल्पीयसीं स्वल्पाञ्च विगणय्य विचार्य्य। "ल्यपि लघुपूर्वात्" इत्ययादेशः। उपेक्षते अन्यथा उक्तवैपरीत्ये परस्य क्षययुक्तौ अल्पीयस्यां स्वस्य भूयस्याम् च सत्यां इत्यर्थः, तत्प्रतीकारं तस्याः क्षययुक्तेः प्रतीकारम् अचिरेण आशु कुरुते। एवं सति यदा शत्रोः अभ्युदयः स्वस्य च अतिपरिक्षयो यथा अस्माकं तदा किं वक्तव्यमित्यर्थः। सद्यः प्रतिकारं कुरुते इत्यर्थात् सिद्धम् अनुसन्धेयम्॥ ९॥

৮। অভ্যুদয়কামী বুদ্ধিমান ব্যক্তি শত্রুর মহান্ অভ্যুদয়েও উপেক্ষা করিতে পারেন, যদি সেই অভ্যুদয়ের পরিণাম বা অন্ত অত্যন্ত অশুভজনক হয়। কিন্তু শত্রুর সুমহান্ বিপৎকালেও উপেক্ষা প্রদর্শন করিতে পারেন না, যদি ঐ ক্ষয়দশার পরিণাম শুভফলপ্রদ হয়।

৯। শত্রুর বিপদ্‌যোগ আশু ঘটিবে এবং পরিণাম অত্যন্ত মন্দ; এবং স্বীয় বিপদ্‌পাত সত্বর ঘটিবে না, ফলও ক্ষয়ান্বিত নহে এইরূপ বিচার করিয়া কার্য্যকুশলী তাদৃশ বিপদে উপেক্ষা প্রদর্শন করিয়া থাকেন। আর ইহার বিপরীত হইলে শীঘ্র প্রতিকার করা কর্ত্তব্য।

८। अभ्युदयकामी बुद्धिमान् व्यक्ति, शत्रुओंकी महान् अभ्युदयको परिणाममें अस्थायी विवेचना करनेसे अनायास ही क्षमा करते हैं किन्तु अत्यन्त क्षय और फलोन्मुख होनेसे वह उपेक्षणीय नहीं।

९। शत्रुके क्षययोगको शीघ्र सम्भावित और अति दुरन्त और अपने क्षययोगको दुष्प्रभावित और स्वल्प समझनेमें कार्य्यकुशली उपेक्षा करते हैं और इसके विरुद्ध होनेसे शीघ्र ही प्रतिकार करते हैं।

अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया।
अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥१०॥
क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥११॥

अन्वयः। उदेष्यतीं द्विषतां प्रभुशक्तिम् अनीहया अनुपालयतां महीभुजां श्रियः जननिर्वादभयात् इव अचिरात् अपयान्ति ॥ वाच्य—श्रीभिः अपयायते [ अत्रोत्प्रेक्षा-अप्रस्तुतप्रशंसा च ] ॥ १०

अन्वयः। क्षययुक्तम् अपि स्वभावजं शिवं धाम दधतं समृद्धये उदितम् अनपायं नृपं प्रजा प्रतिपच्चन्द्रम् इव प्रणमन्ति ॥ वाच्य—प्रजाभिः दधत् उत्थितः अनपायः नृपः चन्द्र इव प्रणम्यते [ अत्रोपमालङ्कारः ] ॥ ११

तथापि उपेक्षायाम् अनिष्टम् आचष्टे—अनुपालयतामिति। उदेष्यतीं वर्द्धिष्यमाणाम् "आच्छीनद्योर्नुम्" इति विकल्पान्नुमभावः। द्विषतां प्रभुशक्तिं कोषदण्डजं तेजः। "सः प्रभावः प्रतापश्च यत् तेजः कोषदण्डजम्" इत्यमरः। अनीहया अनुत्साहेन अनुपालयताम् उपेक्षमाणानां महीभुजां श्रियः सम्पदो जननिर्वादभयात् निकृष्टपुरुषानुरागात् अलोकापवादभयाव पुरुषानुरागोत्थलोकापवादभयात् इवेति हेतूत्प्रेक्षा। अचिरात् अपयान्ति। यथाह कामन्दकः—"स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते" इति। अतः पराक्रमितव्यमिति भावः॥ १० ॥

ननु परिक्षीणः कथं प्रबलेन अभियुज्यते इत्यत्राह—क्षयेति। क्षययुक्तमपि तथा क्षीणमपि सन्तं स्वभावजं सहजं शिवं सर्वलोकाह्लादकं धाम क्षात्रं तेजः प्रकाशञ्च दधतं समृद्धये वृद्ध्यर्थम् उत्थितम् उद्युक्तम् उत्सहमानः इति यावत्। अन्यत्र उत्थितम् उदितम् अतएव अनपायम् अविनाशिनं वर्द्धिष्यमाणम् इत्यर्थः। नृपं प्रजाः प्रतिपच्चन्द्रं द्वितीयाचन्द्रम् इवेत्यर्थः। प्रतिपच्छब्देन द्वितीयाग्रहणम्, प्रतिपदि तस्य अदृश्यत्वादिति भावः। प्रणमन्ति प्रह्वीभावेन वर्त्तन्ते इति भावः। चन्द्रं तु नमस्कुर्वन्ति।

১০। যে সকল ভূপালগণ উৎসাহহীনতাবশতঃ শত্রুদিগের উত্তরোত্তর বর্দ্ধমান প্রভুশক্তির (কোষদণ্ডজ তেজের) উপেক্ষা করেন, লোকাপবাদ ভয়েই যেন তাঁহাদের রাজ্যলক্ষ্মী শীঘ্র অপহৃত হয়েন।

१०। जो भूपतिगण उत्साह-हीनताके वशीभूत हो शत्रुकी उत्तरोत्तर वर्द्धमाना प्रभुशक्तिकी (यानी कोषदण्डज तेजकी) उपेक्षा करते हैं, लोकापवादके भयसे ही मानो उनकी राजलक्ष्मी शीघ्र ही अपहृत हो जाती है।

प्रभवः खलु कोषदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥१२॥

अन्वयः। कृतपञ्चाङ्गविनिर्णयः नयः कोषदण्डयोः खलु प्रभवः। स (नयः) विधेयपदेषु दक्षतां लोकः नियतिम् इव अनुरुध्यते ॥ वाच्य—कृतपञ्चाङ्गविनिर्णयेन नयेन प्रभवेण (भूयते) तेन दक्षता लोकेन नियतिः इव ॥ [अर्थोपमास्फुटा] ॥ १२

क्षीणस्य अपि उत्साहः कार्य्यसिद्धेः निदानमित्यर्थः। "जयं हि सततोत्साही दुर्व्वलोऽपि समश्नुते" इति कामन्दकः ॥ ११ ॥

ननु प्रभुशक्तिशून्यस्य उत्साहः कुत्र उपयुज्यते इत्यत्र आह—प्रभव इति। कर्म्मणाम् आरम्भोपायः, पुरुषद्रव्यसम्पद् देशकालविभागः, विनिपातप्रतीकारः, कार्य्यसिद्धिश्च इति पञ्चाङ्गानि। यथाह कामन्दकः—"सहायाः साधनोपाया विभागो देशकालयोः। विनिपातप्रतीकारः सिद्धिः पञ्चाङ्ग-इष्यते" इति। पञ्चानाम् अङ्गानां विनिर्णयः पञ्चाङ्गविनिर्णयः। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः। नयो नीतिशास्त्रम् मन्त्र इति यावत्। कोषोऽर्थराशिः। "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः। दण्डश्चतुरङ्गसैन्यम्। "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे। यात्राज्ञायां सैन्यभेदे" इति वैजयन्ती। तयोः कोषदण्डयोः प्रभुशक्तेरित्यर्थः। प्रभवति अस्मादिति प्रभवः कारणम्। "ऋदोरप्" स नयः नीतिशास्त्रं विधेयपदेषु कार्य्यवस्तुषु। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। दक्षतां क्षिप्रकारित्वम् उत्साहमित्यर्थः। लोकः कृष्यादिप्रवृत्तो, जनः नियतिं दैवमिव। "नियतिर्नियमे दैवे" इति विश्वः। अनुरुध्यते अनुसरति। रुधेर्दैवादिकात् कर्त्तरि लट्। मन्त्रस्य अपि मूलम् उत्साहः तन्मूलायाः प्रभुशक्तेः मूलमिति किमु वक्तव्यम्। अतः स एव आश्रयणीयः यतो नक्तन्दिवं मन्त्रयतः तस्यापि प्रभोः निरुत्साहस्य न किञ्चित् सिध्यति इति ॥ १२ ॥

১১। যে ভূপতি ক্ষীণ হইয়াও মঙ্গলনিদান, স্বাভাবিক ক্ষাত্রতেজ ধারণ করেন এবং বৃদ্ধির নিমিত্ত উৎসাহ সম্পন্ন হইয়া থাকেন, সেই অবিনাশী নৃপতিকে প্রজাগণ দ্বিতীয়ার চন্দ্রের ন্যায় নমস্কার করেন।

११। जो भूपति क्षीणशक्ति होने भी स्वाभाविक क्षत्रतेज धारणकर और अपनी समृद्धि के लाभके लिये समुत्साहित हो उठता हैं, उसी अविनाशी भूपतीको प्रजा द्वितीयाके चन्द्रको तरह नमस्कार करते हैं।

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः।
विनिपातनिवर्त्तनक्षमं मतमालम्बनमात्मपौरुषम्॥ १३॥
विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेरगरीयान् न पदं नृपश्रियः॥१४॥

अन्वयः। अभिमानवतः प्रियम् उच्चैः पदम् आरुरुक्षतः मनस्विनः आत्मपौरुषं विनिपातनिवर्त्तनक्षमम् आलम्बनं मतम् (सहकारि मतम्)॥ वाच्य—पौरुषेण—क्षमेण आलम्बनेन मते (भूयते)॥ १३

अन्वयः। अविक्रमं विपदः अभिभवन्ति, आपदुपेतम् आयतिः रहयति, निरायतेः लघुता नियता अगरीयान् नृपश्रियः पदं न (भवति)॥ वाच्य—विपद्भिः अविक्रमः अभिभूयते। आयत्या आपदुपेतः रह्यते, लघुतया नियतया (भूयते), अगरीयसा पदेन (भूयते)॥ [अत्राख्यातक्रियया प्रक्रान्तस्य 'नियतेति' कृदन्तक्रियया समापनेन प्रक्रमभङ्गदोषः]॥ १४

ननु सोत्साहस्य असहायस्य कथम् अर्थसिद्धिः इत्यत्राह—अभिमानवत इति। अभिमानवतः मानधनस्य प्रियमिष्टमुच्चैः उन्नतं पदं स्थानं राज्यादिकमारुरुक्षतः आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्य आत्मपौरुषं स्वपुरुषकार एव विनिपातनिवर्त्तनक्षमम् अनर्थप्रतीकारसमर्थम् आलम्बनं सहकारि मतम् इष्टम्। यथा कस्यचित् तुरङ्गमारोहत किञ्चित् पतनप्रतिबन्धकमनुचरहस्तादिकमालम्बनं तद्वदिति ध्वनिः। किं पौरुषादन्यैः सहायैः शूराणाम् इति भावः॥ १३॥

पौरुषानङ्गीकारे दोषमाह—विपद इति। अविक्रमं पौरुषहीनं विपदोऽभिभवन्ति तिरस्कुर्व्वन्ति। आपदुपेतं विपन्नम् आयतिः उत्तरकालः।

১২। যাহা সহায় সাধনোপায় প্রভৃতি পঞ্চ অঙ্গের বিনির্ণয় পরিশুদ্ধ, যাহা ধন ও চতুরঙ্গ সৈন্যে উপচয়ের নিদানস্বরূপ, সেই নীতি ও কৃষি প্রবৃত্ত লোক যেরূপ দৈবের উপর নির্ভর করিয়া থাকে।

১৩। অভিমত উন্নতপদলাভেচ্ছু, মানধন মনস্বী আত্মপৌরুষকেই পতননিবারণে সমর্থ যোগ্য অবলম্ব মনে করিয়া থাকেন।

১৪। নিষ্পৌরুষ ব্যক্তি বিপদে অভিভূত হয়। আপদ্‌গত ব্যক্তির উত্তরকাল বিনষ্ট হইয়া যায়। যাহার উত্তরকাল নাই সে নিশ্চিত লঘুতা প্রাপ্ত হয়। লঘু গৌরবশূন্য ব্যক্তি রাজ্যলক্ষ্মীর আশ্রয় হইতে পারে না।

१२। जिसके द्वारा सहाय साधनोपाय प्रभृति पञ्चाङ्गका निर्णय है, जो अर्थराशि और चतुरङ्गिणी सेनाका कारण है, कृषिमें प्रवृत्त लोगोंके दैवानुकरणकी भांति, वह नीति भी कार्य्य विषयमें उत्साहका अनुसरण किया करती है।

तदलं प्रतिपत्तमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥१५॥
अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसम्पदः ॥ १६ ॥

अन्वयः । तत् ( तस्मात् ) उन्नतेः प्रतिपत्तं व्यवसायवन्ध्यतां अवलम्ब्य अलम् । तथाहि— पराक्रमाश्रयाः समृद्धयः विषादेन समं न निवसन्ति ॥ वाच्य—पराक्रमाश्रयाभिः समृद्धिभिः नुष्यते ॥१५

"उत्तरः काल आयतिः" इत्यमरः । रहयति त्यजति । निरायतेः आसन्न-क्षयस्य इत्यर्थः, लघुता अगौरवं नियता अवश्यम्भाविनी, न कश्चिदेनमाद्रियते इत्यर्थः । अगरीयान् लघीयान् नृपश्रियः राजलक्ष्म्याः पदं आस्पदं न भवति । यद्वा नृपेति पदच्छेदः । तस्मात् पौरुषं कर्त्तव्यमेव इत्यर्थः । अत्र पूर्वपूर्वस्याविक्रमत्वादेरुत्तरोत्तरं विपदादिकं प्रति कारणत्वात् कारण-मालाख्योऽलङ्कारः । तथाच सूत्रम्—"पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वे कारण-माला" इति ॥ १४ ॥

फलितमाह—तदिति । तत्तस्मात् उपेक्षायां दोषसम्भवात् इत्यर्थः । उन्नतेः अभ्युदयस्य प्रतिपत्तम् अन्तरायं व्यवसायवन्ध्यताम् उद्योगशून्यताम् अवलम्ब्य अलम् उद्योगशून्यतालम्बनेन अलम् इत्यर्थः । "अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वाप्रत्ययः । तस्य ल्यबादेशः । तथाहि—पराक्रमः आश्रयः कारणं यासां ताः तथोक्ताः समृद्धयः सम्पदो विषादेन समम् अनुत्साहेन सह न निवसन्ति । पौरुषसाध्याः सम्पदो न अनुत्साहसाध्याः । उभयोः सहावस्थानविरोधादित्यर्थः । वैधर्म्येण कार्य्यकारणरूपोऽर्थान्तर-न्यासोऽलङ्कारः ॥ १५ ॥

১৫। অতএব উন্নতির অন্তরায় স্বরূপ উৎসাহহীনতা অবলম্বন করিবার প্রয়োজন নাই। পরাক্রম সম্পদের আশ্রয় বা অবলম্বন। অনুৎসাহ ও অবসাদের সহিত একত্র বাস করিতে পারে না।

१३। राज्यप्रभृति अभीष्टके उन्नतपदके लाभकी वसना रखनुवाले अभिमानी बुद्धिमान् व्यक्तिका अनर्थके निवारणमें समर्थ अपना पुरुषार्थ ही प्रकृष्ट सहाय होता है।

१४। आपत् समूह पुरुषकारविहीनको अभिभूत कर देता, उत्तरकाल विपन्नको परित्याग करता आसन्नविनाश व्यक्तिका अयश: अवश्यम्भावी होता और लघीयान् व्यक्ति राज्यश्रीका आस्पद नहीं होता।

१५। इसलिये उन्नति वारनेमें उत्साहहीनताके अवलम्बनका प्रयोजन नहीं, पराक्रम ही सम्पदका आश्रय है। अनुत्साह और अवसाद सह कभी नहीं रह सकते।

**द्विषता विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम्।**
**जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७॥**

अन्वयः। अथ अवधिः प्रतीच्यते चेत् आविष्कृतजिह्मवृत्तिना धृतराष्ट्रसुतेन नरेन्द्रसम्पदः चिर आस्वाद्य कथं सुत्यजाः (भविष्यन्ति)॥ वाच्य—अवधिं प्रतीच्यते (भवान्) आविष्कृतजिह्मवृत्तिः धृतराष्ट्रसुतः कथं सुत्यजेत्॥ १६

अन्वयः। अथवा द्विषता विहितम् आत्मनः पदं त्वया यदि पुनः लब्धा (तर्हि) हे जननाथ तव अनुजन्मनाम् आविष्कृतपौरुषैः भुजैः कृतम्॥ वाच्य—भवान् (लब्धा)॥ [अत्र काव्यलिङ्गालङ्कारः]॥ १७

ननु समयः प्रतीच्यते, किं वेगेन इति, अत्र आह—अथेति। अथ अवधिः कालः प्रतीच्यते चेत्। "अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च" इति विश्वः। आविष्कृतजिह्मवृत्तिना प्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेन दुर्य्योधनेन नरेन्द्रसम्पदो राज्यसम्पदः। नरेन्द्रेति वा पदच्छेदः। चिरं चतुर्दशवर्षाणि आस्वाद्य अनुभूय कथं सुत्यजाः। ज्ञातास्वादेन तेन पश्चादपि सुखेन युद्धक्लेशं विना न त्यज्यन्ते एव इति अवधिप्रतीचणं व्यर्थमित्यर्थः॥ १६॥

अथ यदि दैवात् स्वयमेव दुर्य्योधनः सम्पदो दास्यति चेत् तथापि तत् कथं रोचयेमहि इत्याह—द्विषतेति। अथवा द्विषता दुर्य्योधनेन विहितं समर्पितमित्यर्थः। आत्मनः पदं राज्यं पुनरपि त्वया लब्धा लप्स्यते यदि। लभेः कर्मणि लुट्। हे जननाथ! तव अनुजन्मनाम् अनुजानाम् आविष्कृतपौरुषैः प्रकटितपराक्रमैः भुजैः कृतम् अलं व्यर्थमिति यावत्। अस्मद्भुजैर्न किञ्चित् साध्यमित्यर्थः। राज्यदानादानयोर्द्विषतामेव स्वातन्त्र्ये असङ्गुणनैष्फल्यात् "चत्रियस्य विजितव्यम्" इति शास्त्रात् चात्रेणैव राज्यं ग्राह्यमिति भावः। कृतमिति प्रतिषेधार्थमव्ययं चादिषु पठ्यते। "कृतमिति निवारणनिषेधयोः" इति गणव्याख्याने। भुजैरिति गम्यमानसाधनक्रियापेचया करणत्वात् तृतीया। उक्तञ्च न्यासोद्द्योते "न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्यापि तु गम्यमानापि" इति ॥१७॥

১৬। যদ্যপি অঙ্গীকৃত সময়ের শেষের প্রতীক্ষা করেন (তাহাও বৃথা।) যেহেতু কপটাচারী ধৃতরাষ্ট্র তনয় দীর্ঘদিন রাজ সম্পদ ভোগের আস্বাদ পাইয়া কিরূপে তাহা সহজে পরিত্যাগ করিবে?

১৭। অথবা যদি আপনি শত্রু কর্ত্তৃক প্রদত্ত স্বীয় রাজ্য পুনঃ প্রাপ্ত হন, তবে জননাথ, আপনার অনুজগণের পৌরুষ প্রকাশ ভূজবীর্য্য ব্যর্থ হইবে। (অর্থাৎ এই বাহু ধারণ নিষ্ফল হইবে।)

१६। यदि अङ्गीकृत समयकी प्रतीक्षा करें, तो क्या कपट व्यवहारको प्रकट करनेमें चतुर धृतराष्ट्रका तनय चौदह वर्षके वनवासके बाद सहज ही यह राज्यसम्पद छोड़ेगा ?

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्त्तयते स्वयं हतैः ।
लघयन् खलु तेजसा जगत् न महानिच्छति भूतिमन्यतः॥१८

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥१९

अन्वयः। मृगाधिपः स्वयं हतैः मदसिक्तमुखैः करिभिः वर्त्तयते (तथाहि)—महान् तेजसा जगत् लघयन् अन्यतः भूतिं न इच्छति खलु ॥ वाच्य—मृगाधिपेन वर्त्त्यते। लघयता महता भूतिः न इष्यते ॥ १८

अन्वयः। अभिमानधनस्य गत्वरैः असुभिः स्थास्नु यशः चिचीषतः अचिरांशुविलासचञ्चला लक्ष्मीः आनुशङ्गिकं फलं ननु ॥ वाच्य…चञ्चलया लक्ष्म्या आनुषङ्गिकेण फलेन (भूयते) ॥ १९

ननु साम्नैव कार्य्यसिद्धौ किं चापलेन ? यथाह मनुः—"साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन् न युद्धेन कदाचन" इति। तत् किम् आग्रहेण इति आशङ्क्याह—मदेति। मृगाधिपः सिंहो मदसिक्तमुखैः मदवर्षिभिरित्यर्थः। स्वयं स्वेनैव हतैः करिभिर्वर्त्तयते वृत्तिं करोति तैरेव जीवतीत्यर्थः। चौरादिकाद् वृतेर्लट्। भौवादिकस्य तु "अणावकर्मकाच्चित्तवत्कर्त्तृकात्" इति परस्मैपदनियमादिति। तथाहि तेजसा प्रभावेण। "तेजो बले प्रभावे च ज्योतिषर्च्चिषि रेतसि" इति वैजयन्ती। जगत् लघयन् लघूकुर्वन् महान् तेजस्वी अन्यतोऽन्यस्मात् पुरुषात् भूतिं वृद्धिं न इच्छति खलु। नहि तेजस्विनः परायत्तवृत्तित्वं युक्तम्। मनुवचनं तु अशूरविषयम् इति भावः। विशेषेण वक्ष्यमाण-सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १८ ॥

ननु युद्धात् पाक्षिको लक्ष्मीलाभः उपायान्तरैस्तु न तथा इत्याशङ्क्याह—अभिमानेति। अभिमानधनस्य वैरनिर्य्यातनमात्रनिष्ठस्य अतएव गत्वरैः गमनशीलैः अस्थिरैः। "गत्वरश्च" इति क्वरवन्तो निपातः असुभिः प्राणैः करणैः। "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः। स्थास्नु स्थिरम्। "ग्लाजिस्थश्च-

১৮। পশুরাজ সিংহ মদসিক্তানন মাতঙ্গযূথকে স্বয়ং নিহত করিয়া তদ্দ্বারা জীবনধারণ করে। তেজস্বী মহান্ ব্যক্তি আত্মপ্রভাবে জগৎকে নিষ্প্রভ করিয়া থাকেন। অন্যের অনুগ্রহে বা সাহায্যে নিজের উন্নতিলাভের ইচ্ছা করেন না।

१९। अथवा आप यदि शत्रु धोंद्वारा स्वीय राज्य फिर प्राप्त होजाता, आप भी वह पा जायें, तो है जननाथ ! ऐसी राज्यसम्पदकी प्राप्तिसे आपके भाइयोंका पौरुष प्रकाशक भुजवीर्य्य व्यर्थ होगा ; (यानी हमारे भुजवीर्य्यका कोई काम न रहेगा।)

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥२०॥

अन्वयः । जनः भस्मनां चयम् आस्कन्दति, ज्वलितं हिरण्यरेतसं न । अतः मानिनः अभिभूतिभयात् असून् सुखम् उज्झन्ति, (किन्तु) धाम न (उज्झन्ति) ॥ वाच्य—जनेन चयः आस्कन्द्यते। ज्वलितः हिरण्यरेताः न । मानिभिः असवः उज्झ्यन्ते, न धाम उज्झ्यते ॥ २०

ग्स्नुः" इति ग्स्नु प्रत्ययः । यशश्चिचीषतः चेतुं संग्रहीतुमिच्छतः । चिनोतेः सन्नन्तात् शतृप्रत्ययः अचिरम् अंशवो यस्याः सा अचिरांशुर्विद्युत् तस्याविलासः स्फुरणं तद्वत् चञ्चला क्षणिका इत्यर्थः । लक्ष्मीः सम्पत्, अनुषङ्गादागतम् आनुषङ्गिकम् अन्वाचयशिष्टमल्पं फलं, मानत्राणजं यश एव मुख्यं फलम् अभ्युच्चयस्तु लक्ष्मीरिति मानिनामिदमेव श्लाघ्यमित्यर्थः। अत्र अस्थिरप्राणत्यागेन स्थिरयशःस्वीकाराभिधानात् न्यूनाधिकविनिमयाख्यः परिवृत्त्यलङ्कारः । उक्तञ्च काव्यप्रकाशे—"परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः" इति ॥ १९ ॥

ननु अल्पस्य मानस्य हेतोः कथं प्राणत्यागः शक्यते कर्त्तुं यतो "जीवन्नरो भद्रशतानि पश्येत्" इत्याशङ्क्याह—ज्वलितमिति । जनो भस्मनां चयं पुञ्जम् आस्कन्दति पादादिना आक्रामति अदाहकत्वादिति भावः । ज्वलितं ज्वलन्तम् । कर्त्तरि क्तः । "मतिबुद्धि" इत्यादिसूत्रे चकाराद्वर्त्तमानार्थत्वम् । हिरण्यं रेतो यस्य तं हिरण्यरेतसम् अग्निं न आस्कन्दति दाहकत्वादिति भावः । अतो हेतोर्मानिनः अभिभूतिभयात् प्राणलोभेन तेजस्त्यागे परिभवो भविष्यतीति भयादसूनेव सुखम् अक्लिष्टम् उज्झन्ति। धाम तेजस्तु न उज्झन्ति मानहानिकरात् जीवनात् स्वतेजसा मरणमेव वरम् इत्यर्थः । पूर्वतरश्लोकवत् अर्थान्तरन्यासोऽलङ्कारः ॥ २० ॥

১৯। ক্ষণভঙ্গুর জীবনের বিনিময় দ্বারা স্থায়ী যশঃ অর্জ্জন করিতে অভিলাষী, মান ধন তেজস্বী জনের পক্ষে বিদ্যুদ্বিলাস চঞ্চল লক্ষ্মী আনুষঙ্গিক ফলমাত্র।

१८। मृगराज सिंह स्वयं मदस्रावी मातङ्गयूथको मार उससे जीविका निर्व्वाह करता है, प्रयोजन यह है, कि जो अपने तेज द्वारा जगत्को पराभूत कर सकते हैं, वह महान् व्यक्ति दूसरे पुरुषसे समृद्धिकी कामना नहीं करते । ।

१९। क्षणभङ्गुर जीवनके विनिमयमें यशकी स्थिरता रखना अभिलाषी मानधन तेजस्वीजनका अभीष्ट है, इसलिये यशके अर्जनमें इच्छुक व्यक्तिका बिजलीकी चमक जैसी चञ्चला लक्ष्मी आनुषङ्गिक फल मात्र है,—यश ही मुख्य है ।

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥२१
कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम्।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥२२॥

अन्वयः। मृगाधिपः किं फलम् अपेक्ष्य ध्वनतः पयोधरान् प्रार्थयते। (तथाहि)—महीयसः सा प्रकृतिः खलु यया प्रकृत्या अन्यसमुन्नतिं न सहते॥ वाच्य—मृगाधिपेन ध्वनन्तः पयोधराः प्रार्थ्यन्ते तया प्रकृत्या समुन्नतिः न सह्यते॥ २१

अन्वयः। हे नृप! तत् प्रमादजं तमः निर्धूय विक्रमे मतिं कुरु। विद्विषां विपत्तयः त्वदनुत्साहहता एतद्ध्रुवम् अवेहि॥ वाच्य—मतिः क्रियताम्, विपत्तिभिः—हताभिः (भूयते) अवेयताम्॥ २२

अथवा किमत्र प्रयोजनं चिन्तया किन्तु तेजस्विनामेव अयं स्वभाव एव यज्जिगीषुत्वम् इत्याशयेनाह—किमिति। मृगाधिपः सिंहः किं फलं प्रयोजनम् अपेक्ष्य ध्वनतो गर्जतः। धरन्तीति धरा पचाद्यच्। पयसां धराः तान् पयोधरान् प्रार्थयतेऽभियाति। "याच्ञायामभिधाने च प्रार्थना कथ्यते बुधैः" इति केशवः। अथवा अवरुणद्धि इत्यर्थः। प्रार्थयते "प्रा अर्थयते"—"प्रा स्याद् याच्ञावरोधयोः" इत्यभिधानात् प्रा अवरोधने। प्रा इति तृतीयान्तम्। आकारान्तस्य प्राशब्दस्य योगविभागात् 'आतो धातोः' इत्यालोपः। "अभियाच्ञावरोधयोः" इत्यभिधानात्। तथाहि महीयसो महत्तरस्य सा प्रकृतिः खलु स्वभावो यया प्रकृत्या अन्यसमुन्नतिं परवृद्धिं न सहते। महतः परभञ्जनमेव पुरुषार्थं इत्यर्थः। पूर्ववत् अलङ्कारः॥ २१॥

उक्तार्थोपसंहरणं *—कुरु तदिति। हे नृप! तत् तस्मात् उक्त-

२०। লোকে প্রজ্বলিত পাবককে পদে দলিত করে না; কিন্তু ভস্মরাশিকে দলিত করে। অতএব মানিগণ অভিভবের ভয়ে স্বকীয় প্রভাব ত্যাগ করেন না; কিন্তু অক্লেশে জীবন পরিত্যাগ করিয়া থাকেন।

২১। মৃগাধিপ সিংহ কি লাভের প্রত্যাশায় গর্জ্জনপর মেঘের প্রতি ধাবমান হয়? মহত্তর ব্যক্তির এইরূপই স্বভাব, যে তাঁহারা অন্যের উন্নতি অথবা উৎকর্ষ সহিতে পারে না।

२०। लोग पैरसे भस्मराशिको अतिक्रम करते, किन्तु उसीमें आग रहनेसे कोई आक्रमण कर सकता नहीं इसलिये मानी लोग अभिभवके भयसे विना किसी क्लेशके जीवनको भी परित्याग कर सकते हैं, किन्तु तेज नहीं छोड़ते।

२१। मृगाधिप सिंह किसलिये गर्जते मेघोंपर आक्रमण करता है? महत्तर व्यक्तिका

* निगम उच्यते उक्तं प्रयोजनं निगमयति—इति क्वचित् पाठः।

द्विरदानिव दिग्विभावितान् चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥२३॥
ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥२४॥

अन्वयः । दिग्विभावितान् आयतः चतुरः द्विरदान् ( चतुरः ) तोयनिधीन् इव तव ( चतुरः ) शतमन्युतेजसः अनुजान् रणे द्विषतां कः प्रसहेत ॥ वाच्य—दिग्विभाविताः आयन्तः चत्वारः द्विरदाः तोयनिधय इव अनुजाः केन सह्येरन् ॥ [ अत्रोपमालङ्कारः ] २३

अन्वयः । तव चेतसि सततं ज्वलतः वैरिकृतस्य जातवेदसः शिवेतरा रिपुनारीनयनाम्बुसन्ततिः शमं विदधातु ॥ वाच्य—शिवेतरया—सन्तत्या शमः विधीयताम् ॥ २४

रीतया पराक्रमावसरत्वाद्धेतोः । "यत्तद्यतस्ततो हेतौ" इत्यमरः । प्रमादजं तमो मोहं निर्धूय निरस्य विक्रमे पौरुषे एव मतिं कुरु । विक्रममेव अङ्गी कुरु, न तु उपायान्तरमित्यर्थः । न च विक्रमवैफल्यमित्याह—ध्रुवमिति । विद्विषां विपत्तयः त्वदनुत्साहहताः तव अनुत्साहेन अव्यवसायेन हताः प्रतिबद्धाः । अन्यथा प्रागेव विपद्येरन्निति भावः । इत्येतत् ध्रुवं निश्चितम् अवेहि विद्धि । ध्रुवं नित्ये निश्चिते च" इति शाश्वतः ॥ २२ ॥

न च नः पराजयशङ्का कार्य्येत्याह—द्विरदानिति । दिग्विभावितान् दिक्षु प्रसिद्धान् तान् आयत आगच्छतः । आङ्पूर्वादिण्धातोः शतृप्रत्ययः । चतुरः द्विरदान् दिग्गजानिव तथोक्तविशेषणान् चतुरः तोयनिधीन् इव रणे दिग्विभावितान् शतमन्युतेजस इन्द्रविक्रमान् चतुरः तव अनुजान् द्विषतां मध्ये कः प्रसहेत सोढुं शक्नुयादित्यर्थः । "शकि लिङ् च" इति शक्त्यर्थे लिङ् । अतो निःशङ्कं प्रवर्त्तस्वेति भावः ॥ २३ ॥

२२। অতএব হে নৃপ, প্রমাদজ মোহ দূর করিয়া বিক্রম প্রকাশে সাভিলাষী হউন। ইহা নিশ্চয় জানিবেন যে আপনার অনুৎসাহে শত্রুগণের বিপত্তি সমূহ দূরীভূত হইয়াছে।

২৩। বেগে ধাবমান্ সুপ্রসিদ্ধ চতুষ্টয় দিগ্গজের ন্যায়, অথবা উদ্বেলিত বেগ চতুঃসমুদ্রের ন্যায়, রণে ধাবমান, আপনার ইন্দ্রতুল্য পরাক্রম সুপ্রসিদ্ধ অনুজ চতুষ্টয়কে শত্রুগণের মধ্যে কে অভিভূত করিতে সমর্থ হইবে?

स्वभाव ही ऐसा होता है। अपने इस स्वभावके ही वशवर्ती हो वैसा व्यक्ति शत्रुकी हानि नहीं सह सकता।

२२। इसलिये हे नृप! प्रमादसे उत्पन्न मोहको दूरकर विक्रमप्रकाशमें बुद्धिको लगावो। आप यह निश्चय जानें, कि आपके अनुत्साहसे शत्रुओंका विपत्ति समूह प्रतिबद्ध हो रहा है।

इति दर्शितविक्रियं सुतं मरुत: कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥

अन्वय: । इति दर्शितविक्रियं कोपपरीतमानसं मरुत: सुतं महीपति: दुष्टं द्विरदमिव उपसान्त्वयितुम् उपचक्रमे ॥ वाच्य—महीपतिना ॥ [ अत्रापि उपमालङ्कार: ] २५

आशीर्वादव्याजेन फलितमाह—ज्वलत इति ! तव चेतसि सततं ज्वलतो वैरिकृतस्य जातवेदस: क्रोधाग्ने: शिवेतरा अशिवा अमङ्गला । वैधव्यदु:खजनकत्वादिति भाव: । रिपुनारीनयनाम्बुसन्तति: वैरिवनिताश्रुप्रवाह: शमं विदधातु । वैरिकृतस्य क्रोधस्य वैरिबधमन्तरेण शान्त्यसम्भवादवश्यं तद्बधस्त्वया कर्त्तव्य इत्यर्थ: । क्रोधस्य विषयस्य निगरणेन विषयिणो जातवेदस एव उपनिबन्धनात् अतिशयोक्तिरलङ्कार: । तदुक्तम्—"विषयस्यानुपादानाद्विषय्युपनिबध्यते । यत्र सातिशयोक्ति: स्यात् कवे: प्रौढ़ोक्तिजीविता" इति । तत्रापि क्रोधस्य जातवेदसो भेदेऽपि अभेदाध्यवसायाद् भेदेऽभेदरूपा तत एव अम्बुनिर्वाप्यत्वोक्तिश्च घटते । तथाच यथा अम्बुसेकेन अग्नि: सम्यक् शाम्यति तथा शत्रुबधेन क्रोध इति औपम्यं गम्यते ॥ २४ ॥

इतीति ॥ इति उक्तरीत्या दर्शिता विक्रिया विकारो वागारम्भात्मको येन तं कोपपरीतमानसं कोपाक्रान्तचित्तम् । इदं विशेषणद्वयं द्विरदेऽपि योज्यम् । मरुत: सुतं भीमं महीपति: युधिष्ठिरो दुष्टं द्विरदमिव । एतेन अस्य शौर्य्यमेव न बुद्धि: अस्तीति गम्यते । उपसान्त्वयितुम् अनुनेतुम् उपचक्रमे प्रवृत्त: "प्रोपाभ्यां समर्थाभ्याम्" इति आत्मनेपदम् । राज्ञा भाव्युपकारविशेषापेक्षया कथञ्चित् अवश्यो जन: शनै: शनै: द्विरदवत् वशीकरणीय:, न तु त्याज्य इति भाव: ॥ २५ ॥

२४। রিপুনারীগণের অকল্যাণজনয়ন প্রবাহ আপনার হৃদয়ে সতত দীপ্যমান, বৈরিকৃত ক্রোধ বহ্নির নির্ব্বাণ সাধন করুক।

২৫। পূর্ব্বোক্ত রূপে যাহার ক্রোধ বিকার প্রকটিত হইয়াছিল, কোপাক্রান্ত হৃদয় পবন-তনয় ভীমকে মহীপতি যুধিষ্ঠির দুষ্ট করীর ন্যায় সান্ত্বনা করিতে প্রবৃত্ত হইলেন।

२३। वेगवान् दिग्गज चतुष्टय सम ; अथवा उद्वेलित जलधी चतुष्टय की भांति, इन्द्र जैसे पराक्रमशाली आपके सुप्रसिद्ध अनुज चारों भाइयोंको रणमें समागत देख शत्रुओंमें कौन उनके पराक्रमको सहनेमें समर्थ हो सकता है ?

२४। शत्रुओंकी स्त्रियोंका वैधव्यसूचक अकल्याण नयनवारिप्रवाह आपके हृदयमें जो वैरिकृत क्रोधकी आग दीप्यमान् रही है, उस आगको ठण्ढा करे।

अपवर्ज्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥२६॥
स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥२७

अन्वय: । अपवर्ज्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे तव गिरां विस्तरे मति: आदर्श इव विमला अभिदृश्यते ॥ वाच्य—मतिं विमलाम् अभिपश्यन्ति (जना:) ॥ [ अत्रापि सुव्यक्तोपमा ] २६

अन्वय: । पदै: स्फुटता न अपाकृता, अर्थगौरवं न स्वीकृतम् न च । गिरां पृथगर्थता रचित (तथा गिरां) सामर्थ्यं न च क्वचित् अपोहितम् । बलात् उपपत्ति: उदाहृता, (तथा) अनुमाने आगम: न च च्युत: । अनीदृगाशय: क: ईदृक् इदं वचनं प्रसभं वक्तुमुपक्रमेत ॥ वाच्य—(त्वं

प्रथमं तावत् स्तुत्यादिभि: प्रसादयति—अपवर्जितेति । विप्लव: प्रमाणबाध:, अन्यत्र बाह्यमलसंक्रम: सोऽपवर्जितो यस्य तस्मिन् अपवर्जितविप्लवे । शुचौ शुचित्वं शब्दसौष्ठवं लोहशुद्धिश्च तद्वति । अतएव हृदयग्राहिणि मनोरमे मङ्गलास्पदे एकत्र हितार्थप्रतिपादकत्वात् अन्यत्र मङ्गलवस्तुत्वात् च श्रेयस्करे । "रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरुमग्निं तथा सूर्यं प्रात: पश्येत् सदा बुध: ॥" इति पुराणवचनात् । तव गिरां विस्तरे वाक्यप्रपञ्चे । "प्रथने वावशब्दे" इति घञ्प्रतिषेधात् "ऋदोरप्" इत्यप् । अतएव "विस्तारो विग्रहो व्यास: स तु शब्दस्य विस्तर:" इत्यमर: । मतिस्त्वद्बुद्धिरादर्शे दर्पणे इव । "दर्पणे मुकुरादर्शौ" इत्यमर: । विमला विशदा अभिदृश्यते वाग्वैशद्यादेव मतिवैशद्यमनुमीयते । तत्पूर्वकत्वात्तस्येत्यर्थ: ॥ २६ ॥

अथ युग्मेनाह—स्फुटतेति, उपपत्तिरिति च । पदै: सुप्तिङन्तशब्दै: स्फुटता विशदार्थता न अपाकृता न त्यक्ता । अर्थगौरवम् अर्थभूयस्त्वं वा न च न स्वीकृतम् । स्वीकृतमेवेत्यर्थ: । "वैशद्यप्रसक्तार्थगौरवाभावनिवर्त्तनार्थं नञ्द्वयं सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति वामन: । गिरां पदानाम् अवान्तरवाक्यानां च पृथगर्थता भिन्नार्थता, अपुनरुक्तार्थतेति यावत् रचिता कृता । तथा क्वचिदपि सामर्थ्यं गिराम् अन्योन्यसामर्थ्यं साकाङ्क्षत्वं

২৬। প্রমাণবাধ রহিত, শব্দ সৌষ্ঠবযুক্ত হিত পরিণামী ও মনোরম এই বাক্প্রপঞ্চে তোমার বি… বুদ্ধি আদর্শে প্রতি ফলিতের ন্যায় দৃষ্ট হইতেছে।

२५। पूर्व्वतरह जिस्की क्रोध विकार प्रकटित हुआथा, कोपाक्रान्तहृदय पवनतनय भीमसेनको महीपति युधिष्ठिर दुष्ट द्विरदकी भांति शान्त करनेमें प्रवृत्त हुए।

उपपत्तिरुदाहृता बलात् अनुमानेन न चागमः क्षतः।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः॥ २८॥

स्फुटतां न अपाकृतवान्, स्वीकृतवान्, पृथगर्थतां रचितवान्, न अपोहितवान्। उपपत्तिम् उदाहृतवान्। अनीदृगाशयेन केन उपक्रम्येत॥ [ अत्र परिसंख्याख्यालङ्कारः ] २७-२८

न अपोहितं न वर्जितम्। अन्यथा दशदाड़िमादिशब्दवत् एकवाक्यता न स्यात्। यथाहुः—"अर्थैकत्वादेकं वाक्यं सापेक्षं चेद्विभागे स्यात्" इति। ननु अर्थगौरवमित्यत्र कथं षष्ठीसमासः? "पूरणगुण" इत्यादिना प्रतिषेधान्नैष दोषः। ये शुक्लादयः शब्दा गुणे गुणिनि च वर्त्तन्ते, यथा पटस्य शौक्ल्यं [शुक्लं]शुक्लः पट इति च। तेषाम् एव अत्र निषेधाद् ये च पुनः स्वतो गुणमात्रवचनाः, यथा गौरवं प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयः, तेषामनिषेधात्। तथा "तत्स्थैश्च गुणैः षष्ठी समस्यते" इति वचनाद्बहुलमभियुक्तप्रयोगदर्शनाच्च बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः। अतएव आह वामनः—"पत्रपीतिमादिषु गुणवचनसमासो बली स्यात्" इति॥ २७॥

उपपत्तिरिति। किञ्च बलात् [स्व]बलमाश्रित्य। कर्म्मणि ल्यब्लोपे पञ्चमी वक्तव्या। उपपत्तिर्युक्तिरुदाहृता। पराक्रमपक्ष एव श्रेयानिति युक्तिः उक्ता इत्यर्थः। उचितं चैतत् महावीरस्येति भावः। तथा अनुमानेन युक्त्या आगमः शास्त्रं न क्षतः न हतः। किन्तु आगमाविरुद्धमेव उक्तम्। अन्यथा तद्विरोधात् अनुमानस्यैव प्रामाण्यभङ्गप्रसङ्गादिति भावः। ईदृक् इत्थं चात्रयुक्तम् इदं वचनम् अविद्यमान ईदृगाशय इत्थं चात्रयुक्ताभिप्रायो यस्य सोऽनीदृगाशयः। "अभिप्रायश्छन्द आशयः" इत्यमरः। कः प्रसभं हठात् वक्तुमुपक्रमेत न कोऽपीत्यर्थः। इत्थं वक्तुमुपक्रमितैव नास्ति, वक्ता तु दूरापास्त एवेति भावः। केचिदेतत् श्लोकत्रयं निन्दापरत्वेनापि योजयन्ति। तदसत् हितोपदेशमात्रतत्परस्य अति-

২৭। ( হে বৃকোদর, ত্বদীয় বাক্যের ) পদগুলিতে অর্থের প্রসাদগুণ বা বিশদতা পরিহৃত হয় নাই। ( এই হেতু ) অর্থ গৌরব যে স্বীকৃত হয় নাই এমত নহে। বাক্যগুলির ভিন্নার্থতা অর্থাৎ পুনরুক্ততা সম্পাদিত হইয়াছে; অথচ কোথায়ও সামর্থ্য ও প্রাসঙ্গিকতা পরিত্যক্ত হয় নাই।

२६। श्रीमान् युधिष्ठिरने कहा, वाह्यमलविवर्ज्जित, मङ्गलास्पद, विशुद्ध दर्पणमें जैसे विशद दर्शन सम्पादित होता है, वैसे ही इस प्रमाणवाधवविरहित, सौष्ठवयुक्त, हृदयग्राही, श्रेयस्कर, विशुद्ध वाक् प्रपञ्चमें तुम्हारी मति परिलक्षित होती है।

**अविलम्नतया तथापि मे हृदयं निर्णयमेव धावति ।**
**अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥२९॥**

अन्वयः । तथापि मे हृदयम् अविलम्नतया निर्णयम् एव धावति, विधेयेषु विशेषसम्पदः सुखम् अवसाययितुं न क्षमाः । वाच्य—हृदयेन निर्णयः ध्रियते, सम्पद्भिः क्षमाभिः ( भूयते ) ॥ २९

वत्सलस्य राज्ञो मत्सरिण इव महावीरे भ्रातरि विधेये सर्वानर्थमूलभूतनिन्दातात्पर्यकल्पनानौचित्यादिति ॥ २८ ॥

यदि साधूक्तं तर्हि तथैव क्रियतामित्याशङ्क्याह—अविलम्नतयेति। तथापि त्वया सम्यङ् निर्णीतेऽपि मे हृदयम् अविलम्नतया असन्तुष्टतया अद्यापि संशयगलत्वेन इत्यर्थः । निर्णयमेव धावति अनुसरति अपेक्षते इति यावत् । अद्यापि निर्णयस्य अनुदयादिति भावः । निर्णयानुदये हेतुमाह—अवेति । विधेयेषु सन्धिविग्रहादिकर्त्तव्यार्थेषु या विशेषसम्पदोऽवान्तरभेदभूमानः सम्पद्वयो बाहुल्यानि ताः सुखम् अक्लेशेन अवसाययितुं पुरुषान् प्रत्यानुकूल्येन स्वस्वरूपं स्वयमेव शीघ्रं प्रत्याययितुमित्यर्थः । स्यतेर्ण्यन्तादणि कर्म्मकर्तृकात्तुमुन् । णेरणाविति सूत्रस्य अयं विषयः । क्षमन्ते इति क्षमाः । पचाद्यच् । शक्ता न भवन्ति । "क्षमं शक्ते हिते त्रिषु" इत्यमरः । विधेयमात्रस्य सुगमत्वेऽपि तद्विशेषाणां सौक्ष्म्याद् बाहुल्याद् दुर्ज्ञेयत्वात् अद्यापि निर्णयाकाङ्क्षेति तात्पर्य्यार्थः । अत्र निर्णयधावनं प्रत्युत्तरवाक्यार्थस्य हेतुत्वाभिधानाद् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तम्—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ २९ ॥

२८। विक्रमपक्ष अवलম্বন করিয়া যুক্তি প্রদর্শিত হইয়াছে। অনুমান শাস্ত্রের বিরোধী হয় নাই। যাহার এইরূপ অভিপ্রায় নাই ঈদৃশ কোন ব্যক্তি এইরূপ বাক্য সহসা বলিবার উপক্রম করিতে পারে?

২৯। তথাপি আমার হৃদয় অতৃপ্তিহেতু সিদ্ধান্তের অন্বেষণে অগ্রসর হইতেছে। কেন না সন্ধি বিগ্রহাদি কর্ত্তব্যার্থের বহুবিধ অবান্তরভাবনিচয় অনায়াসে বোধ যোগ্য হইবার নহে।

२७। ( हे वृकोदर, तुम्हारा बातको ) पद निचयमें अर्थका प्रसादगुण विशदार्थता परित्याग नहीं करता, अथच यह अर्थबाहुल्ययुक्त करु स्वीकृत किया जाता है । उक्त वाक्यमें पुनरुक्तता दोष नहीं और इस सकल वाक्यकी कचित् आकाङ्क्षा भी परित्यक्त होती नहीं ।

२८। तुमने जो विरोचित अपना बल अवलम्बनकर युक्तिकी अवतारणा की है, सो उचित ही हुआ है । अनुमान शास्त्रोंका विरोधी नहीं हुआ । वाग्मीकी बात छोड़ो, सहसा इस तरह ध्यासयुक्त, अभिप्रायसूचक वाक्योच्चारणमें प्रवृत्त होनेको ही कौन समर्थ हो सकता है ?

२९। तथापि हमारा हृदय अतृप्ति हेतु इस विषयमें निर्णय ... होता है । कारण,

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृण[णु]ते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ३०
अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥३१

अन्वयः। क्रियां सहसा न विदधीत, अविवेकः परम् आपदां पदं, गुणलुब्धाः सम्पदः विमृश्यकारिणं स्वयमेव वृण[णु]ते हि॥ वाच्य—क्रिया न विधीयेत। अविवेकेन पदेन (भूयते), गुणलुब्धाभिः सम्पद्भिः विमृश्यकारी क्रियते॥ [अत्र द्वितीयार्द्धं विना तदर्थस्य अर्थप्रतीतेः पुनरुक्तता-दोषः]॥ ३०

अन्वयः। यः विधिबीजानि अनुपालयन् विवेकवारिणा अभिवर्षति, स फलशालिनीं क्रियां लोकः शरदम् इव अधितिष्ठति॥ वाच्य—येन अनुपालयता अभिवृष्यन्ते (बीजानि), तेन फलशालिनी क्रिया लोकेन शरत् इव अधिष्ठीयते॥ ३१

वस्तुविशेषावधारणमन्तरेणैव प्रवृत्तिरित्याशङ्क्याह—सहसेति। क्रियते इति क्रिया कार्य्यं तां सहसा अविमृश्येत्यर्थः। "सहसेत्याकस्मिकावि-मर्शयोः" इति गणव्याख्याने स्वरादिपाठादव्ययम्। न विदधीत न कुर्वीत। कुतः? अविवेकोऽविमृश्यकारित्वं परमत्यन्तम् आपदां पदं स्थानम्, विपत्तिकारणमित्यर्थः। व्यतिरेकेण उक्तमर्थमन्वयेनाह—वृण[णु]ते इति। गुणलुब्धा गुणगृध्नाः, गुणगृध्नव इति स्वयंवरणहेतूक्तिः। सम्पदः श्रियः विमृश्य करोतीति विमृश्यकारी। "उपपदमतिङ्" इति समासः। तं स्वयमेव वृण[णु]ते भजन्ते हि। "वृङ् सम्भक्तौ" इति धातुः। तस्मात् विमृश्य एव प्रवर्त्तितव्यमित्यर्थः। अत्र सहसा विधाननिषेधलब्धविमृश्यकारित्व-रूपकारणस्य आपद्रूपव्यतिरेककार्य्येण समर्थनात् वैधर्म्येण अर्थान्तरन्यासः। द्वितीयार्द्धेन च स एव साधर्म्येण इति ज्ञेयम्॥ ३०॥

ननु साहसिकस्यापि फलसिद्धिर्दृश्यत एव, तत् किं विवेकेन इति अत्र आह—अभीति। यः पुमान् विधीयन्ते इति विधयः कृत्यवस्तूनि बीजानी-वेति उपमितसमासः। शरदं लोक इवेति वाक्यगतोपमानुसारात्। तानि

৩০। সহসা কোন কার্য্য করিবে না। কেননা অবিবেক পরম আপদের আকর। গুণগ্রাহিণী সম্পদ্ স্বয়ংই বিবেক সম্পন্ন ব্যক্তিকে বরণ করিয়া থাকে।

सन्धिविग्रहादि कार्य्यमें जो सकल विशेष सम्पद् वर्त्तमान हैं, वह बिना क्लेश कार्य्यसाधनमें नियित-रूपसे अपनाअपना सामर्थ्य प्रतिपादन नहीं करतीं।

३०। सहसा कोई कार्य्य करना उचित नहीं, क्योंकि अविवेचक परम आपदका आस्पद होता है। गुणग्राहिणी सम्पद आपना ही विवेकसम्पन्न व्यक्तिका आश्रय ले रहा करती है।

**शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।**
**प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ३२ ॥**

अन्वयः । शुचि श्रुतं वपुः भूषयति, तस्य प्रशमः अलंक्रिया भवति । पराक्रमः प्रशमाभरण (भवति) स (पराक्रमः) नयापादितसिद्धिभूषणः (भवति) ॥ वाच्य—शुचिना श्रुतेन भूष्यं प्रशमेन अलंक्रियया भूयते, पराक्रमेण प्रशलाभरणेन (भूयते), तेन (पराक्रमेण)—भूषणे, (भूयते) ॥ [ अत्र प्रशमत्वं विधेयं तच्च समासे गुणीभावादनुवाद्यप्रतीतिकृदित्यविमृष्टाविधेयांशि मर्षदोषः ] ॥ ३२

विधिबीजानि विवेको वारीव विवेकवारि तेन विवेकवारिणा पूर्ववत् समासः । अनुपालयन् प्रतीक्षमाणः संरक्षन् अभिवर्षति सिञ्चति । स पुमान् फलं साधननिष्पाद्योऽर्थः, शस्यञ्च । "शस्ये हेतुकृते फलम्" इति उभयत्रापि अमरः । तत्कालिनीं क्रियां कर्म्म लोको जनः । "लोकस्तु भुवने जने" इत्यमरः । शरदमिव सदा नित्यम् अधितिष्ठति । सदा क्रियाफलं प्राप्नोत्येव न कदाचिद् व्यभिचरति इत्यर्थः । साहसिकस्य काकतालीयन्यायेन फलसिद्धिर्विवेकिनस्तु नियता इति भावः । अत्र फलशब्देन शस्यहेतुकृतयोः अर्थयोः अभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः, तदनुगृहीता च उपमा इत्यनुसन्धेयम् ॥ ३१ ॥

नियता विवेकिनः फलसिद्धिरित्युक्तं, सम्प्रति तामेव द्रढयितुं स्तौति—शुचीति । शुचि सम्प्रदायशुद्धं श्रुतं शास्त्रश्रवणं कर्तृ वपुः भूषयति, अन्यथा अविद्वान् पुरुषः शोच्य इति भावः । तस्य श्रुतस्य प्रशमः क्रोधोपशान्तिः अलङ्क्रिया भूषणं भवति, अन्यथा श्रुतवैफल्यात् इति भावः । पराक्रमः सति अवसरे शौर्यं प्रशमस्य आभरणं भवति, अन्यथा सर्वैः परिभूयते इति भावः । स पराक्रमः नयापादिता नीतिसम्पादिता विवेकपूर्विका इति यावत्, सा चासौ सिद्धिश्च सैव भूषणं यस्य स तथोक्तः ; अन्यथा साहसिकस्य सिद्धिः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यम् इति भावः । "वपुषो भूषयतैवात्र सिद्धे भूषणतैव तु । उभयं मध्यमानां तु तेषां पूर्वोत्तरेच्छया"

৩১। যে ভূপতি বিবেক রূপ বারি দ্বারা বিধিরূপ বীজ অভিবর্ষণ করিয়া রক্ষা করেন, তিনি কৃষিপ্রবৃত্ত লোক যেইরূপ শস্যসমৃদ্ধিশালী শরৎ ঋতুকে প্রাপ্ত হয় এরূপ সর্ব্বদাই ক্রিয়ার সফলতা লাভ করিয়া থাকেন।

३१ । जो भूपति विवेकरूप वारिसे विधिरूप बीजको अभिवर्षणकर रक्षा करते, सो ही कृषि प्रवृत्त लोग जैसे शस्य समृद्धिशाली शरत् ऋतुको लाभ करते है । अर्थात् परिणाममें उसकी क्रिया फलवती होती है । अन्तमें वह हरतरह क्रियासाफल्य लाभ किया करता है ।

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ ३३॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः॥३४॥

अन्वयः। मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनां सुकृतः परिशुद्धः आगमः दीप इव अर्थदर्शनं कुरुते॥ वाच्य—सुकृतेन परिशुद्धेन आगमेन दीपेन इव क्रियते॥ [ अत्रोपमालङ्कारः ] ३३
अन्वयः। स्पृहणीयगुणैः महात्मभिः चरिते वर्त्मनि मनः यच्छतां विधिहेतुः आगसाम् अहेतुः विनिपातः अपि समुन्नतेः समः ( भवति )॥ वाच्य—विधिहेतुना अहेतुना विनिपातेन अपि समेन ( भूयते )॥ ३४

इति विवेकः। एवंविशिष्टसिद्धेः अनन्यभूषितताया एव भूषणत्वोक्त्या सर्वोत्तरतया स्तुतिर्गम्यते। अत्र उत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वात् एकावल्यलङ्कारः। तदुक्तम्—"यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव। भजति परंपरमेषालङ्कृतिरेकावली कथिता" इति॥ ३२॥
विमृश्य कुर्य्यादिति स्थितं, तच्च विमर्शोपायः क इत्यत्रो शास्त्रमेवेत्याह—मतीति। मतिभेदः कार्य्यविप्रतिपत्तिः। मतिभेदः तम इवेति उपमितसमासः। दीप इवेति उपमानुसारात्। तेन तिरोहिते आच्छन्ने अतएव गहने दुरवगाहे कृत्यविधौ कार्य्यानुष्ठाने विवेकिनां सुकृतः सदभ्यस्तः अतएव परिशुद्धो निश्चितः,अन्यत्र सुविहितः प्रवातादिदोषरहितः आगमः शास्त्रम्। "आगमः शास्त्र आयाते" इति विश्वः। दीप इव अर्थदर्शनं कार्य्यज्ञानं वस्तुप्रतिभासनञ्च कुरुते॥ ३३॥

৩২। বিশুদ্ধ শাস্ত্রজ্ঞান দেহকে ভূষিত করে। ক্রোধাদি রিপুবিজয় বা উপশম শাস্ত্রজ্ঞানের ভূষণ স্বরূপ। অবসরে শৌর্য্য প্রদর্শন প্রশমের আভরণ স্বরূপ। নীতি ব্যবহার জন্য কার্য্য সিদ্ধি পরাক্রমের ভূষণ।
৩৩। মতিভেদরূপ তিমিরজালে পরিব্যাপ্ত, দুর্ব্বোধকার্য্যের অনুষ্ঠানবিষয়ে বিবেকসম্পন্নদিগের উত্তম ও বিশুদ্ধ শাস্ত্রজ্ঞানই দীপালোকের ন্যায় বস্তুর প্রদর্শন করাইয়া সহায়তা করিয়া থাকে।
३२। विशुद्ध शास्त्रज्ञान श्रोताकी देहको भूषित करता है, क्रोधादिरिपुको उपशम उसी शास्त्रज्ञानका भूषण है। अवसर समझ शौर्य्यप्रकाश ही शान्तिगुणका आभरण स्वरूप है। यही शौर्य्य नीति द्वारा सम्पादित सिद्धिका भूषण स्वरूप हो जाता है।
३३। कार्य्यविप्रतिपत्तिरूप तमसाच्छन्न, दुरवगाह कार्य्यानुष्ठानमें विवेकियोंको उत्तमरूपसे अभ्यस्त, परिशुद्ध शास्त्रज्ञान दीपालोक जैसे अन्धकाराहत, प्रयोजनीय वस्तुका प्रदर्शक होता है, वैसे ही कर्त्तव्यज्ञान दे देता है।

**शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम् ।**
**विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥३५॥**

अन्वयः । जिगीषवः विजितक्रोधरयाः ( सन्तः ) गरीयसीम् अदूषितायतीं फलनिष्पत्तिं विगणय्य पौरुषं शिवम् औपयिकं नयन्ति ॥ वाच्य—जिगीषुभिः—रयैः नीयते ॥ [अत्र काव्यलिङ्गालङ्कारः] ३५

एवं विमृश्य कुर्वतो दैवात् अर्थनाशेऽपि न कश्चित् अपराध इत्याह—स्पृहणीयेति । स्पृहणीयगुणैर्लोकश्लाघ्यगुणैः महात्मभिः सज्जनैः चरिते अनुष्ठिते वर्त्मनि आचारे मनोयच्छतां निदधतां सन्मार्गेण व्यवहरतामित्यर्थः । विधिहेतुर्दैवनिमित्तकः । "विधिर्विधाने दैवे च" इत्यमरः । अतएव आगसाम् अपराधानाम् अहेतुर्विनिपातोऽपि दैविकानर्थोऽपि । "विनिपातोऽवपाते स्यात् दैवादिव्यसनेऽपि च" इति विश्वः । समुन्नतेः अतिवृद्धेः समः तुल्यः । दैविकेषु पुरुषस्य अनुपालभ्यत्वादिति भावः । यथाह कामन्दकः—"यत् तु सम्यगुपक्रान्तं कार्य्यमेति विपर्य्ययम् । पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः" इति ॥ ३४ ॥

सम्प्रति यत् विमृश्यं तदाह—शिवमिति । जिगीषवः जयेच्छवः नृपा विजितक्रोधरया विजितक्रोधवेगाः सन्तः गरीयसीं प्रभूताम् अदूषितायतीम् अहतोत्तरकालां स्वन्ताम् इत्यर्थः, फलनिष्पत्तिं फलसिद्धिं विगणय्य फलवत्तं निश्चित्य इत्यर्थः । पौरुषं पुरुषकारं शिवम् अनुकूलम् औपयिकम् उपायम् । विनयादित्वात् स्वार्थे ठक् उपायात् ह्रस्वत्वञ्च । नयन्ति प्रापयन्ति, पौरुषम् उपायेन योजयन्ति इत्यर्थः । नानिश्चितफलं कर्म कुर्व्वीतेति भावः । यथाह कामन्दकः—"निष्फलं क्लेशबहुलं सन्दिग्धफलमेव च । न कर्म्म कुर्य्यात् मतिमान् सदा वैरानुबन्धि च" इति । नयतिः प्रापणार्थे द्विकर्मकः ; अत्र पौरुषस्य कर्त्तृस्थकर्मत्वेऽपि उपायस्य अतथात्वात् क्रोधं विनयत इत्यादिवत् "कर्त्तृस्थे चाशरीरे कर्मणि" इति आत्मनेपदं न भवति ॥ ३५ ॥

৩৪। শ্লাঘনীয় গুণ সম্পন্ন মহাত্মগণ বিচারিত পন্থানুসরণে নিবিষ্টচিত্ত জনসমূহের দৈবনিবন্ধন সংঘটিত অনর্থ অপরাধের হেতু হইতে পারে না পরন্তু সৌভাগ্যের তুল্য বলিয়াই পরিগণিত হয়।

৩৫। জয়েচ্ছু নৃপতিগণ ক্রোধাবেগ সংযত করিয়া, ফলসিদ্ধি অতিপ্রভূত ও পরিণামে ক্ষয়দোষ বিহীন এইরূপে বিচার পূর্ব্বক স্বীয় পুরুষকারকে যোগ্য উপায়ের সহিত মিলিত করিয়া দিয়া থাকেন।

३४। जो श्लाघनीय गुणसम्पन्न सज्जनोंके प्रवर्त्तित आचरणमें मन लगाते हैं, तो दैवनिबन्धन अनर्थ सङ्घटित होने पर भी, वह अपराधी नहीं होते और वह अनर्थ भी समृद्धिके समान गण्य हुआ करता है।

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥३६
बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः॥३७

अन्वयः। उदेतुमिच्छता पुरः रोषमयं तिमिरं धिया अपनेयम्। अंशुमता अपि प्रभया निशाकृतं तमः अविभिद्य न उदीयते ? वाच्य—उदेतुमिच्छन् अपनयेत् अंशुमान् उदेति ॥ [ अत्र दृष्टान्तालङ्कारः ]। ३६

अन्वयः। बलवान् अपि यः कोपजन्मनः अभिभवं न रुणद्धि स क्षयपक्ष ऐन्दवीः कला इव सकलाः शक्तिसम्पदः हन्ति ॥ वाच्य—बलवता अपि येन अभिभवः न रुध्यते, तेन क्षयपक्षेणेव हन्यन्ते ॥ [ श्लेषोपमानुप्राणितनिदर्शनालङ्कारौ ] ३७

यदुक्तं विजितक्रोधरया इति तदावश्यकमित्याह—अपनेयमिति। उदेतुम् अभ्युदेतुम् इच्छता पुरुषेण पुरः प्रथमं रोषमयं रोषात् आगतम्। "मयट् च" इति मयट्। तिमिरम् अज्ञानं धिया विवेकबुद्ध्या करणेन अपनेयम् अपनोद्यम्। तथाहि अंशुमतापि कर्त्रा प्रभया तेजसा करणेन निशाकृतं तमो ध्वान्तम् अविभिद्य न उदीयते, किन्तु विभिद्य एव इत्यर्थः। सूर्य्यस्य अपि एवं किमुत अन्येषाम् इति अपिशब्दार्थः। इणो भावे लट् ॥ ३६ ॥

ननु दुर्बलस्य एवम् अस्तु बलीयसस्तु क्रोधादेव कार्य्यसिद्धिरिति अत आह—बलवानिति। बलवान् सूरोऽपि यः कोपात् जन्म यस्य तस्य कोपजन्मनः। "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः। तमसो मोहस्य। कृद्योगात् कर्त्तरि षष्ठी। अभिभवम् आक्रान्तिं न रुणद्धि न निवारयति। स नृपः क्षयस्य पक्षः क्षयपक्षः कृष्णपक्षः ऐन्दवीः इन्दुसम्बन्धिनीः कला इव। "कला तु षोड़शो भागः" इत्यमरः। सकलाः समग्राः शक्तिसम्पदः प्रभुमन्त्रोत्साहशक्तीः तिस्रोऽपि हन्ति नाशयति। अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थम् एव इत्यर्थः। अत्र कालस्य सर्वकारणत्वात् क्षयपक्षस्य कलाक्षयकारित्वम् अस्ति एव तमसस्तु तत्कालविजृम्भणात् तथा व्यपदेशः ॥ ३७ ॥

৩৬। অভ্যুদয়লাভে ইচ্ছুক পুরুষকে প্রথমে বুদ্ধিদ্বারা রোষরূপ অন্ধকার দূর করিতে হইবে রশ্মিশালী অংশুমালীও স্বপ্রভাবদ্বারা নিশাকৃত অন্ধকার উচ্ছেদ না করিয়া উদয় লাভ করে না।

३५। जयेच्छु राजा रोषावेग संवरणपूर्व्वक प्रभूत फलसिद्धि और परिणाममें क्षयहीन गणनाकर स्वीय पुरुषकारको योग्य उपायके साथ काममें लाते हैं अर्थात् परिणाममें स्थायी और मङ्गलमय विपुल फल निश्चय न कर वह कार्य्यमें नहीं प्रवृत्त होते।

समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम्।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥३८

क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः ॥ ३९

अन्वयः। यश्च समवृत्तिः समये मार्दवम् उपैति (यश्च) (समये) तिग्मतां तनोति, स मेदिनीपतिः विवस्वान् ओजसा इव लोकम् अधितिष्ठति॥ वाच्य—येन समवृत्तिना उपेयते (येन) तिग्मता तन्यते तेन मेदिनीपतिना इव विवस्वता लोकः अधिष्ठीयते॥ [ श्लोपमालङ्कारः ] ३८

अन्वयः। श्रियां चिराय परिग्रहः क्व? दुष्टेन्द्रियवाजिवश्यता च क्व? हि (तथाहि) शरदभ्रचलाः बहुच्छलाः श्रियः चलेन्द्रियैः असुरक्षा (भवन्ति)॥ वाच्य—परिग्रहेण वश्यतया च (भूयते), चलाभिः बहुच्छलाभिः असुरक्षाभिः भूयते॥ ३९

विमृश्य कुर्वतः क्रियाप्रकारमाह—समेति। यः समा नातिमृदुः नातितिग्मा वृत्तिः यस्य स समवृत्तिः सन् समये सति अवसरे मार्दवं मृदुवृत्तित्वम् उपैति तिग्मतां तीक्ष्णवृत्तित्वं च तनोति स मेदिनीपतिः विवस्वान् इव सूर्य्य इव ओजसा तेजसा लोकम् अधितिष्ठति आक्रामति। सूर्य्योऽपि ऋतुभेदेन समवृत्तिः इत्यादि योज्यम् ॥ ३८ ॥

उक्तान्यथाकरणेऽनिष्टमाह—क्वेति। श्रियां सम्पदां चिराय बहुकालं परिग्रहः स्वायत्तीकरणं क्व। इन्द्रियाणि वाजिन इव इति उपमितसमासः। दुष्टानाम् अमार्गधाविनाम् इन्द्रियवाजिनां वश्यो वशङ्गतः तस्य भावः तत्ता

৩৭। যে পুরুষ পরাক্রমশালী হইয়াও ক্রোধোৎপন্ন অজ্ঞান তিমিরের প্রভাব তিরোধান করিতে পারে না, সে ব্যক্তি কৃষ্ণপক্ষ যেরূপ সমস্ত চন্দ্রকলার বিলোপ সাধন করে, সেইরূপ প্রভাবাদি সমগ্র শক্তিসম্পদ বিনষ্ট করিয়া থাকে।

৩৮। যেই পৃথিবীপতি নাতিতীক্ষ্ণ ও নাতিমৃদু, উপযুক্ত সময়ে মৃদুতা অবলম্বন করেন এবং সময়ে তেজঃ প্রদর্শন করেন তিনি সূর্য্য যেমন ঋতুভেদে যথাযোগ্য মৃদু ও তীক্ষ্ণ তেজদ্বারা জগৎ আক্রমণ করেন তেমন সমগ্র জগৎ অধিকৃত করিয়া থাকেন।

३६। अभ्युदयलाभका अभिलाषी पुरुष बुद्धि द्वारा पहले रोष अन्धकार दूर करता है। रश्मिशाली अंशुमाली भी आपन प्रभाव द्वारा निशाक्रान्त अन्धकार उच्छेदन कर उदित नहीं होते।

३७। जो पुरुष पराक्रमशाली हो कर भी कोपर्ज अज्ञान निवारण नहीं करते, वह जैसे कृष्णपक्ष सम्पूर्ण चन्द्रकलाको विनष्ट करता है, वैसे ही समस्त उत्साहशक्ति सम्पद विनाश किया करते हैं।

३८। जो समान बुद्धि है अर्थात् जिसका व्यवहार अति तीक्ष्ण भी नहीं, अति मृदु भी नहीं जो अवसर समझ कोमल और तीव्र व्यवहार किया करता है, सूर्य्य जैसे ऋतुभेदमें यथायोग्य मृदु और तीव्र तेज द्वारा जगत्पर आक्रमण करता है, वह राजा भी वैसेही अपने तेजसे सब लोगों पर आक्रमण किया करता है।

क्किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः।
क्रियते पतिरुच्चकैरपां भवता धीरतयाऽधरीकृतः॥ ४०

श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम्॥ ४१

अन्वयः। उपात्तरंहसः मनसः असामयिकं क्षोभं वितन्वता भवता धीरतया अधरीकृतः अपां पतिः किम् उच्चकैः क्रियते। वाच्य—वितन्वन् भवान् अधरीकृतवान् अपांपतिम्॥ ४०

अन्वयः। ये श्रुतम् अधिगम्य अपि शरीरजन्मनः रिपून् न विनयन्ते, ते खलु अचिराय सम्पदां चापलाश्रयम् अयशः जनयन्ति॥ वाच्य—यैः शरीरजन्मनः रिपवः न विनीयन्ते, तैः जन्यते॥ [ अत्रापि निदर्शनालङ्कारः ]॥ ४१

क्व। न उभयम् एकत्र तिष्ठति इत्यर्थः। कुतः? हि यस्मात् शरदभ्रवत् चलाः चञ्चलाः किञ्च बहुच्छला बहुव्यजा बहुरन्ध्रा इति यावत्। "छल तु स्खलिते व्याजे" इति विश्वः। श्रियः सम्पदः। चलेन्द्रियैः असुरक्षा रक्षितुमशक्याः। कथञ्चित् प्राप्ता अपि श्रियो न अविनीतेषु तिष्ठन्ति इत्यर्थः। वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ३९॥

क्रोधस्य दुष्टताम् उक्त्वा तस्य त्यागम् उपदिशति—किमिति। उपात्तरंहसः प्राप्तत्वरस्य मनसः। समयोऽस्य प्राप्तः सामयिकः। "समयस्तदस्य प्राप्तम्" इति ठञ्। स न भवति इति असामयिकः तम् अप्राप्तकालं क्षोभं वितन्वता भवता धीरतया धैर्य्यगुणेन। "मनसो निर्विकारत्वं धैर्य्यं सत्स्वपि हेतुषु" इति रसिकाः। अधरीकृतः तिरस्कृतः प्राक् इति शेषः। अपांपतिः समुद्रः किं किमर्थम् उच्चकैः अधिकः क्रियते? न पराजितं कुतः उच्चकैः कुर्य्यादिति भावः। अत्र वितन्वता इति भीमविशेषणत्वेन पदार्थस्य उच्चैःकरणे हेतुत्वात् काव्यलिङ्गमलङ्कारः॥ ४०॥

৩৯। দুষ্ট ইন্দ্রিয়রূপ অশ্বগণের বশ্যতাই বা কোথায়? দীর্ঘকাল ব্যাপিয়া রাজশ্রীর অধিকারই বা কোথায়? চঞ্চলেন্দ্রিয়ব্যক্তিগণ বহুচ্ছলা শারদমেঘবৎ চঞ্চলা লক্ষ্মীকে সহজে রক্ষা করিতে পারে না।

৪০। ধৈর্য্যগুণ সম্পন্ন হইয়াও ত্বরমাণ মনের অসময়ে ক্ষোভ জন্মাইয়া তুমি কি নিমিত্ত, পূর্ব্বে যে সমুদ্রকে ধৈর্য্যগুণে তিরস্কৃত করিয়াছ, তাহাকে অদ্য উচ্চ স্থান প্রদান করিতেছ? অর্থাৎ তোমা হইতে গৌরবান্বিত করিতেছ।

३९। दीर्घकाल व्यापी इन्द्रियरूप अश्वगणकी वश्यता कहां?, सम्पदकी चिरस्थिरता कहां? दुष्ट इन दोनोंका एक जगह रहना असम्भव है, चञ्चलेन्द्रिय लोग बहुच्छला शारदमेघवत् चञ्चल बहुच्छिद्र सम्पद राशि को अति कष्टसे भी रक्षा करनेमें समर्थ नहीं होते।

**अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी ।**
**जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति ॥ ४२ ॥**

अन्वयः । अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी अक्षमा भवन्तं जनवत् नयसिद्धेः अपनेतुं न अर्हति ॥ वाच्य—साधनया तापन्या अक्षमया भवान् अर्ह्यते ॥ [ अर्थोपमालङ्कारः ] ॥ ४२

श्रुतमिति । किञ्च ये श्रुतं शास्त्रमधिगम्यापि शरीरजन्मनः शरीरप्रभवान् रिपून् कामक्रोधलोभमोहमदमात्सर्य्यादीन् न विनयन्ते न नियच्छन्ति । "कर्त्तृस्थे चाशरीरे कर्मणि" इति आत्मनेपदम् । ते खलु अचिराय झटिति सम्पदां श्रियां चापलाश्रयम् अस्थैर्य्यनिबन्धनम् अयशो दुष्कीर्त्तिं जनयन्ति । आश्रयदोषात् अस्थैर्य्यं सम्पदां न स्वदोषात् इत्यर्थः । अजितारिषड्वर्गस्य कुतः सम्पद इति भावः ॥ ४१ ॥

तथा क्रोधात् कार्य्यहानिः इत्याशयेन आह—अतिपातितेति । अतिपातितानि अतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि च यया सा तथोक्ता । तापयतीति तापनी । कर्त्तरि ल्युट्, टित्वात् ङीप् । स्वस्य यच्छरीरम् इन्द्रियवर्गश्च तयोः तापनी अक्षमा क्रोधः, भवन्तं जनवत् पृथग्जनमिव । "तेन तुल्यम्" इति वतिप्रत्ययः । तेन इवार्थो लक्ष्यते । "तद्धितश्चासर्वविभक्तिः" इति अव्ययम् । नयसिद्धेः नयसाध्यफलात् अपनेतुं पृथक्कर्त्तुं नार्हति । असमयक्रोधस्य आत्मसन्तापातिरिक्तं फलं नास्ति इत्यर्थः ॥ ४२ ॥

৪১। যাহারা শাস্ত্র অধ্যয়ন করিয়াও শরীরস্থ রিপুদিগকে সংযমিত করিতে পারে না, তাহারা নিশ্চিতই অচিরে সম্পদ্ বিনাশ নিবন্ধন অপযশ অর্জ্জন করিয়া থাকে।

৪২। যে ক্রোধ কাল ও সাধনের অতিক্রম করে, যাহা নিজদেহ ও ইন্দ্রিয়গণের সন্তাপক, সেই ক্রোধের বশে সাধারণ ব্যক্তির ন্যায় তোমার নয়সিদ্ধি হইতে বিচ্যুতি ঘটা উচিত নহে।

४०। तुमने धैर्य्यगुण-सम्पन्न होने पर भी चञ्चलमन द्वारा असमयमें क्रोध उत्पन्न किया। तुम्हारे द्वारा पहले धैर्य्यगुणमें तिरस्कृत सरित्पति सागरको इस समय कौन तुमसे गौरवान्वित करा रहा है ?

४१। जो शास्त्रका अध्ययन कर भी शरीरोत्पन्न शत्रुओंका संयमित नहीं करता, वह मनुष्य निश्चय ही शीघ्र सम्पद्के विनाशके निवन्धनके अपयशका अर्ज्जन किया करता है।

४२। जो क्रोधकाल साधनका अतिक्रम करता और जो अपनी देह और इन्द्रियोंको परितापप्रद है, वही क्रोध साधारणव्यक्तिकी भांति तुम्हें नयसाध्य फलसे विच्युत करसकता नहीं।

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः।
अनपायि निवर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥४३
प्रणतिप्रवणान् विहाय नः सहजस्नेहनिबद्धचेतसः।
प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः ॥४४॥

अन्वयः। आयतेः भृशम् उपकारकं, भूरिणः कर्मफलस्य प्रसवः, द्विषां अनपायि निवर्हणं तितिक्षासमं साधनं न अस्ति॥ वाच्य—उपकारकेण प्रसवेण (भूयते), अनपायिना निवर्हणेन तितिक्षासमेन साधनेन न भूयते॥ ४३

अन्वयः। मानभृतां प्रथमे वृष्णयः सहजस्नेहनिबद्धचेतसः प्रणतिप्रवणान् नः विहाय सदा सुयोधनं न प्रणमन्ति॥ वाच्य—प्रथमैः वृष्णिभिः सुयोधनः न प्रणम्यते॥ ४४

दुष्टः क्रोध इत्युक्तम्। अथ क्षमाया गुणानाह—उपकारकमिति। आयतेः उत्तरकालस्य भृशम् अत्यन्तम् उपकारकं स्थिरफलहेतुरित्यर्थः। भूरिणः प्रभूतस्य कर्मफलस्य प्रसूयतेऽनेनेति प्रसवः कारणम्। अपायि न भवतीति अनपायि स्वयम् अविनश्यदेव द्विषां निवर्हणं विनाशकम् एवं-गुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति। "क्षान्तिः क्षमा तितिक्षा च" इत्यमरः। "तिज निशाने" इति धातोः "गुप्तिज्किद्भ्यः सन्" इति क्षमार्थे सन्प्रत्ययः। तितिक्षासममित्यनुक्तोपमेया समास आर्थी लुप्तोपमा भृशा-यत्यनपायिशब्दैः साधनान्तरवैलक्षण्याद्व्यतिरेकस्य व्यज्यते। भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्य्यये च व्यतिरेकः॥ ४३॥

ननु तितिक्षया कालक्षेपे दुर्योधनः सर्वान् राज्ञो वशीकुर्य्यादित्यत्राह—प्रणतीति। सहजस्नेहेन अकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मासु गाढं लग्न-चित्ताः। सुयोधने तु न तथेति भावः। किञ्च मानभृताम् अहङ्कारिणां प्रथमे अग्रेसराः। सुयोधनस्तु ततोऽपीति भावः। वृष्णयो यादवाः प्रणतिप्रवणान् प्रणामपरान्। सुयोधनस्तु न तथेति भावः। नोऽस्मान् विहाय सुयोधनं सदा न प्रणमन्ति न नमन्ति नानुसरन्ति, किन्तु कार्य्यकाले तत्क्षयन्ति एव इत्यर्थः। सति यादवविग्रहे न किञ्चित् अस्माकमसाध्यं भवेदिति भावः। अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ४४॥

৪৩। যাহা উত্তরকালে অত্যন্ত উপকারক, বিপুল কর্ম্মফলের নিরতিশয় হেতু, শত্রুগণের অব্যর্থ বিনাশক এবংবিধ তিতিক্ষার সমান উপায় আর নাই।

४३। जो उत्तरकालमें अत्यन्त उपकारक है, व विपुल कर्मफलका निरतिशय हेतु है, जो स्वयं उपायहीन अथच शत्रु विनाशन हैं, ऐसी क्षमाके समान दूसरा उपाय नहीं है।

सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये।
विनयादिव यापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये ॥ ४५ ॥
अभियोग इमान् महीभुजो भवता तस्य कृतः कृतावधेः।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव ॥ ४६

अन्वयः। एषां ( वृष्णीनां ) ये सहजाः सुहृदः तथा इतरे ये एषां मतं न विलङ्घयन्ति, ते ( उभयेऽपि नृपाः ) आत्मसिद्धये विनयादिव धृतराष्ट्रात्मजं यापयन्ति ॥ वाच्य—यैः सहजैः सुहृद्भिः ( तथा ) इतरैः ( न ) विलङ्घ्यते, तैः धृतराष्ट्रात्मजः याप्यते ॥ ४५

अन्वयः। कृतावधेः तस्य ( दुर्योधनस्य ) भवता कृतः अभियोगः इमान् महीभुजः हरिदश्वः कमलाकरान् इव समुत्पतन् प्रविघाटयिता ॥ वाच्य—कृतेन अभियोगेन समुत्पतता हरिदश्वेन कमलाकरा इव इमे प्रविघाटयितारः ॥ [ अत्र लुप्तोपमालङ्कारः ] ॥ ४६

किञ्च कारणान्तरमाह—सुहृद इति। किञ्च एषां वृष्णीनां ये सहजाः सहजाताः मातृपितृपक्ष्या इत्यर्थः। "अन्येष्वपि दृश्यते" इति डप्रत्ययः। सुहृदो मित्राणि तथा इतरे कृत्रिमसुहृदश्च एषां मतं वृष्णिपक्षं न विलङ्घयन्ति न अतिक्रामन्ति। ते द्वयेऽपि नृपाः दुर्य्योधनोपजीविनोऽपीति भावः। आत्मसिद्धये आत्मजीवनार्थं धृतराष्ट्रात्मजं दुर्य्योधनं विनयात् आनुकूल्यादिव यापयन्ति कालं गमयन्ति। कार्य्यकाले तु वृष्णिपक्षप्रवेशिन एव इत्यर्थः। यातेर्ण्यन्ताल्लट्। "अर्त्तिह्री" इत्यादिना पुगागम ॥ ४५ ॥

किञ्च नायमभियोगकाल इत्याशयेनाह—अभियोग इति। कृतावधेः परिभाषितकालस्य। "अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च" इति विश्वः। तस्य सुयोधनस्य, कर्म्मणि षष्ठी। भवता कृतः[अवधित इति]अवधि·

৪৪। অভিমানিগণের অগ্রণী বৃষ্ণিবংশসম্ভূত যাদবগণ বিনয় ও ভক্তিবশতঃ আমাদের প্রতি নিবিষ্টচিত্ত, আমরা তাঁহাদের প্রণাম পরায়ণ, তাঁহারা আমাদিগকে পরিত্যাগ করিয়া সদা সুযোধনের আজ্ঞানুবর্ত্তী হইবেন না।

৪৫। যাদবগণের সহজ ( মাতৃ, পিতৃ পক্ষীয় ) মিত্রগণ এবং যাহারা বৃষ্ণিদিগের মতের উল্লঙ্ঘন করেন না, তাঁহারা স্বীয়কার্য্য সাধনার্থ বিনীতভাব দেখাইয়া ধৃতরাষ্ট্র তনয়কে কাল অতিবাহিত করাইতেছেন।

४४। अभिमानियोंमें अग्रणी वृष्णिवंश सम्भूत यादव अकृत्रिम स्नेहके वश हमारे प्रति निविष्टचित्त हो गये हैं, हम उनके प्रणामपरायण हैं, वह हमें परित्याग कर सुयोधनका अनुसरण नहीं करेंगे।

४५। यादवोंके सहजात ( मातृपितृपक्षीय ) मित्रगण और जो यादवोंका अभिमत अतिक्रम करते नहीं ; वह अपना कार्य्यसाधन करने के लिये विनयवश ही धृतराष्ट्रतनय दुर्य्योधनका अनुगमन कर रहे हैं।

उपजापसहान् विलङ्घयन्
स विधाता नृपतीन् मदोद्धतः।
सहते न जनोऽप्यधःक्रियां
किमु लोकाधिकधाम राजकम् ॥ ४७ ॥

अन्वयः। मदोद्धतः स (दुर्य्योधनः) नृपतीन् विलङ्घयन् उपजापसहान् विधाता, (अवमानितः) जनः अपि अधःक्रियां न सहते, लोकाधिकधाम राजकं किमु ? वाच्य—मदोद्धतेन विलङ्घयता (दुर्य्योधनेन) उपजापसहाः विधातारः, जनेन अधःक्रिया न सह्यते, लोकोत्तरधाम्ना राजकेन किमु ॥ [ अत्रार्थापत्तिरलङ्कारः ] ॥ ४७

मनपेक्ष्येति शेषः अभियोगः आक्रमणभिभव इति यावत्। "अभियोगस्तु शपथे स्यादार्द्रे च पराभवे" इति विश्वः। इमान् पूर्वोक्तान् महीभुजो राज्ञो हरिदश्वः उष्णरश्मिः कमलाकरानिव समुत्पतन् उद्यन् एव प्रविघाटयिता भेत्स्यति। घाठयतेर्भौवादिकाल्लुट्। चौरादिकस्य तु "मितां ह्रस्वः" इति ह्रस्वत्वं स्यात् ॥ ४६ ॥

अथ न ये द्विषिपक्षास्तान् प्रत्याह—उपजापेति। मदोद्धतः स दुर्य्योधनो नृपतीन् अन्यान् विलङ्घयन् मदात् अवमानयन्। सहन्त इति सहाः, पचाद्यच्। उपजापस्य सहान् भेदयोग्यान्। "समौ भेदोपजापौ" इत्यमरः। विधाता विधास्यति। विपूर्वस्य दधातेर्लुट्। अवमानितो जनः सुभेद्य इति भावः; न च ते सहिष्णव इत्याह—जनः प्राकृतोऽपि अधःक्रियाम् अपमानं न सहते। लोकाधिकधाम लोकोत्तरप्रतापं राजकं राजसमूहः। "गोत्रोक्षोष्ट्र" इत्यादिना वुञ्प्रत्ययः। किमु सहते इति किं वक्तव्यमित्यर्थः। तथा सति कृत्स्नमेव राजमण्डलम् अस्मानेव अवलम्बिष्यते इति भावः ॥४७

৪৬। দুর্য্যোধন সময় নির্দ্দেশ করিয়াছে—তুমি যদি তাহার প্রতি অকালে যুদ্ধ ঘোষণা কর, তাহা হইলে তোমার এই যুদ্ধোদ্যম সূর্য্য যেমন উদিত হইয়া কমলদিগের ভেদ জন্মাইয়া দেয় তদ্রূপ এই (পূর্ব্বোক্ত) রাজগণের মধ্যে ভেদ জন্মাইয়া দিবে।

৪৭। মদোদ্ধত দুর্য্যোধন নৃপতিদিগকে অবমানিত করিয়া ভেদযোগ্য করিয়া তুলিবে। সাধারণ মানবও যখন অবমাননা সহ্য করে না, তখন লোকাতিশায়িপ্রতাপ সম্পন্ন রাজগণ কেন সহ্য করিবে ?

४६। हमारे वनवासरूप निर्द्देशक सुयोधनके प्रति तुम्हारा यह अकालयुद्धोद्यम ही उसीको उदीयमान सूर्य्य जैसे कमलाकरको वैसे ही सब नृपतिओंको हमारे विपक्षमें विच्छिन्न कर दे।

४७। मदोद्धत दुर्य्योधन राजाओंको अवमानना करेगा, वह उस अपमानसे असहिष्णु

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८
मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढ़ता ।
अतिमूढ़ उदस्यते नयात् नयहीनादपरज्यते जनः ॥ ४९ ॥

अन्वयः । असमापितकृत्यसम्पदाम् अभिमानशालिनां विभूतयः तावता विनयेन हतवेगं मदम् उत्तम्भयितुं प्रभवन्ति ॥ वाच्य—विभूतिभिः प्रभूयते ॥ [ अत्राप्रस्तुतप्रशंसालङ्कारः ] ॥ ४८

अन्वयः । मदमानसमुद्धतं नृपं मूढ़ता नियमेन न वियुङ्क्ते, अतिमूढ़ो नयात् उदस्यते । नय-हीनात् जनः अपरज्यते ॥ वाच्य—मूढ़तया…समुद्धतः नृपः वियुज्यते [ अतिमूढ़ेन उदस्यते ] जनेन अपरज्यते । [कर्मकर्त्तरि वाच्यपरिवर्त्तनं नास्तीति केषां मतम् ॥ अत्र कारणमालालङ्कारः] ॥ ४९

ननु 'सखी'नियेत्यादिवनेचरोक्त्या तस्य मदसम्भावनापि कथमित्यत्राह—असमापितेति । असमापितकृत्यसम्पदाम् अकृतकृतयानाम् अभिमानशालिनाम् अहङ्कारिणां विभूतयः सम्पद एव तावता स्वल्पेन विनयेन, कार्य्यवशात् आरोपितेनेति शेषः । हतवेगं प्रतिबद्धवेगं न तु स्वरूपतो हतं मदम् उत्तम्भयितुं वर्द्धयितुं प्रभवन्ति । सर्वथा दुर्जनं सम्पदो विकारयन्ति इति भावः ॥४८

अथ मदस्य अनर्थहेतुतां युग्मेनाह—मदेति, अपरागेति च । मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढ़ता कार्य्यापरिज्ञानं नियमेन अवश्यं न वियुङ्क्ते न विमुञ्चति अतिमूढ़ो नयात् नीतिमार्गात् उदस्यते उत्क्षिप्यते । कर्मकर्त्तरि लट् । नयहीनात् जनो लोकोऽपरज्यतेऽपरक्तो भवति । "स्वरितजितः" इत्यादिना आत्मनेपदम् ॥ ४९ ॥

४৮। অকৃত কৃত্য অহঙ্কারী ব্যক্তিদিগের মত্ততা কার্য্যানুরোধে সামান্য বিনয় ও শিষ্টাচারদ্বারা সংরুদ্ধবেগ হইলেও তাহাদের সম্পদই সেই মত্ততাকে বর্দ্ধিত করিয়া থাকে।

৪৯। দর্প ও অহঙ্কারে সমুদ্ধত নৃপতিকে মূঢ়তা কখনই পরিত্যাগ করে না। অতিমূঢ় ব্যক্তি নীতিপথ হইতে ভ্রষ্ট হইয়া থাকে। নীতি বিহীন ব্যক্তির প্রতি লোকে বিরাগবান্ হইয়া থাকে।

होकर ही दुर्य्योधनका पच्च परित्याग करेंगे । साधारण मनुष्य भी जब अपमान नहीं सह सकता, तब लोकातिशयि प्रताप नृपमण्डलीकी बात अधिक क्या कही जाये ।

४८। अकृतकृत्य अहङ्कारी लोगोंकी मत्तता कार्य्यानुरोधमें अत्यल्प विनय और शिष्टाचार द्वारा प्रतिबद्ध हो जाती है, किन्तु उसकी सम्पद उस मत्तता को वर्द्धित किया ही करती है ।

४९। दर्प और अहङ्कारमें समुद्धत राजाको मूर्खता कभी परित्याग करती नहीं, अतिमूढ़ व्यक्ति नीतिमार्गसे दूर जा भटकताहै, और नीतिहीन मनुष्यके प्रति सभी विरक्त हो जाते हैं।

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥ ५०

अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः ॥ ५१

अन्वयः। अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः महानपि रिपुः तरुवत् सहिष्णुना उन्मूलयितुं सुकरः। वाच्य—रितेन···सन्ततिना महता रिपुणा सुकरेण (भूयते)॥ ५०

अन्वयः। अणुः अपि अन्तःप्रकृतिप्रकोपजः विग्रहः प्रभुम् उपहन्ति। हि (तथाहि) तरुशाखान्तनिघर्षजः अनलः भूधरं अखिलं हिनस्ति। वाच्य—अणुना अपि···कोपजेन विग्रहेण प्रभुः उपहन्यते···निघर्षजेन अनलेन भूधरः हिंस्यते॥ ५१

अपरागोऽप्रीतिः द्वेष इति यावत्। समीरण इव तेनेरितः चोदितः अतएव क्रमेण शीर्णा शीर्णीभूता आकुला चला च मूलसन्ततिः प्रकृत्यादि-स्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः। "मूलं वशीकृते स्वीये शिफा-ताराऽन्तिकादिषु" इति वैजयन्ती। रिपुर्महानपि तरुवत् वृक्ष इव सहिष्णुना क्षमावता उन्मूलयितुम् उद्धर्त्तुं सुकरः सुसाध्यः सुकरोन्मूलन इत्यर्थः। अत्र मदादेः पूर्वपूर्वस्य उत्तरोत्तरं प्रति कारणत्वात् कारणमाला तरुवदित्युपमा चेति द्वयोः संसृष्टिः॥ ५०॥

ननु अन्तर्भेदमात्रेण कथं सुसाध्यः तत्राह—अणुरिति। अणुः अल्पोऽपि अन्तःप्रकृतिप्रकोपजोऽन्तरङ्गामात्याद्यपरागसमुत्थः। "प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे। छन्दःकारणगुह्येषु जन्त्वमात्यादिकेष्वपि" इति वैजयन्ती। विग्रहो वैरं प्रभुम् उपहन्ति नाशयति। अत्र दृष्टान्त माह—तरुशाखान्तानां निर्घर्षो घर्षणं तज्जोऽनलोऽग्निः। भूधरं गिरिम् अखिलं साकल्येन हिनस्ति हि दहति इत्यर्थः। अत्र उपमानोपमेयसमानधर्म्माणां प्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कारः॥ ५१॥

৫০। সমীরণ বেগে সঞ্চালিত এবং ক্রমে শীর্ণবিচ্ছিন্ন মূল বিশাল তরুবরও যেমন ধীর ব্যক্তি দ্বারা অনায়াসে উৎপাটিত হইতে পারে; সেইরূপ লোকের বিরাগভাজন, প্রজাদি স্বজনবর্গ যাহার প্রতি ক্রমে অনাদর ও শ্রদ্ধাহীন প্রভাসম্পন্ন নৃপতিও ধৈর্য্যশালী প্রতিপক্ষ দ্বারা সহজেই উন্মূলিত হইতে পারে।

৫১। অমাত্যাদি প্রকৃতিবর্গের প্রকোপ হইতে সমুদ্ভূত অত্যল্পমাত্র বিরোধ ও নৃপতির বিনাশ সাধন করিয়া থাকে। তরুশাখার পরস্পরসংঘর্ষণে সমুত্থিত দাবানল সমগ্র ভূধরকে দগ্ধ করিয়া থাকে।

५०। विद्वेषवश जिसकी प्रजादि आकुल और विचलित हों, उसकी अति प्रबल होने पर भी क्षमाशील व्यक्ति उसे अनायास उन्मूलित करनेमें समर्थ होता है।

५१। अमात्यादि अन्तरङ्गोंके कोपसे समुद्भूत अति अल्पमात्र वैर भी प्रभुको विनष्ट करता है, क्योंकि तरुशाखाके परस्पर घर्षणसे उत्थित अनल निःशेषरूपसे पर्व्वतको दग्ध कर दिया करती है।

मतिमान् विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ता ह्यविनीतसम्पदः ॥ ५२
लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥ ५३ ॥
अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छितः तमभीयाय पराशरात्मजः ॥ ५४

अन्वयः । मतिमान् विनयप्रमाथिनः द्विषः समुन्नतिं समुपेक्षेत, तादृगन्तरे सुजयः खलु, हि (तथाहि) अविनीतसम्पदः विपदन्ताः । वाच्य—मतिमता समुन्नतिः समुपेक्ष्येत, सुजयेन (भूयते) सम्पद्भिः विपदन्ताभिः (भूयते) ॥ [ अत्राप्रस्तुतप्रशंसार्थान्तरन्यासावलङ्कारौ ] ॥ ५२

अन्वयः । लघुवृत्तितया बहिः अन्तः च भिदां गतं, नृपस्य मण्डलम् अनन्तरः आपगारयः शिथिलं कूलम् इव अभिभूय हरति । वाच्य—अनन्तरेण अपगारयेण इव क्रियते ॥ [ उपमालङ्कारः ] ॥ ५३

अन्वयः । इति आकुलम् अर्जुनाग्रजम् (भीमसेनं) नयवर्त्म अनाकुलम् अनुशासतं तं (युधिष्ठिरं) पराशरात्मजः स्वयम् अभिवाञ्छितः अर्थ इव अभीयाय । वाच्य—पराशरात्मजेन अभिवाञ्छितेन अर्थेन इव अनुशासत्/सः (युधिष्ठिरः) अभीये ॥ [ उपमाप्यत्रालङ्कारः ] ॥ ५४

तथापि कथं वर्द्धमानं शत्रुम् उपेक्षेत इति आशङ्क्य दुर्विनीतत्वात् इति आह—मतिमानिति । मतिमान् प्राज्ञः विनयं प्रमथ्नाति त्यजति इति विनयप्रमाथिनो दुर्विनीतस्य द्विषः समुन्नतिं वृद्धिं समुपेक्षेत । उपेक्षायाः फलमाह—तादृगविनीतोऽन्तरे क्वचित् रन्ध्रे सुजयः सुखेन जेतुं शक्यः खलु । हि यस्मात् अविनीतसम्पदो विपदन्ता अनर्थोदर्काः ॥ ५२ ॥

कथं दुर्विनीतस्य शत्रोः सुजयत्वमित्याशङ्क्य भेदजर्जरितत्वात् इति आह—लघ्विति । लघुवृत्तितया स्वस्य दुर्वृत्तरूपतया बहिर्मित्रादिजनपदे अन्तरमात्यादिषु च भिदां भेदं गतम् । "षिद्भिदादिभ्योऽङ्" इति अङ् प्रत्ययः । नृपस्य मण्डलं राष्ट्रम् अनन्तरः सन्निहितो जिगीषुः आपगारयो नदीवेगः शिथिलम् अन्तर्भेदजर्जरं कूलमिव अभिभूय आक्रम्य हरति ॥ ५३ ॥

৫২। মতিমান্ ব্যক্তি দুর্বিনীত শত্রুর উন্নতি উপেক্ষা করিতে পারেন। তাদৃশ বিনয়হীন শত্রু কোনও রন্ধ্র উপস্থিত হইলে, অনায়াসে জয় করিতে পারা যায়; যেহেতু বিপদই অবিনীত ব্যক্তির সম্পদের পরিণাম।

५२। मतिमान् व्यक्ति दुर्विनीत शत्रुकी समुन्नतिकी उपेक्षा करेगा, क्योंकि ऐसे विनयरहित शत्रुका कोई न कोई छिद्र पा उसे अनायास जीत सकते हैं ; विनेपकर विपद ही अविनीत व्यक्तिके सम्पदका परिणाम होती है।

मधुरैरवशानि लम्भयन् अपि तिर्य्यञ्चि शमं निरीक्षितैः।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥५५॥
सहसोपगतः सविस्मयं तपसां सूतिरसूतिरापदाम्।
ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसञ्चयः ॥५६॥

अन्वयः। अवशानि तिर्य्यञ्चि अपि मधुरैः निरीक्षितैः शमं लम्भयन् परितः पटु एनसां दहनं विलोकनक्षमं धाम बिभ्रत्॥ वाच्य—लम्भयन्तं बिभ्रतम्॥ ५५

अन्विति। इति इत्थम् आकुलम् अरिनिकारस्मरणात् क्षुभितम् अर्जुनाग्रजं भीमसेनं नयवर्त्म नीतिमार्गम् अनाकुलम् असङ्कीर्णं यथा तथा अनुशासतम् उपदिशन्तम्। "जक्षित्यादयः षट्" इत्यभ्यस्तात्‌क्षतुर्नुमभावः। तं युधिष्ठिरं पराशरस्य आत्मजः पुत्रः वेदव्यासः। स्वयमभिवाञ्छितोऽर्थ इव साक्षात् मनोरथ इव इति उत्प्रेक्षा। अभीयाय प्राप्तः॥ ५४॥

अथ युग्मेनाह—मधुरैरिति। मधुरैः शान्तैः निरीक्षितैः अवलोकनैः। नपुंसके भावे क्तः। न विद्यते वशम् आयत्तत्वं येषां तानि अवशानि प्रतिकूलानि। "वशमायत्ततायां च" इति विश्वः। तिर्य्यञ्चि मृगपक्ष्यादीनि अपि शमं शान्तिं लम्भयन् प्रापयन्। "लभेश्च" इति नुमागमः। "गत्यर्थ" इत्यादिना द्विकर्मकत्वम्। परितः पटु उज्ज्वलम् एनसाम्। दह्यतेऽनेनेति दहनं निवर्त्तकं तथापि विलोकनक्षमं दर्शनीयम् वह्न्यादितो विलक्षणमिति भावः। धाम तेजो बिभ्रत्॥ ५५॥

৫৩। সন্নিহিত নদীবেগ যেমন অন্তঃশিথিল কূল আক্রমণ করিয়া যায়, সেইরূপ নীচ আচরণ হেতু বাহিরে ও অন্তরে ভেদপ্রাপ্ত নৃপতির রাষ্ট্রমণ্ডল, সন্নিহিত বিজিগীষু অভিভূত করিয়া অপহরণ করিয়া থাকে।

৫৪। এইরূপে শত্রুর কার্য্য স্মরণে ক্ষুভিতচিত্ত অর্জ্জুনাগ্রজকে সম্যকভাবে নীতিপথের উপদেশ অর্পণের পর যুধিষ্ঠির সমীপে পরাশরতনয় ব্যাস সাক্ষাৎ অভিলষিত অর্থের ন্যায় স্বয়ং সমাগত হইলেন।

৫৫। যিনি প্রশান্ত দৃষ্টিপাতে প্রতিকূল পশুপক্ষিদিগকেও শান্তভাব পাওয়াইতেছেন; কলুষ-নাশন সমুজ্জ্বল অথচ দর্শনক্ষম তেজোরাশির আশ্রয় সেই তপোধনকে নৃপতি দর্শন করিলেন।

५३। सन्निहित नदीवेग जैसे अन्तःशिथिल कूल आक्रमणकर उसे हरण करता है, वैसे ही नीचव्यवहार वशसे बहिर्में और अन्तर्में भेदप्राप्त नृपतिको राष्ट्रमण्डल, सन्निहित विजिगीषु अभिभूतकर अपहरण किया करता है।

५४। ऐसे शत्रुके कार्य्यस्मरणमें क्षुभितचित्त अर्ज्जुनाग्रज भीमसेनके प्रति सम्यक्‌रूप नीतिपथके उपदेश अर्पण किया युधिष्ठिरके समीप पराशरतनय व्यास साक्षात् अभिलषित प्रयोजनकी भांति समागत हुए।

५५। जो प्रसन्न दृष्टिपातसे प्रतिकूल मृगपक्षियोंने भी शान्तभाव प्राप्त किया। उस समय

अथोच्चकैरासनतः परार्द्ध्यात्
उद्यन् स धूतारुणवल्कलाग्रः।
रराज कीर्णाकपिशांशुजालः
शृङ्गात् सुमेरोरिव तिग्मरश्मिः॥ ५७॥

अवहितहृदयो विधाय सोऽर्हाम्
ऋषिवदृषिप्रवरे गुरूपदिष्टाम्।

अन्वयः। सहसा उपगतः तपसां सूतिः आपदाम् असूतिः स मुनिः वपुष्मान् पुण्यसञ्चयः इव जगतीभुजा सविस्मयं ददृशे॥ वाच्य—उपगतं तपसां सूतिम् आपदाम् असूतिं तं मुनिं वपुष्मन्तं पुण्यसञ्चयं जगतीभुक् ददर्श॥ [अत्रोत्प्रेक्षालङ्कारः]॥ ५६

अन्वयः। अथ उच्चकैः परार्द्ध्यात् आसनतः उद्यन् धूतारुणवल्कलाग्रः स कीर्णाकपिशांशुजालः सुमेरोः शृङ्गात् (उद्यन्) तिग्मरश्मिः इव रराज॥ वाच्य—उद्यता धूतारुणवल्कलाग्रेण तेन···जालेन तिग्मरश्मिना इव॥ [अत्राप्युत्प्रेक्षालङ्कारः]॥ ५७

सहसेति। पुनः सहसा उपगतः अकस्मात् आगतः तपसां सूतिः प्रभवः आपदाम् असूतिः अप्रभवः निवर्त्तक इति यावत्। स मुनिर्व्यासः वपुष्मान् देहधारी पुण्यसञ्चयः पुण्यराशिरिव इति उत्प्रेक्षा, जगतीभुजा राज्ञा सविस्मयं ददृशे दृष्टः॥ ५६॥

अथेति। अथ दर्शनानन्तरम्। उच्चकैः उन्नतात् परार्द्ध्यात् श्रेष्ठात् "अर्द्धाद्यत्" "परावराधमोत्तमपूर्वाच्च" इति यत्प्रत्ययः। आसनतः सिंहासनात् उद्यन् उत्तिष्ठन् अतएव धूतानि कम्पितानि अरुणानि वल्कलाग्राणि यस्य स तथोक्तः। स नृपः कीर्णं विस्तृतम् आकपिशम् अंशुजालं यस्य स तथोक्तः। सुमेरोः शृङ्गादुद्यन् तिग्मरश्मिरिव रराज॥ ५७॥

৫৬। তপস্যার আকর, বিপদের অহেতু, সহসা সমাগত দেহধারী পুণ্যরাশির ন্যায় সেই বেদব্যাসকে যুধিষ্ঠির সবিস্ময়ে নিরীক্ষণ করিলেন।

৫৭। অনন্তর উন্নত ও মহোজ্জ্বল, শ্রেষ্ঠ সিংহাসন হইতে উত্থিত হইয়া নৃপতি ঈষৎ কম্পিতবল্কলাগ্রে লোহিতবর্ণ প্রভা বিকীর্ণ করিয়া সুমেরুর অগ্রভাগ হইতে উদ্গত দিবাকরের ন্যায় শোভা প্রাপ্ত হইয়াছিলেন। उन्होंने ऐसी ही कलुष-नाशनज्योति धारण की थी, कि अनलतुल्य होकर भी वह अवलोकनके योग्य हुई।

५६। तपस्याकी आकर, विपदकी अहेतु, सहसा समागत देहधारी पुण्यराशि जैसे उन व्यासदेवको युधिष्ठिरने विस्मयके साथ देखा।

५७। इसके बाद, उन्नत और महोज्ज्वल उत्तम सिंहासनसे उत्थित होकर नृपति ईषत् कम्पित वल्कलाग्रका लोहितवर्ण प्रभाविकीर्ण किया सुमेरुके अग्रभागसे उद्गत सूर्य्यकीसी शोभा धारण की।

तदनुमतमलञ्चकार पश्चात्
प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ५८ ॥
व्यक्तोदितस्मितमयूखविभासितोष्ठ-
स्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः ।
तन्वन्तमिद्धमभितो गुरुमंशुजालं

अन्वयः। अवहितहृदयः स नरेन्द्रः ऋषिप्रवरे ऋषिवत् गुरुपदिष्टाम् अर्हां विधाय पश्चात् तदनुमतम् आसनं प्रशमः श्रुतम् इव (आसनम्) अलञ्चकार॥ वाच्य—अवहितहृदयेन तेन नरेन्द्रेण प्रशमेन इव अलञ्चक्रे ॥ [अवाप्युत्प्रेचालङ्कारः ]॥ ५८

अन्वयः। व्यक्तोदितस्मितमयूखविभासितोष्ठः विकीर्णधाम्नः मुनेः अभिमुखं तिष्ठन् स इद्धम् अंशुजालम् तन्वन्तं गुरुम् अभितः सकलस्य शशाङ्कमूर्त्तेः लक्ष्मीम्-उवाह॥ वाच्य—विभासितोष्ठेन तिष्ठता तेन लक्ष्मीः ऊहे ॥ ५९

अवहितेति। स नरेन्द्रः अवहितहृदयः अप्रमत्तचित्तः सन्। "चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। ऋषिप्रवरे मुनिश्रेष्ठे। ऋषिवत् ऋषयर्हाम्। अर्हार्थे वतिप्रत्ययः। गुरूपदिष्टां शास्त्रीयामित्यर्थः। अर्हां पूजाम्। "गुरोश्च हलः" इति अकारप्रत्ययः। विधाय पश्चात् अनन्तरं तदनुमतं तेन अनुज्ञातम् आसनम्। प्रशमः शान्तिः श्रुतं शास्त्रश्रवणमिव अलञ्चकार। उक्तञ्च पूर्वम्—"प्रशमस्तस्य भवत्यलङ्क्रिया" इति। मुन्याज्ञया उपविष्टवान् इत्यर्थः॥ ५८॥

व्यक्तेति। व्यक्तोदितैः स्फुटोद्गतैः स्मितमयूखैः विभासितौ ओष्ठौ यस्य स तथोक्तः। विकीर्णधाम्नः विस्तीर्णतेजसः मुनेः अभिमुखं तिष्ठन् स नृपः इद्धं समृद्धं दीप्तमिति यावत्। अंशुजालं तन्वन्तं गुरुं गीष्पतिम्। "गुरुगीष्पतिपित्रादौ" इत्यमरः। "अभितः परितः—" इत्यादिना द्वितीया। अभितोऽभिमुखं तिष्ठत इति शेषः। सकलस्य सम्पूर्णस्य, शशाङ्का मूर्त्तिर्यस्य तस्य इन्दोर्लक्ष्मीमुवाह वहति स्म। अत्र उपमेयस्य राज्ञ उपमानेन

৫৮। অপ্রমত্ত চিত্ত রাজা যুধিষ্ঠির অবহিত চিত্তে ঋষিসত্তম দ্বৈপায়নের প্রতি গুরুপ্রোক্ত ঋষিযোগ্য অভ্যর্থনা সম্পন্ন করিলে অনন্তর ঋষিকর্ত্তৃক অভ্যনুজ্ঞাত আসনে উপবেশন করিয়া শমগুণ যেমন শাস্ত্র জ্ঞানকে অলঙ্কৃত করে তদ্রূপ সেই আসন সমলঙ্কৃত করিলেন।

५८। अप्रमत्त चित्त राजा युधिष्ठिरने प्रथम उन ऋषिसत्तम द्वैपायनकी प्रति गुरुप्रोक्त तपस्विजनोचित पूजा की। इसके बाद उन्होंने आदिष्ट आसनमें उपवेशन करते शमगुण जिस तरह शास्त्रज्ञानको अलङ्कृत करता हैं, वैसे ही उस आसन को समलङ्कृत किया।

लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः ॥ ५८ ॥

इति श्रीभारविकृतौ किरातार्जुनीये
महाकाव्ये द्वितीयः सर्गः ॥ २ ॥

---

इन्दुधर्मेण लक्ष्म्याः साक्षात्सम्बन्धासम्भवात् तत्सदृशीं लक्ष्मीमिवेति प्रतिबिम्बकरणाक्षेपात् असम्भववस्तुसम्बन्धात् पदार्थवृत्तिर्निदर्शनालङ्कारः । तदुक्तम्—"प्रतिबिम्बस्याकरणं सम्भवता यत्र वस्तुयोगेन । तत्रास्यमसम्भवता निदर्शना सा द्विधाभिमता" इति ॥ ५८ ॥

इति महामहोपाध्यायमल्लिनाथसूरिविरचितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां व्यासागमनो नाम
द्वितीयः सर्गः ॥ २ ॥

---

৫৮। প্রভাবিকীর্ণকারী ঋষিবরের সম্মুখে স্থির সুস্পষ্টোদ্গত হাস্যকিরণে সমুদ্ভাসিতোষ্ঠ নৃপতি চতুর্দ্দিকে বিক্ষিপ্ত কিরণ ব্যাপ্ত বৃহস্পতিগ্রহের সম্মুখবর্ত্তী পরিপূর্ণ মণ্ডল শশধরের শোভা ধারণ করিয়াছিলেন।

५८। प्रभाविकीर्णकारी ऋषिप्रवरके सम्मुखमें स्थिर सुस्पष्टोद्गत हास्यकिरण जालसे समुद्भासितोष्ठ नृपति, चारिधारोमें विच्छिन्न किरण व्याप्त बृहस्पति ग्रहके सम्मुखवर्त्ती परिपूर्णमण्डलचन्द्रकी शोभा धारण की थी।

---

# तृतीयः सर्गः ।



ततः शरच्चन्द्रकराभिरामै-
रुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गी-
र्जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १ ॥
प्रसादलक्ष्मीं दधतं समग्रां
वपुःप्रकर्षेण जनातिगेन ।

अन्वयः । ततः शरच्चन्द्रकराभिरामैः उत्सर्पिभिः अंशुजालैः प्रांशुमिव, आनीलरुचं पिशङ्गीः जटाः बिभ्राणं तड़ित्वन्तम् अम्बुवाहमिव (स्थितम्) ॥ वाच्य—बिभ्रत् तडित्वान् अम्बुवाट् इव स्थितः ॥१

अथ त्रिभिर्मुनिं विशिंषंश्चतुर्भिः कलापकमाह । तदुक्तम्—"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कालापकं चतुर्भिः स्यात्तदूर्द्ध कुलकं स्मृतम् ॥" इति । तत इति । ततः उपवेशनानन्तरं धर्म्मात्मजः युधिष्ठिरः शरच्चन्द्रकराभिरामैः आह्लादकैः इत्यर्थः । उत्सर्पिभिः ऊर्द्ध्वं प्रसारिभिः अंशुजालैः प्रभापटलैः प्रांशुम् उन्नतमिव स्थितम् इति उत्प्रेक्षा । पुनः आनीलरुचं कृष्णवर्णं पिशङ्गीः पिङ्गलवर्णाः, गौरादित्वात् ङीष् । जटा बिभ्राणं धारयन्तम् अतएव तड़िल्वन्तं विद्युद्युक्तम् अम्बुवाहमिव स्थितम् इति उत्प्रेक्षा । (धर्म्मात्मजो युधिष्ठिर एतादृशं मुनिम् आबभाषे इति चतुर्थश्लोकेन अन्वयः) ॥ १ ॥

प्रसादेति । पुनः समग्रां सम्पूर्णां प्रसादः सौम्यता तस्य लक्ष्मीं सम्पदं

১। ঋষি উপবেশনের পর ঊর্দ্ধে বিকীর্ণ শারদীয় চন্দ্রমার কিরণের মত আহ্লাদকর প্রভাপটলে তাঁহাকে সমুন্নত বলিয়া মনে হইল; তাহার বর্ণ কৃষ্ণ, পিঙ্গলবর্ণ জটাধারণ করায় বিদ্যুদ্‌ যুক্ত জলধরের ন্যায় অনুমিত হইল।

१। ऋषिने उपवेशन किया, ऊर्ध्वमें विकीर्ण शारदीय चन्द्रमाकी किरणोंकी भांति आह्लादकर उनके अंशुजालमें उन्हें उन्नत कहने कीसी प्रभा बोध होने लगी। उनका वर्ण ईषन्नील था और उन्होंने पिङ्गलवर्ण जटा धारण की थी; इसलिये वह विद्युत् समन्वित जलधरकी भांति शोभा दरसाने लगी।

प्रसह्य चेतःसु समासजन्त-
मसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥
अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्य्यविस्रम्भविशेषभाजा
कृतोपसम्भाषमिवेक्षितेन ॥ ३ ॥

अन्वयः । समग्रां प्रसादलक्ष्मीं दधतं जनातिगेन वपुःप्रकर्षेण असंस्तुतानां चेतःसु प्रसह्य आर्द्रं भावं समासजन्तम् ॥ वाच्य—दधत्, समासजन् ॥ २

अन्वयः । अनुद्धताकारतया अन्तःकरणस्य वृत्तिं विविक्तां तन्वन्तं माधुर्य्यविस्रम्भविशेषभाजा ईक्षितेन कृतोपसम्भाषम् इव ॥ वाच्य—तन्वन् कृतोपसम्भाष इव ॥ ३

दधतम् । अतएव जनमतिगच्छतीति जनातिगेन लोकातिशायिना । "अन्येष्वपि दृश्यते" इति डप्रत्ययः । वपुःप्रकर्षेण आकारसम्पदा असंस्तुतानाम् अपरिचितानाम् अपि । व्यासोऽयम् इति अजानताम् इत्यर्थः । "संस्तवः स्यात् परिचयः" इत्यमरः । चेतःसु चित्तेषु यावत् आर्द्रं स्नेहार्द्रं भावम् अभिप्रायं प्रसह्य बलात् समासजन्तं लगयन्तम् इति यावत् । "दंशसञ्जस्वञ्जां शपि" इत्युपधाया लोपः । प्रसन्नाकारेषु सर्वोऽपि स्निह्यतीति भावः ॥ २ ॥

अनुद्धतेति । पुनः अनुद्धताकारतया शान्ताकारत्वेन लिङ्गेन अन्तःकरणस्य वृत्तिं विविक्तां पूतां शान्ताम् इति यावत् । "विविक्तौ पूतविजनौ" इत्यमरः । तन्वन्तं प्रकटयन्तम् आकृतिः एव अस्य चित्तशुद्धिं कथयति इत्यर्थः । पुनः माधुर्य्यं निसर्गसौम्यता विस्रम्भो विश्वासः । "समौ विस्रम्भविश्वासौ" इत्यमरः । तयोः विशेषम् अतिशयं भजतीति तथोक्तेन ईक्षितेन दर्शनेन एव कृता उपसम्भाषा सम्भाषणं येन तम् इव इति उत्प्रेक्षा । दृष्टिविशेषेणैव उपसम्भाषमाणमिव स्थितम् इत्यर्थः । काशिकायां तु "उपसम्भाषणमुपसान्त्वनम्" इति भासनादिसूत्रे ॥ ३ ॥

২। তিনি সমস্ত সৌম্য সম্পৎ ধারণ করিয়া লোকাতিশায়ী স্বশরীর-কান্তি-চয়ে পরিচয়হীন জনগণেরও চিত্তে আকস্মিক স্নেহার্দ্রভাব সংলগ্ন করিয়াছিলেন।

৩। তিনি প্রশান্ত আকৃতি দ্বারা চিত্তবৃত্তির পবিত্রতা জ্ঞাপন করিয়াছিলেন। তাহার স্বাভাবিক অত্যধিক স্নিগ্ধ ও বিশ্বস্ত দৃষ্টিই যেন সম্ভাষণ করিয়াছিল।

२। उन व्यासदेवने समस्त प्रसाद समृद्धि धारण की थी और लोकातिशायी अपनी शरीरकान्ति द्वारा बहु परिचय विहीन व्यक्तियोंके भी चित्तमें आकस्मिक स्नेहार्द्रभाव संलग्न कर दियाथा।

धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमाबभाषे ॥४॥ [इति कलापकम् ]

अनाप्तपुण्योपचयैर्दुरापा
फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा
वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥

अन्वयः। धर्मनिबन्धिनीनाम् एनःप्रणुदां श्रुतीनां प्रसूतिं सुखोपविष्टं मुनिं तदभ्यागमने हेतुं परीप्सुः धर्मात्मजः आबभाषे। वाच्य—प्रसूतिः सुखोपविष्टः मुनिः परीप्सुना धर्मात्मजेन ॥ ४

अन्वयः। अनाप्तपुण्योपचयैः दुरापा फलस्य सवित्री निर्धूतरजाः एषा भवद्दर्शनसम्पत् वीतबलाहकायाः दिवः वृष्टेः तुल्या ( भवति )। वाच्य—दुरापया सवित्र्या निर्धूतरजसा अनया···सम्पदा तुल्यया ( भूयते ) ॥ ५

धर्मेति। पुनः धर्मं निबध्नन्ति इति धर्मनिबन्धिनीनाम् अग्निहोत्रादिधर्मप्रतिपादिकानाम् एनःप्रणुदाम् अघच्छिदां, क्विप्। श्रुतीनां वेदानाम् "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः। प्रसूतिं प्रभवं सुखेन उपविष्टं मुनिं तदभ्यागमने तस्य मुनेरागमने हेतुं कारणं परीप्सुः जिज्ञासुः। आप्नोतेः सन्नन्तात् उप्रत्ययः। "आप्ज्ञप्यृधामीत्" इतीकारः। "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपः। आबभाषे उवाच ॥ ४ ॥

अनाप्तेति। अनाप्तपुण्योपचयैः अप्राप्तपुण्यसंग्रहैः दुरापा दुर्लभा फलस्य सवित्री श्रेयस्करीत्यर्थः। निर्धूतरजा हतरजोगुणा। एकत्र रजो धूलिः अन्यत्र गुणः। निरस्तधूलिः। "रजो रजोगुणे धूली परागार्त्तवयोरपि" इति शाश्वतः। एषा भवद्दर्शनसम्पत् सम्पत्तिः लाभ इति यावत्। सम्पदादिभ्यः

৪। অগ্নিহোত্রাদি ধর্ম্ম প্রতিপাদক পাপঘ্ন বেদ সমূহের উৎপাদক মুনি (বেদব্যাস) সুখে উপবিষ্ট হইলে ধর্ম্মনন্দন তাঁহার আগমনের হেতু জানিতে ইচ্ছুক হইয়া বলিলেন———।

२। वह प्रशान्त आकृति द्वारा चित्तवृत्तिकी पवित्रता ज्ञापित कर दी थी और उनकी स्वाभाविक अत्यधिक स्निग्ध और विशुद्ध दृष्टिने ही मानो उनके प्रति सम्भाषणका सम्पादन कर दिया था।

अद्य क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः।
आ संसृतेरस्मि जगत्सु जात-
स्त्वय्यागते यद्बहुमानपात्रम्॥ ६॥
श्रियं विकर्षत्यपहन्त्यघानि
श्रेयः परिस्नौ[स्नो]ति तनोति कीर्त्तिम्।

अन्वयः। अद्य क्रतूनां क्रियाः कामदुघाः, सम्प्रति भूमिदेवाः सत्याशिषः (भवन्ति), यत् त्वां आगते आ संसृतेः जगत्सु बहुमानपात्रं जातः अस्मि। वाच्य—क्रियाभिः कामदुघाभिः, भूमिदेवैः सत्याशीर्भिः (भूयते), (मया) बहुमानपात्रेण जातेन भूयते॥ ६

अन्वयः। आत्मयोनेः इव लोकगुरोः तव अमोघं सन्दर्शनं श्रियं विकर्षति, अघानि अपहन्ति, श्रेयः परिस्नौति, कीर्त्तिं तनोति (किं बहुना) किं न धत्ते। वाच्य—अमोघेन दर्शनेन श्रीः विकृष्यते, अपहन्यन्ते, परिस्नूयते, कीर्त्तिः तन्यते, किं न धीयते॥ [अत्र दीपकालङ्कारः]॥ ७

क्विपो भावार्थत्वात्। वीतबलाहकायाः गतमेघायाः दिव आकाशस्य सम्बन्धिन्या वृष्टेः तुल्या इति उपमालङ्कारः। अनभ्रवृष्टिवत् अतर्कितोपपन्नं भवद्दर्शनं सर्वथा कस्यचित् श्रेयसो निदानम् इत्यर्थः। वारि वहतीति बलाहकः। पृषोदरादित्वात् साधुः॥ ५॥

अद्येति। अद्य क्रतूनां क्रिया अनुष्ठानानि। कामान् दुहन्ति इति कामदुघाः, फलदा इत्यर्थः। "दुहः कब्घश्च" इति कप्प्रत्ययो घादेशश्च। सम्प्रति अद्य भूमिदेवाः ब्राह्मणाः। "द्विजात्यग्रजन्मभूदेववाड़वाः। विप्रश्च ब्राह्मणः" इत्यमरः। सत्याशिषो जाताः। ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः। यत् यतः कारणात् त्वयि आगते सति त्वदागमनेन निमित्तेन इत्यर्थः। अस्मि इत्यहमर्थेऽव्ययम्। "अस्मीत्यस्मदर्थानुवादेऽहमर्थेऽपि" इति

৫। ভবদীয় এই দর্শন সম্পৎ শ্রেয়স্কর ও রজোবিনাশক, (অর্থাৎ রজঃ, গুণ বা ধূলি) পুণ্য অসংগ্রাহীর পক্ষে ইহা দুর্লভ; মেঘহীন স্বর্গীয় বৃষ্টিপাতের ন্যায় সহসা এই দর্শনলাভ কোন মঙ্গলের হেতুস্বরূপ হইবে।

४। अग्निहोत्रादि धर्मप्रतिपादक, पापघ्न वेदको उत्पादक उन मुनि (वेदव्यास) सुखसे उपवेशन करने पर, धर्मनन्दन उनके आगमनका हेतु जाननेको इच्छुक हो, उनसे बोले——।

५। आपका दर्शनसम्पत् श्रेयस्कर और रजोविनाशक है (अर्थात् रजः, गुण धूलि); जिससे पुण्य असंग्राहीयोंको उसके पक्षमें यह दुर्लभ है, मेघशून्य आकाश सम्बन्धि वृष्टिपातकी भांति आपका सहसा यह दर्शनलाभ किसी मङ्गलका ही हेतुस्वरूप होगा।

सन्दर्शनं लोकगुरोरमोघं
तवात्मयोनेरिव किं न धत्ते ॥ ७ ॥
श्च्योतन्मयूखेऽपि हिमद्युतौ मे
ननिर्वृतं निर्वृतिमेति चक्षुः।
समुज्झितज्ञातिवियोगखेदं
त्वत्सन्निधावुच्छ्वसितीव चेतः ॥८॥

अन्वयः। श्च्योतन्मयूखे हिमद्युतौ अपि ननिर्वृतं, मे चक्षुः त्वत्सन्निधौ निर्वृतिम् एति। (तथा) चेतः समुज्झितज्ञातिवियोगखेदं (सत्) उच्छ्वसिति इव। वाच्य—ननिर्वृतेन, चक्षुषा निर्वृतिः ईयते...खेदेन चेतसा उच्छ्वस्यते इव ॥ ८

गणव्याख्याने। "दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये" इति प्रयोगाच्च। आ संसृतेः आ संसारात् यावत् संसारम् इत्यर्थः, अभिविधावाङ्, विकल्पादसमासः। जगतस्तु बहुमानपात्रं बहुयोग्यताभाजनं जातः। सकलसत्कर्मफलभूतं त्वदागमनं येन मे जगन्मान्यता इति भावः ॥ ६ ॥

श्रियमिति। आत्मयोनेः ब्रह्मण इव लोकगुरोः तव अमोघम् अविफलं सन्दर्शनं श्रियं विकर्षति आकृष्य ददाति। अघानि दुःखानि अपहन्ति। "अंहोदुःखव्यसनेष्वघम्" इत्यमरः। श्रेयः पुरुषार्थं परिस्तौति स्रवति। परिस्नौ इति पाठेऽपि स एवार्थः। कीर्त्तिं च तनोति किं बहुना किं न धत्ते? किं न करोति? सर्वं करोतीत्यर्थः? ॥ ७ ॥

श्च्योतदिति। हे भगवन्! श्च्योतन्मयूखे सुधास्राविकरे हिमद्युतौ

६। আজ যাগক্রিয়া সকল সফল হইল, বিপ্রগণ যথার্থ আশীর্যুক্ত হইলেন; যেহেতু আমি আজ আপনার আগমনে চিরদিনের জন্য সমস্ত জগতে বহু সম্মানভাজন হইলাম।

৭। আপনি ব্রহ্মার ন্যায় লোকগুরু আপনার অমোঘদর্শন সমৃদ্ধিকে আকর্ষণ করে, দুঃখ সমূহ বিনষ্ট করে, পুরুষার্থ দানকরে, কীর্ত্তি বিস্তার করে, অধিক কি আপনার দর্শন কি না করিতে পারে? অর্থাৎ সকল অর্পণ করিতে পারে।

६। आपके आगमनसे इस समय सब यागक्रिया और विप्रोंकी आशीर्व्वादराशि सफल हुई; इसलिये मैं आज चिरदिनके लिये समस्त जगतमें बहु सम्मानभाजन हुआ।

७। जगद्गुरु ब्रह्माकी तरह आपका यह अमोघदर्शन समृद्धिको खींचकर देता है, पाप पुंजको नाश करता, पुरुषार्थ देता और कीर्त्ति बढ़ाता है। अधिक क्या, ऐसी कौनसी वस्तु है, जो आपका दर्शन नहीं कर सकता!

निरास्पदं प्रश्नकुतूहलित्व-
मस्मास्वधीनं किमु निःस्पृहाणाम्।
तथापि कल्याणकरीं गिरं ते
मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

अन्वयः। प्रश्नकुतूहलित्वं निरास्पदं निःस्पृहाणाम् अस्मासु अधीनम् किमु ? तथापि कल्याणकरीं ते गिरं श्रोतुमिच्छा मां मुखरीकरोति। वाच्य—प्रश्नकुतूहलित्वेन निरास्पदेन (भूयते) अधीनेन केन (भूयते) इच्छया अहं मुखरीक्रिये। [अत्र काव्यलिङ्गालङ्कारः] ॥ ९ ॥

इन्दौ अपि विषये ननिर्वृतम्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। मे चक्षुः त्वत्सन्निधौ निर्वृतिं सुखमेति। तथा चेतश्च समुज्झितज्ञातिवियोगखेदं त्यक्तबन्धुविरहदुःखं समुच्छ्वसितीव अनुपरोधेन प्राणिति इव इति उत्प्रेक्षा। पूर्वार्द्धे तु निर्वृतिकारणे सत्यपि इन्दौ अनिर्वृतिकथनात् विशेषोक्तिः। तदुक्तम्—"तत्सामग्र्यामनिर्वृत्तिर्विशेषोक्तिर्निगद्यते" इति ॥ ८ ॥

निरास्पदमिति। प्रश्नकुतूहलित्वं निरास्पदम् त्वदागमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः। "आस्पदं प्रतिष्ठायाम्" इति निपातः। प्रश्नानवकाशे हेतुमाह—निःस्पृहाणाम्। युष्मत्सदृशानाम् इत्यर्थः। अस्मासु अधीनम् आयत्तं किमु ? न किञ्चित् अस्मत्तो लभ्यमित्यर्थः। आधारत्वविवक्षायां सप्तमी। तथापि कल्याणकरीम् अस्मद्धितैकहेतुकम् इत्यर्थः। निःस्पृहत्वे पारार्थ्यादिति भावः। "कृञो हेतु" इति टप्रत्यये ङीप्। अतस्ते गिरं श्रोतुमिच्छा मां मुखं वाक् अस्य अस्तीति मुखरो निरन्तरभाषी। रप्रकरणे "नखमुखकुञ्जेभ्यो रो वक्तव्यः" इति रः। "दुर्मुखे मुखराबद्धमुखौ" इत्यमरः। ततः च्विप्रत्ययः। मुखरीकरोति व्यापारयति इत्यर्थः। निःस्पृहस्य अपि ते वाक्यम् अस्मद्धितकरत्वात् श्रोतव्यमिति भावः ॥ ९ ॥

৮। হে ভগবন্, আমার যে নয়ন সুধাস্রাবী চন্দ্রমার দর্শনেও পরিতৃপ্ত হয় না সে নয়ন আপনার সন্নিধানে সুখলাভ করিতেছে। চিত্ত, জ্ঞাতিগণের বিরহ বেদনা ত্যাগ করিয়া যেন সজীব হইতেছে।

৯। আপনার নিকট আগমন প্রশ্ন জিজ্ঞাসা নিষ্ফল যেহেতু ভবাদৃশ নিঃস্পৃহ ব্যক্তির আমাদিগের অধীনতায় প্রয়োজনীয় বস্তু কি আছে? তথাপি আপনার কল্যাণকরী বাণী শুনিবার ইচ্ছা আমাকে বাক্‌চপল করিতেছে।

८। हे भगवन्! मेरा अमृत बरसानेवाले चन्द्रमाके दर्शनसे भी जो मेरे नेत्र तृप्त नहीं होते थे आपके निकटमें वे सन्तोष लाभकरते हैं। हृदय, भाइयोंका विरह दुःख छोड़ मानो सर्वथा सजीव हो उठा है।

इत्युक्तवानुक्तिविशेषरम्यं
मनः समाधाय जयोपपत्तौ।
उदारचेता गिरमित्युदारां
द्वैपायनेनाभिदधे नरेन्द्रः ॥१०॥
चिचीषतां जन्मवतामलघ्वीं
यशोऽवतंसामुभयत्र भूतिम्।
अभ्यर्हिता बन्धुषु तुल्यरूपा
वृत्तिर्विशेषेण तपोधनानाम् ॥११॥

अन्वयः। इति उक्तिविशेषरम्यम् उक्तवान् उदारचेताः नरेन्द्रः द्वैपायनेन जयोपपत्तौ मनः समाधाय इति ( वक्ष्यमाणां ) उदारां गिरम् अभिदधे। वाच्य—इति उक्तवन्तम् उदारचेतसं नरेन्द्रं द्वैपायनः अभिदधौ ॥ १०

अन्वयः। अलघ्वीं यशोऽवतंसाम् उभयत्र भूतिं चिचीषतां जन्मवतां बन्धुषु तुल्यरूपा वृत्तिः अभ्यर्हिता, तपोधनानां तु विशेषेण ( अभ्यर्हिता )। वाच्य—तुल्यरूपया वृत्त्या अभ्यर्हितया ( भूयते ) ॥ ११

इतीति। इति इत्थम् उक्तिविशेषरम्यम् उक्तिवैचित्र्यचारु यथा तथा उक्तवान्। उदारचेता महामना नरेन्द्रो द्वैपायनेन व्यासेन द्वीपमयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः स एव द्वैपायनः। "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण्प्रत्ययः, नापत्यार्थे "नडादिभ्यः फक्" तेष्वेव पाठात् बाधितार्थत्वाच्च। जयोपपत्तौ मनः समाधाय जयसिद्धिम् अपेक्ष्य इत्यर्थः। इति वक्ष्यमाणप्रकाराम् उदाराम् अर्थवतीं गिरम् अभिदधे उक्तः। दुहादित्वात् अप्रधाने कर्मणि लिट्। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्त्तृश्च कर्मणः" इति वचनात् ॥१०॥

आदौ तावत् तस्य माध्यस्थ्यभङ्गदोषं युग्मेन परिहरति—चिचीषता-

১০। মহামনা নরপতি এই প্রকার বৈচিত্র রমনীয় বাক্য বলিলে দ্বৈপায়ন ( ব্যাস ) জয় সিদ্ধির উপায় চিন্তা করিয়া বক্ষ্যমাণ অর্থযুক্ত বাক্য তাঁহাকে বলিলেন।

९। आपके आगमनका कारण पुछना व्यर्थ है। कारण आपसे त्यागी महात्माओंके कामकी कौनसी वस्तु हमलोगोंके अधीन है ! तिसपरभी आपके मंगलकारी वाक्यकी सुननेकी इच्छा होने मुझे वाक् चपल करदिया है।

तथापि निघ्नं नृप तावकीनैः
प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहाणामपि मुक्तिभाजां
भवन्ति भव्येषु हि पक्षपाताः॥ १२ ॥
सुता न यूयं किमु तस्य राज्ञः
सुयोधनं वा न गुणैरतीताः।

अन्वयः। तथापि हे नृप! तावकीनैः गुणौघैः प्रह्वीकृतं मे हृदयं निघ्नम्। वीतस्पृहाणां मुक्तिभाजाम् अपि भव्येषु पक्षपाताः भवन्ति। वाच्य—प्रह्वीकृतेन हृदयेन निघ्नेन। पक्षपातैः (भूयते)। [अत्र अर्थान्तरन्यासोऽलङ्कारः]॥ १२

मिति। अलघ्वीं गुर्वीम्। "वोतो गुणवचनात्" इति ङीष्। यशोऽवतंसां कीर्त्तिभूषणाम् उभयत्र इह च अमुत्र च भूतिं श्रेयः चिचीषतां चेतुं संग्रहीतुमिच्छतां चिनोतेः सन्नन्तात् शतृप्रत्ययः। जन्मवतां शरीरिणां बन्धुषु विषये तुल्यरूपा एकविधा वृत्तिः व्यवहारः अभ्यर्हिता उचिता। तपोधनानां तु अस्मत्सदृशानां विशेषेण नियमेन अभ्यर्हिता उचिता॥११॥

तथापीति। तथापि तुल्यवृत्तौ चित्तेऽपि हे नृप! तावकीनैः त्वदीयैः। "युष्मदस्मदोरन्यतरस्यां खञ् च" इति खञ्प्रत्ययः। "तवकममकावेकवचने" इति तवकादेशः। गुणौघैः प्रह्वीकृतम् आवर्जितं मे हृदयं निघ्नं त्वदायत्तम्। "अधीनो निघ्न आयत्तः" इत्यमरः। ननु निःस्पृहस्य कोऽयं पक्षपात इत्यत्र आह—वीतेति। वीतस्पृहाणां विरक्तानां मुक्तिभाजां मुमुक्षूणाम् अपीत्यर्थः। भवन्तीति भव्याः साधवः। "भव्यगेय" इत्यादिना कर्त्तरि निपातः। तेषु पक्षपाताः स्नेहाः भवन्ति। न तु साध्वनुग्रहो महतां माध्यस्थ्यभञ्जक इति भावः॥ १२ ॥

১১। ইহলোকে ও পরলোকে কীর্ত্তিভূষিত গুর্ব্বী সম্পদ্ সংগ্রহে ইচ্ছুক শরীরিগণের বন্ধুসমূহে তুল্যরূপ ব্যবহার করা কর্ত্তব্য; আমার মত তপস্বিজনের বান্ধব সম্বন্ধে সমান ব্যবহার করা অবশ্য উচিত।

१०। उदार हृदय, राजाके वैचित्र्ययुक्त सुन्दर वाक्य कहने पर द्वैपायन वेदव्यास जयप्राप्तिकी चिन्ताकर इसप्रकार अर्थसमन्वित वाक्य कहने लगे।

११। इसलोक तथा परलोकमें कीर्त्तिही जिसका भूषण है। उत्तम ऐश्वर्य्यके अभिलाषी हैं और उन्हें बन्धुओंके साथ समानताका व्यवहार करना चाहिये मुख्यकर उनके साथ जिनका तपही धन है।

यस्त्यक्तवान् वः स वृथा बलाद्वा
मोहं विधत्ते विषयाभिलाषः ॥ १२ ॥
जह्यातु नैनं कथमर्थसिद्धिः
संशय्य कर्णादिषु तिष्ठते यः।

अन्वयः। यूयं तस्य राज्ञः सुताः न किमु ? सुयोधनं वा गुणैरतीताः न ? यः वः वृथा त्यक्तवान् विषयाभिलाषः स बलात् मोहं विधत्ते ॥ वाच्य—युष्माभिः सुतैः न किमु ( भूयते )? न सुयोधनः अतीतः, येन यूयं त्यक्ताः तेन विषयाभिलाषेण मोहः धीयते ॥ १२

अथ नृपस्य गुणवत्तां प्रकटयितुं धृतराष्ट्रस्य दुश्चेष्टाम् उद्‌घाटयति—सुता इति। यूयं तस्य राज्ञो धृतराष्ट्रस्य सुताः पुत्राः न किमु ? अपि तु सुता एवेत्यर्थः। गुणैः शान्तिदानदाक्षिण्यादिभिः सुयोधनं न अतीताः न अतिक्रान्ताः वा ? अतीता एवेत्यर्थः। कर्त्तरि क्तः। असुतत्वम् अगुणत्वं च त्यागे हेतुः युष्मासु तन्नास्ति इत्यर्थः। उपालम्भे कारणमाह—य इति। यः धृतराष्ट्रः वो युष्मान् वृथा निष्कारणमेव त्यक्तवान्, यदि वयं सुताः गुणाधिकाश्च तर्हि कथम् अत्याक्षीत् तत्राह—बलादिति। स विषयाभिलाषो भोगतृष्णा बलाद्वा बलात्कारादिव। "वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये इति" विश्वः। मोहम् अविवेकं विधत्ते विषयाभिलाषातिरिक्तो न कश्चिद्युष्मत्त्यागहेतुः अस्ति इत्यर्थः। अत्र कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

১২। তথাপি হে নৃপ, তোমার গুণসমূহে বাধ্য হইয়া আমার হৃদয় তুল্যবৃত্তি সম্পন্ন ( ভেদাভেদ হীন) হইলেও তোমারই আয়ত্ত হইতেছে। যেহেতু বিষয় বিরাগী মুক্তিইচ্ছু ব্যক্তিগণও সাধুদিগের প্রতি স্নেহযুক্ত হইয়া থাকেন।

১৩। তোমরা সেই রাজা ধৃতরাষ্ট্রের তনয় ( অর্থাৎ তনয়ের ন্যায় স্নেহাস্পদ ) নও কি ? ( নিশ্চয় তাঁহাদের ন্যায় স্নেহাস্পদ ) সুযোধনকে কি শমাদিগুণে তোমরা অতিক্রম কর নাই ? ( অবশ্য করিয়াছ ) তবে যে তিনি তোমাদিগকে বিনা হেতুতে ত্যাগ করিয়াছেন, তাহার কারণ এই বিষয়াভিলাষ বলপূর্ব্বক যেন তাহাকে মোহিত করিয়াছে।

१२। किन्तु हे महीपाल ! मेराचित तुल्यवृत्ति सम्पन्न अर्थात् सबकहीं भेददृष्टि विहीन होनेपर भी तुम्हारे गुण राशिसे बाध्यहो तुम्हारेही अधीन हो गया है। कारण विषयत्यागी, मुक्तिभागी पुरुष भी साधुओं परही स्नेह प्रकट किया करते हैं।

१३। तुम क्या उन राजा धृतराष्ट्रके पुत्र ( पुत्रकी भांति स्नेहास्पद नहो ) नहीं ? ( अवश्य उसके पुत्रकी भांति प्रीति भाजन हो ) शमदमदाक्षिण्यादिसे तुमने क्या सुयोधनको अतिक्रम नहीं किया है ( अवश्य किया है ) तब उसने अकारण ही जो तुम्हें त्यागकिया है उसका हेतु यह है कि विषय लालसाने उसे बलपूर्ब्बक मोहितसाकर लिया है।

असाधुयोगा हि जयान्तरायाः
प्रमाथिनीनां विपदां पदानि ॥१४॥
पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्य-
माविष्कृतं प्रेम परं गुणेषु ॥१५॥

अन्वयः। एनं (धृतराष्ट्रम्) अर्थसिद्धिः कथं न जहातु ? यः संशय्य कर्णादिषु तिष्ठते। हि असाधुयोगाः जयान्तरायाः, प्रमाथिनीनां विपदां पदानि ॥ वाच्य—अर्थसिद्ध्या एष न हीयतां, ये स्थीयते, असाधुयोगैः जयान्तरायैः पदैः (भूयते) ॥ [ अत्राप्यर्थान्तरन्यासोऽलङ्कारः ] ॥ १४

अन्वयः। रिपूणां समितौ पथश्च्युतायां चिराय धर्म्यां धुरं दधानेन त्वया विपत्सु अपि अविपत्तिरम्यं गुणेषु परं प्रेम आविष्कृतम् ॥ वाच्य—दधानः त्वम् आविष्कृतवान् ॥ १५

अथ राज्ञ उत्साहवर्द्धनाय शत्रोर्हानिं सूचयति—जहात्विति। एनं धृतराष्ट्रम् अर्थसिद्धिः कथं न जहातु ? जहातु एव इत्यर्थः। "प्रैषाति-सर्गप्राप्तकालेषु कृत्याश्च" इति प्राप्तकाले लोट्। तस्य हानिकालः प्राप्त इत्यर्थः। कुतः ? यो धृतराष्ट्रः संशय्य सन्दिह्य कर्णादिषु तिष्ठते। कर्णादीन् दुर्मन्त्रिणः सन्दिग्धार्थे निर्णेतृत्वेन अवलम्बते इत्यर्थः। "प्रकाशनस्थेया-ख्ययोश्च" इति स्थेयाख्यायाम् आत्मनेपदम्। तिष्ठतेऽस्मिन्निति स्थेयो विवादपदनिर्णेता। तथाहि असाधुयोगाः दुर्जनसंसर्गाः जयान्तरायाः जयविघातकाः। किञ्च प्रमाथिनीनाम् उन्मूलनशीलानां विपदां पदानि स्थानानि। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। न केवलं जयघातिनीः किं तु अनर्थकारिणश्च इत्यर्थः। धृतराष्ट्रोऽपि दुर्जन-विधेयत्वाद् विनङ्क्ष्यतीति भावः ॥ १४ ॥

एवं शत्रोः अनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति—पथ इति।

১৪। এই ধৃতরাষ্ট্রকে অর্থসিদ্ধি কেন না ত্যাগ করিবে ? যেহেতু কর্ত্তব্য বিষয়ে সন্দিগ্ধ হইলে কুমন্ত্রী কর্ণাদির পরামর্শ অবলম্বন করিয়া থাকেন ; সুতরাং দুর্জনদিগের সংসর্গ জয়ের অন্তরায় এবং উন্মূলনশীল বিপদের স্থান অর্থাৎ আস্পদ।

१४। यह धृतराष्ट्रकी अर्थसिद्धि दूर हो जायेगी, क्योंकि वह कर्त्तव्य विषयमें सन्देह होनेपर कुमंत्री कर्णादिका सलाहालिया करता है। बुद्धिमान भी कुसंगतमें पड़सर्व्व विनाशिनी विपदके भाजन बनजाते हैं।

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशिततन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥१६॥
लब्धा धरित्री तव विक्रमेण
ज्यायांश्च वीर्य्यास्त्रबलैर्विपक्षः ।

अन्वयः। शमैकवृत्तेः भवतः छलेन अनात्मनीनं विध्वंसं विधाय प्रकाशिततन्मतिशीलसाराः ते (तव) विद्विषः कृतोपकारा इव (जाताः)॥ वाच्य—सारैः विद्विड्भिः कृतोपकारैः इव॥ [अनौत्प्रेक्षालङ्कारः]॥ १६

रिपूणां समितौ सभायाम्। "सभासमितिसंसदः" इत्यमरः। पथश्च्युतायां मार्गाद्भ्रष्टायाम्। दुरात्मनो दुःशासनस्य स्त्रीग्रहणसाहसम् अङ्गीकृतवत्याम् इत्यर्थः। चिराय धर्म्म्यां धर्मात् अनपेताम्। "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः। धुरं भारं दधानेन कृच्छ्रेष्वपि धर्मात् अचलता इत्यर्थः। त्वया विपत्स्वपि अविपत्ति अविनाशि अतएव रम्यं गुणेषु शान्त्यादिषु विषये परम् उत्कृष्टं प्रेम आविष्कृतं प्रकटीकृतम्। दुःसहमपि सोढ़वता त्वया साधु कृतमिति भावः॥ १५॥

विधायेति। किञ्च शम एव एका मुख्या वृत्तिर्यस्य तस्य अपरोपतापिनः भवतः छलेन कपटेन आत्मने हितः आत्मनीनः स न भवतीति अनात्मनीनः स्वस्य एव अनर्थहेतुरित्यर्थः तम्। "आत्मन्विश्वजनभोगोत्तरपदात् खः"

১৫। রিপুদিগের ধর্ম্মচ্যুত সভাতে (অর্থাৎ দুরাত্মা দুঃশাসন কর্ত্তৃক দ্রৌপদী অপমানার্থ সভায় আনীতা হইলে) তুমি চির কষ্টার্জ্জিত ধর্ম্মপথ হইতে বিচলিত না হওয়ায় বিপদেও অবিনশ্বর রম্য শান্ত্যাদি গুণবিষয়ে অত্যতিশয় অনুরাগ প্রকাশ করিয়াছ।

১৬। একমাত্র শম বৃত্তি অবলম্বিত তুমি তোমার অপকার করিতে শত্রুগণ স্বীয় অপকারই ঘটাইয়াছে। তাহারা তোমার প্রজ্ঞা ও স্বভাবের প্রকর্ষ দেখাইয়া তোমার উপকারই যেন সম্পন্ন করিতেছে।

१५। शत्रुसभाके धर्म्मपथसे विचलित होनेपर (जिस समय दुरात्मा दुःशासन द्वारा द्रौपदीको अपमान किये जानेपर) तुमने धर्मपथमें चिररहकर विपत्कालमें भी अमर सुन्दर शमादि गुणमें अत्यन्त अनुराग प्रकट कियाथा।

१६। शमही तुम्हारा एकमात्र श्रेष्ठ आधार है, इस कारण तुम्हारे अपकारी शत्रुओंने अपनाही अनर्थ किया है। वे तुम्हारे बुद्धि और प्रकृतिका प्रकर्ष प्रसिद्धकर मानो तुम्हारा हितही साधन किया है।

अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥१७॥
त्रिःसप्तकृत्वो जगतीपतीनां
हन्ता गुरुर्यस्य स जामदग्न्यः ।

अन्वयः। तव (त्वया) धरित्री विक्रमेण लभ्या, विपक्षश्च वीर्य्यास्त्रबलैः ज्यायान्, अतः प्रकर्षाय विधिः विधेयः, हि रणे जयश्रीः प्रकर्षतन्त्रा ॥ वाच्य—त्वं धरित्रीं लभेथाः, विपक्षेण ज्यायसा (भूयते), विधिं विदध्याः (त्वं) जयश्रिया प्रकर्षतन्त्रया (भूयते) ॥ [ अर्थान्तरन्यासोऽलङ्कारः ] ॥ ॥ १७

इति खप्रत्ययः। विध्वंसम् अपकारं विधाय कृत्वा प्रकाशितः प्रख्यापितः स्वमतिशीलयोः तव प्रज्ञास्वभावयोः सारः प्रकर्षो यैः ते तथोक्ताः। ते तव विद्विषः कृतोपकारा इव उपकृतवन्त इव जाता इति शेषः। अपकारोऽपि उपकाराय एव संवृत्तः, यदेषां दौर्जन्यं युष्मत्सौजन्यं च जगति सुव्यक्तम् आसीदित्यर्थः। विद्यमानस्यापि सुजनस्य चन्दनदारुण इव गुणाः परिभव एव प्रचुरीभवन्तीति भावः ॥ १६ ॥

अथ प्रयोजनान्तरमाह—लभ्येति। तव त्वया इत्यर्थः। "कृत्यानां कर्त्तरि वा" इति षष्ठी। धरित्री विक्रमेण लभ्या प्राप्तव्या। न च सुलभ्या तं विना इत्यर्थः। विपक्षस्य शत्रुरपि वीर्य्यं शौर्य्यम् अस्त्राणि आग्नेयादीनि बलानि सैन्यानि तैः ज्यायान् प्रशस्यतरः अधिकतर इति यावत्। ज्येष्ठस्य "ज्यायादीयसः" इति ज्यादेशः। अतः प्रकर्षाय आधिक्याय विधिः उपायो विधेयः कर्त्तव्यः। कुतः ? हि यस्मात् रणे जयश्रीः प्रकर्षतन्त्रा प्रकर्षप्रधाना उत्कर्षायत्ता इत्यर्थः। "तन्त्रं प्रधाने सिद्धान्ते" इत्यमरः। बलिन एव जयो न तु दुर्बलस्य इति भावः ॥ १७ ॥

১৭। তোমার বিক্রম দ্বারাই ধরিত্রী লাভ করিতে হইবে; শত্রুগণ শৌর্য্য এবং আগ্নেয়াদি অস্ত্র সমূহ বলে অত্যন্ত উন্নত, সুতরাং শৌর্য্যাদি বিষয়ে প্রকর্ষলাভের উপায় তোমার অবলম্বন করিতে হইবে; কেন না যুদ্ধে জয়শ্রী বীর্য্যবানেরই আয়ত্ত হইয়া থাকে।

१७। तुम्हें विक्रम द्वाराही पृथ्वीलाभ करना होगा। किन्तु तुम्हारे शत्रु इस समय पराक्रम, आग्नेयादि अस्त्र और सेनाके समृद्धिमें बड़ी श्रेष्ठता लाभकी है। अतएव तुम्हें इस समय पराक्रम आदि विषयमें उन्नति हेतु उपाय करना होगा। कारण युद्धमें जय भी बलवान पुरुषके ही अधीन हो जाया करता है।

वीर्य्यावधूतः स्म तदा विवेद
प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥
यस्मिन्ननैश्वर्य्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन् धनुः कस्य रणे न कुर्य्या-
न्मनो भयैकप्रवणं स भीष्मः ॥ १९ ॥

अन्वयः । (यदा) त्रिःसप्तकृत्वः जगतीपतीनां हन्ता गुरुः सः जामदग्न्यः, यस्य वीर्य्यावधूतः तदा गुणानां प्रकर्षम् आधारवशं विवेद स्म ॥ वाच्य—हन्त्रा गुरुणा तेन जामदग्न्येन वीर्य्यावधूतेन प्रकर्षः आधारवशः विविदे ॥ १८

अन्वयः । यस्मिन् अनैश्वर्य्यकृतव्यलीकः अन्तकः अपि पराभवं प्राप्त इव, सः भीष्मः रणे धनुः धुन्वन् कस्य मनः भयैकप्रवणं न कुर्य्यात् । वाच्य—व्यलीकेन अन्तकेन प्राप्तः पराभव इव, तेन भीष्मेण धुन्वता न क्रियेत ॥ १९

अथ "त्रिः" इत्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति—त्रिः-सप्तेति । त्रिरावृत्तान् सप्त वारान् त्रिःसप्तकृत्वः एकविंशतिकृत्वः इत्यर्थः । त्रिःसप्तशब्दयोः सुप्सुपेति समासः । "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति कृत्वसुच् प्रत्ययः । जगतीपतीनां महीपतीनां हन्ता नाशको गुरुः अस्त्रवेदोपदेष्टा सः प्रसिद्ध इत्यर्थः । अतएव यच्छब्दानपेक्षत्वम् । तदुक्तं काव्यप्रकाशे——"प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते" इति । जमदग्नेरपत्यं पुमान् जामदग्न्यः । "गर्गादिभ्यो यञ्" इति यञ्प्रत्ययः । यस्य भीष्मस्य वीर्य्यावधूतो विक्रमाभिभूतः अम्बिका-स्वयंवरे इत्यर्थः । तदा भङ्गप्राप्तिसमये गुणानां शौर्य्यादीनां प्रकर्षम् अतिशयं वीर्य्यातिशयम् आधारवशम् आश्रयाधीनं विवेद जज्ञे स्म । स्ववि-द्यायाः स्वशिष्ये भीष्मे स्वस्मात् अपि प्रकर्षाधानदर्शनादिति भावः । "स्म पादपूरणे भूतेऽर्थे च" इति विश्वः ॥ १८ ॥

১৮। যিনি একবিংশতিবার ক্ষত্রিয়গণের হন্তা, অস্ত্রবেদের উপদেষ্টা, সেই জমদগ্নি-তনয় পরশুরাম ভীষ্মের বিক্রমে (অম্বিকার স্বয়ংবরে) পরাভূত হইয়া জানিয়াছেন যে শৌর্য্যাদি গুণের উৎকর্ষ সৎপাত্রেরই অধীন হইয়া থাকে।

१८। जिन्होंने इक्कीसबार क्षत्रियोंका नाश कियाथा, जो शस्त्रविद्याके उपदेशक हैं उन्हों

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ?
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २० ॥

अन्वयः । आजौ इषुसंहतीः सृजन्तं कोपज्वलितम् ( अतएव ) परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तम् अन्तवह्निम् इव गुरुं ( द्रोणं ) वः कः सहेत ? वाच्य—सृजन् ज्वलितः—जिह्वः—अन्तवह्निः इव गुरुः केन सह्येत ॥ [ अत्रोत्प्रेक्षालङ्कारः ] ॥ २०

यस्मिन्निति । यस्मिन् भीष्मे विषये अनीश्वरस्य भावोऽनैश्वर्यम् असामर्थ्यम् । "नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" इति विकल्पान्नञः पूर्वपदवृद्धयभावः । तेन कृतव्यलीको जनितवैलक्ष्यः । "दुःखे वैलक्ष्ये व्यलीकम्" इति यादवः । अन्तकोऽपि यमोऽपि पराभवं प्राप्त इव, भीष्मस्य इच्छामरणत्वात् अन्तकोऽपि पराजित इव आस्ते किमुत अन्य इति भावः । स भीष्मो रणे धनुर्धुन्वन् कस्य मनो भयैकप्रवणं भये एकप्रवणम् एकोन्मुखं शिवभागवतवत् समासः । न कुर्यात् ? सर्वस्य अपि मनसि भयं कुर्यादेवेत्यर्थः ॥ १९ ॥

सृजन्तमिति । आजौ रणे इषुसंहतीर्बाणसङ्घान् सृजन्तं वर्षन्तं कोपज्वलितम् अतएव परिस्फुरन्त्यो लोलाश्च शिखाग्राणि एव जिह्वा यस्य तं तथोक्तं जगत् लोकं जिघत्सन्तम् अत्तुम् इच्छन्तम् । अदेः सन्नन्तात् शतृप्रत्ययः । "लुङ्सनोर्घस्लृ" इति घस्लृ आदेशः । अन्तवह्निं कालाग्निम् इव स्थितं गुरुं द्रोणं वो युष्माकं मध्ये कः सहेत ? सोढुं शक्नुयात् न कोऽपीत्यर्थः । "शकि लिङ् च" इति शक्यार्थे लिङ् ॥ २० ॥

১৯। যেই ভীষ্মবিষয়ে যমও অসামর্থ্যপ্রযুক্ত লজ্জায় পরাভূত ব্যক্তির ন্যায় অবস্থান করিতেছে, ( অন্যের কথা কি ? ) সেই ভীষ্ম রণে ধনুঃ কম্পিত করিলে কাহার না চিত্তে ভয়ের উদ্রেক হয় ?

২০। রণে বাণ সমূহ উৎপাদন করিয়া বর্ষণশীল, কোপজ্জলিত লোল শিখারূপ জিহ্বা সমুজ্জল জগল্লোক গ্রাসে সমুদ্যত অন্তক বহ্নির ন্যায় গুরুদ্রোণকে তোমাদের মধ্যে কে সহ্য করিতে পারে ?

जमदग्निकेपुत्र परशुराम भीष्मके पराक्रमसे अम्बिकाके स्वयंवरमें पराजीत हो कहाथा कि शौर्यादि गुणका उत्कर्ष सुयोग्य पुरुषोहीमें हुआकरना है ।

१९। यो भीष्म विषयंसे यम भी असमर्थता प्रयुक्तमें लज्जित पराजित पुरुषकी तरह रहते है, वही भीष्म युद्धस्थलमें धनुर्सकंपितकर किसकी मनमें भय पैदा नहीं करते ?

निरीक्ष्य संरम्भनिरस्तधैर्य्यं
राधेयमाराधितजामदग्न्यम्।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥ २१ ॥
यया समासादितसाधनेन
सुदुश्चरामाचरता तपस्याम्।

अन्वयः। संरम्भनिरस्तधैर्य्यम् आराधितजामदग्न्यं राधेयं निरीक्ष्य मृत्योः अपि असंस्तुतेषु भयेषु प्रसभं पक्षपातः जायेत ॥ वाच्य—पक्षपातेन जायेत ॥ २१

अन्वयः। यया सुदुश्चरां तपस्याम् आचरता समासादितसाधनेन कपिकेतनेन दुरापं वीर्य्यं समवाप्य एते ( भीष्मादयः ) उन्मूलिताः ॥ वाच्य—( यया ) आचरन्—साधनः कपिकेतनः एतान् उन्मूलयिता ॥ २२

निरीक्ष्येति। संरम्भेण कोपेन निरस्तं त्याजितं धैर्य्यं निर्विकारचित्तत्वं येन तं तथोक्तम्। आटोपेन एव परधैर्य्यापहारिणम् इत्यर्थः। आराधित-जामदग्न्यं शुश्रूषितभार्गवं जामदग्न्यात् अधिगतास्त्ररहस्यमित्यर्थः। राधेयं राधासुतं कर्णम्। "स्त्रीभ्यो ढक्"। निरीक्ष्य मृत्योरपि असंस्तुतेषु अपरिचितेषु। "संस्तवः स्यात्परिचयः" इत्यमरः। भयेषु प्रसभं पक्षपातः परिचयो जायेत। मृत्युरपि अस्मात् बिभीयात् किमुत अन्य इति भावः। सम्भावनायां लिङ्। अत्र जनिक्रियापेक्षया समानकर्तृकत्वाभावेऽपि पक्ष-पातक्रियापेक्षया तत्सम्भवात् निरीक्षेति ल्यप्निर्देशः समर्थनीयः। 'प्रधानोप-सर्जनभावस्त्वप्रयोजकः" इति व्यक्तिविवेककारः। अत्र भयसम्बन्धरहितस्य मृत्योः भयसम्बन्धाभिधानात् असम्बन्धे सम्बन्धरूपा अतिशयोक्तिः अल-ङ्कारः ॥ २१ ॥

२१। কোপেদ্বারা ত্যক্ত ধৈর্য্য শুশ্রূষা দ্বারা পরশুরাম হইতে শস্ত্ররহস্য জ্ঞাত রাধেয় ( কর্ণকে ) দেখিলে অপরিচিত ভয়ে মৃত্যুরও পরিচয় হইয়া থাকে, অর্থাৎ নির্ভীক মৃত্যুরও ভয় উপস্থিত হয়।

२०। जो युद्धस्थलमें बाणोंही वर्षण करते हैं, चंचल शिखा सदृश जिह्वा समुज्ज्वल, संसारको ग्रास करनेको उद्यत प्रलयकी अग्निकी भांति क्रोधसे प्रज्वलित द्रोणाचार्य्यको रणमें तुममें सेकौन सहने सकता है ?

२१। जिसकी क्रोधाकृति दुसरेका धैर्य्य हरणकरने वाली है जिसने परशुरामकी सेवाकर सब अस्त्रभेद जानलिया है, ऐसे राधासुतकर्णको देखनेसे। यमराज भी अपरीचित भयमें महाव्याकुल होजाते हैं।

एते दुरापं समवाप्य वीर्य्यम्
उन्मूलितारः कपिकेतनेन ॥ २२ ॥

महत्त्वयोगाय महामहिम्ना-
माराधनीं तां नृप देवतानाम् ।
दातुं प्रदानोचित भूरिधाम्नीम्
उपागतः सिद्धिमिवास्मि विद्याम् ॥२३

अन्वयः। हे नृप! महत्त्वयोगाय महामहिम्नां देवतानाम् आराधनीं भूरीधाम्नीं तां वि[द्यां] सिद्धिम् इव हे प्रदानोचित! दातुम् उपागतः अस्मि (अहम्)॥ वाच्य—उपागतेन भूयते म[या] [भूरिधाम्नीमित्यत्र 'अनोबहुब्रीहेर्व्वा' इत्यनेन विकल्पे ईरागमः। तेनैव महामहिम्नामित्यत्र ईभ्‌भावः] उत्प्रेक्षा नामालङ्कारः॥ २३

अथ अनन्तरं करणीयम् आगमनप्रयोजनस्य युग्मेनाह—ययेति। यया विद्यया कारणेन सुदुस्वराम् अतिदुष्करां तपस्यां तपश्चर्य्याम्, "कर्मणो रोमन्यतपोभ्यां वर्त्तिचरोः" इति क्यङ्। "अप्रत्ययात्" इति स्त्रियाम् अप्रत्ययः। आचरता। पशुपतिं प्रति तपः कुर्वता इत्यर्थः। अतएव समासादितं प्राप्तं साधनं पाशुपतास्त्ररूपं येन तेन कपिः हनूमान् केतनं चिह्नं यस्य तेन अर्जुनेन इत्यर्थः। दुरापम् अन्यस्य दुर्लभं वीर्य्यं तेजः समवाप्य एते पूर्वोक्ता भीष्मादयः उन्मूलितार उन्मूलयिष्यन्ते। उन्मूलयतेर्ण्यन्तात् कर्म्मणि लुट्। अत्र चिण्वदिड़ागमेऽपि तस्य असिद्धवद्भावात् इति असिद्धत्वात् "णेरनिटि" इति णिलोपः, तन्निमित्तस्य एव "अनिटि" इति निषेधात्। उक्तञ्च—"चिण्वद्वृद्धिर्युक्चहन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणोति। इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलनिमित्तो विघाति" इति॥ २२॥

महत्त्वेति। हे नृप! महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नां महानुभावानां देवतानाम् इन्द्रादीनाम् आराध्यते अनयेति आराधनीं तां प्रसादयित्रीम् इत्यर्थः। करणे ल्युट् ङीप्। भूरिधाम्नीं महाप्रभावाम्। "धाम

२२। যেই বিদ্যাদ্বারা অতি দুষ্কর তপশ্চরণ করিয়া কপিধ্বজ অর্জ্জুন পশুপতির নিকট হইতে পাশুপতাস্ত্র লাভ করিয়া এই ভীষ্ম প্রভৃতির নিধন করিবে———।

२२। जिस विद्याद्वारा अतिकठोर तपस्याकर कपिध्वज अर्जुन महादेवकी पाससे पाशुपत्यनामी अस्त्र पाकरहकर भीष्मादि वीरोंगणका नाश करेंगे———।

इत्युक्तवन्तं व्रज साधयेति
प्रमाणयन् वाक्यमजातशत्रोः।
प्रसेदिवांसं तमुपाससाद
वसन्निवान्ते विनयेन जिष्णुः॥ २४॥

अन्वयः। इति उक्तवन्तं प्रसेदिवांसं तं (मुनिं) जिष्णुः 'व्रज' 'साधय' इति अजातशत्रोः वाक्यं प्रमाणयन् अन्ते वसन् इव विनयेन उपाससाद॥ वाच्य—जिष्णुना प्रमाणयता अन्तेवसता इव उक्तवान् प्रसेदिवान् सः मुनिः उपसेदे॥ [युधिष्ठिरस्य बहुशत्रौ स्थितेऽपि 'अजातशत्रोः' इति पदेन काम-क्रोधादिरिपोरनधीनत्वं सूचितं श्रीमता गोपीनाथकविकण्ठाभरणेन, तथाच कृष्णार्जुनीये महाकाव्ये 'विजित्य येषां गणमङ्गशोषणं स्वं वन्ति पुण्या मुनयो विकल्मषाः। षड़ेव ते तस्य न जज्ञिरे यतो वदन्ति सन्त स्तमजातवैरिणम्। इति; अत्रोपमा स्पष्टा.]॥ २४॥

देशे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति विश्वः। "अन उपधालोपिनोऽन्यतरस्याम्" इति वा ङीप्। विद्याम् ऐन्द्रमन्त्ररूपां सिद्धिं साक्षात्कार्य्यसिद्धिम् इव इति विद्यायाः अमोघत्वोक्तिः। हे प्रदानोचित! दानपात्र प्रभूतफलभोक्तृत्वात् अस्य पात्रत्वोक्तिः। दातुम् उपागतोऽस्मि॥ २३॥

इतीति। उक्तवन्तं प्रसेदिवांसं प्रसन्नम्। "भाषायां सदवसश्रुवः" इति क्वसुः। तं मुनिं जिष्णुः जयशीलोऽर्जुनः। "ग्लाजिस्थश्च" इति गस्नु-प्रत्ययः। व्रज साधय अनुतिष्ठ इति एवंरूपम् अजातशत्रोः धर्म्मराजस्य स्वयम् अविद्वेषणशीलत्वात् इयं संज्ञा। वाक्यं प्रमाणयन् तदादिष्टः सन्नित्यर्थः। अन्ते वसन् छात्र इव। "छात्रान्तेवासिनौ शिष्ये" इत्यमरः। विनयेन अनौद्धत्येन उपाससाद समीपं प्राप॥ २४॥

২৩। হে দানোচিত পাত্র নৃপ, প্রকর্ষ লাভার্থ মহানুভব ইন্দ্রাদি দেবগণেরও সমারাধনীয়া মহাপ্রভাবযুক্তা সাক্ষাৎ কার্য্য সিদ্ধির ন্যায় সেই বিদ্যা দান করিতে আগমন করিয়াছি।

২৪। প্রসন্নযুক্ত সেই মুনি (বেদব্যাস) এইরূপ বলিলে 'জয়শীল অর্জ্জুন যাও, সাধন কর' ধর্ম্মরাজের এই নির্দেশ বাক্য গ্রহণ করিয়া শিষ্যের ন্যায় বিনয় সহকারে তাহার সমীপে উপনীত হইল।

२३। हे दानोचित पात्र नृप। उत्कर्ष पानेके लिये अतीव ऐश्वर्य्यशाली इन्द्रादि देवगण भी आराध्य हैं। अत्यन्त प्रभाव शालिनी साक्षात् कार्य्यसिद्धिकी तरह मैंवही विद्या इन्हें देवी आया हूं।

२४। प्रसन्न हृदय ऋषिके ऐसा कहनेपर, 'जयशील अर्जुन जाओ, साधनकरो,' धर्मराजकी यहबात स्वीकारकर शिष्यकी तरह विनीतभावसे अर्जुन ऋषिके पास आये।

निर्याय विद्याथ दिनादिरम्याद्-
बिम्बादिवार्कस्य मुखात् महर्षेः ।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥ २५ ॥
योगञ्च तं योग्यतमाय तस्मै
तपःप्रभावाद्वितताार सद्यः ।
येनाऽस्य तत्त्वेषु कृतेऽवभासे
समुन्मिमीलेव चिराय चक्षुः ॥ २६ ॥

अन्वयः । अथ वह्निकणावदाता विद्या दिनादिरम्यात् अर्कस्य बिम्बादिव महर्षेः मुखात् निर्याय दीप्तिः स्फुरत् पद्मम् इव पार्थाननम् अभिपेदे ॥ वाच्य—दातया विद्यया दीप्ता। [अतोपमालङ्कारः] ॥२५॥
अन्वयः । (सः) योग्यतमाय तस्मै तं योगं च तपःप्रभावात् सद्यः वितताार । येन (योगेन) तत्त्वेषु (तव) अवभासे कृते अस्य चक्षुः चिराय समुन्मिमील इव । वाच्य—तेन स योगः विततरे। चक्षुषा—समुन्मिमीले ॥ २६

निर्यायेति । अथ वह्निकणावदाता स्फुलिङ्गवत् उज्ज्वला देवतासान्निध्या-दिति भावः । विद्या ऐन्द्रमन्त्ररूपा दिनादिरम्यात् अर्कस्य प्रभातभास्करस्य बिम्बादिव महर्षेः व्यासस्य मुखात् निर्याय निर्गत्य, समासेऽनञ्पूर्वे क्त्वो ल्यप् । दीप्तिः अर्कदीधितिः स्फुरद् विकसत् पद्ममिव । पार्थाननम् अर्जुनस्य मुखम् अभिपेदे प्रविष्टा ॥ २५ ॥

योगं चेति । [सः] योग्यतमाय अर्हतमाय तस्मै पार्थाय तं वक्ष्यमाण-महिमानं योगं ध्यानविधिं च । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । तपःप्रभावात् सद्यो वितताार ददौ, चिरकालग्राह्यमपीति भावः । येन योगेन तत्त्वेषु प्रकृतिमहदादिषु । तथाच—"मूलप्रकृतिः महान् अह-

२५ । অনন্তর প্রাতঃসূর্য্য বিম্ব হইতে উচ্ছ্বসিত দীপ্তি যেমন বিকশিত পদ্মে প্রবেশ করে, সেইরূপ মহর্ষি ব্যাসের মুখ হইতে বহ্নিস্ফুলিঙ্গবৎ ঐন্দ্রমন্ত্ররূপিণী বিদ্যা নির্গত হইয়া অর্জ্জুনের মুখে প্রবেশ করিল।

२५ । इसकेबाद प्रभात सूर्य्यके प्रतिबिम्बसे प्रदीप्त किरण जैसे विकसित कमलमें प्रवेश करती है, वैसेही उन महर्षि व्यासके मुखसे अग्निकी चिनगारियोंकी भांति मन्त्ररूपिणी महाविद्याने बाहरसे अर्जुनके मुखमें प्रवेश किया ।

आकारमाशंसितभूरिलाभं
दधानमन्तःकरणानुरूपम् ।
नियोजयिष्यन् विजयोदये तं
तपःसमाधौ मुनिरित्युवाच ॥ २७ ॥
अनेन योगेन विवृद्धतेजा
निजां परस्मै पदवीमयच्छन् ।

अन्वयः । आशंसितभूरिलाभम् अन्तःकरणानुरूपम् आकारं दधानं तं ( अर्जुनं ) मुनिः विजयोदये तपःसमाधौ नियोजयिष्यन् इति उवाच । वाच्य—नियोजयिष्यता मुनिना दधत् (सः) ऊचे ॥ २७

ङ्कारो मनश्च, पञ्च तन्मात्राणि, पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च महाभूतानि" इति चतुर्विंशतितत्त्वानि । तत्र अवभासे साक्षात्कारे कृते सति अस्य अर्जुनस्य चक्षुः अक्षि चिराय समुन्मिमीलेव उन्मिषितमिव इत्युत्प्रेक्षा । तदा तस्य कोऽपि महान् अखिलाज्ञानभञ्जनः तत्त्वावभासः चिरात् अन्धस्य दृष्टिलाभ इव अभवदिति भावः ॥ २६ ॥

आकारमिति । आशंसित आख्यातो भूरिलाभो अनेकश्रेयःप्राप्तिः येन तं तथोक्तं महाभाग्यसूचकम् इत्यर्थः । अन्तःकरणशब्देन तद्वृत्तिरुत्साहो लक्ष्यते । तदनुरूपं तदनुकूलम् उत्साहानुगुणव्यापारक्षमम् इत्यर्थः । आकारं मूर्त्तिं दधानं तम् अर्जुनं मुनिर्विजयोदये विजयफलके तपःसमाधौ तपोनियमे । "समाधिर्नियमे ध्याने मौने [ नीवाके च ] चैव समर्थने" इति विश्वः । नियोजयिष्यन् नियोजयितुम् इच्छन्नित्यर्थः । "लृट् शेषे च" इति लृट् । "लृटः सद्वा" इति सत्प्रत्ययः । इति वक्ष्यमाणम् उवाच ॥ २७ ॥

২৬। তখন ঋষি সেই সুযোগ্য অর্জ্জুনকে তপঃপ্রভাবে ধ্যানবিধি প্রদান করিলেন। সেই ধ্যানের এমনই প্রভাব যে, ধ্যানবলে মহদাদি চতুর্ব্বিংশতি তত্ত্বের সাক্ষাৎকার সত্ত্বেও অর্জ্জুনের নয়ন যেন বহু সময় উন্মীলিত হইয়াই রহিল।

২৭। মহাভাগ্যসূচক উৎসাহানুকূল ব্যাপারক্ষম্ আকারধারী সেই অর্জ্জুনকে মুনি বিজয়লাভার্থ তপঃসমাধিতে নিযুক্ত করিবার ইচ্ছা করিয়া বক্ষ্যমাণ বাক্য বলিলেন।

२६। ऋषिने उन सुयोग्य अर्जुनको तव तपके प्रभावसे ध्यान विधि बताया। उस ध्यानका ऐसाही प्रभाव है कि ध्यानवलमें महतत्वादि चौवीस तत्वोंका साक्षात्कार होनेपर भी अर्जुनके नेत्रमानो अनेक समयतक उन्मीलित होते ही रहे।

२७। अर्जुन ने महासौभाग्य सूचक उत्साहानुकूल कार्य्य सम्पूर्ण करनेवाली मुर्त्तिधारण किया। मुनिने जयलाभ करनेको लिये तपस्या साधनमें नियुक्त करनेकी इच्छासे इसप्रकार कहने लगे।

समाचराचारमुपात्तशस्त्रो
जपोपवासाभिषवैर्मुनीनाम् ॥२८॥
करिष्यसि यत्र सुदुश्चराणि
प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं तम्
एष क्षणात् नेष्यति गुह्यकस्त्वाम् ॥२९

अन्वयः। अनेन योगेन विवृद्धतेजा निजां पदवीं परस्मै अयच्छन् उपात्तशस्त्रः सन् (त्वं) जपोपवासाभिषवैः मुनीनाम् आचारं समाचर। वाच्य—विवृद्धतेजसा अयच्छता उपात्तशस्त्रेण (त्वया) आचारः समाचर्य्यताम् ॥ २८

अन्वयः। यत्र (शिलोच्चये) गोत्रभिदः प्रसत्तये सुदुश्चराणि तपांसि करिष्यसि चारुशिलोच्चयं तं शिलोच्चयं त्वाम् एष गुह्यकः क्षणात् नेष्यति। वाच्य—करिष्यन्ते (त्वया) अनेन गुह्यकेन त्वं नेष्यसे ॥२९

अनेन इति। अनेन स्वोपदिष्टेन योगेन विवृद्धतेजाः निजां पदवीं परस्मै अयच्छन् परस्य प्रवेशम् अयच्छन्नित्यर्थः। उपात्तशस्त्रो निगृहीतायुधः सन्। हे अर्जुन! जपोपवासाभिषवैः स्वाध्यायानशनस्नानैः मुनीनाम् आचारं समाचर अनुतिष्ठ ॥ २८ ॥

क्षेत्रविशेषे तपःसिद्धिरित्याशयेन तं निदर्शयन्नाह—करिष्यसे इति। यत्र शिलोच्चये गोत्रभिदः इन्द्रस्य प्रसत्तये प्रसादाय सुदुश्चराणि तपांसि करिष्यसे। चारुशिलोच्चयं रम्यशिखरं तं शिलोच्चयं गिरिम् इन्द्रकीलरूपम्। "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इत्यमरः। त्वाम् एष गुह्यको यक्षः। अनन्तरम् एव अस्य पुरःप्रादुर्भावात् एष इति निर्देशः। क्षणात् नेष्यति प्रापयिष्यति ॥ २९ ॥

২৮। আমা হইতে এই উপদিষ্ট যোগের দ্বারা বর্দ্ধিত তেজঃ হইয়া নিজপথে অপরের প্রবেশে বা দিয়া অস্ত্র গ্রহণ পূর্ব্বক হে অর্জ্জুন, জপ, উপবাস ও স্নানাদি মুনিদিগের আচার আচরণ কর।

২৯। যেই শৈল শিখরে পর্ব্বতপক্ষোন্মূলনকারী ইন্দ্রের প্রসন্নতা লাভের জন্য (তুমি) সুদুষ্কর তপ করিবে, সেই রমনীয় গিরি ইন্দ্রকীল পর্ব্বতে তোমাকে এই গুহ্যক ক্ষণকাল মধ্যে লইয়া যাইবে।

२८। मुनिने कहा—हे अर्जुन! मैंने जो तुम्हें योगशिक्षा किया, तुम इसकी द्वारो तेजस्वी हो उसके मार्गमें दुसरेका प्रवेश निवारणकर अस्त्र धारण करते हुये जप, उपवास और स्नानादि द्वारा मुनियोंका आचरण करो।

२९। पर्वतके पक्ष छेदनकारी इन्द्रकी प्रसन्नताके लिये तुम जो सुन्दर शिखरवाले इन्द्रकील पर्वतपर कठिन तपस्या करोगे, यह गुह्यक तुम्हें (एक प्रकारका पक्ष) अल्प समयमें उस स्थानमें लेजायगा।

इति ब्रुवाणेन महेन्द्रसूनुं
महर्षिणा तेन तिरोबभूवे।
तं राजराजानुचरोऽस्य साक्षात्
प्रदेशमादेशमिवाधितस्थौ ॥ ३० ॥

कृतानतिर्व्याहृतसान्त्ववादे
जातस्पृहः पुण्यजनः स जिष्णौ।
इयाय सख्याविव सम्प्रसादं
विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥

अन्वयः। इति महेन्द्रसूनुं ब्रुवाणेन तेन महर्षिणा तिरोबभूवे। राजराजानुचरः अस्य (मुनेः) साक्षात् आदेशम् इव तम् प्रदेशम् अधितस्थौ। वाच्य—ब्रुवाणः स महर्षिः तिरोबभूव। राजराजानुचरेण साक्षात् आदेश इव सः प्रदेशः अधितस्थे [अत्रार्थान्तरन्यास उपमा चालङ्कारौ]॥ ३०॥

अन्वयः। स पुण्यजनः कृतानतिः जातस्पृहः व्याहृतसान्त्ववादे जिष्णौ सख्यौ इव सम्प्रसादम् इयाय। हि सतां योगः आशु विश्वासयति॥ वाच्य—पुण्यजनेन तेन कृतानतिना जातस्पृहेण सम्प्रसाद ईये, योगेन विश्वास्यते [अत्रापि पूर्व्वोक्तालङ्कारौ]॥ ३१॥

इतीति। इति इत्थं महेन्द्रसूनुम् अर्जुनं ब्रुवाणेन उक्तवता। "वर्त्तमानसामीप्ये" इति भूते वर्त्तमानवत् प्रत्ययः, तिरोधानस्य अविलम्बसूचनार्थः। तेन महर्षिणा व्यासेन तिरोबभूवे अन्तर्दधे। भावे लिट्। राजराजो यक्षराजः। "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति विश्वः। तस्य अनुचरः पूर्व्वोक्तयक्षः अस्य मुनेः आदेशं साक्षात् इव तं प्रदेशम् अर्जुनाधिष्ठितस्थानम् अधितस्थौ प्राप्त इत्यर्थः। "स्थादिष्वभ्यासेन चाभ्यासस्य" इति षत्वम्॥ ३०॥

कृतेति। स पुण्यजनो यक्षः कृतानतिः कृतप्रणामः। जातस्पृहो जाता स्पृहा आकाङ्क्षा यस्य तथा सन्। व्याहृतः उक्तः सान्त्ववादः प्रियवचनं येन

৩০। ইন্দ্রতনয় অর্জ্জুনকে এই প্রকার বলিতে বলিতে সেই মহর্ষি (ব্যাস) অন্তর্হিত হইলেন। যক্ষরাজের অনুচর (পূর্ব্বোক্ত) যক্ষ সেই মুনির সাক্ষাৎ আদেশের ন্যায় (অর্জ্জুনের) নিকটে উপস্থিত হইয়াছিল।

३०। इन्द्रके पुत्र अर्जुनसे इसी तरह की बातें कहते कहते वे महर्षि (व्यासजी) अदृश्य (गुप्त) हो गये, इसकी अनन्तर यक्षोंके राजा (कुबेर) का सेवक (जिसका प्रसङ्ग पहले हो चुका था) उस मुनिके स्थानपर आदेशकी तरह आकर दिखाई दिया।

अथोष्णभासेव सुमेरुकुञ्जान्
विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं
तमः शनैः पाण्डुसुतान् प्रपेदे ॥ ३२ ॥

अन्वयः । अथ उष्णभासा उदयाय विहीयमानान् बृहद्द्युतीन् सुमेरुकुञ्जान् इव तेन विहीयमानान् पाण्डुसुतान् दुःखकृतात्मलाभं तमः शनैः प्रपेदे ॥ वाच्य—लाभेन तमसा सुमेरुकुञ्जाः विहीयमाना बृहद्द्युतयः पाण्डुसुता प्रपेदिरे ॥ ३२ ॥

तस्मिन् । "व्याहार उक्तिर्लपितम्" इत्यमरः । जिष्णौ अर्जुने जातस्पृहः जातानुरागः सन् सख्यौ सुहृदि इव । "अथ मित्रं सखा सुहृत्" इत्यमरः । सम्प्रसादं विश्रम्भम् इयाय प्राप । तथाहि—सतां साधूनां योगः सङ्गतिः आशु विश्वासयति विश्वासं जनयति हि । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३१ ॥

अथेति । अथ उष्णभासा सूर्य्येण उदयाय पुनः उद्गमाय विहीयमानान् त्यज्यमानान् इति तमःप्राप्तिकारणोक्तिः बृहद्द्युतीन् सौवर्णत्वाद् दीप्यमानात् इत्यर्थः । इति तमसः सङ्कोचकारणोक्तिः । सुमेरुकुञ्जान् इव अत्र सुमेरुग्रहणं कुञ्जानां सौवर्णत्वद्योतनार्थं, तेन अर्जुनेन उदयाय श्रेयसे विहीयमानान् बृहद्द्युतीन् अनेकबुद्धिप्रकाशान् । पूर्व्ववद्विशेषणद्वयस्य प्रयोजनम् अनुसन्धेयम् । पाण्डुसुतान् चतुर इति शेषः । दुःखेन कृच्छ्रेण कृतः उपपादितः आत्मलाभः उत्पत्तिः यस्य तत् तथोक्तम् तेषां विवेकित्वात् कथञ्चिद्विलम्बोदयम् इत्यर्थः । तमः शोकः अन्धकारश्च । "तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे" इत्युभयत्रापि विश्वः । शनैः मन्दं प्रपेदे तेषां विवेकित्वाद् भीतभीतमिवेति भावः । अत्र तमःशब्दस्य श्लिष्टत्वात् श्लेषानुप्राणिता इयम् उपमा ॥ ३२ ॥

৩১। পুণ্যবান্ প্রণত সেই যক্ষ আকাঙ্ক্ষিত হইয়া প্রিয়ংবদ জয়শীল অর্জ্জুনের প্রিয় সুহৃদের ন্যায় বিশ্বাস প্রাপ্ত হইয়াছিল। সতের মিলন শীঘ্রই বিশ্বাস জন্মায়।

৩২। অনন্তর, যেরূপ অন্ধকার সূর্য্য কর্ত্তৃক পুনর্ব্বার উদিত হওয়ার জন্য পরিত্যক্ত, প্রদীপ্ত সুমেরুর কুঞ্জসমূহকে ক্রমে ক্রমে আশ্রয় করে সেইরূপ অতি কষ্টজনিত শোক, অর্জ্জুন কর্ত্তৃক মঙ্গলের জন্য পরিত্যক্ত নানারূপে প্রকাশিত পাণ্ডুর ( অপর ) পুত্রচতুষ্টয়কে ক্রমে ক্রমে আশ্রয় করিয়াছিল।

३१। पुण्यवान् तथा नम्र जो यक्ष: था सो आकाङ्क्षा युक्त हो ( आत्मा पानेकी इच्छा कर)

असंशयालोचितकार्य्यनुन्नः
प्रेम्णा समानीय विभज्यमानः ।
तुल्याद्विभागादिव तन्मनोभि-
र्दुःखातिभारोऽपि लघुः स मेने ॥३३॥

अन्वयः । असंशयालोचितकार्य्यनुन्नः प्रेम्णा समानीय विभज्यमानः सः दुःखातिभारः अपि तन्मनोभिः तुल्यात् विभागात् इव लघुः मेने ॥ वाच्य—नुन्नं विभज्यमानं भारं लघुं तन्मनांसि मेनिरे ॥ ३३ ॥

असंशयेति । असंशयम् असन्दिग्धं यथा तथा आलोचितं विवेचितं यत् कार्य्यं तेन नुन्नो निरस्त इति लघुत्वहेतुक्तिः । "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" इति निष्ठानत्वम् । कार्य्यगौरवम् आलोच्य निरस्त इत्यर्थः । तथापि प्रेम्णा भ्रातृवात्सल्येन कर्त्रा । समानीय पुनः आकृष्य विभज्यमानः समशोकभागो क्रियमाणः तुल्येन प्रेम्णा तुल्यदुःखत्वं भवतीति भावः । स पूर्वोक्तो दुःखम् एव अतिभारोऽपि अतिभारभूतम् अपि दुःखमित्यर्थः । तन्मनोभिः तेषां चतुर्णां पार्थानां मनोभिः तुल्यात् विभागादिव पूर्वोक्तात् प्रेमकृतात् समविभागात् इवेत्यर्थः । वस्तुतस्तु विवेकात् एवेति भावः । पुनर्विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थमनुवादाददोषः । लघुर्मेने अमानि । यथा एकोऽनेकधा विभज्य बहुभिरुह्यमानो महान् अपि भारो लघुर्मन्यते तद्वदित्यर्थः ॥ ३३ ॥

৩৩। সেই পূর্ব্বোক্ত পাণ্ডব চতুষ্টয়ের মন কার্য্যের গুরুত্ব আলোচনা করিয়া ভ্রাতৃবাৎসল্য বশতঃ সমভাগী কৃত (পূর্ব্বোক্ত) সেই দুঃখরূপ অতি ভারকে তুল্যরূপে বিভাগ করিয়াই যেন লঘু অনুভব করিয়াছিলেন।

प्रिय बोलने और बराबर विजय करनेवाले अर्जुनका प्यारे मित्रकी तरह विश्वासपात्र हुआ। क्योंकि सज्जनों का मेल तत्काल ही विश्वास उत्पन्न करता है।

३२। इसके उपरान्त जिस प्रकार अन्धकार, फिर से उदय होनेवाले सूर्य्यसे त्याग दिये जा रहनेवाले सुमेरुके झलकते कुञ्जों (लताओंसे आच्छादित कन्दराओं) में क्रम क्रम से आ जाता है; उसी प्रकार अत्यन्त कष्टसे उत्पन्न शोक, अर्जुनसे होनेवाले मङ्गल को (शत्रुओं का विजय और राज्यलाभ) के लिये त्यागे जो रहनेवाले पाण्डुपुत्रों (अर्जुनके सिवा चार पाण्डवों पर धीरे धीरे निवास कर लिया।

३३। ऊपर कहे चारों पाण्डवों का मन, कार्य्यमहत्त्व विचार कर दूरदेश जानेवाले भाईके प्रेमसे समान भागोंमें बटे हुए (पूर्वोक्त ऊपर कहे) उस दुःखरूप बड़े बोझको आधे आध बट जाने (आगामी सौभाग्यकी आश्वास) के कारण हलका सा समझ लिया।

धैर्य्येण विश्वास्यतया महर्षे-
स्तीव्रादरातिप्रभवाच्च मन्योः।
वीर्य्यञ्च विद्वत्सु सुते मघोनः
स तेषु न स्थानमवाप शोकः ॥३४॥

तान् भूरिधाम्नश्चतुरोऽपि दूरं
विहाय यामानिव वासरस्य।
एकौघभूतं तदशर्म कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे ॥ ३५ ॥

अन्वयः। धैर्य्येण महर्षेः विश्वास्यतया अरातिप्रभवात तीव्रात् मन्योः मघोनः सुते वीर्यं च विद्वत्सु तेषु स शोकः स्थानं न अवाप। वाच्य—तेन शोकेन न अवापे [ अत्र तृतीयान्तेन हेतुनोपक्रान्तस्य पञ्चम्यान्तहेतुप्रयोगात् प्रक्रमभङ्गदोषः । ३४ ।

अन्वयः। तत् अशर्म्म भूरिधाम्नः चतुरः तान् अपि वासरस्य (भूरिधाम्नः) यामान् इव दूरं विहाय एकौघभूतं (सत्) [ कृष्णां ] विभावरीं ध्वान्तमिव कृष्णां प्रपेदे ॥ वाच्य—तेन अशर्म्मणा एकौघभूतेन सता ध्वान्तेन विभावरी इव कृष्णा प्रपेदे [ उपमाश्लेषश्चालङ्कारौ । ३५ ॥

अथैवं प्रेम्णा आकृष्यमाणम् अपि शोकं विवेको निर्जिगायेत्याह—धैर्य्येणेति। धैर्य्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेर्व्यासस्य प्रवर्त्तकस्य इति शेषः। विश्वास्यतया श्रद्धेयवचनत्वेन इत्यर्थः। अरातिप्रभवात् अरातिहेतुकात् तीव्रात् दुःसहात् मन्योः क्रोधाद्धेतोः तथा अर्जुनप्रभावपरिज्ञानाच्चेति हेत्वन्तरं विशेषणमुखेनाह—मघोनः सुते अर्जुने वीर्य्यं च। "न लोक" इत्यादिना षष्ठीप्रतिषेधः। विद्वत्सु ज्ञातवत्सु इति यावत्। "विदेः शतुर्वसुः" इति वैकल्पिको वस्वादेशः। तेषु पार्थेषु स शोकः स्थानं स्थितिं न अवाप न प्राप ॥ ३४ ॥

तानिति। तत् पार्थत्यागज [वत्] शर्म सुखम्। "शर्मशातसुखानि च"

৩৪। সেই পাণ্ডবচতুষ্টয়ের স্বভাবসিদ্ধ ধৈর্য্যবশত: মহর্ষি ব্যাসের বাক্যে বিশ্বাস হেতু এবং শত্রুর কার্য্যজন্য তীব্র ক্রোধপ্রযুক্ত, ইন্দ্রতনয় অর্জ্জুনের বীর্য্য জ্ঞাত থাকায় সেই (ভ্রাতৃবিয়োগজনিত) শোক তাহাদের (পাণ্ডবদের) মধ্যে স্থানলাভ করিতে পারিল না।

३४। उन चारो पाण्डवों की स्वाभाविक धीरता, महर्षि व्यासकी बातोंपर विश्वास और शत्रुओं की व्यवहारसे उत्पन्न अत्यन्त क्रोधयुक्त इन्द्रके पुत्र अर्जुनका पराक्रम मालूम हो जानेके कारण वह (भाईबिछुड़ने का) शोक उन चारो पाण्डवों में प्रवेश न कर सका।

तुषारलेखाकुलितोत्पलाभे
पर्य्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढ़भावापि विलोकने सा
न लोचने मीलयितुं विषेहे ॥३६॥

अन्वयः । सा ( द्रौपदी ) विलोकने अगूढ़भावा अपि मङ्गलभङ्गभीरुः ( सती ) पर्य्यश्रुणी तुषारलेखाकुलितोत्पलाभे लोचने मीलयितुं न विषेहे ॥ वाच्य—तया द्रौपद्या अगूढ़भावया मङ्गलभङ्गभीर्वा ( सत्या ) विषेहे । ( सकर्म्मकत्वे विषेहाते ) [ अलोपमालङ्कारः ] । ३६ ।

इत्यमरः । तद्विरुद्धम् अशर्म दुःखम् । "नञ्" इति नञ्समासः । भूरिधाम्नः तेजस्विन इति हानिहेतुक्तिः । चतुरः तान् पार्थान् अपि वासरस्य भूरिधाम्नः चतुरोऽपि यामान् प्रहरान् इव । दूरं विहाय त्यक्त्वा एकीघभूतम् एकराशिभूतं सत् । "श्रेण्यादयः कृतादिभिः" इत्यर्थे कर्म्मधारयः । "श्रेण्यादिराकृतिगणः" इति शाकटायनः । कृष्णां विभावरीं कृष्णपक्षरात्रिं ध्वान्तमिव । कृष्णां द्रौपदीं प्रपेदे प्राप ॥ ३५ ॥

तुषारेति । सा द्रौपदी विलोकने अर्जुनावलोकने अगूढ़भावा अगूढ़ाभिप्राया स्फुटाभिलाषिणी इति यावत्, अपि । "भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु" इति वैजयन्ती । मङ्गलभङ्गभीरुः मङ्गलहानेः भीता सती पर्य्यश्रुणी परिगताश्रुके बाष्पावृते इत्यर्थः । अतएव तुषारलेखाकुलितोत्पलाभे हिमविन्दुसहिते इन्दीवरसन्निभे इति उपमालङ्कारः, लोचने मीलयितुं न विषेहे न शशाक । अश्रुणः इष्टप्रावरकत्वेऽपि तन्निपातस्य अमङ्गलत्वात् तन्निर्वर्त्तकं मलीनं सा न चकार इत्यर्थः ॥ ३६ ॥

৩৫। ( যেরূপ ) একত্রীভূত অন্ধকার দিবসের প্রভাযুক্ত প্রহরচতুষ্টয়কে দূরে ত্যাগ করিয়া কৃষ্ণপক্ষের রাত্রিকে আশ্রয় করে (সেইরূপ) একত্রিত ( অর্জ্জুনবিয়োগজনিত ) শোক, তেজস্বী পাণ্ডবচতুষ্টয়কে দূরে ত্যাগ করিয়া কৃষ্ণাকে ( দ্রৌপদীকে ) ক্রমে ক্রমে আশ্রয় করিল।

৩৬। সেই দ্রৌপদী অর্জ্জুন দর্শনাভিলাষিণী হইয়া ও ( অশ্রুপতন হইলে অর্জ্জুনের অমঙ্গল হইবে এই ) ভয়ে ভীতা হইয়া হিমবিন্দুযুক্ত নীলপদ্মের ন্যায় বাষ্পাবরুদ্ধ নেত্রযুগল নিমীলিত করিতে পারিলেন না।

३५। ( जिस प्रकार ) दिनके अत्यन्त प्रकाशमान चारो पहरों को दूरसे त्यागकर एकसाथ मिला हुआ अन्धकार कृष्णपक्ष की रात्रिपर आश्रय कर लेता है ( उसी प्रकार ) एकसाथ हुए ( अर्जुनके वियोग से उत्पन्न ) शोकने तेजस्वी चारों पाण्डवों को दूरसे त्याग कर कृष्णा ( द्रौपदी ) पर आश्रय किया।

३६। वह द्रौपदी अर्जुनको देखने चाहती हुई भी ( आंसु गिरने से अर्जुनका ) अमङ्गल

अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभि दृष्टम्।
मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७॥
धैर्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः।
निरुद्धबाष्पोदयसन्नकण्ठ-
मुवाच कृच्छ्रादिति राजपुत्री ॥ ३८॥

अन्वयः। इन्द्रसूनुः अकृत्रिमप्रेमरसाभिरामं दृष्टिविलोभि रामार्पितं दृष्टं मनःप्रसादाञ्जलिना पाथेयमिव निकामं जग्राह ॥ वाच्य—इन्द्रसूनुना जगृहे। [ अतीतप्रेक्षानामालङ्कारः ] । ३७।

अन्वयः। वन्यद्विपेन निदाघसिन्धुः इव धैर्यावसादेन हृतप्रसादा राजपुत्री (द्रौपदी) निरुद्धबाष्पोदयसन्नकण्ठं कृच्छ्रात् इति उवाच ॥ वाच्य—निदाघसिन्धा हृतप्रसादया राजपुत्र्या ऊचे। [ अतिशयोक्तिरलङ्कारः ] । ३८ ॥

अकृत्रिमेति। इन्द्रसूनुः अर्जुनः क्रियया निवृत्तः कृत्रिमः। "ड्वितः क्त्रिः" इति क्त्रिः। "त्रेर्मम्नित्यम्" इति मम्प्रत्ययः। तद्विरुद्धं प्रेमैव रसः। अकृत्रिमेण प्रेमरसेन अभिरामम्। दृष्टिं विलोभयतीति दृष्टिप्रियम् इत्यर्थः, दृष्टं दर्शनम्। "नपुंसके भावे क्तः" मनःप्रसादः प्रसन्नं मन इत्यर्थः। सोऽञ्जलिरिव इति उपमितसमासः। तेन मनःप्रसादाञ्जलिना पथि साधु पाथेयं सम्बलमिव। "पथ्यतिथिवसतिस्वपतेर्ढञ्"। निकामम् अतिशयेन जग्राह। "रामार्पितं पाथेयं पथि क्षेमाय भवति" इति आगमः ॥ ३७ ॥

धैर्य्येति। वन्यद्विपेन वन्यग्रहणम् उच्छृङ्खलत्वद्योतनार्थं, निदाघसिन्धुः ग्रीष्मनदी इव, निदाघग्रहणं दौर्बल्यद्योतनार्थं, धैर्य्यावसादेन धैर्य्यभ्रंशेन कता

৩৭। ইন্দ্রতনয় অর্জ্জুন অকৃত্রিম প্রেমরূপ রসের দ্বারায় রমণীয়, দৃষ্টির বিলোভি (দ্রৌপদীর) দৃষ্টি পাথেয় (পথের সম্বল) স্বরূপ অধিক ভাবে গ্রহণ করিলেন। "স্ত্রীদত্ত পাথেয় পথের মঙ্গলদায়ক" এইরূপ শাস্ত্রে নির্দ্দিষ্ট আছে।

(होगा इस) भयसे डर कर भी सकी। उसकी बुन्दोंसे युक्त कमलकी तरह आंसुसे भरी दोनो आंखें वन्दन कर सकी।

३७। इन्द्रके पुत्र अर्जुनने अकृत्रिम (निष्कपट अर्थात् असली) प्रेमकी रससे ही रमणीय (तथा) दृष्टिको कमानेवाली (द्रौपदी की) दृष्टिको पाथेय (राह खर्च) के रूपमें बड़े आदरके साथ ग्रहण कर लिया। "स्त्रीका दिया हुआ राहखर्च यात्रामें मङ्गलकारक होता है" इस प्रकार से शास्त्रमें कहा गया है।

मग्नां द्विषच्छद्मनि पङ्कभूते
सम्भावनां भूतिमिवोद्धरिष्यन्।
आधिच्छिदामा तपसां प्रसिद्धे-
रस्माद्विना मा भृशमुन्मनीभूः॥ ३९॥

अन्वयः। पङ्कभूते द्विषच्छद्मनि मग्नां सम्भावनां भूतिम् इव उद्धरिष्यन् आधिच्छिदाम् तपसां प्रसिद्धेः आ अस्मद्विना भृशम् मा उन्मनीभूः॥ वाच्य—उद्धरिष्यता (त्वया) मा उन्मनीभावि ॥३९

हृतप्रसादा हृतनैर्मल्या क्षोभं गमिता इत्यर्थः। राजपुत्री क्षत्रियसुता द्रौपदी, अतः क्षात्रयुक्तम् एव लक्ष्यति इति भावः। निरुद्धबाष्पोदयं संरुद्धरोदनं सन्नकण्ठं हीनकण्ठस्वरम्। अथ तयोः उभयोः कृतबहुव्रीह्योः क्रियाविशेषणयोः विशेषणसमासः। कृच्छ्रात् कथञ्चिदिति वक्ष्यमाणम् उवाच॥ ३८॥

मग्नामिति। पङ्कभूते पङ्कोपमिते। "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः। द्विषच्छद्मनि शत्रुकपटे मग्नां दुरुद्धराम् इत्यर्थः। सम्भावनां योग्यतां गौरवम् इति यावत्। भूतिं सम्पदमिव। "भूतिर्भस्मनि सम्पदि" इत्यमरः। उद्धरिष्यन् उद्धारकः त्वम् एव इति शेषः। आधिच्छिदां दुःखच्छिदां तपसाम् आ प्रसिद्धेः सम्यक् सिद्धिपर्य्यन्तम् अस्मद्विना अस्माभिर्विना इत्यर्थः। "पृथग्विना" इत्यादिना विकल्पात् पञ्चमी। भृशं मा उन्मनीभूः अस्मद्विरहाद् दुर्मना मा भूरित्यर्थः।

৩৮। বন্য হস্তী কর্ত্তৃক গ্রীষ্মকালীন নদীর ন্যায় (অর্জ্জুনের ভাবি বিরহে) ধৈর্য্যচ্যুতি বশতঃ হৃতপ্রসন্না ক্ষত্রিয়তনয়া দ্রৌপদী রোদন সম্বরণ করিয়া ক্ষীণকণ্ঠে এই বাক্যগুলি বলিতে লাগিলেন।

৩৯। কর্দ্দম তুল্য শত্রুর কপটে পতিত গৌরব সম্পদের তুমিই উদ্ধারকর্ত্তা। (অতএব) দুঃখনাশক তপস্যার সিদ্ধি না হওয়া পর্য্যন্ত আমাদের জন্য (তুমি) উন্মনা হইও না। যেহেতু চিত্তচাঞ্চল্য যোগের অন্তরায় স্বরূপ।

३८। जङ्गली हाथीसे ग्रीष्मऋतु (गर्मीके समय) की नदी की तरह (अर्जुनके होनेवाले वियोगसे) धीरता न रहने के कारण हृतप्रसन्ना (आनन्दरहित) क्षत्रियकी लड़की द्रौपदी रोनेका भाव छिपा कर क्षीण कण्ठ (गलेकी दुर्बलतासे लड़खड़ाने स्वर) से पीछे कही जानेवाली बातें कहने लगी।

३९। कीचड़की तुल्य, शत्रुके कपट में गिरी हुई और (प्रतिष्ठारूप) सम्पत्तिके उद्धार करने वाले हो (इस लिये) दुःखनाश करनेवाली तपस्या की सिद्धि न होने तक हमलोगोंके लिये (तुम) उदास मन होओगे। क्योंकि चित्तकी चञ्चलता योगका विघ्न है।

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥
लोकं विधात्रा विहितस्य गोप्तुं
क्षत्रस्य मुष्णन् वसु जैत्रमोजः ।

अन्वयः । यशः अधिगन्तुं सुखलिप्सया वा, मनुष्यसंख्याम् अतिवर्त्तितुं वा अभियोगभाजां निरुत्सुकानां सिद्धिः समुत्सुका इव अङ्कम् उपैति ॥ वाच्य—सिद्ध्या समुत्सुकया इव अङ्कः उपेयते । [ अत्र तुमन्तेन प्रक्रान्तस्य 'सुखलिप्सयेति' सनन्तवाक्यप्रयोगात् प्रक्रमभङ्गदोषः ॥ ] ४०

दौर्मनस्यस्य तपःपरिपन्थित्वात् इति भावः । "माङि" इति आशीरर्थे लुङ् । "माङ्योगे" इत्यडागमप्रतिषेधः । अनुन्मना उन्मनाः सम्पद्यमानः उन्मनो अभूततद्भावे च्विः । "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" इति सकारलोपः । "अस्य च्वौ" इतीकारः ॥ ३९ ॥

अथ अनौत्सुक्यदार्ढ्यार्थं तस्य सर्वार्थसिद्धिनिदानत्वमाह—यश इति। यशः अधिगन्तुं कीर्त्तिं लब्धुम् इत्यर्थः । सुखस्य लिप्सया लब्धुमिच्छया वा । मनुष्यसंख्यां मनुष्यगणनाम् अतिवर्त्तितुम् अतिक्रमितुम् अमानुषं कर्म्म कर्त्तुं वा इत्यर्थः । अभियोगभाजाम् अभिनिवेशवतां निरुत्सुकानाम् अनुत्सुकानाम् अदुर्मनायमानानाम् इत्यर्थः । सिद्धिः पूर्वोक्तयशः सुखाद्यर्थसिद्धिः समुत्सुका इव अनुरक्तकान्ता इव अङ्कम् अन्तिकम् उपैति । तस्मात् अस्मद्विरहदुःखम् आ तपःसिद्धेः सोढव्यम् इति भावः ॥ ४० ॥

४० । कीर্ত্তিলাভের জন্য অথবা সুখপ্রাপ্তির জন্য কিংবা অমানুষিক কার্য্যসাধনের নিমিত্ত উদ্বেগশূন্য মানবগণের সিদ্ধি ( পূর্ব্বোক্ত যশঃসুখাদি কার্য্য ) অনুরক্তা ভার্য্যার ন্যায় সমীপে উপস্থিত হয় ।

४० । कीर्त्ति पाने के लिये या सुख पानेके लिये अथवा अमानुषिक ( मनुष्यसे न हो सकने योग्य ) कार्य्य सिद्ध करने के लिये उद्वेगसे रहित हो यत्न करनेवाले मनुष्योंके पास सिद्धि ( ऊपर कहे यश और सुख आदिकी ) हृदयसे प्रेम करनेवाली अपनी स्त्री की तरह चली आती है ।

तेजस्विताया विजयैकवृत्ते-
र्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥४१॥
व्रीड़ानतैराप्तजनोपनीतः
संशय्य कृच्छ्रेण नृपैः प्रपन्नः।

अन्वयः। विधात्रा लोकं गोप्तुं विहितस्य चत्रस्य जैत्रं ओजः (तदेव) वसु मुष्णन् विजयैकवृत्तेः तेजस्वितायाः प्रियं प्राणम् इव अभिमानं निघ्नन्। वाच्य—मुष्णता, निघ्नता। [यद्यपि 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरेण प्राणशब्दस्य बहुत्वमुक्तं तथापि 'प्राणा एव प्राणः' इति स्वार्थे णे कृते 'स्वार्थिका प्रकृतितो लिङ्गपुरुषवचनान्यतिक्रम्य वर्त्तन्ते' इति न्यायेन प्राणमित्येकवचनं न दोषाय। अत्र रूपकालङ्कारः] ॥४१॥

अथ अस्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिं प्रथयितुम् अरिनिकारं तावच्चतुर्भिः उद्घाटयति—लोकमिति। विधात्रा ब्रह्मणा लोकं गोप्तुं विहितस्य सृष्टस्य चत्रस्य चत्रियजातेः सम्बन्धि। जयनशीलं जेतृ तदेव जैत्रम्। जेतृशब्दात् तृजन्तात् "प्रज्ञादिभ्यश्च" इति स्वार्थे अण् प्रत्ययः। ओजो बलं दीप्तिर्वा। "ओजो बले च दीप्तौ च" इति विश्वः। तदेव वसु धनमिति रूपकालङ्कारः। मुष्णन् अपहरन् अरिनिकृतस्य कुतः चात्रं तेज इति भावः। किञ्च विजयैकवृत्तेः विजयैकजीवितायाः। "चत्रियस्य विजितव्यम्" इति स्मरणात् इति भावः। "वृत्तिर्वर्त्तनजीवने" इत्यमरः। तेजस्वितायाः तेजस्विनाम् इत्यर्थः। तेजःप्राधान्यद्योतनार्थं भावप्रधानो निर्देशः। प्रियं प्राणम् इव प्राणसमम् इत्यर्थः। अभिमानम् अहङ्कारं निघ्नन् खण्डयन् तेजस्विनां प्राणहानिप्राया मानहानिरिति भावः॥ ४१ ॥

৪১। (সেই শত্রুকৃত পরাভব) বিধাতা কর্তৃক লোকরক্ষার জন্য সৃষ্ট ক্ষত্রজাতির জয়নশীল বলরূপ ধনকে অপহরণ করিয়াছে। (যে পরাভব) বিজয়জীবী তেজস্বীগণের প্রাণতুল্য প্রিয়তম অভিমানকে (ও) খণ্ডন করিয়াছে।

४१। (शत्रुओं से किये गये उस अपमान ने) लोक रक्षा के लिये ब्रह्मा बनाये गये क्षत्रिय जाति के बराबर जय पानेवाले बल रूप धन को लुट लिया है। (उस अपमान ने) बराबर विजय में तत्पर रहने वाली तेजस्विनी के प्राण तुल्य प्यारे अभिमान को खण्डित (टुकरे टुकरे) कर दिया है। ।

वितानभूतं विततं पृथिव्यां
यशः समूहन्निव दिग्विकीर्णम् ॥४२॥

अन्वयः । आप्तजनोपनीतः ( तथापि ) संशय्य व्रीडानतैः नृपैः कृच्छ्रेण प्रपन्नः पृथिव्यां वितान... दिग्विकीर्णं विततं यशः समूहन् इव ॥ वाच्य—आप्तजनोपनीतेन प्रपन्नेन समूहता इव । ४२।

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेषु अपि न त्याज्यम् इति आह—व्रीडेति... पुनश्च आप्तजनोपनीतः आप्तजनेन उपनीतः प्रापितः श्रावित इत्यर्थः; तथापि संशय्य सन्दिह्य असम्भावितबुद्ध्या इति भावः । व्रीडानतैः जुगु... प्सितवृत्तान्तश्रवणात् इति भावः । नृपैः देशान्तरस्थैः कृच्छ्रेण प्रपन्नः प्राप्तः... पापीयस्त्वात् कथञ्चित् विश्वस्त इत्यर्थः । यः शृण्वताम् अपि दुःसह... किमुत अनुभवताम् इति भावः । इत्येषा पूर्वेषां व्याख्या । अन्यथा तु... व्याख्यायते,—आप्तजनोपनीतः ज्ञातिकृतः संशय्य कथम् इदम् अन्याय्य... उपेक्ष्यम् इति विचार्य्य व्रीडानतैः जुगुप्सितकर्म्मदर्शनात् इति भावः । नृ... सभास्थैः कृच्छ्रेण प्रपन्नः अङ्गीकृतः । गोत्रकलहेषु मध्यस्थैः उदासित... इति बुद्ध्या उपेक्षित इत्यर्थः । पक्षद्वयेऽपि प्रपन्न इत्यत्र आप्तजनोपनीत... त्वस्य पदार्थभूतस्य विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः... पृथिव्यां वितानभूतम् उल्लोचोपमितम् । यद्वा वितानभूतं वितानसम... उल्लोचतुल्यम् । "युक्ते क्ष्मादावृते भूते प्राण्यतीते समे त्रिषु" इत्यमरः... "अस्त्री वितानमुल्लोच" इत्यमरः । दिग्विकीर्णं दिगन्तलग्नं वितानमपि... दिगन्तलग्नम् इति भावः । विततं प्रथितं यशः समूहन् इव सञ्चोचय... इव इति उत्प्रेक्षा । अरातिपरिभूतस्य कुतः कीर्त्तिरिति भावः ॥४२॥

৪২। ( যে পরাভব ) তৎকালে সভাস্থ স্বজন কর্ত্তৃক কথিত ( অসম্ভব বিবে... করিয়া ) সন্দিগ্ধ ( লজ্জাজনক বৃত্তান্ত শ্রবণে ) লজ্জিত ( বিদেশস্থ ) রাজকর্ত্তৃক অতি ক... কৃত। অথবা জ্ঞাতি ( দুর্য্যোধনাদি ) কর্ত্তৃক ( কেশ বস্ত্রাদি আকর্ষণ দ্বারা ) অত্যন্ত... ( সুতরাং ) লজ্জাজনক।

४२। जिस ( अपमान ) को उस समय सभामें बैठे हुए अपनेलोगों से कहे गये ( ... विचार कर ) सन्देह के साथ ( लज्जा उत्पन्न करने वाले समाचार को सुन ने पर ) लज्जित ( विदेशी ) राजाओंने अत्यन्त कष्ट से सुना । या, स्वजातीयों ( दुर्योधन आदिकों से ) ( केश और वस्त्र... आकर्षण ) किये जाने के कारण अत्यन्त लज्जाजनक व्यवहार देखन पर लज्जा से सिर झुका... बैठे हुए राजा ओंने ( जातीय कलह को दूसरे के विचार करने योग्य न समझ कर ) अत्यन्त क... से स्वीकार किया । ( जो अपमान, पृथ्वी मात्र के चन्दातप ( चान्दनी या शामियाने ) की तु... ( इव लिये ) दिया ओमें फैली ( तुम्हारी ) कीर्त्ति को कर रहा है ।

वीर्य्यावदानेषु कृतावमर्ष-
स्तन्वन्नभूतामिव सम्प्रतीतिम्।
कुर्वन् प्रयामक्षयमायतीना-
मर्कत्विषामह्न इवावशेषः॥ ४३॥
प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम्।
नवीकरिष्यत्युपशुष्यदार्द्रः
स त्वदृ विना मे हृदयं निकारः॥ ४४॥
इति कलापकम्।

अन्वयः। वीर्य्यावदानेषु कृतावमर्षं (अतएव) सम्प्रतीतिम् अभूताम् इव तन्वन् अह्नः अवशेषः अर्कत्विषाम् इव आयतीनां प्रयामक्षयं कुर्वन्॥ वाच्य—कृतावमर्षेण तन्वता, अवशेषेण कुर्वता॥ ४३॥

अन्वयः। परैः अस्मासु प्रसह्य प्रयुक्तः यः (निकारः) स्मर्त्तुं न शक्यः, अधिकर्त्तुं किम् उत? सः निकारः आर्द्रः सन् त्वदृविना उपशुष्यत् मे हृदयं नवीकरिष्यति। वाच्य—युक्तेन येन न शक्येन (भूयते) तेन निकारेण आर्द्रेण नवीक्रियते॥४४॥

वीर्य्येति। पुनश्च वीर्य्याणि एव अवदानानि तेषु कृतावमर्षः कृताक्रन्दनः। पुराकृतपराक्रमोद्भूतानि अपि प्रस्तजन् इत्यर्थः। "अवदानं कर्म्म वृत्तम्" इत्यमरः। अतएव सम्प्रतीतिं ख्यातिम्। "प्रतीते प्रथिताख्यातवित्तविज्ञातविश्रुताः" इत्यमरः। अभूताम् अविद्यमानाम् इति उत्प्रेक्षा। सतोऽपि असत्त्वम् उत्प्रेक्ष्यते। तन्वन् कुर्वन्। पुनश्च अह्नः अवशेषः दिनान्तः अर्कत्विषाम् इव आयतीनाम् उत्तरकालानां प्रयामक्षयं दैर्घ्यनाशं कुर्वन् इति श्रौती पूर्णा इयम् उपमा। अरिनिराकृतस्य कृतस्थिरावस्थानम् इति भावः॥४३॥

४३। (যে পরাভব) বীর্য্যরূপ পূজা স্থানে আক্রমণ করিয়া দিগন্ত বিশ্রুত (তোমার) কীর্ত্তির অবিদ্যমানতা প্রতিপন্ন করিতেছে। (যে পরাভব) দিবসের অন্তর্ভাগ কর্ত্তৃক সূর্য্য, কিরণের ন্যায় (তোমার) উত্তর কালের দীর্ঘতা (ও) নাশ করিতেছে।

४३। (जो अपमान) वीर्य रूप पूजा के स्थान पर आक्रमण कर, दिशाओं के अन्त तक अच्छी तरह सुनी गयी (तुम्हारी) कीर्त्ति का लोप सिद्ध कर रहा है। दिन के अन्तिमभाग (सायङ्काल) के तुल्य (जो अपमान) सूर्य्य की किरणों के आगामी विस्तार की तरह (तुम्हारे) उत्तर कालकी उन्नति को नष्ट कर रहा है।

प्राप्तोऽभिमानव्यसनादसह्यं
दन्तीव दन्तव्यसनाद्विकारम् ।
द्विषत्प्रतापान्तरितोरुतेजाः
शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥

अन्वयः । अभिमानव्यसनात् दन्तव्यसनात् दन्ती इव ( त्वं ) असह्यं विकारं प्राप्तः । द्विषत्प्रतापान्तरितोरुतेजाः ( अतएव ) शरद्घनाकीर्णः अह्नः आदिः इव ( स्थितः ) ॥ वाच्य—दन्तिना इव (त्वया) असह्यः विकारः प्राप्तः ।...तेजसा...कीर्णेन आदिना ( स्थितम् ) ॥ ४५ ॥

प्रसह्येति । पुनश्च परैः शत्रुभिः अस्मासु प्रसह्य प्रयुक्तः आचरितः व निकारः परिभवः केशाकर्षणरूपः स्मर्त्तुं न शक्यः, अधिकर्त्तुम् अनुभवितुं किमुत ? यस्य स्मरणमपि दुःसहम् अनुभवस्तु सुतरां दुःसह इति किमुत वक्तव्यम् इत्यर्थः । स निकारः त्वद्विना त्वया विना । "पृथग्विना" इत्यादिना पञ्चमी । आर्द्रः सन् कुतश्चित् अभिभू[धा]तात् पुराणप्रहार इव त्वद्विरहदुःखात् पुनः नवीकरिष्यति नवीभविष्यति इत्यर्थः । उपशुष्क त्वया विना शुष्कम् इति भावः । दुःखस्तम्भनं शोषपदार्थः मे हृदयं नवी करिष्यति आर्द्रीकरिष्यति व्रणम् इव इति भावः । दुःखितस्य पुनः दुःखोप चयः प्रशान्तप्रायमपि दुःखहेतुं पुनरुद्घाटयति इत्यर्थः । अत्र शोषादि विशेषणसाम्यात् व्रणाद्यप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः ॥४४॥

पुनः प्रकारान्तरेण मन्युम् उद्दीपयति—"प्राप्तः" इत्यादिभिः त्रिभिः । अत्र वक्ष्यमाणप्रत्यभिज्ञानहेतुभिः धनञ्जयं विशिनष्टि । अभिमानस्य व्यस नात् भ्रंशात् । "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः । दन्तव्यसनात् दन्तभङ्गात् दन्ती इव असह्यं विकारं वैरूप्यं प्राप्तः । अतो न प्रत्यभिज्ञायते इति भावः । एवम् उत्तरत्रापि अनुसन्धेयम् । पुनश्च

४४। শত্রুসমূহ কর্তৃক অস্মদ্ বিষয়ে বল পূর্ব্বক অনুষ্ঠিত ( কেশাকর্ষণাদিরূপ ) পরাভব স্মরণ করা ও যায় না, অনুভব করার কথা ( আর ) কিবলিব ? শুষ্কপ্রায় সেই পরাভব ( আজ ) তোমার বিরহে আমার হৃদয়কে নূতনভাবে আর্দ্র করিয়া তুলিতেছে।

४४। शत्रुओं से हमलोगों पर कि बलपूर्वक ( न्याय से नहीं किया, वस्त्र और केश खींचे आदिक ) अपमान, जो स्मरण किया नहीं जासकता ( जो फिर ) अनुभव करने की बात क्या कहुंगी ? ( आज ) तुम्हारे वियोगसे वह अपमान प्रायः सूखे ( व्रणयुक्त या घायल ) हृदय को नया ( फिरसे घाव को नया ) कर देगा।

सव्रीड़मन्दैरिव निष्क्रियत्वा-
न्नात्यर्थमस्त्रैरवभासमानः।
यशःक्षयक्षीणजलार्णवाभ-
स्त्वमन्यमाकारमिवाभिपन्नः॥ ४६॥

अन्वयः। निष्क्रियत्वात् सव्रीड़मन्दैः इव अस्त्रैः अत्यर्थं न अवभासमानः। यशः क्षयक्षीणजलार्णवाभः त्वम् अन्यम् आकारम् अभिपन्नः इव॥ वाच्य—...मानेन...भेन त्वया अन्यः आकारः अभिपन्नः [ अत्रोपमाख्यालङ्कारः ]॥४६॥

द्विषत्प्रतापेन शत्रुतेजसा अन्तरितं तिरस्कृतम् उरु तेजः प्रतापो यस्य स तथोक्तः। अतएव शरद्घनाकीर्णः शरन्मेघाच्छन्नः अह्नः आदिः प्रत्यूषः इव स्थितः। तद्वत् एव अप्रत्यभिज्ञायमान इत्यर्थः। मध्याह्नस्तु मेघावरणेऽपि च कथञ्चित् प्रत्यभिज्ञायत एव इति अतिशयेन उक्तम् आदिरिति॥४५॥

सव्रीड़ेति। पुनश्च निष्क्रियत्वात् अर्थक्रियाशून्यत्वात् सव्रीड़मन्दैः इव सव्रीड़ैः अतएव मन्दैः अपटुभिः इव स्थितैः इति उत्प्रेक्षा। "मूढाल्पा-ऽपटुनिर्भाग्या मन्दाः स्युः" इत्यमरः। अस्त्रैः अत्यर्थं न अवभासमानः न प्रकाशमानः पूर्व्वं नैवम् इति भावः। किन्तु यशःक्षयात् हेतोः क्षीणजलः यः अर्णवः तदाभः तत्सदृशः त्वम् अन्यम् आकारम् अभिपन्नः प्राप्तः इव इति उत्प्रेक्षा। तस्य क्षीणजलार्णवाभः इति उपमासंसृष्टिः॥४६॥

४৫। (তুমি) অভিমান ভ্রংশ বশতঃ দন্ত ভঙ্গে দন্তীর ন্যায় অসহ্য বিরূপতা প্রাপ্ত হইয়াছ। (অতএব) শত্রুর প্রতাপ দ্বারা অস্তমিত তেজা (তুমি) শরৎকালীয় মেঘ সমাচ্ছন্ন প্রত্যূষের ন্যায় অবস্থা প্রাপ্ত হইয়াছ।

৪৬। কার্য্যকরণাসমর্থ বশতঃ লজ্জাযুক্ত (অতএব) অপটুর ন্যায় স্থিত অস্ত্র দ্বারা তোমার শোভা হইতেছেনা। যশঃক্ষয় হেতু স্বল্পতোয় সমুদ্রের ন্যায় তুমি অন্য আকারই যেন প্রাপ্ত হইয়াছ।

४५। (तुम) अभिमान के पतित हो जाने से टूटे दानवाले हाथी की तरह कुरूप हो गये, (इस लिये) शत्रुप्रताप से तेज छिप जाने के कारण (तुम) शरद ऋतु के बादलसे घिरे प्रातःकाल (सूर्योदय के पहले) की तरह अवस्था पा चुके हो।

४६। कार्य्य करने में असमर्थ होने के कारण कुण्ठित (मोटीया मुड़ी धारवाले) अस्त्रों की तरह तुम्हारी शोभा मालुम पड़ती है, यश के क्षय होजाने से कारण, थोड़े जल से युक्त समुद्र की तरह तुमने दूसरा रूप धारण कर लिया।

दुःशासनामर्षरजोविकीर्णै-
रेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्य्यसारः
कच्चित् स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥

॥ विशेषकम् ॥

स क्षत्रियस्त्राणसहः सतां यः
तत् कार्मुकं कर्म्मसु यस्य शक्तिः ।

अन्वयः—दुःशासनामर्षरजोविकीर्णैः ( अतएव ) विनाथैः इव भाग्यनाथैः एभिः ( परिदृश्यमानैः ) केशैः कदर्थीकृतवीर्य्यसारः सः त्वम् एव धनञ्जयः असि कच्चित् ॥ वाच्य—सारेण त्वया धनञ्जयेन भूयते [ अत्रोत्प्रेक्षारूपकौ चालङ्कारौ ] ॥ ४७ ॥

दुःशासनेति । पुनश्च, दुःशासनस्य कर्त्तुरामर्षं आमर्षणमाकर्षणं स एव रजोधूलिः । मालिन्यहेतुत्वादिति भावः । तेन विकीर्णैर्व्विच्छिन्नै-रत एव विनाथैरिव स्थितवतां युष्माकमसत्त्वप्रायत्वादनाथैरिव स्थितैः इति उत्प्रेक्षा । अन्यथा कथमियं दुर्दशेति भावः । किन्तु भाग्यनाथैर्द्दैवमात्र-शरणैः । अन्यथा स्वरूपमपि लुप्येतेति भावः । एभिः परिदृश्यमानैः असंयमितैरिति भावः । केशैः शिरोरुहैः कुत्सितोऽर्थो वस्तु कदर्थः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । "कोः कत्तत्पुरुषेति" इति कुशब्दस्य कदादेशः । कदर्थीकृतौ गर्ह्यार्थीकृतौ वीर्य्यसारौ शौर्य्यबले यस्य स तथोक्तः । इत्थं पूर्व्वविलक्षणस्त्वं स एव धनञ्जयोऽसि कच्चित् । "कच्चित्कामप्रवेदने" इत्यमरः । स एव चेत्त्वं नैवमस्मानुपेक्षस इति भावः ॥ ४७ ॥

৪৭। দুঃশাসন কর্তৃক আকর্ষণ রূপ ধূলি দ্বারা লিপ্ত, ( সুতরাং ) অনাথের ন্যায় স্থিত; ( কিন্তু ) দৈব মাত্র রক্ষী আমার এই পরিদৃশ্যমান অসংযত কেশসমূহ দ্বারা নিন্দিত শৌর্য্য বীর্য্য তুমিই কি সেই ধনঞ্জয় ?

४७। दुःशासन से खींचे जाने कारण धूली से भरे केश संस्कार न करने की प्रतिज्ञा के कारण; इस लिये अनाथ की तरह ( परन्तु ) दैव मात्र योग से बचे इन दिखाई पड़ने केशों से निन्दित शूरता और वीर्य्य युक्त तुम क्या वही "धनञ्जय" हो ?

वहन् द्वयीं यद्यफलेऽर्थजाते
करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥
वीतौजसः सन्निधिमात्रशेषा
भवत्कृतां भूतिमपेक्षमाणाः।

अन्वयः। यः सतां त्राणसहः सः क्षत्रियः ; यस्य कर्म्मसु शक्तिः, तत् कार्मुकम् ; द्वयीम् उक्तिम् अफले अर्थजाते वहन् असंस्कारहतामिव करोति॥ वाच्य—येन त्राणसहेन तेन क्षत्रियेण (भूयते) शक्त्या (भूयते) तेन कार्म्मुकेन (भूयते) वहता हता क्रियते॥ ४८॥

तथाप्युपेक्षणे दोषमाह—स इति। क्षतात् त्रायते इति क्षत्रं क्षत्रिय-कुलम्। "सुपि" इति योगविभागात् कप्रत्ययः। पृषोदरादित्वात् पूर्व-पदस्य अन्त्यलोपः। अथवा क्षदिति क्विबन्तोपपदात् कप्रत्ययः। क्षत्रे जातः क्षत्रियः। "क्षत्राद्घः" इति घप्रत्ययः। कर्म्मणे प्रभवात इति कार्मुकम्। "कर्म्मण उकञ्" इति उकञ्प्रत्ययः। एवं स्थिते वाक्यार्थः कथ्यते यः सतां साधूनां सहते इति सहः, पचाद्यच्। यः त्राणस्य सहः त्राणसहो रक्षणक्षमः स एव क्षत्रियशब्दवाच्यः। तथा यस्य कार्म्मुकस्य कर्म्मसु रणक्रियासु शक्तिः अस्तीति शेषः। तदेव कार्मुकशब्दवाच्यम्। अत्रैव एतौ शब्दौ मुख्यौ न अन्यत्र इत्यर्थः। एवं स्थिते द्वयीं द्विविधाम् उक्तिं द्वौ इमौ क्षत्रियकार्मुकशब्दौ इत्यर्थः। अफले पूर्वोक्तावयवार्थशून्ये अर्थ-जाते स्वाभिधेयसामान्यजातिमात्रे इत्यर्थः। "जातं जात्योघजन्मसु" इति विश्वः। वहन् वर्त्तयन् असंस्कारहतामव्युत्पत्तिदूषिताम् इव करोति इति उत्प्रेक्षा। तस्मात् त्वम् अस्मद्रक्षणेन उक्तदोषात् आत्मानं मोचयस्व इत्यर्थः॥ ४८॥

৪৮। যিনি সাধুগণের ত্রাণে সমর্থ তিনই ক্ষত্রিয়, আর যে ধনুকের সমরশক্তি আছে সেই যথার্থ কার্ম্মুক। এই দুইটী উক্তিকে অফল করিয়া অর্থাৎ ক্ষত্রিয়ের কর্ত্তব্যসাধন না করিলেও ক্ষত্রিয় নাম এবং সমর কার্য্য না করিলেও ধনুককে কার্ম্মু নামক যিনি প্রদান করেন, তিনি এই শব্দ দুইটীকে অব্যুৎপত্তি-দোষে দূষিত করেন

४८। जो सज्जनों की रक्षा कर सके वही 'क्षत्रिय' कह आने योग्य है। जो कर्त्तव्य पालन करने में समर्थ है वही कार्म्मुक (कार्य्य करनेवाला अर्थात् धनुस) है, कहा जो सकता है। यदि (जो) इन दोनों (क्षत्रिय और कार्म्मुक) को निष्फल केवल साधारण जाति के रूपसे धारण करता है, वह (इन दोशब्दोंको) व्युत्पत्ति से अव्युत्पत्ति से (च्युत संस्कारता दोष) से दूषित तुल्य बना देता है।

समानदुःखा इव नस्त्वदीयाः
सरूपतां पार्थ गुणा भजन्ते ॥ ४९ ॥
आक्षिप्यमाणं रिपुभिः प्रमादा-
न्नागैरिवालूनसटं मृगेन्द्रम् ।
त्वां धूरियं योग्यतयाधिरूढ़ा
दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥ ५० ॥

अन्वयः । हे पार्थ ! वीतौजसः सन्निधिमात्रशेषाः भवत्कृतां भूतिम् अपेक्षमाणाः त्वदीयाः गुणाः समानदुःखा इव नः सरूपतां भजन्ते । वाच्य—वीतौजोभिः...शेषैः अपेक्षमाणैः त्वदीयैः गुणैः समानदुःखैः इव स्वरूपता भज्यते ॥ ४९ ॥

अन्वयः । प्रमादात् रिपुभिः आक्षिप्यमाणं नागैः आलूनसटं मृगेन्द्रम् इव त्वाम् इयं धूः तिग्मरश्मिं दीप्त्या दिनश्रीः इव योग्यतया अधिरूढ़ा ॥ वाच्य—आक्षिप्यमाणः आलूनसटः मृगेन्द्र इव त्वम् अनया धुरा तिग्मरश्मिः दिनश्रिया अधिरूढ़ः [ अत्रोपमालङ्कारः ] ५० ॥

अथ त्वद्गुणा अपि नोज्जीवयेयुरित्याह—वीतेति । हे पार्थ! वीतौजसः निष्प्रभाः सन्निधिमात्रशेषाः सत्तामात्रावशिष्टाः भवत्कृतां भवता करिष्यमाणाम्, "आशंसायां भूतवच्च" इति भूतवत्प्रत्ययः । भूतिम् अभ्युदयम् अपेक्षमाणाः त्वदीयाः गुणाः समानदुःखाः समदुःख-भाजः इव नः अस्माकं सरूपतां वीतौजस्त्वादिसाधर्म्यं भजन्ते इति उपमा, सा च समानदुःखा इव इति उत्प्रेक्षया वीतौजस्त्वादिसम्भाविततया अनुप्राणिता इति अनुसन्धेयम् ॥ ४९ ॥

तथापि ममैव कोऽयं भारः इत्यत आह—आक्षिप्येति । प्रमादात् प्रज्ञाहीनत्वात् न तु दौर्बल्यात् इति भावः । रिपुभिः आक्षिप्यमाणम् अधिक्षिप्यमाणम् अतएव प्रमादात् नागैः गजैः । "अहिभाहिगजा नागाः" इति वैजयन्ती । आलूनसटम् आच्छिन्नकेशरम् । "सटा जटाकेसरयोः"

৪৯। হে পার্থ! আমরা যেমন নিষ্প্রভ ও সত্তামাত্রাবশেষ হইয়া অপনার অভ্যুদয়ের আকাঙ্ক্ষায় আছি। আপনার এই সকলও তেমনি নিষ্প্রভ ও সত্তামাত্রে পর্য্যবসিত হইয়া আপনার অভ্যুদয়ের অপেক্ষায় থাকায় আমাদের সারূপ্য প্রাপ্ত হইয়াছে।

४९। निस्तेज, केवल सत्ता ( अस्तित्व या कायमियत ) धारण किये और तुम से उत्पन्न किये अभ्युदय की आशा करते हुए तुम्हारे समस्त गुण ( हम सबके ) तुल्य दुःख अनुभव कर हमलोगों का सा रूप धारण कर रहे हैं।

৫০। হস্তীগণ প্রমাদক্রমে সিংহকে পরাজিত করিয়া তাহার কেশরজাল বিক্ষিপ্ত করিলে সিংহের যেরূপ অবস্থা হয়, প্রমাদবশে রিপুগণকর্ত্তৃক অভিভূত হইয়া আপনারও ঠিক তেমনি

करोति य: सर्वजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभि: ।
संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥५१॥

अन्वय: । य: सर्व्वजनातिरिक्तां सम्भावनां क्रियाभि: अर्थवतीं करोति संसत्सु पुरुषाधिकारे जाते (सति) पूरणी संख्या तं न समुपैति । वाच्य—येन सर्व्वजनातिरिक्ता सम्भावना क्रियाभि: अर्थवती क्रियते, पूरण्या संख्यया न समुपेयते ॥५१॥

इत्यमर: । मृगेन्द्रं सिंहम् इव स्थितम् । त्वामियं धू: कार्य्यभार: तिग्मरश्मिं सूर्य्यं दीप्त्या दिनश्रीरिव योग्यतया निर्वाहकतया । अधिरूढ़ा आरूढ़वती । कर्त्तरि क्त: । त्वदधीना इत्यर्थ: ॥ ५० ॥

पूर्वं निर्व्यवसायस्य "स क्षत्रिय:" इत्यादिना दोष: उक्त:, सम्प्रति व्यवसायिनो गुणमाह—करोतीति । य: पुमान् अशेषजनात् इतरजनात् अतिरिक्ताम् अधिकां सर्वातिशायिनीम् इत्यर्थ: । सम्भावनां योग्यतां क्रियाभि: चरितै: अर्थवतीं सफलां करोति । तं पुमांसं संसत्सु सभासु । "सभासमितिसंसद:" इत्यमर: । पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति, पूर्य्यते अनया इति पूरणी संख्या द्वित्वादिसंख्या न समुपैति, न गच्छति, अद्वितीयो भवति इत्यर्थ: । तस्मात् असाधारणलाभाय त्वया अपि महानुत्साह: आस्थेय इति भाव: ॥ ५१ ॥

दया हইয়াছে। দিনশ্রী যেমন দীপ্তিলাভের নিমিত্ত সূর্য্যের শরণাপন্ন হয়, এই কার্য্যভারও তদ্রূপ যোগ্যতাহেতু আপনাকেই আশ্রয় করিতেছে।

৫১। যে ব্যক্তি সর্ব্বাতিশায়িনী যোগ্যতাকে অনুষ্ঠান দ্বারা সফল করিয়া তুলে, সভাক্ষেত্রে যোগ্যপুরুষের গণনার প্রস্তাব উপস্থিত হইলে সেই ব্যক্তি কখনও পূরণীসংখ্যা অর্থাৎ দ্বিতীয় তৃতীয় ইত্যাদি সংখ্যা দ্বারা গণিত হয় না, বস্তুতঃ তিনিই অদ্বিতীয় হন।

५०। जिस प्रकार प्रतापपूर्ण, दिन की चमत्कार शोभा योग्य समझ कर पर चली आती है उसी प्रकार इस कार्यकाभार, हाथी उखाड़े के शार (कन्धेके बाल) वाले सिंह के तुल्य प्रबुधी अनादर किये गये तुम पर (निर्वाह करने) योंग्य समझ कर आरूप (सवार) हुआ है।

५१। जो व्यक्ति सभासे चढी बढ़ी (अपनी) योग्यता को व्यवहार में लाकर सफल कर डालता है। सभाके क्षेत्र (मैदान) में योग्य पुरुषों की गिनती होवेने पर वह व्यक्ति पूरणी (किसी प्रकार

प्रियेषु यैः पार्थ विनोपपत्ते-
र्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादघानां मघवा विघातम् ॥ ५२ ॥

मा गास्चिरायैकचरः प्रमादं
वसन्नसम्बाधशिवेऽपि देशे ।
मात्सर्य्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि ॥ ५३

अन्वयः । हे पार्थ ! प्रियेषु उपपत्तेर्विना यैः विचिन्त्यमानैः चेतः क्लमम् एति जयाय प्रयातस्य तव तेषाम् अघानां मघवा विघातं क्रियात् ॥ वाच्य—चेतसा क्लम ईयते मघोना विघातः क्रियेत ॥५
अन्वयः । ( त्वं ) असम्बाधशिवे अपि देशे चिराय एकचरः वसन् प्रमादं मा गाः । मात्सर्य्यरागोपहतात्मनां मानसानि साधुषु अपि स्खलन्ति हि । वाच्य—एकचरेण वसता प्रमादः मा गा मानसैः स्खल्यते ॥ ५३॥

अथ द्वाभ्यां सुलभविपच्चस्य प्रोषितस्य अर्जुनस्य कर्त्तव्यम् उपदिशति- प्रियेषु इति । हे पार्थ ! प्रियेषु अस्मासु विषये उपपत्तेः कारणात् विना एव विचिन्त्यमानैः अकस्मात् एव आशङ्क्यमानैः यैः अघैः चेतः क्लमं खेदम् एति । जयाय प्रयातस्य तव सम्बन्धिनां तेषाम् अघानां व्यसनानाम् । "दुःखेनोव्यसनेष्वघम्" इत्यमरः । मघवा इन्द्रः यः अस्माभिः उपास्यते इति भावः । विघातं निवारणं क्रियात् करोतु । आशिषि लिङ् । तस्मात् अस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया । अन्यथा तदसम्भवात् इति भावः ॥ ५२ ॥

৫২। হে পার্থ! বিনা কারণেও প্রিয়জন অমাদিগের বিঘ্নপাতের আশঙ্কায় তোমার হৃদয়ে খেদ উপস্থিত হইতেছে। তুমি জয়ের জন্য গমন করিলে দেবরাজ ইন্দ্র তোমার সে সকল আশঙ্কিত বিঘ্ন দূর করিবেন।

अन्तमें पूर्ण होने वाली दूसरी तीसरी आदिक ) संख्या नहीं पाता अर्थात् उसकी गिनती सब पहले होती है ।

५२ । हे पार्थ ! ( अतिथि सत्कार आदिक कार्यमें अत्यन्त सावधान रहनेवाली पृथा की पुत्र ) कारण न रहने परभी मेरे आदि क तुम्हारे प्यारे परिवारों के हृदयें तुम्हारे विघ्नों की आशङ्का से खेद उत्पन्न होता है । विजय के लिये तुम्हारे जाने पर उन्हे ( विघ्नों को इन्द्र नष्ट कर दें ।

तदाशु कुर्वन् वचनं महर्षे-
र्मनोरथान् नः सफलीकुरुष्व।
प्रत्यागतं त्वाऽस्मि कृतार्थमेव
स्तनोपपीड़ं परिरब्धुकामा ॥ ५४

अन्वयः। तत् (त्वं) महर्षेर्वचनम् आशु कुर्व्वन् नः मनोरथान् सफलीकुरुष्व। (किञ्च अहं) कृतार्थं प्रत्यागतं त्वा स्तनोपपीड़ं परिरब्धुकामा अस्मि। वाच्य—महर्षेर्वचनं कुर्व्वता मनोरथाः सफली-क्रियन्तां परिरब्धुकामया भूयते। ५४॥

मा गा इति। असम्बाधः असङ्कटः विजन इत्यर्थः। "सङ्कटं ना तु सम्बाधः" इत्यमरः। शिवः निर्बाधः द्वयोः अन्यतरस्य विशेषत्वविवक्षायां विशेषणसमासः। अस्मिन् असम्बाधशिवे अपि देशे चिराय चिरम् एक-श्चासौ चरश्चेति एकचरः एकाकी वसन् प्रमादं दौर्बल्यं मा गाः। "इणो गा लुङि" इति गादेशः। ननु निःस्पृहस्य मम अकिञ्चित्करः प्रमाद इति वाच्यम् इति आशङ्काह—मात्सर्य्येति। मत्सरः एव मात्सर्य्यं द्वेषः रागः स्नेहः ताभ्याम् उपहतात्मनां रागद्वेषदूषितस्वभावानां मानसानि मनांसि साधुषु सज्जनेषु अपि विषये स्खलन्ति विकुर्व्वते हि। अत्र प्रमादनिषेधलब्धाप्रमादरूपकारणेन अर्थप्राप्तिरूपकार्य्यस्य व्यतिरेककारण-समर्थनात् वैधर्म्येण कार्य्यकारणसमर्थनरूपः अर्थान्तरन्यासः ॥५३॥

निगमयति—तदिति। तत् तस्मात्, कारणात्, आशु शीघ्रं महर्षेः वचनं कुर्व्वन् तपस्यत् इत्यर्थः। नः अस्माकं मनोरथान् सफलीकुरुष्व अरिनिर्य्यातनेन अस्मान् प्रतिष्ठापय इत्यर्थः। प्रार्थनायां लोट्। किञ्च कृतार्थं कृतकृत्यं प्रत्यागतम् एव त्वा त्वाम् "त्वामौ द्वितीयायाः" इति त्वादेशः। स्तनयोः उपपीड्य स्तनोपपीड़म् "सप्तम्यां चोपपीडरुधकर्षः"

৫৩। বিজন অথচ মঙ্গলময় দেশেই তোমাকে একাকী বহুদিবস অবস্থান করিতে হইবে। তাহা হইলেও তুমি প্রমাদগ্রস্ত হইও না। কেন না, রাগদ্বেষদূষিতস্বভাব ব্যক্তিদিগের হৃদয় সদ্বিষয়েও প্রমাদযুক্ত হয়।

५३। निर्जन और (कांटे आदिसे) विकट स्थानपर तुम्हें बहुत समयतक अकेला रहना पड़ेगा। एसा (निर्जन स्थान और तपोभूमि अर्थात् वैरभावसे रहित स्थान) होने पर भी प्रमादयुक्त (बे खबर) न रहोगे क्योंकि रागद्वेषसे दूषित पुरुषों का हृदय सज्जनों पर भी प्रमादयुक्त अर्थात् (समर्में पड़कर अनिष्टकारी) हो जाता है।

उदीरितां तामिति याज्ञसेन्या
नवीकृतोद्ग्राहितविप्रकाराम् ।
आसाद्य वाचं स भृशं दिदीपे
काष्ठामुदीचीमिव तिग्मरश्मिः ॥५५॥
अथाभिपश्यन्निव विद्विषः पुरः
पुरोधसारोपितहेतिसंहतिः ।

अन्वयः । सः याज्ञसेन्या इति उदीरितां नवीकृतोद्ग्राहितविप्रकारां तां वाचम् आसाद्य उदीचीं काष्ठां तिग्मरश्मिरिव भृशं दिदीपे ॥ वाच्य—तेन तिग्मरश्मिना इव दिदीपे ॥५५॥

इति यामूल् । परिरब्धुं कामो यस्याः सा परिरब्धुकामा अस्मि। आलिङ्गितुम् इच्छामि इत्यर्थः । "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति मकारलोपः। प्राक् कार्य्यसिद्धेः प्रमदालिङ्गनम् अपि न प्रीतिप्रदमिति भावः ॥५४॥

उदीरितामिति । सः अर्जुनः इति इत्थं यज्ञसेनस्य अपत्येन स्त्रिया याज्ञसेन्या द्रौपद्या उदीरिताम् उक्ताम् । नवीकृतः पुनः उद्घाटनेन तथा प्रत्यायितः अतएव उद्ग्राहितः मनसि निधापितश्च विप्रकारः परिभवः यया सा तां वाचम् आसाद्य आकर्ण्य इत्यर्थः । उदीचीं काष्ठां दिशम् "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । तिग्मरश्मिः इव भृशं दिदीपे जज्वाल चुक्रोध इत्यर्थः ॥५५॥

৫৪। অতএব তুমি মহর্ষি ব্যাসদেবের আদেশ শীঘ্র পালন করিয়া আমাদের অভিলাষ পূরণ কর। আমিও কৃতকার্য্য হইয়া প্রত্যাগত তোমাকে স্তনোপপীড়ন পূর্ব্বক অর্থাৎ প্রগাঢ় রূপে আলিঙ্গন করিতে অভিলাষিণী রহিলাম।

৫৫। অর্জ্জুন দ্রৌপদীর কথিত, শত্রুকৃত পরাভবকে হৃদয়ে নূতন রূপে স্থাপনপূর্ব্বক সেই সকল বাক্য শ্রবণ করিয়া উত্তরদিগবলম্বী দিবাকরের ন্যায় অর্থাৎ গ্রীষ্মকালীন সূর্য্যের ন্যায় দীপ্যমান ( ক্রোধোদ্দীপ্ত ) হইয়া উঠিলেন।

५४। इस लिये महर्षि व्यासकी उपदेश शीघ्र ( जल्द ) पालन कर हम सबका मनोरथ पूर्ण करो मैंभी कार्य्यकी सफलता के साथ पूरा कर लौटे हुआ तुमसे छाती लगाकर अच्छी तरह मिलना चाहती हूं।

५५। अर्जुन, शत्रुओंसे किये अपमानको फिर नये रूपसे याद दिलाती हुई, द्रौपदी की बातें सुनकर उत्तरायण सूर्य्य की तरह ( क्रोधसे ) प्रदीप्त हो ( धधक ) गये।

बभार रम्योऽपि वपुः स भीषणं
गतः क्रियां मन्त्र इवाभिचारिकीम् ॥५६॥
अविलङ्घ्यविकर्षणं परैः
प्रथितज्यारवकर्म्म कार्मुकम् ।
अगतावरिदृष्टिगोचरं
शितनिस्त्रिंशयुजौ महेषुधी ॥५७॥

अन्वयः। अथ विद्विषः पुरः अभिपश्यन्निव तथा पुरोधसारोपितहेतिसंहतिः स रम्योऽपि आभिचारिकीं क्रियां गतः मन्त्र इव भीषणं वपुः बभार ॥ वाच्य – विद्विषः अभिपश्यता इव स्थितेन पुरोधसारोपितहेतिसंहतिना तेन रम्येण सतापि आभिचारिकीं क्रियां गतेन मन्त्रेणेव भीषणं वपुः बभ्रे [ अत्रोत्प्रेक्षा उपमा च अलङ्कारौ ] ॥५६॥

अन्वयः। [ अर्जुनः ] परैः अविलङ्घ्यविकर्षणं प्रथितज्यारवकर्म्म कार्मुकं तथा अरिदृष्टिगोचरम् अगतौ शितनिस्त्रिंशयुजौ महेषुधी उवहन्। वाच्य—महेषुधी उवहता अर्जुनेन ॥५७॥

अथेति। अथ विद्विषः शत्रून् पुरः अभिपश्यन् इव स्थितः तथा पुरोधसा धौम्येन आरोपिता समन्त्रं समाहिता हेतिसंहतिः आयुधकलापः यस्य सः तथोक्तः। "हेतिर्ज्वालाङ्कुरायुधेः" इति वैजयन्ती। सोऽर्जुनः रम्यः सौम्यः सन् अपि। अभिचारः परहिंसा प्रयोजनं यस्याः सा अभिचारिकी। "तदस्य प्रयोजनम्" इति ठक्। तां क्रियां गतः अभिचारकर्म्मणि नियुक्तः इत्यर्थः। मन्त्रः इव, रम्यः प्रकृत्या रमणीयः। भीषयति इति भीषणम्। नन्द्यादित्वात् ल्युप्रत्ययः। वपुः बभार। प्रशान्तो मन्त्रः प्रयोगभेदात् इव सोऽपि अवस्थाभेदात् भीषणः बभूव इत्यर्थः ॥५६॥

उक्तम् आयुधारोपणं विवृण्वन् प्रस्थानम् आह त्रिभिः। अविलङ्घ्येति। परैः शत्रुभिः अविलङ्घ्यम् अनतिक्रमणीयं विकर्षणं यस्य तत्, अमोघा-

५৬। অতঃপর অর্জ্জুন শত্রুদিগকে যেন সম্মুখেই দেখিতে লাগিলেন ; পুরোহিত ধৌম্য তাঁহার অস্ত্রসমূহকে মন্ত্রযুক্ত করিয়া দিলেন। রম্যাকৃতি হইলেও তখন তিনি অভিচার-ক্রিয়ায় নিযুক্ত মন্ত্রের ন্যায় ভয়ঙ্কর শরীর ধারণ করিলেন।

५६। इसकी बाद अर्जुन शत्रुओं को सामने से देखने लगे। पुरोहित धौम्य ऋषिने मन्त्रोंके साथ अस्त्रधारण कराया। रमणीय मूर्त्ति होने पर भी आभिचारिक ( मारण आदिका कार ) क्रियाओं से प्रयोग किये गये मन्त्रों की तरह अत्यन्त भयङ्कर हो गये।

यशसेव तिरोदधत् मुहु-
र्महसा गोत्रभिदायुधक्षतीः ।
कवचञ्च सरत्नमुद्वहन्
ज्वलितज्योतिरिवान्तरं दिवः ॥५८॥

अलकाधिपभृत्यदर्शितं
शिवमुर्वीधरवर्त्म संप्रयान् ।

अन्वयः । गोत्रभिदायुधक्षतीः महसा यशसेव मुहुः तिरोदधत्, (तथा) सरत्नं ज्वलितज्योतिः दिवः अन्तरमिव कवचं उद्वहन्—( परेणान्वयः ) ॥ वाच्य—तिरोदधता कवचम् उद्वहता ( अर्जुनेन) [ अथोत्प्रेक्षालङ्कारः ] ॥५८॥

कर्षणम् इत्यर्थः । किञ्च प्रथितः ज्यारवः गुणध्वनिः कर्म्म बाणमोचनादिकं च यस्य तत् कार्मुकञ्च उद्वहन् इति अन्वयः । तथा अशेषां दृष्टिगोचरं दृष्टिपथम् अगतौ, आहवेषु अनिवर्त्तित्वात् अस्य इति भावः । निर्गतः त्रिंशतः अङ्गुलिभ्यः निस्त्रिंशः खड्गः । डप्रत्यये संख्यायाः तत्पुरुषस्य उपसंख्यानात् समासान्तः । तेन शिते तीक्ष्णेन युक्तः इति शितनिस्त्रिंश युजौ । "सत्सूद्विष" इत्यादिना क्विप् । महेषुधी महानिषङ्गौ इषवः धीयन्ते अनयोः इति विग्रहः । "कर्म्मण्यधिकरणे च" इति क्विप्प्रत्ययः । "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः ॥५७॥

यशसेति । किञ्च गोत्रभिद इन्द्रस्य आयुधक्षतीः वज्रप्रहाररन्ध्राणि खाण्डवदाहसम्भवादिति भावः । महसा स्वकान्त्या यशसा इव मूर्त्तया कीर्त्या इव मुहुः तिरोदधत् आच्छादयन् । सरत्नं रत्नसहितम् अतएव ज्वलितज्योतिः दीप्ततारकम् । "ज्योतिस्ताराग्निभा ज्वाला दृक्पुत्रार्थधरासु च" इति वैजयन्ती । दिवः अन्तरं नभोमध्यम् इव अवस्थितम् । "अन्तरं परिधानीये बाह्ये स्वीयेऽन्तरात्मनि । क्लीवे मध्ये प्रकाशे च" इति वैजयन्ती । कवचञ्च उद्वहन् ॥ ५८

हृदयानि समाविवेश स
चयमुद्वाष्पदृशां तपोभृताम् ॥५९॥

॥ विशेषकम् ॥

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने।
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥६०॥

अन्वयः। अलकाधिपभृत्यदर्शितं शिवम् उर्व्वीधरवर्त्म सम्प्रयान् सः चयम् उद्वाष्पदृशां तपोभृतां हृदयानि समाविवेश॥ वाच्य—उर्व्वीधरवर्त्म सम्प्रयाता तेन हृदयानि समाविविशिरे। [ अत्रातिशयोक्तिरलङ्कारः ] ॥५९॥

अलकेति। सः अर्जुनः अलकाधिपभृत्येन यक्षेण दर्शितम्, अतः शिवं निर्बाधम् उर्व्वीधरवर्त्म हिमवन्मार्गं प्रति सम्प्रयान् प्रगच्छन्। चयम् उद्वाष्पदृशां वियोगदुःखात् साश्रुनेत्राणां तपोभृतां द्वैतवननिवासिनां तपस्विनां हृदयानि समाविवेश खेदयामास इत्यर्थः। संपूर्वस्य विशतेः खेदार्थत्वम् अवधेयम् ॥५९॥

৫৭-৫৯। শত্রুগণের প্রতি যাহার আকর্ষণ অমোঘ, যাহার জ্যা-রব ও কর্ম্ম চিরপ্রথিত ঈদৃশ কার্ম্মুক এবং শত্রুর দৃষ্টিপথাতীত তীক্ষ্ণ খড়্গ, যুক্ত তূণীরদ্বয় ধারণ করিয়া, ইন্দ্রপ্রহৃত বজ্রাঘাত চিহ্নগুলি মূর্ত্তিমতী কীর্ত্তির ন্যায় স্বীয় প্রভায় তিরোধান ও প্রদীপ্ততারক নভোমধ্যবৎ রত্নখচিত কবচ ধারণ পূর্ব্বক, অলকাধিপতির ভৃত্যের প্রদর্শিত অকণ্টক হিমালয়পথে গমন করিতে লাগিলে দ্বৈতবনবাসী তাপসগণের নেত্র অশ্রুভারাক্রান্ত এবং হৃদয় বিষণ্ণ হইল।

५७-५९। शत्रुओं के ऊपर जिसका आकर्षण (खींच लाना) अमोघ (व्यर्थ न होनेवाला) था, जिसकी प्रत्यञ्चा का शब्द और कार्य्य प्रसिद्ध थे इस प्रकार का धनुस और शत्रुओं का दृष्टिके सामने कभी नहीं आये, तीक्ष्ण तलवार से युक्त दो तट कस (साथ जिसमें वाण रखा जाता है) धारण कर इन्द्रके चलाये वज्रकी दागको मूर्त्तिधारण करनेवाली कीर्त्ति की तरह अपनी प्रभासे छिपाते हुए इस लिये देखनेमें चटकील ताराओं से संयुक्त अन्तरीक्ष का तरह कवच धारण कर, अलकाधिप (इस नामके नगरके स्वामी अर्थात् कुवेर) के दूत से बताये (हिमालयके निष्कण्टक रास्तेमें) अर्जुन जाने लगे तो उस समय द्वैतवनमें रहनेवाले तपस्वियों की आंखों में आंसू भर आया और हृदयमें विषाद हुआ।

## इति श्रीभारवीकृतौ किरातार्जुनीये महाकाव्ये
## तृतीयः सर्गः ॥ ३ ॥

अन्वयः । अथ आशाः दिव्यं दुन्दुभिध्वानम् अनुजगुः, व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने, अनिभृतवेलावीचिबाहुः पयोधिः स्फुरन्तीं भुवं प्रियं कथयिष्यन् इव आलिलिङ्ग । वाच्य—आशाभिः दिव्यः दुन्दुभिध्वानः अनुजगे । सुरकुसुमनिपाताः लक्ष्मीं वितेनुः, अनिभृतवेलावीचिबाहुना पयोधिना स्फुरन्ती प्रियं कथयिष्यता आलिलिङ्गे । [ अत्र प्रक्रमभङ्गदोषः, सुरकुसुमनिपाता व्योम्नि लक्ष्मीं वितेनुः इति पाठे तत्परिहारः ॥६०॥

अनुजगुरिति । अथ आशाः दिशः । दिवि भवं दिव्यम् । "दिगादिभ्यो यत्" दुन्दुभिध्वानम् अनुजगुः अनुदध्वनुः अनुगायतेर्लिट् । व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने पुष्पवृष्टिः च अजनिष्ट इत्यर्थः । किञ्च अनिभृताः चञ्चला वेलायां कूले या वीचयः ताः एव बाहवः यस्य सः तथोक्तः । "वेला कूलविकारयोः" इति शाश्वतः । पयोधिः स्फुरन्तीं उल्लसन्तीं हर्षात् स्पन्दमानाञ्च भुवं प्रियम् इष्टं भारावतारणरूपं कथयिष्यन् इव कथयितुमिव इत्यर्थः । "लृट् शेषे च" इति चकारात् क्रियार्थायां क्रियायां लृट् । आलिलिङ्ग । सर्व्वथा इदं शिवं दैवकार्य्यप्रवृत्तत्वात् अस्य इति भावः । अत्र विशेषणसाम्यात् अप्रस्तुतस्य गम्यत्वात् समासोक्तिरलङ्कारः । तत्र च अप्रस्तुतयोः भूमिसमुद्रयोः प्रतिपत्तिनायकाभ्यां भेदे अभेदलक्षणातिशयोक्तिवशात् आलिङ्गनोक्तिः इति रहस्यम् एवम् अतिशयोक्त्यनुप्राणिता समासोक्तिः । प्रियकथनात् उत्प्रेक्षां जीवयति तदङ्गभावं भजते इति उभयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥६०॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
तृतीयः सर्गः ॥ ३ ॥

৬০। অনন্তর দিক্ সকলে স্বর্গীয় দুন্দুভি বাজিতে লাগিল, স্বর্গীয় পুষ্পবৃষ্টিপাতে আকাশে অদ্ভুত শোভার আবির্ভাব হইল, বেলাসংলগ্ন চঞ্চলোর্ম্মিরূপ বাহুধারী সমুদ্র যেন আনন্দিত পৃথিবীকে প্রিয়বার্ত্তা (ভূভারহরণরূপ সুসংবাদ) বিজ্ঞাপন করিয়াই আলিঙ্গন করিতে লাগিলেন।

६०। इसके अनन्तर दिशाओं में स्वर्गके दुन्दुभिओं ( नक्कारों ) की प्रतिध्वनि होने लगी, स्वर्गीय फुलों की वर्षासे आकाशमें शोभा फैल गयी, वेला ( सामुद्रीतट ) के पास तरङ्ग रूप बाहुवाले समुद्रने प्रिय ( भूमिका भारहरण रूप ) वचन कहता हुआ पृथ्वीके साथ आलिङ्गन किया ।

—*—

# चतुर्थः सर्गः ।

ततः स कूजत्कलहंसमेखलां
सपाकशस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ॥१॥

विनम्रशालिप्रसवौघशालिनी-
रपेतपङ्काः ससरोरुहाम्भसः ।
ननन्द पश्यन्नुपसीम स स्थली-
रुपायनीभूतशरद्गुणश्रियः ॥ २ ॥

अन्वयः । ततः जनप्रियः सः कूजत्कलहंसमेखलां सपाकशस्याहितपाण्डुतागुणाम् आसादित-यौवनां प्रियाम् इव भुवम् उपजनम् उपाससाद ॥ वाच्य—जनप्रियेण तेन कूजत् कलहंसमेखला सपाकशस्याहितपाण्डुतागुणा प्रिया इव आसादितयौवना भूः उपासेदे ॥ १ ॥

अन्वयः । विनम्रशालिप्रसवौघशालिनीः अपेतपङ्काः ससरोरुहाम्भसः उपायनीभूतशरद्गुणश्रियः उपसीम स्थलीः पश्यन् ननन्द ॥ वाच्य—तेन स्थलीः पश्यता ननन्दे । २ ॥

तत इति । ततः प्रस्थानानन्तरं जनप्रियः सः अर्जुनः कलहंसाः मेखलाः इव इति उपमितसमासः । अन्यत्र कलहंसाः इव मेखलाः इति विशेषण-समासः । कूजन्ती कलहंसमेखला यस्याः ताम् । सह पाकेन वर्त्तन्ते इति सपाकानि शस्यानि तैः शस्यैः आहितः सम्पादितः पाण्डुता एव गुणः यस्याः तां भुवम् आसादितयौवनां प्राप्तयौवनां प्रियाम् इव उपजनं जनसमीपे अन्यत्र सखीसमक्षम् । समीपार्थे अव्ययीभावः । उपाससाद उपगतवान् । उपमालङ्कारः ॥ १ ॥

১। (তপস্তার জন্ত) প্রস্থানের পর লোকপ্রিয় সেই অর্জ্জুন, জনসমীপে শব্দায়মান হংসরূপ মেখলান্বিতা পক্বশস্ত দ্বারা সম্পাদিত পাণ্ডুগুণযুক্তা ভূমিকে (সখী সমক্ষে) প্রাপ্ত-যৌবনা পত্নীর স্তায় প্রাপ্ত হইলেন।

निरीक्ष्यमाणा इव विस्मयाकुलैः
पयोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमाः
मनोऽस्य जह्नुः शफरीविवृत्तयः ॥३॥

अन्वयः। विस्मयाकुलैः उन्मीलितपद्मलोचनैः पयोभिः निरीक्ष्यमाणा इव हृतप्रियादृष्टिविलासविभ्रमाः शफरीविवृत्तयः अस्य मनः जह्नुः ॥ वाच्य—निरीक्ष्यमाणाभिरिव हृतप्रियादृष्टिविलासविभ्रमाभिः शफरीविवृत्तिभिः मनः जह्रे [ अत्रोत्प्रेक्षा निदर्शना चालङ्कारौ ] ॥ ३ ॥

विनम्रेति। सः अर्जुनः विनम्रशालिप्रसवौघशालिनीः अवनतशालिफलस्तोमशोभिनीः अपेतपङ्काः निष्पङ्काः ससरोरुहाणि अम्भांसि यासु ताः तथोक्ताः। उपायनीभूताः अर्जुनं प्रति उपहारीभूताः शरद्गुणश्रियः पूर्वोक्ताः शरद्धर्मसम्पदः यासु ताः। उपसीम ग्रामसीमसु, विभक्त्यर्थे अव्ययीभावः, समासान्तविधेः अनित्यत्वात् "अनश्च" इति समासान्तो न भवति। केचित् तु "अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नि" इत्यादौ नपुंसकप्रयोगदर्शनात् "नपुंसकादन्यतरस्याम्" इति विकल्पात् साधुः इति आहुः। स्थलीः अकृत्रिमाः भुवः। "जनपद" इत्यादिना अकृत्रिमार्थे ङीष्। पश्यन् ननन्द जहर्ष। अत्र शरद्गुणेषु तादात्म्येन आरोप्यमाणस्य उपायनस्य प्रकृते नन्दनक्रियोपयोगित्वात् परिणामालङ्कारः ॥ २ ॥

निरीक्ष्यमाणा इति। विस्मयाकुलैः आश्चर्यरसाविष्टैः अतएव उन्मीलितानि पद्मानि एव लोचनानि येषां तैः पयोभिरम्भोभिः निरीक्ष्यमाणाः इव स्थिताः, हृतः प्रियादृष्टिविलासानां विभ्रमः शोभा याभिः ताः तथोक्ताः इति मनोहरणे हेतूक्तिः। "विभ्रमः संशये भ्रान्तौ शोभायां च" इति वैजयन्ती। शफरीविवृत्तयः प्रोष्ठीस्फुरितानि अस्य अर्जुनस्य मनः जह्नुः ॥३॥

२। সেই অর্জ্জুন, অবনত ধান্যফলশোভিনী, কর্দ্দমশূন্যা ( স্থানবিশেষে ) পদ্মযুক্ত-জলান্বিতা নিজ প্রতি শরদ্গুণ শ্রীকে উপহারদায়িনী ( অকৃত্রিমা ) ভূমিকে গ্রামসীমায় দেখিয়া আনন্দিত হইলেন।

१। अनन्तर लोगोंके प्यारे अर्जुन, मधुर शब्द करनेवाली हंसरूप मेखला ( कर धनी ) धारण करती हुई और धान पक जानेसे पीली इसलिये रश्मियों से युक्त, हंसकी तरह शब्द करनेवाली मेखला पहनी हुई प्यारी स्त्री की तरह पृथ्वी के पास पहुंच गये।

२। अर्जुन, झुके हुए धानके फलोंटवालियों से शोभित, कीचड़ से रहित, और खाई कमलों से पूर्ण ( इसलिये ) उपहार ( नजराने ) बीतरह, शारद ऋतु की परिपूर्ण सौन्दर्य देखकर प्रसन्न हो गये।

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम्।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥ ४ ॥
नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति।

अन्वयः। सः सवारिजे वारिणि कलमस्य रामणीयकं पश्यन् अधिकं तुतोष। तथाहि सुदुर्लभे अनुरूपसङ्गमे (सति) प्रकर्षलक्ष्मीं अभिनन्दितुं कः न अर्हति ॥ वाच्य—तेन कलमस्य रामणीयकं पश्यता अधिकं तुतुषे। केन प्रकर्षलक्ष्मीः अभिनन्दितुं नार्ह्यते ॥ ४ ॥

तुतोषेति। सः अर्जुनः सवारिजे वारिणि कलमस्य शालिविशेषस्य "शालयः कमलाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः। रमणीयस्य भावः रामणीयकम्। "योपधाद्‌गुरूपोत्तमाद् वुञ्" तत् पश्यन् अधिकं तुतोष, अनुरूपसङ्गमात् इति भावः। तथाहि सुदुर्लभे अनुरूपसङ्गमे योग्यसमागमे लब्धे सति इति शेषः, प्रकर्षलक्ष्मीं योग्यसमागमन-निमित्ताम् उत्कर्षसम्पदम् अभिनन्दितुं स्तोतुं कः न अर्हति? सर्वः अपि अभिनन्दति एव इत्यर्थः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ ४ ॥

৩। আশ্চর্য্যরসাবিষ্ট, প্রস্ফুটিত পদ্মরূপ নেত্র শোভিত, সরোবর কর্তৃক পরিদৃশ্যমানের ন্যায় প্রেয়সীর লীলাদৃষ্টির শোভাহরকারী পুটীর (মৎস্যের) বিবৃত্তি (স্ফুরণ) সকল, সেই অর্জ্জুনের চিত্তকে আকর্ষণ করিয়াছিল।

৪। সেই অর্জ্জুন, পদ্মযুক্ত জলে ধান্যবিশেষের শোভা দেখিয়া অত্যন্ত আনন্দিত হইলেন (যেহেতু) অত্যন্ত দুর্লভ, যোগ্য সমাগম হইলে (তন্নিমিত্তক) উৎকর্ষসম্পৎকে, কে অভি-নন্দিত না করে?

३। तालाब आश्चर्य्यके साथ कमल रूप नेत्रोंसे, प्यारी स्त्री के दृष्टिविलास (चञ्चल कटाक्षों) की शोभा हरण करनेवाली सफरी (पोठिया) मछलियों का उछलना देख से रहे थे। इसलिये अर्जुन का मन उस तरफ खींच गया।

४। अर्जुन, खींचे कमलों से युक्त जल में कलम (धानविशेष) की सुन्दरता देख अत्यन्त आनन्द हुए। असल में अत्यन्त दुर्लभ योग्य वस्तुओं का उचित स्थान पर संयोग से (इस प्रकार) उत्तम शोभा देख कर नहीं पसन्द कर सकता?

अवाप्तकिञ्जल्कविभेदमुच्चकै-
र्विवृत्तपाठीनपराहतं पयः ॥ ५ ।
कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितं चौमविपाण्डु सैकतम् ॥ ६ ॥

अन्वयः । आविष्कृतफेनसन्तति अवाप्तकिञ्जल्कविभेदं उच्चकैः विवृत्तपाठीनपराहतं पयः तस्य स्थलपद्मिनीगतं वितर्कं नुनोद ॥ वाच्य—आविष्कृतफेनसन्ततिना अवाप्तकिञ्जल्कविभेदेन विवृत्तपाठीनपराहतेन पयसा स्थलपद्मिनीगतः वितर्कः नुनुदे । ५ ॥

अन्वयः । शिथिलत्वम् आयता, शनैः शनैः शान्तरयेण वारिणा कृतोर्मिरेखं तरङ्गितं चौमविपाण्डु समुद्रयोषितां सैकतं निरीक्ष्य सः रेमे । वाच्य—तेन...निरीक्ष्य रेमे ॥ ६ ॥

नुनोदेति । आविष्कृता प्रकटीकृता फेनसन्ततिः डिण्डीरसमूहः यस्य तथोक्तम् । "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । अवाप्तः किञ्जल्कविभेदः केसरापगमः येन तत् तथोक्तम् । कुतः ? उच्चकैः उच्चकं यथा तथा विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतं ताडितम् । "सहस्रदंष्ट्रः पाठीनः" इत्यमरः । पयः कर्त्तृ ; तस्य अर्जुनस्य स्थलपद्मिनीगतं तद्गोचरम् इत्यर्थः । वितर्कं संशयं नुनोद चिच्छेद । पाठीनपराहत्या किञ्जल्कापायेन जलदर्शनात् स्थलपद्मिनीशङ्का निवृत्ता इत्यर्थः । अत्र निश्चयोत्तरसन्देहालङ्कारः ॥ ५ ॥

कृतेति । स अर्ज्जुनः शिथिलत्वम् आयता गच्छता दिने दिने चीयमाणेन इत्यर्थः । अतएव शनैः शनैः शान्तरयेण अन्यथा ऊर्मिरेखानुदयात् इति भावः । वारिणा कृताः ऊर्म्मयः पर्वाण्येव रेखाः राजयः यस्य तत् तथोक्तं तरङ्गा अस्य सञ्जाताः तरङ्गितं भङ्गितत् । "तदस्य सञ्जातम्" इति

५ । প্রচুর ফেনান্বিত, ( তদুপরি ) কেসরপতিত জল, পাঠীন ( বোয়াল মৎস্যের ) উচ্চ বিবৃত্তির ( স্ফুরণের ) দ্বারা তাড়িত হইয়া অর্জ্জুনের ( জলপদ্মে ) স্থলপদ্মগত সন্দেহকে অপনোদিত করিয়াছিল।

५ । कहीं पर जलमें फेन जम गया था और केशरकी धूल खूब गिर पड़ी था, अनन्तर उछलती पाठीन (बोयाल मछली) की फटकार से चञ्चल जलने अर्जुन के स्थलकमल का सन्देह कर दिया।

मनोरमं प्रापितमन्तरं भ्रुवो-
रलङ्कृतं केसररेणुनाऽणुना ।
अलक्तताम्राधरपल्लवश्रिया
समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥

नवातपालोहितमाहितं मुहु-
र्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भःपुलकेन सर्पता ॥ ८ ॥

अन्वयः । पाण्डोः सुतेन अणुना केसररेणुना अलङ्कृतं मनोरमं भ्रुवोरन्तरं प्रापितं बन्धुजीवकम् अलक्तताम्राधरपल्लवश्रिया समानयन्तीमिव महानिवेशौ पयोधरौ परितः मुहुः आहितं नवातपालोहितम् अरविन्दजं रजः सर्पता परिश्रमाम्भःपुलकेन चकासयन्तीं, कपोलसंश्लेषि अवतंसकोत्पलं विलोचनलिषा

इतच् । तत् चौमं दुकूलं तद्वत् विपाण्डु शुभ्रम् इति उपमालङ्कारः । समुद्रयोषितां नदीनां सिकता अस्य अस्तीति सैकतं पुलिनम् । "सिकताशर्कराभ्यां च" इति अण्प्रत्ययः । "तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्" इत्यमरः । निरीक्ष्य रेमे तुतोष ॥ ६ ॥

ततः त्रिभिः शालिगोपस्त्रीं वर्णयति—मनोरममिति । अणुना सूक्ष्मेण केसरेषु किञ्जल्केषु । "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः । यः रेणुः परागः तेन अलङ्कृतम् अतएव मनः रमयति इति मनोरमम् । 'कर्मण्यण्' इत्यण् । भ्रुवोः अन्तरं प्रापितं भ्रूमध्ये निवेशितं बन्धुजीवकं बन्धूकपुष्पम् । "बन्धूको बन्धुजीवकः" इत्यमरः । अलक्तताम्रस्य लाक्षारागरक्तस्य अधरपल्लवस्य श्रिया शोभया समानयन्तीं समीकुर्व्वतीम् इव साम्यपरीक्षां कुर्वतीम् इवेत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ७ ॥

৬। সেই অর্জ্জুন, শিথিলতাপ্রাপ্ত অল্প শব্দায়মান জল দ্বারা তরঙ্গরেখাযুক্ত, নদীসমূহের পুলিন ( সৈকতভূমি ) দেখিয়া আনন্দিত হইয়াছিলেন ।

६। प्रतिदिन सूखना और धीरे धीरे वेग शान्तहुए जलकी धाराओंसे पड़ी तरङ्गकी रेख ( लकीर ) युक्त ( इसलिये ) साफ धोती की तरह नदीका बालुकामय स्थान ( छाड़न ) देख अर्जुन आनन्दित हो गये ।

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम्।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥ ९ ॥

॥ विशेषकम् ॥

विभूषयन्तीं कलमस्य गोपिकां निरीक्ष्य शरदः कृतार्थता मेने ॥ वाच्य—पाण्डोः सुतः कृतार्थतां मेने [ स्वभावोक्तिरलङ्कारः ] ॥ ७—९ ॥

नवेति। महान् निवेशः स्थानं ययोः तौ महानिवेशौ पीवरौ इत्यर्थः। पयोधरौ परितः स्तनयोः समन्तात् इत्यर्थः। "अभितः परितः समया-निकषाहाप्रतियोगेऽपि" इति द्वितीया। मुहुः आहितं निक्षिप्तं नवातपा-लोहितं बालातपताम्रम् अरविन्दजं रजः परागं सर्पता प्रसरता परि-श्रमाम्भःपुलकेन स्वेदोद्गमेन पुलकेन चकासयन्तीं, शोभयन्तीं चकास्ते-र्ण्यन्तात् शतरि ङीप्। अलङ्करणं कुर्वतीम्। तत्र अपि विकृतता इति भावः ॥ ८ ॥

कपोलेति। पुनः कपोलसंश्लेषि यदवतंसकोत्पलं कर्णोत्पलं तद्विलो-चनत्विषा विभूषयन्तीम् आभरणस्य अपि आभरणम् इति भावः। कलमं गोपायति इति गोपिकां शालिगोप्त्रीं ण्वुल्प्रत्ययः। निरीक्ष्य पाण्डोः सुतेन अर्जुनेन शरदः कृतार्थाया: भावःकृतार्थता साफल्यम्। शरदः स्वगुण-सम्पत्तिविनियोगलाभात् इति भावः। "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः"। मेने अमानि। मन्यतेः कर्मणि लिट् ॥ ९ ॥

৭। সূক্ষ্ম কেশররেণুর দ্বারা অলঙ্কৃত (এবং) মনোহর ভ্রূর মধ্যে স্থাপিত, বন্ধুজীবককে (পুষ্পবিশেষকে) লাক্ষারসরঞ্জিত (আগনাদের) অধরপল্লবের শোভার সহিত যেন তুল্য করিতেছে।

৮। (ধান্যরক্ষিকাগণ) স্থূল স্তনদ্বয়ের চতুর্দ্দিকে পুনঃ পুনঃ নিক্ষিপ্ত, পদ্মপরাগ পরিশ্রম জনিত উদ্গত স্বেদজপুলকের দ্বারা শোভিত করিতেছে।

৯। কপোলসংশ্লিষ্ট, কর্ণোৎপলকে, নয়নদীপ্তি দ্বারা শোভিতধারিণী ধান্যরক্ষিকাকে দেখিয়া পাণ্ডুর পুত্র (অর্জ্জুন) শরতের সফলতা মনে করিলেন।

७—९। पाण्डुके पुत्र अर्जुन, केशरकी छोटी छोटी कणाओं से सुशोभित (इसलिये) मनको अत्यन्त लुभानेवाली भूमध्यमें (भौंआंके बीचेबीच) लटकने दुपहरिया (विशेष) फूलसे अपने नीचके ओठकी शोभा मिलाती। अत्यन्त बड़े और ऊंचे स्तनोंके आसपास बार बार दिये गये,

उपारताः पश्चिमरात्रिगोचरा-
दपारयन्तः पतितुं जवेन गाम् ।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं
गवां गणाः प्रस्नुतपीवरौधसः ॥१०॥

अन्वयः । पश्चिमरात्रिगोचरात् उपारताः जवेन गां पतितुम् अपारयन्तः प्रस्नुतपीवरौधसः उत्सुकाः गवां गणाः तम् अवेक्षणोत्सुकं चक्रुः ॥ वाच्य—उपारतैः अपारयद्भिः प्रस्नुतपीवरौधोभिः उत्सुकैः गवां गणैः सः अवेक्षणोत्सुकः चक्रे ॥ १० ॥

उपारता । इति पश्चिमा च असौ रात्रिश्च इति विशेषणसमासः । अपररात्रः इत्यर्थः । "पूर्वा दिक् पश्चिमं नभः" इत्यादिवत् एकदेशिशब्दस्य एकदेशशब्दसामानाधिकरण्यात् एकदेशे पर्य्यवसानं न तु पश्चिमः रात्रेः इति एकदेशिसमासः । तद्विधायके पूर्वापरादिसूत्रे पश्चिमशब्दाग्रहणात्, अतएव "अहःसर्वैकदेश" इत्यादिना न समासान्तोऽपि तस्य अपि पूर्वापरादिसूत्रोक्तसमासविषयत्वात् इति । प्रकाशवर्षस्तु एकदेशिसमासम् एव आश्रित्य समासान्तमाह ; तत् मृग्यम् । गावः चरन्ति अत्र इति गोचरः गवां जग्धिस्थानं वनम् । पश्चिमरात्रौ यः गोचरः तस्मात् उपारताः संनिवृत्ताः जवेन गां भुवं पतितुं धावितुम् अपारयन्तः अशक्नुवन्तः प्रस्नुतपीवरौधसः वत्सस्मरणात् स्रवत्पीपीनानाः । "ऊधस्तु क्लीवमापीनम्" इत्यमरः । "ऊधसोऽनङ्" इति स्त्रीग्रहणं कर्त्तव्यम् इति नियमात् न अनङादेशः । उत्सुकाः वत्सेषु उत्कण्ठिताः गवां गणाः तम् अर्जुनम् अवेक्षणोत्सुकं दर्शनलालसं चक्रुः । "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्युभयत्र अपि अमरः । अत्र स्वभावोक्तिरलङ्कारः, "स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥ १० ॥

तत्काल उदय होने सूर्यकी किरण केशर की धूलकी पसीने का दल रही बुन्दोंसे सुशोभित करती और कपोल ( गाल ) पक लटके तथा कानमें गहनेके रूप पहने गये कमलकी फुलकी आंखको शोभासे अत्यन्त सुन्दर बनाती हुई, धानकी रखवारी करनेवाली स्त्रियों को देखकर शरद ऋतुकी सफलता अच्छी तरह समझ गये ।

परीतमुक्षापजये जयश्रिया
नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
दर्दर्श पुष्टिं दधतं स शारदीं
सविग्रहं दर्पमिवाधिपं गवाम् ॥११॥

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं
गलद्दुकूलैर्जघनैरिवादधे ॥ १२ ॥

अन्वयः । उक्षापजये जयश्रिया परीतम् उच्चैः नदन्तं क्षतसिन्धुरोधसं शारदीं पुष्टिं दधतं गवाम् अधिपं सविग्रहं दर्पमिव स ददर्श ॥ वाच्य—तेन जयश्रिया परीतः उच्चैः नदन् क्षतसिन्धुरोधाः पुष्टिं दधत् गवामधिपः सविग्रहः दर्प इव ददृशे ॥ ११ ॥

अन्वयः । हिमानीविशदैः गवां कदम्बकैः मन्थरं विमुच्यमानैः शरन्नदीनां पुलिनैः गलद्दुकूलैः जघनैरिव तस्य कुतूहलम् आदधे । वाच्य—गवां कदम्बकैः विमुच्यमानानि पुलिनानि गलद्दुकूलानि जघनानीव कुतूहलम् आदधुः [ अत्रोत्प्रेक्षालङ्कारः ] ॥ १२ ॥

परीतमिति । सः अर्जुनः उक्षापजये उक्षान्तरभङ्गे सति जयश्रिया परीतं वेष्टितम् उच्चैः नदन्तं क्षतसिन्धुरोधसं रुग्णसरित्तटं शरदि भवां शारदीं पुष्टिम् अवयवोपचयं दधतं गवाम् अधिपं महोक्षं सविग्रहं मूर्त्तिमन्तम् । "कायो देहः क्लीवपुंसोः शरीरं वर्ष्म विग्रहः" इत्यमरः । दर्पम् इव इति उत्प्रेक्षा, ददर्श ॥ ११ ॥

১০। শেষরাত্রির আহার্য্য স্থান হইতে নিবৃত্তা (এবং) বেগে ভূমিগমনে অসমর্থা, বৎস-দর্শনে উৎসুকা, (বৎসস্মরণে) ক্ষরিতোন্নতস্তনী গোসমূহ, সেই (অর্জ্জুনকে) দর্শনোৎসুক করিয়াছিল।

১১। সেই অর্জ্জুন, বৃষান্তরজয়ে জয়শ্রী শোভিত উচ্চনাদী, নদীতটকর্ষী, শরৎকালীয় দেহের পুষ্টিধারী, গোদিগের অধিপকে (মহাবৃষকে) শরীরধারী দর্পের ন্যায় দেখিয়াছিলেন।

१०। पीछली रातमें (मैलानके समय) चरने के स्थान से लौठ आ रही, तेजीसे चलनेमें असमर्थ और बछड़ों को याद करने पर बड़े बड़े स्तनोंसे दूधकी बुन्दें टपकाती हुई गायों के दर्शकें लिये उत्कण्ठित (बड़ी लालसायुक्त) कुण्डने अर्जुनको देखने के लिये चलचा दिया।

११। अर्जुन ने शारद ऋतु के कारण पुष्टि धारण किये एक बड़े मोटे ताजे सांढ़को, एक दूसरे बलको जीतकर विजयलक्ष्मी पानेसे अत्यन्त ऊंचे स्वरमें हुकारते और नदीका किनारा सींगों से कोड़ते, (इसलिये) मूर्त्ति धारण किये साक्षात् दर्प (घमण्ड) की तरह देखा।

गतान् पशूनां सहजन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः ।
ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्ज्जवे ॥ १३ ॥

अन्वयः । पाण्डवः पशूनां सहजन्मबन्धुतां गतान् गृहाश्रयं, प्रेम वनेषु बिभ्रतः आर्ज्जवे गोभिः कृतानुकारान् इव गोपान् उपधेनु ददर्श ॥ वाच्य—पाण्डवेन...बन्धुतां गताः—बिभ्रतः—कृतानुकारा इव गोपाः ददृशिरे ॥ १३ ॥

विमुच्यमानैरिति । हिमानीविशदैः हिमसङ्घातशुभ्रैः । "हिमानी हिमसंहतिः" इत्यमरः । "इन्द्रवरुण" इत्यादिना ङीष् । तत्सन्नियोगात् आनुगागमश्च । गवां कदम्बकैः कर्त्तृभिः । "कदम्बकं समूहे स्यात्फले पुष्पविशेषके" इत्यमरः । मन्थरं मन्दं विमुच्यमानैः अपि किमुत अविमुच्यमानैरिति भावः । शरन्नदीनां सम्बन्धिभिः । शरद्ग्रहणं प्रावृड्निवृत्त्यर्थं तत्र पुलिनादर्शनात् इति भावः । पुलिनैः कर्त्तृभिः गलद्दुकूलैः जघनैः इव तस्य अर्जुनस्य कुतूहलं कौतुकम् आदधे आहितम् ॥ १२ ॥

गतानिति पाण्डवः अर्ज्जुनः पशूनां गवां सह जन्म येषां ते सहजन्मानः सोदराः ते एव बन्धवः तेषां भावः तत्ता तां गतान् पशुषु सोदराभिमानवतः इत्यर्थः । गृहाश्रयं गृहविषयं प्रेम वनेषु बिभ्रतः वनेषु गृहाभिमानिन इत्यर्थः । आर्ज्जवे ऋजुत्वे विधेयत्वे, गोभिः पशुभिः, कृतानुकारान् अनुकृतावस्थितान् इव इति उत्प्रेक्षा । ततः विधेयान् इत्यर्थः । गाः पाति इति गोपाः गोपालकाः । "आतोऽनुपसर्गे कः" इति कप्रत्ययः । तान् उपधेनु धेनुसमीपे, सामीप्यार्थे अव्ययीभावः । ददर्श । अत्र उत्प्रेक्षानुप्राणिता स्वभावोक्तिरलङ्कारः ॥ १३ ॥

১২। তুষারধবল, গোসমূহ কর্ত্তৃক ধীরে ধীরে পরিত্যক্ত, শরৎকালীয় নদীতট, স্খলিত বস্ত্রজঘনের ন্যায় অর্জ্জুনের কুতূহল জন্মাইয়াছিল।

১৩। অর্জ্জুন, গোসমূহে সহোদরভাবাপন্ন, বনে গৃহাভিমানী, সরলতায় গোর অনুকারীর ন্যায় গোপদিগকে গোসমীপে দেখিয়াছিলেন।

१२। बर्फ की तरह उजला, गायोंका झुण्ड धीरे धीरे शरदकाल की नदीकी किनारे से हट आया इसी कारणसे नदीके किनारेने कपड़े गिरने से लंगी जघन ( पेडूस नीचली भाग ) की तरह, देखने के लिये अर्जुन को ललसा दिया।

परिभ्रमन्मूर्द्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितै-
र्नवातपामृष्टसरोजचारुभिः ॥ १४ ॥

निबद्धनिःश्वासविकम्पिताधरा
लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्त्तितत्रिका
विकर्षणैः पाणिविहारहारिभिः ॥१५॥

अन्वयः। परिभ्रमन्मूर्द्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः चलत्कुण्डलरश्मिरञ्जितैः नवातपामृष्टसरोजचारुभिः मुखैः निबद्धनिश्वासविकम्पिताधरा प्रस्फुरितैकपल्लवाः लताः इव, व्यपोढपार्श्वैः पाणिविहारहारिभिः विकर्षणैः अपवर्त्तितत्रिका व्रजाजिरेषु अम्बुदनादशङ्किनीः शिखण्डिनीः

अथ चतुर्भिः बल्लवो नर्त्तकोसाम्येन वर्णयति—परिभ्रमदिति। मूर्द्धजाः षट्पदा इव इति उपमितसमासः। सरोजचारुभिः इति उपमानुसारात्। परिभ्रमद्भिः चलद्भिः मूर्द्धजैः षट्पदैः आकुलानि तैः दन्ताः केसराः इव इति पूर्ववत् समासः। स्मितोदयेन आदर्शिताः ईषत् प्रकाशिताः। दन्तकेसराः येषां तैः तथोक्तैः चलत्कुण्डलरश्मिरञ्जितैः चपलकनककर्णवेष्टनप्रभानुलिप्तैः अतएव नवातपामृष्टं बालातपस्पृष्टं यत् सरोजं तद्वत् चारुभिः मुखैः उपलक्षिताः ॥ १४ ॥

निबद्धेति। निबद्धेन अनुरुद्धेन निश्वासेन विकम्पिताः अधराः यासां ताः तथोक्ताः अतएव प्रस्फुरितैकपल्लवाः प्रचलितैकपल्लवा इत्यर्थः, "क्वचित् सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत्" इति कैयटः। लता इव स्थिताः दैवात् एकपल्लवस्फुरणस्य अपि लोके सम्भवात् उपमा एव इयं न उत्प्रेक्षा। किञ्च व्यपोढानि विपरीतानि पार्श्वानि येषु तैः पाणिविहारहारिभिः पाणिविक्षेपमनोहरैः। "अङ्गहारोऽङ्गविक्षेप" इत्यमरः। विकर्षणैः मन्थगुणाकर्षणैः अपवर्त्तितत्रिका सञ्चलितनितम्बाः यथापि

१३। अर्जुन ने देखा—गौओंके पास कई ग्वाले थे। वे सब गौओंको सगा भाई की तरह प्यार करते और वनको अपने रहने के घरकी तरह समझते थे। इन ग्वालों में ऐसा सीधापन आ गया था कि वे गौओं की अवस्था अनुकरण कर (नकल दिखला) रहे थे।

व्रजाजिरेष्वम्बुदनादशङ्किनीः
शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्त्तनै-
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥१६॥
स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम बल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥१७॥

कलापकम् ॥

योषितः उन्मदयत्सु मथां विवर्त्तनैः मुहुः प्रणुन्नेषु कुम्भेषु मृदङ्गमन्थरं नदत्सु सत्सु मन्थरावल्गित-पीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः बल्लवीः अभिप्रनृत्ताः वारयोषित इव सः निरीक्षितुं न उपरराम । वाच्य—तेन न उपरेमे ॥ १४—१७ ॥

"पृष्ठवंशाधरे त्रिकम्" इत्यमरः, तथापि अत्र नितम्बः लक्ष्यते तन्नैकट्यात् इति भावः ॥ १५ ॥

व्रजेति । व्रजाजिरेषु गोष्ठप्राङ्गणेषु । अधिकरणे सप्तमी । 'व्रजो गोष्ठाध्ववृन्देषु" इति विश्वः । अम्बुदनादशङ्किनीः गर्ज्जितभ्रमवतीः इति भ्रान्तिमदलङ्कारः । शिखण्डिनां योषितः मयूरीः । योषिद्ग्रहणं मौग्ध्यातिशयार्थम् । उन्मदयत्सु उन्मदाः कुर्वत्सु । "तत्करोति" इति णयन्तात् शतृप्रत्ययः । मथां मन्थनदण्डानाम् । "वैशाखमन्थमन्थान-मन्थानो मन्थदण्डके" इत्यमरः । विवर्त्तनैः परिभ्रमणैः मुहुः प्रणुन्नेषु कम्पितेषु इति स्वभावोक्तिः । कुम्भेषु कलशेषु मृदङ्गवत् मन्थरम् ईषन्नदत्सु स्तनवत्सु सत्सु इति नाद्य[वाच्य]साम्योक्तिः । भावलक्षणे सप्तमीयम् ॥१६॥

स इति । मन्थरं मन्दम् आवल्गिताः चञ्चलाः पीवराः स्तनाः यासां ताः तथोक्ताः । "स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात्" इति ङीष् । परिश्रमेण क्लान्तानि म्लानानि विलोचनोत्पलानि यासां ताः तथोक्ताः । बल्लवीः गोपीः । "गोपे गोपालगोसंख्यगोधुगाभीरबल्लवाः" इत्यमरः । अभिप्रनृत्ताः नृत्यन्तीः । "गत्यर्थाकर्म्मक" इत्यादिना कर्त्तरि क्तः । "मतिबुद्धि-

प्रपात पूर्वां जहतो विजिह्मतां
वृषोपभुक्तान्तिक[स]शस्यसम्पदः ।
रथाङ्गसीमन्तितसान्द्रकर्दमान्
प्रसक्तसम्पातपृथक्कृतान् पथः ॥१८॥

अन्वयः । सः पूर्वां विजिह्मतां जहतः वृषोपभुक्तान्ति[स]कशस्यसम्पदः रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः प्रपात ॥ वाच्य—तेन जिह्मता जहतः—सम्पदः—कर्दमा—पृथक्कृता: पन्थानः पेतिरे ॥ १८ ॥

पूजार्थैश्चयश्च” इति चकारादन्तर्भावनार्थत्वम् । वारयोषितः वेश्याः इव। “वारस्त्री गणिका वेश्या” इत्यमरः । सः अर्जुनः निरीक्षितुम्। ईक्षतेस्तुमुन् । न उपरराम न विरमति स्म । “उपाच्च” “विभाषाकर्मकात्” इति परस्मैपदम् । अत्र चतुःश्लोक्याम् उपमास्वभावोक्त्योः संसृष्टिः ॥ १७ ॥

১৪—১৭। অর্জ্জুন দেখিলেন, গোপরমণীগণ দধিমন্থন করিতেছিল। তাহাতে পরিচালিত কেশরূপ ভ্রমরসকলের দ্বারা ব্যাপ্ত, ঈষৎ হাস্য বিকাশে দন্তরূপ কেশর সকল অল্প বিকসিত দোলায়মান কুণ্ডলের কিরণ দ্বারা সেই দন্তসকল রঞ্জিত হওয়াতে গোপীগণের মুখমণ্ডল অরুণকিরণস্পৃষ্ট পদ্মসমূহের মত মনোহর হইয়াছিল। নিশ্বাস নিরুদ্ধ করাতে তাহাদের অধরদেশ বিকম্পিত হইতেছিল সুতরাং একপল্লবকম্পিতা লতার ন্যায় তাহাদের শোভা হইয়াছিল। মনোহর পাণিবিক্ষেপ সহকারে মন্থনরজ্জু আকর্ষণ বিকর্ষণ করায় গোপীগণের পার্শ্বদ্বয় বিবর্ত্তিত এবং নিতম্বদেশ আন্দোলিত হইতেছিল। মন্থনদণ্ডের বিবর্ত্তনে কুম্ভসকল বারংবার কম্পিত ও তাহা হইতে মৃদঙ্গবৎ মৃদুমন্দ শব্দ উত্থিত হইতেছিল, গোষ্ঠস্থিত ময়ূরীগণ ঐ শব্দ মেঘধ্বনি মনে করিয়া উন্মাদিত হইতেছিল। মন্থনব্যাপারে গোপীগণের পীনপয়োধর ঈষৎ আন্দোলিত, শ্রমভরে নয়নকমল ক্লান্ত হইয়াছিল। নৃত্যপরায়ণা বারবনিতাদিগের মত অর্জ্জুন ঐ গোপীদিগকে দর্শন করিতে নিবৃত্ত হইলেন না।

१४—१७। अर्जुन ने देखा कि (ग्वालों की स्त्रियां) या दही मह रही थीं, मथन करने के समय इधर उधर डोलने केश रूप भौरों पड़ने घिरे बहुत थोड़े हसने (मुसकुराने) से कुछ दिखाई पड़ दांत रूप केशरी और थोड़े दिखाई पड़ते तथा झूलते हुए कुण्डलों की किरणों से युक्त, ग्वालिनों के मुखमण्डल नवो (सुनहरी) धूपसे चमकते कमल की तरह सुन्दर हो गये थे। श्वास रोक रखने से उनके नीचके ओठ कुछ कोप रह थे (वल्ली इसीसे) कुछ अपने पल्लव से युक्त लताओं की तरह था उन सब की शोभा हो गयी थी। सुन्दर सुन्दर हांथ हिला हिला कर मन्थान (मन्हान) की रस्सी खींचने से उनकी पंसली इधर उधर कुछ फिर रहा थीं और नितम्बस्थान (चूतड़का स्थान) कुछ डोल रहे थे। बार बार मथान के फिरते रहने से घड़ों (मटकों) में मृदङ्ग की तरह शब्द हो रहा था उसे बादल का शब्द समझ कर मोरिने (मोर की स्त्रियां) गोष्ठस्थान

जनैरुपग्राममनिन्द्यकर्म्मभि-
र्विविक्तभावेङ्गितभूषणैर्वृताः।
भृशं ददर्शाश्रममण्डपोपमाः
सपुष्पहासाः स निवेशवीरुधः ॥ १९ ॥

अन्वयः। सः उपग्रामम् अनिन्द्यकर्म्मभिः विविक्तभावेङ्गितभूषणैः वृताः आश्रममण्डपोपमाः सपुष्पहासाः निवेशवीरुधः भृशं ददर्श॥ वाच्य—तेन—निवेशवीरुधः ददृशिरे ॥ १९ ॥

पपातेति। सः अर्जुनः पूर्वां प्रावृषेण्यां विजिह्मतां वक्रतां जहतः त्यजतः। शरदि निष्पङ्कत्वेन समरेखया एव सुगमत्वात् इति भावः। जहातेः शतृप्रत्ययः। वृषोपभुक्तान्तिक[स]शस्यसम्पदः वृषभचर्व्वितप्रान्त शस्यसम्पदोन्। "सुकृते वृषभे वृषः" इत्यमरः। सीमन्ताः इव सीमन्ताः चक्राङ्कपद्धतयः सीमन्तवन्तः कृताः सीमन्तिताः। मत्वन्तात् "तत्करोति" इति णिचि क्तः, णाविष्टवद्भावान्मतुपो लुक्। रथाङ्गैः चक्रैः सीमन्तिताः सान्द्राः कर्दमाः घनीभूताः पङ्का येषु तान् प्रसक्तसम्पातेन सन्ततसञ्चारेण पृथक्कृतान् पथः मार्गान् पपात जगाम इति स्वभावोक्तिः ॥ १८ ॥

जनैरिति। स अर्जुनः उपग्रामं ग्रामेषु, विभक्त्यर्थे अव्ययीभावः। अनिन्द्यकर्म्मभिः अनिषिद्धवृत्तिभिः। वृत्तिश्च एकत्र कृष्यादिः, अन्यत्र शिलोञ्छादिः। विविक्तानि एकाग्राणि, भावः अभिप्रायः, इङ्गितं चेष्टा, भूषणम् अलङ्कारश्च येषां तथोक्तैः जनैः वृताः अधिष्ठिता इत्यर्थः। अतएव आश्रमेषु मुनिस्थानेषु ये मण्डपाः तदुपमाः। "मण्डपोऽस्त्री जनाश्रयः"

১৮। পথসকল বর্ষাকালীন বক্রতা পরিত্যাগ করিয়া শরতে সরল হইয়াছিল, বৃষগণ পথের প্রান্তস্থিত শস্যসকল খাইয়া ফেলিয়াছিল, রথচক্রের গমনে পথের সীথি সদৃশ কর্দ্দমসকল ঘনীভূত এবং সর্ব্বদা লোক যাতায়াতে সকল পথই পৃথকভূত হইয়াছিল। অর্জ্জুন সেই অনায়াসগম্য পথে যাইতে লাগিলেন।

(वथान) पर पागल हो गयीं थीं। मथन करती रहने से ग्वालिनों के विशाल स्तन कुछ डोलते थे और परिश्रम से आंखें शिथिल हो रही थीं। (इसलिये) नाच करती पतुरियाओं की तरह उन्हें (ग्वालिनोंको) देखने से अर्जुन निवृत्त न हो सके।

१८। सब रास्ते, वर्षाकाल के अपने टेढ़ापन को छोड़ शारद ऋतुमें सीधे हो गये थे बैल रास्तों के आस पास हरि केश पास (लट) वाली चर रहे थे, रथों के चक्र चलते रहने से फी तरह और जमी की चड़वाले, आने जाने लोगों से पूर्ण रास्ते अलग २ हो गये थे ऐसे रास्ते पर अर्जुन अनायास जाने लगे।

ततः स सम्प्रेक्ष्य शरद्गुणश्रियं
शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमनोदितोऽपि गां
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥२०॥

इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः ।

अन्वयः । ततः स यक्ष शरद्गुणश्रियं सम्प्रेक्ष्य शरद्गुणालोकनलोलचक्षुषं तम् अनोदितोऽ
गाम् उवाच । ( तथाहि ) इङ्गितज्ञः अवसरे न अवसीदति ॥ वाच्य—तेन यक्षेण शरद्गुणालो-
कनलोलचक्षुः सः अनोदितेनापि गाम् ऊचे । इङ्गितज्ञेन न अवसद्यते ॥ २० ॥

इत्यमरः । सपुष्पहासाः पुष्पविकाशसहिताः । "तेन सह" इत्यादिना
बहुव्रीहिः । निवेशवीरुधः गृहगुल्मिनीः । "वीरुधो वल्लिगुल्मिन्यौ" इति
वैजयन्ती । भृशं सादरं ददर्श । उपमालङ्कारः ॥ १९ ॥

तत इति । ततः स पूर्वोक्तः यक्षः शरद्गुणश्रियं सम्प्रेक्ष्य दर्शनीयां
वर्णनीयां च विचार्य्य इत्यर्थः । शरद्गुणालोकने लोलचक्षुषं सतृष्ण-
दृष्टिम् । "लोलश्चलसतृष्णयोः" इत्यमरः । तम् अर्ज्जुनम् अनोदितः अपि
अपृष्टः अपि गां वाचम् उवाच । तथाहि इङ्गितज्ञः भावज्ञः । "इङ्गितं
हृद्गतो भावः" इति विश्वः । अवसरे उक्तियोग्ये काले न अवसीदति न
वाचं यच्छति । "नापृष्टः कस्यचिद् ब्रूयात्" इति निषेधस्तु अनाकाङ्क्षि-
तोक्तिविषय इति भावः । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥२०॥

১৯। অর্জ্জুন দেখিলেন, গ্রামের লোকসকল কৃষি ও শিল্পোত্থাদি অনিন্দিত কর্ম্ম করিয়া
থাকে, তাহাদের ভাব, ইঙ্গিত ও অলঙ্কারাদি পবিত্র। মুনিদিগের আশ্রমস্থিত কুটীরের মত
ঐ সকল গ্রামবাসিগণের কুটীরগুলিও প্রস্ফুটিতপুষ্পযুক্ত লতাগুল্মে ভূষিত। অর্জ্জুন আনন্দের
সহিত তাহা দেখিতে লাগিলেন।

१९। अर्जुनने देखा—गांव के लोक खेती और सेतकी अन्त वीतने का आनन्दित ( हिंसा
और कपट के दोषसे रहित परिश्रम के साथ ) काम कर रहे हैं, उनकी विचार, चेष्टा और वस्त्रों
का भूषण पवित्र थे, मुनियों के तपोवनवाले का पेड़ों की तरह इन गांववालों के भी का पं
खिचे फूलों से युक्त लताओं से शोभ रहे थे, इन्हे अर्जुन आनन्दपूर्व्वक देखने लगे।

जयश्रियं पार्थ पृथूकरोतु ते
शरत् प्रसन्नाम्बुरनम्बुवारिदा ॥ २१ ॥
उपैति (स) शस्यं परिणामरम्यता
नदीरनौद्धत्यमपङ्कता महीम् ।
नवैर्गुणैः सम्प्रति संस्तवस्थिरं
तिरोहितं प्रेम घनागमश्रियः ॥२२॥

अन्वयः । हे पार्थ, शिवायाः नियतेः आयतिः इव जगतः क्रियाः फलैः कृतार्थयन्ती प्रसन्नाम्बुः अनम्बुवारिदा इयं शरत् ते जयश्रियं पृथूकरोतु ॥ वाच्य—आयत्या इव कृतार्थयन्त्या प्रसन्नाम्बुः अनम्बुवारिदया अनया शरदा जयश्रीः पृथूक्रियताम् ॥ २१ ॥

अन्वयः । परिणामरम्यता (स) शस्यं उपैति, अनौद्धत्यम् नदीः उपैति, अपङ्कता महीम् उपैति । तथाहि सम्प्रति नवैः गुणैः संस्तवस्थिरम् (अपि) घनागमश्रियः प्रेम तिरोहितम् । वाच्य—शस्यं परिणामरम्यतया नदी अनौद्धत्येन मही अपङ्कतया उपेयते । नवाः गुणाः प्रेम तिरोहितवन्तः ॥ २२ ॥

इयमिति । हे पार्थ ! शिवायाः कल्याणकारिण्याः नियतेः । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः । शुभावहदैवस्य आयतिः फलदानकालः सा एव जगतः क्रिया कृष्यादिकर्माणि फलैः लाभैः "लाभनिष्पत्तियोगेषु वीजभावे धने फलम्" इति वैजयन्ती । कृतार्थयन्ती सफलयन्ती प्रसन्नाम्बुः निर्मलोदका अनम्बुवारिदा निर्जलमेघा, अनेन विशेषणद्वयेन द्यावापृथिव्योः आनुकूल्यं सूचयति । इयं शरत् ते जयश्रियं पृथूकरोतु । आशीरर्थे लोट् ॥ २१ ॥

২০। অনন্তর অর্জ্জুনের সমভিব্যাহারী সেই যক্ষ শারদীয় সৌন্দর্য্য দর্শন করিয়া, শরতের শোভা দর্শনে চঞ্চলচক্ষু অর্জুন কোন কথা জিজ্ঞাসা না করিলেও তাহাকে বলিতে লাগিলেন। বাস্তবিক ভাবজ্ঞ ব্যক্তিগণ, উপযুক্ত সময়ে চুপ করিয়া থাকেন না।

২১। যক্ষ কহিলেন, হে পার্থ ! কল্যাণকারিণী নিয়তির ফলদানকালের ন্যায়, ফল দ্বারা জগতের কৃষি প্রভৃতি কর্ম্মসাধিকা নির্ম্মল সলিলা জলশূন্য মেঘশালিনী শরৎকাল তোমার জয়শ্রী বর্দ্ধিত করুক।

२०। अनन्तर अर्जुनका साथी वह यक्ष, शारद की शोभा देख पूछे न जाने पर भी कहने लगा। असल में अभिप्राय समझनेवाले अवसर नहीं चुकते।

२१ यक्षने कहा—हे पार्थ! कल्याण करनेवाली नियति (दैव के फल देनेवाले समय) के तुल्य फल द्वारा संसारकी खेती आदिक कामको सम्पन्न करनेवाली, निर्मल जल और जलशून्य (इसलिये उजले) वादलयुक्त शारद ऋतुने ही विजयलक्ष्मी बढ़ा दे।

पतन्ति नास्मिन् विशदाः पतत्त्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः ।
तथापि पुष्णाति नभः श्रियं परां
न रम्यमाहार्य्यमपेक्षते गुणम् ॥२३॥

अन्वयः । अस्मिन् विशदाः पतत्त्रिणः न पतन्ति, धृतेन्द्रचापाः पयोदपङ्क्तयः ( च ) न पतन्ति तथापि नभः परां श्रियं पुष्णाति । तथाहि रम्यं ( वस्तु ) आहार्य्यं गुणं न अपेक्षते ॥ वाच्य—विशदैः पतत्त्रिभिः न पत्यते, धृतेन्द्रचापाभिः पयोदपङ्क्तिभिः न पत्यते । नभसा परा श्रीः पुष्यते । रम्येण आहार्य्यः गुणः न अपेक्ष्यते ॥ २३ ।

उपैतीति । ( स ) शस्यं व्रीह्यादिकं परिणामेन परिपाकेन या रम्यता सा ( कर्त्री ) उपैति । नदीः अनौद्धत्यं गम्यरूपत्वम् ( कर्त्तृ ) उपैति । महीम् अपङ्कता निष्पङ्कत्वम् ( कर्त्री ) उपैति । तथाहि सम्प्रति नवैः गुणैः पूर्वैः शरद्धर्मैः संस्तवेन परिचयेन स्थिरं दृढ़म् अपि घनागमश्रियः प्रावृड्लक्ष्म्याः सम्बन्धि तद्विषयम् इत्यर्थः, प्रेम तिरोहितं निरर्थकं कृतम् इत्यर्थः । गुणतन्त्राः प्रेमाणः न परिचयतन्त्रा इति भावः । वास्तवालङ्कारः ॥२२॥

पतन्तीति । अस्मिन् नभसि विशदाः पतत्त्रिणः बलाकाः न पतन्ति न प्रसरन्ति, धृतेन्द्रचापाः पयोदपङ्क्तयश्च न पतन्ति । तथापि शोभाकारणाभावेऽपि नभः परां श्रियं शोभां पुष्णाति । तथाहि रम्यं स्वभावसुन्दरं वस्तु आहार्य्यम् आरोप्यमाणं गुणं न अपेक्षते । तत्र स्वभावस्य एव समर्थत्वात् इति भावः । अत्र अर्थान्तरन्यासः ॥ २३ ॥

२२। शस्यसकल पाकियाछे, नदीसकल शान्तभाव धारण करियाछे, भूमिसकल कर्दमशून्य हइयाछे। वस्तुतः सम्प्रति शरत् नवीन गुण द्वारा, वर्षालक्ष्मीर पूर्ब्ब परिचित दृढ़-प्रेम निरस्त करिया दितेछे।

२३। (स) शरतेर आकाशे श्वेतवर्ण कलहंसश्रेणी उड़िया बेड़ाय ना, इन्द्रधनुयुक्त मेघमाला उदित हय ना, तथापि आकाश परम शोभा धारण करियाछे। वस्तुतः स्वभाव सुन्दर वस्तु कखनओ परेर गुणेर अपेक्षा राखे ना।

२२। हरियाली पक चली, नदियोंका जल शान्त हो गया, पृथ्वी की चड़सी रहित हो गयी, इसलिये शरदने अपने नये गुणोंसे, वर्षाके शोभा में पहले से लगी हुए प्रेम को तुच्छ कर दिया।

२३। शारद ऋतुमें मधुर शब्द करनेवाले उजले हंस आकाशमें नहीं उड़ते फिरते, इन्द्रधनुष धारण किये बादल भी नहीं दिखाई पड़ते तो भी आकाशने अच्छी शोभा धारण करती, वास्तव से अपनेसे ही सुन्दर पदार्थ दूसरे के गुणोंकी अपेक्षा ( आशा ) कभी नहीं करते।

विपाण्डुभिर्म्लानतया पयोधरै-
श्च्युताचिराभागुणहेमदामभिः ।
इयं कदम्बानिलभर्त्तुरत्यये
न दिग्वधूनां कृशता न राजते ॥२४॥
विहाय वाञ्छामुदिते मदात्यया-
दरक्तकण्ठस्य रुते शिखण्डिनः ।
श्रुतिः श्रयत्युन्मदहंसनिःस्वनं
गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥२५॥

अन्वयः । कदम्बानिलभर्त्तुः अत्यये म्लानतया विपाण्डुभिः च्युताचिराभागुणहेमदामभिः पयोधरैः दिग्वधूनाम् इयं कृशता न राजते न ॥ वाच्य—अनया कृशतया न राज्यते न । २४ ।

अन्वयः । मदात्ययात् अरक्तकण्ठस्य शिखण्डिनः उदिते रुते वाञ्छां विहाय श्रुतिः उन्मदहंस-निस्वनं श्रयति । तथाहि प्रियत्वे गुणाः अधिकृताः, संस्तवः न ॥ वाच्य—श्रुत्या उन्मदहंसनिःस्वनः श्रीयते । गुणैः अधिकृतं न संस्तवेन ॥ २५ ॥

विपाण्डुभिरिति । कदम्बानिलशब्देन वर्षर्त्तुः उपलक्ष्यते । स एव भर्त्ता तस्य अत्यये विरहे म्लानतया निर्जलतया दुर्बलतया च विपाण्डुभिः, च्युतानि रहितानि अचिराभा गुणा विद्युल्लता एव हेमदामानि सुवर्ण-सूत्राभरणानि येभ्यः तैः पयोधरैः अम्भोदैः अन्यत्र स्तनैः उपलक्षितानाम् । "स्तनाम्भोदौ पयोधरौ" इति वैजयन्ती । दिश एव वध्वः तासाम् इयं कृशता न राजते इति न, किन्तु राजत एव भर्त्तृवियुक्तत्वात् । "आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा" इति स्मरणात् इति भावः । सामान्यतः प्रसक्तम् अराजनं कार्श्यस्य एकेन नञानूद्य, द्वितीयेन निषेधति । यथाह वामनः—"सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति । अत्र रूपका-लङ्कारः स्फुट एव ॥ २४ ॥

विहायेति । मदात्ययात् मदक्षयात् अरक्तकण्ठस्य अमाधुर्यस्वरस्य कण्ठशब्देनात्र तद्गतः स्वरः लक्ष्यते, शिखण्डिनः मयूरस्य सम्बन्धिनि उदिते

২৪। বর্ষা ঋতুরূপ পতিবিরহে দিগ্বধূসকল পরিম্লান হওয়াতে পয়োধর ( মেঘ ও স্তন ) পাণ্ডুবর্ণ ধারণ করিয়াছে; বিদ্যুদ্রূপ স্বর্ণহার তাহা হইতে বিচ্যুত হইয়াছে। এইহেতু দিগ্বধূগণের কৃশতাই প্রকাশ পাইতেছে।

२४। वर्षाकाल रूप पतिके विरह से दिशा रूप नयी स्त्रियों के मलीन हो जाने पर पयोधर ( बादल और स्तन ) पाण्डुवर्ण हो गया, बिजलीरूपी सोने की गहने गिर पड़े ( इसलिये पातिव्रत धर्म्मके अनुसार ) उनकी दुर्बलता ही प्रकाशमान हो ( शोभावहा ) रही है ।

अमी पृथुस्तम्बभृतः पिशङ्गतां
गता विपाकेन फलस्य शालयः ।
विकासि वप्राम्भसि गन्धसूचितं
नमन्ति निघ्रातुमिवासितोत्पलम् ॥२६॥

अन्वयः । अमी पृथुस्तम्बभृतः फलस्य विपाकेन पिशङ्गतां गताः, शालयः वप्राम्भसि विकासि गन्धसूचितम् असितोत्पलं निघ्रातुमिव नमन्ति ॥ वाच्य—अमीभिः पृथुस्तम्बभृद्भिः...पिशङ्गतां गतैः शालिभिः...नम्यते ॥ २६ ॥

उच्चैस्तरे रुते कूजिते वाञ्छां विहाय श्रुतिः श्रोत्रम् । "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः । उन्मदहंसनिःस्वनं मत्तमरालकूजितं श्रयति भजते । ननु अकाण्डे परिचितपरिहारेण अपरिचिते कथं प्रीत्युदयः इत्याशङ्क्य अर्थान्तरं न्यस्यति—गुणा इति । प्रीणाति इति प्रियः । "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । प्रियत्वे प्रीतिकरत्वे गुणाः अधिकृताः नियुक्ताः संस्तवः परिचयः न अधिकृतः न समर्थः, प्रेमाधाने गुणवत्त्वं प्रयोजकं न परिचय इत्यर्थः । २५ ॥

अमी इति । अमी पृथून् स्तम्बान् गुच्छान् बिभ्रति पृथुस्तम्बभृतः । "स्तम्बो गुच्छस्तृणादिनः" इत्यमरः । फलस्य प्रसवस्य विपाकेन परिणामेन पिशङ्गतां गताः शालयः व्रीहिविशेषाः । वप्राम्भसि केदारोदके । "पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्" इत्यमरः । विकसति इति विकासि विकसितं गन्धेन सूचितं ज्ञापितम् असितोत्पलं निघ्रातुम् आघ्रातुम् इव नमन्ति । "निध्यातुमिव" इति पाठे द्रष्टुम् इत्यर्थः । निर्वर्णयितुं वा । "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः । अत्र फलभारात् नमनस्य निघ्राणफलकत्वम् उत्प्रेक्ष्यते इति फलोत्प्रेक्षा ॥ २६ ॥

२५। মদক্ষয়হেতু কঠোরকণ্ঠ ময়ূরের উচ্চারিত উচ্চশব্দ শুনিতে আকাঙ্ক্ষা ত্যাগ করিয়া কর্ণ, এক্ষণে মত্তমরালকূজনের আশ্রয় লইয়াছে। বস্তুতঃ প্রীতির ব্যাপারে গুণেরই অধিকার কিন্তু পরিচয়ের অধিকার নাই।

२५। मद टूट जाने के कारण कठोर हुए कण्ठवाले मयूर का शब्द सुनने की इच्छा त्याग इस समय कान मतवाले हंसों के मधुर स्वर की ओर खिंच गया है। वास्तवमें प्रीतिके व्यवहार पर केवल गुणों का ही अधिकार नहीं रहता। ( अर्थात् समयकी भी आवश्यकता रहती है )।

२७। এই সকল স্থূলগুচ্ছধারী পরিপক্কফল দ্বারা পিঙ্গল বর্ণ ধান্য, ক্ষেত্রের আনিহিত জলে প্রস্ফুটিত সুগন্ধ নীলোৎপলের আঘ্রাণ লইবার জন্যই যেন অবনত হইয়া পড়িয়াছে।

मृणालिनीनामनुरञ्जितं त्विषा
विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गितं
द्रुतं धनुष्खण्डमिवाहिविद्विषः ॥२७॥

विपाण्डु संव्यानमिवानिलोद्धतं
निरुन्धतीः सप्तपलाशजं रजः ।
अनाविलोन्मीलितबाणचक्षुषः
सपुष्पहासा वनराजियोषितः ॥२८॥

अन्वयः। मृणालिनीनां त्विषा अनुरञ्जितम् अम्भोजपलाशशोभया विभिन्नं स्फुरच्छालिशिखापिशङ्गितं द्रुतम् अहिविद्विषः धनुष्खण्डमिव ( स्थितं पयः ) ॥ २७ ॥

अन्वयः। विपाण्डु अनिलोद्धतं सप्तपलाशजं रजः निरुन्धतीः अनाविलोन्मीलितबाणचक्षुषः सपुष्पहासाः वनराजियोषितः ॥ २८ ॥

अथ चतुर्भिः कलापकमाह—मृणालिनीनामिति। मृणालिनीनां पद्मलतानां त्विषा हरिद्वर्णेन अनुरञ्जितम् तद्वर्णताम् आपादितम् इत्यर्थः। तथा अम्भोजपलाशशोभया पद्मदलकान्त्या आरुण्येन इत्यर्थः। विभिन्नं मिश्रितम्। तथा स्फुरच्छालिशिखापिशङ्गितं स्फुरद्भिः कलमाग्रैः पिङ्गलीकृतम्, इत्थं नानावर्णत्वात् द्रुतं पलायितम्, अहिविद्वेषःवृत्रशत्रोः इन्द्रस्य "सर्पे वृत्रासुरेऽप्यहिः" इति वैजयन्ती। धनुष्खण्डम् इव स्थितम्। "नित्यं समासेऽनुत्तरपदस्थस्य" इति विसर्जनीयस्य षत्वम्। पयः वप्राभ्यः अपदिश्य व्याजीकृत्य धावताम् इत्यागामिना सम्बन्धः। अत्र धनुष्खण्डस्य द्रुतस्य लोकेऽप्रसिद्धत्वात् उत्प्रेक्षा इयं, न उपमा ॥ २७ ॥

विपाण्डिति। विपाण्डु शुभ्रम् अनिलोद्धतम् अनिलोत्क्षिप्तम्। सप्त सप्त पलाशानि पत्राणि पर्वसु येषां ते वृक्षाः सप्तपलाशाः। क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् इति उक्तम्। तेषां पुष्पाणि सप्तपलाशानि। "हिहीनं प्रसवे सर्वम्" इत्यमरः। "फले लुक्" इत्यणो

२६। बड़ी बड़ी बाली ( धानका बाल ) धारण किये और फल पक जाने से नीचे पड़ गये धान, खेतोंके जलमें खिचे नीचे कमल सूंघने की सी इच्छा गिर पड़े हैं।

अदीपितं वैद्युतजातवेदसा
सिताम्बुदच्छेदतिरोहितातपम् ।
ततान्तरं सान्तरवारिशीकरैः
शिवं नभोवर्त्म सरोजवायुभिः ॥२९॥

अन्वयः । वैद्युतजातवेदसा अदीपितं सिताम्बुदच्छेदतिरोहितातपं सान्तरवारिशीकरैः ततान्तरं सरोजवायुभिः शिवं नभोवर्त्म च ( अपदिश्य धावताम् ) ॥ २९ ॥

लुक् । तेषु जातं सप्तपलाशजं रजः परागं संव्यानम् उत्तरीयम् इव । "संव्यानमुत्तरीयं च" इत्यमरः । निरुन्धतीः निवारयन्तीः प्रावृतवतीः इति यावत् । अनाविलानि अकलुषाणि उन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषि इव यासां ताः तथोक्ताः । "नीलस्त्वर्थगलो दासी बाण ओदनपाक्यपि" इति धन्वन्तरिः । पुष्पाणि हासा इव तैः सह वर्त्तन्ते इति सपुष्पहासाः । वनराजयः योषित इव वनराजियोषितः ताः अपदिश्य इति अन्वयः । अत्र संव्यानम् इव इति उपमा एव अन्यत्र उपमितसमासे लिङ्गम् । यथा काचित् केनचित् कामुकेन आच्छिन्नं स्तनांशुकं निरुन्धे, तद्‌वत् इति भावः ॥ २८ ॥

अदीपितमिति । वैद्युतजातवेदसा वैद्युताग्निना अदीपितम् अप्रकाशितं, विद्युत्प्रकाशस्य दृष्टिविघातकत्वात् तद्राहित्यं गुण इति भावः । सिताम्बुदानां छेदैः खण्डैः तिरोहितातपम् । न दृष्टिबाधो नापि आतपबाधः इति भावः । सान्तरवारिशीकरैः विरलाम्बुकणैः ततान्तरं व्याप्तमध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म च अपदिश्य इति । स्वभावोक्तिः अलङ्कारः ॥ २९ ॥

२७। এই শরৎকালের জল পদ্মলতাসমূহের হরিদ্বর্ণ দ্বারা অনুরঞ্জিত, পদ্মদলের কান্তির সহিত মিশ্রিত, উজ্জ্বল শালিশিখা দ্বারা পিঙ্গলবর্ণ হইয়াছে। এইরূপ নানাবর্ণবিশিষ্ট হওয়াতে মনে হয়, যেন ইন্দ্রধনুবিগলিত হইয়া রহিয়াছে।

২৮। পুষ্পরূপ হাস্যযুক্ত বনরাজিরূপা রমণীরা শুভ্র বাণপুষ্পরূপ চক্ষুরুন্মীলিত করিয়া যেন বায়ুকম্পিত শ্বেতবর্ণ সপ্তবর্ণ ( ছাতিম ) পরাগতুল্য উত্তরীয় বস্ত্র ধারণ করিয়াছে।

२७। इस शरत्कालमें जल कमलकी लता पत्तियोंसे हरा, कमलके दलकी शोभासे पक कर उनके धानोंसे पीला हो गया इस प्रकार कई रंग धारते देख जान पड़ता है, कि इन्द्रका धनुष पिघल गया ।

२८। पुष्परूप हंसीसे युक्त वनकी पाती रूप स्त्रियां, खिले बाण नीले रंग की झिंटी रूप प्रसन्न आंखें चमकाती वायुरूप हठ नामक से खींची जाती सप्तच्छद छतीवन वृक्षके फूलोंकी धूलरूप चादर को संभल कर ओढ़ती हैं ।

सितच्छदानामपदिश्य धावतां
रुतैरमीषां ग्रथिताः पतत्रिणाम्।
प्रकुर्वते वारिदरोधनिर्गताः
परस्परालापमिवामला दिशः ॥३०॥

॥ कलापकम् ॥

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयुथपङ्क्तयः।
असक्तमूधांसि पयः क्षरन्त्यमू-
रुपायनानीव नयन्ति धेनवः ॥३१॥

अन्वयः। अमीषां सितच्छदानां पतत्रिणां रुतैः ग्रथिताः वारिदरोधनिर्गताः अमलाः दिशः परस्परालापम् प्रकुर्व्वते इव ॥ ३० ॥

वाच्य—......ग्रथिताभिः वारिदरोधनिर्गताभिः अमलाभिः दिग्भिःपरस्परालापः इव प्रक्रियते ॥ २७।२८।२९।३० ॥

अन्वयः। विहारभूमेः अभिघोषम् उत्सुकाः च्युतयूथपङ्क्तयः अमूः धेनवः असक्तं पयः क्षरन्ति ऊधांसि शरीरजेभ्यः उपायनानीव नयन्ति ॥ वाच्य—उत्सुकाभिः च्युतयूथपङ्क्तिभिः अमूभिः धेनुभिः पयः क्षर्य्यते, ऊधांसि उपायनानीव नीयन्ते ॥ ३१ ।

सितेति। अपदिश्य धावताम् इति पूर्व्वश्लोकत्रयोक्तं पयःप्रभृतिकम् उद्दिश्य धावताम् अमीषां सितच्छदानां पतत्रिणां हंसानाम्। "हंसास्तु श्वेतगरुतश्चक्राङ्गामानसौकस" इत्यमरः। रुतैः शब्दैः ग्रथिताः दृब्धाः। "ग्रथितं गुम्फितं दृब्धम्" इत्यमरः। वारिदरोधनिर्गताः मेघोपरोध-निर्मुक्ताः अतएव अमलाः प्रसन्नाः दिशः परस्परालापं प्रकुर्व्वते। इव दिष्ट्या मेघोपरोधनिर्मुक्ताः चिरात् उच्छ्वसिताः इति हंसकूजितव्याजेन परस्परम् आलपन्ति इव इति उत्प्रेक्षा ॥ ३० ॥

২৯। আকাশ পথে এখন আর বিদ্যুদগ্নির বিকাশ নাই। শ্বেতমেঘখণ্ড দ্বারা উহার আতপচ্ছটা দূরীভূত হইয়াছে, স্বল্প জলকণাসমূহে উহাব অভ্যন্তরভাগ ব্যাপ্ত হইয়াছে এবং পদ্মপরাগ গন্ধযুক্ত বায়ুদ্বারা উহা রমণীয় হইয়াছে।

৩০। পূর্ব্বোক্ত পয়ঃপ্রভৃতির উদ্দেশেই ঐ শ্বেতপক্ষ হংসসমূহ ধাবিত হইতেছে। উহাদের কলরব দ্বারা গ্রথিত মেঘাবরণরহিত নির্ম্মল দিক্‌সকল যেন পরস্পর আলাপ করিতেছে।

जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसा-
वुपैति मन्त्रैरिव संहिताहुतिः ॥३२॥

अन्वयः । जगत्प्रसूतिः जगदेकपावनी तनयैः व्रजोपकण्ठम् उपेयुषी असौ गवां समितिः मन्त्रैः संहिताहुतिः इव समग्रां द्युतिम् उपैति । वाच्य—...प्रसूत्या...पावन्या...उपेयुष्या अमुया गवां समित्या संहिताहुत्येव समग्रा द्युतिः उपेयते ॥ ३२ ॥

विहारेति । विहारभूमिः अपररात्रगोचरात् इत्यर्थः । आगच्छन्त्य इति शेषः । अभिघोषम् उत्सुकाः, व्रजं प्रति उत्कण्ठिताः, वत्सप्रेम्णा इति भावः । "घोष आभीरपल्ली स्यात्" इत्यमरः । च्युता त्रुटिता यूथानां कुलानां पङ्क्तिः श्रेणीबन्धः यासां ताः तथोक्ताः । "सजातीयैः कुलं यूथम्" इत्यमरः । अमूः धेनवः असक्तम् अप्रतिबन्धं पयः क्षीरं क्षरन्ति स्रवन्ति । वत्सस्मरणात् प्रस्रवन्ति इत्यर्थः । क्षरतेः शतृप्रत्ययः । ऊधांसि शरीरजेभ्यः अपत्येभ्यः उपायनानि इव अतितोषकारीणि इव इति उत्प्रेक्षा । नयन्ति प्रापयन्ति । यथा लोके कुतश्चित् प्रवासात् एत्य मातरः किञ्चित् खाद्यम् आनयन्ति तद्वत् इति भावः ॥ ३१ ॥

जगदिति । जगत्प्रसूतिः जगत्कारणम्, आज्यादिहविर्द्वारेण इति भावः । जगताम् एकपावनी मुख्यशोधनी व्रजोपकण्ठं गोष्ठान्तिकम् । "दूरान्तिकार्थेभ्यो द्वितीया च" इति द्वितीया । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्राः' इत्यमरः । तनयैः वत्सैः उपेयुषी सङ्गता । "उपेयिवाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तः निपातः । "उगितश्च" इति ङीप् । असौ गवां

৩১ কতকগুলি গাভী, শেষ রাত্রির চারণভূমি হইতে গোয়ালের দিকে আসিবার জন্য ব্যস্ত হইয়া দলচ্যুত হইয়াছে। তাহাদের পালান হইতে দুগ্ধ অবিরত ক্ষরিত হইতেছে। মনে হয় যেন উহা নিজ নিজ বৎসদিগকে উপহার দিবার জন্যই আয়োজন করা হইয়াছে।

२९। इस समय आकाशमें अबबगली नहीं चमकती; उजली बादलकी टुकड़े आकाशमें धूप छिप गयी, उसकी बीचमें जलकी छोटी २ कुछ बुन्दें है, और कमलों की धूल से वायु सुगन्ध हो रही है।

३०। इस प्रकार उजली हंसों के उड़तेसमय मधुर शब्दोंकि कपट से, अर्थात् हंसोंकी आवाज अपनी बातपर, दिशा रूप स्त्रियां बादल रूप पर्दा छूट हो; जानेसे प्रसन्न हो आप सभें बातें कर रही हैं।

कृतावधानं जितबर्हिणध्वनौ
सुरक्तगोपीजनगीतनिःस्वने।
इदं जिघत्सामपहाय भूयसीं
न शस्यमभ्येति मृगीकदम्बकम् ॥३३॥

अन्वयः। जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने कृतावधानम् इदं मृगीकदम्बकं भूयसीं जिघत्सां अपहाय शस्यं न अभ्येति॥ वाच्य—......कृतावधानेन अनेन मृगीकदम्बकेन......शस्यं न अभीयते॥ ३३॥

समितिः संहतिः। मन्त्रैः ऋग्यजुषादिभिः। "मन्त्रो ऋगादिरुक्तश्चोक्तिः" इति वैजयन्ती। संहिता योजिता आहुतिः इव, समग्रां द्युतिम् उपैति। आहुतिः अपि जगत्प्रसूतिः जगदेकपावनी च। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मरणात् इति भावः॥ ३२॥

कृतेति। जितबर्हिणध्वनौ केकानुकारिणि इत्यर्थः। एतेन षड्जस्वरप्रायं गायन्ति इति गम्यते। यथाह मातङ्गः—"षड्जं मयूरो वदति" इति। गाः पान्ति इति गोपाः तेषां भार्य्याः गोप्यः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। "पुंयोगादाख्यायाम्" इति ङीष्। ता एव जनः, सुरक्तः मधुरकण्ठः यः गोपीजनः बल्लवीजनः तस्य गीतनिःस्वने गाने कृतावधानम् एकाग्रचित्तम् इदं पुरोवर्त्ति मृगीकदम्बकं कर्त्तृ भूयसीम् अतिमहतीं जिघत्साम् अत्तुम् इच्छाम्। अदेः सन्नन्तात् अप्रत्ययः। "लुङ्सनोर्घस्लृ," इति घस्लादेशः। अपहाय हित्वा शस्यं न अभ्येति न उपैति। गीतासक्त्या क्षुधाम् अपि न गणयति इत्यर्थः॥ ३३॥

৩২। জগৎপ্রসূতি, জগতের একমাত্র পাবনী ঐ গাভীসকল বৎস সহ গোষ্ঠসমীপে উপনীত হইয়া মন্ত্রমিলিত আহুতির ন্যায় পরমদ্যুতি প্রাপ্ত হইল।

৩৩। এই মৃগীগণ মধুরকণ্ঠ গোপীজনের ময়ূরকণ্ঠবিজয়ী সঙ্গীতশব্দে অত্যাসক্তচিত্ত হইয়াছে। তাই, আহারে অত্যন্ত ইচ্ছা হইলেও উহারা শস্যাভিমুখে যাইতেছে না। অর্থাৎ সঙ্গীতে মুগ্ধ হইয়া ক্ষুধা গ্রাহ্য করিতেছে না।

३१। कई गायें पीछ रातमें चरने की स्थान से भटक कर गोष्ठ दूहने और बैटने के स्थान बथान की तरफ व्याकुल हो चली आ रही हैं, इनके बड़े २ स्तनोंसे बराबर दूध टपकता हैं, जानता हैं कि अपने बच्चोंके लिये उपहार सौगात ला रही हैं।

३२। संसारको उत्पन्न करने और सबैको पवित्र करनेवाली ये गऊें, बच्चोंके साथ बथानमें आकर मन्त्रोंसे युक्त आहुति की तरह शोभती हैं।

असावनास्थापरयावधीरितः
सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन् कलमः सहाम्भसा
मनोभुवा तप्त इवाभिपाण्डुताम् ॥३४॥

अन्वयः । शिरसा नमन्नपि अनास्थापरया सरोरुहिण्या अवधीरितः अम्भसा सह शुष्यन् असौ कलमः मनोभुवा तप्त इव अभिपाण्डुताम् उपैति ॥ वाच्य—नमतापि अवधीरितेन शुष्यता अमुना कलमेन तप्तेनेव अभिपाण्डुता उपेयते ॥ ३४ ॥

असाविति। शिरसा अग्रेण मूर्ध्ना नमन् प्रणमन् अपि अनास्थापरया अनादरपरया सरोरुहिण्या अवधीरितः अवज्ञातः, अम्भसा सहचरभूतेन इति भावः। शुष्यन् असौ कलमः शालिविशेषः मनोभुवा तप्त इव कामार्त्त इव अभिपाण्डुताम् उपैति। अत्र अनास्थापरया इति प्रकृतसरोरुहिणीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाप्रतीतिः समासोक्तिः, उक्तिप्रमानायाः सरोरुहिण्याः प्रतीयमानया नायिकया शुद्धभेदे अपि अभेदलक्षणातिशयोक्तिमहिम्ना अवधीरणक्रियासम्बन्धात् निर्वहन्ती, मनोभुवा तप्त इव इति उत्प्रेक्षानिर्वाहिका इति अतिशयोक्त्यनुप्राणितसमासोक्त्युपमयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

अमी इति। समुद्धूतसरोजरेणुना इति सौरभ्योक्तिः। हृतासारकणेन उपात्ताम्बुकणेन इति शैत्योक्तिः। "धारासम्पात आसारः" इत्यमरः। वायुना हृताः आकृष्टाः अमी शिलीमुखाः भृङ्गाः। आपदाम् उपागमे राजादिभयागमे दुश्चरिताः दुष्टकर्माणः चौरादयः इव। गम्यते इति गतिं गन्तव्यदेशम्। "देशोपायगमे गतिः" इति वैजयन्ती। निवेतुं न अलं न समर्थाः। एकत्र वायोः सार्वत्रिकत्वेन उपादानात् अनिश्चयात् अन्यत्र भयान्धत्वात् इति भावः ॥ २५ ॥

৩৪। ঐ শালিধান্য মস্তক দ্বারা প্রণাম করিলেও অনাদরপরা সরোজিনী কর্তৃক অবজ্ঞাত হইয়া, সহচর সলিলের সহিত শুষ্ক হইয়া কামুকের ন্যায় অতিশয় পাণ্ডুবর্ণ হইয়াছে।

३३। ये हरिणियाँ, मयूर की तरह मधुर कण्ठस्वरवाली गोपियोंके मयूर को गीतवाले संगीत में अत्यन्त फँस हैं इसीसे खाने अत्यन्त भूखा होने पर भी हरियाली की ओर सिर नहीं झुकाती हैं। अर्थात् संगीतसे मोहित हो भूख को भूल गयी।

३४। यह शालिधान सिर झुकाकर प्रणाम करने पर भी अनादर करती रहनेवाली कमलिनी से अपमानित हो अपने साथी जलके साथ सूख २ कर कामी पुरुषों की तरह पीला हो गया है।

अमी समुद्भूतसरोजरेणुना
हृता हृतासारकणेन वायुना ।
उपागमे दुश्चरिता इवापदां
गतिं न निश्चेतुमलं शिलीमुखाः ॥३५॥
मुखैरसौ विद्रुमभङ्गलोहितैः
शिखाः पिशङ्गीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला
धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥३६॥

अन्वयः । समुद्भूतसरोजरेणुना हृतासारकणेन वायुना हृताः अमी शिलीमुखाः आपदाम् उपागमे दुश्चरिताः इव गतिं निश्चेतुं न अलम् ॥ वाच्य—...हृतैः अमीभिः शिलीमुखैः दुश्चरितैः इव न अलम् ॥ ३५ ॥

अन्वयः । विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः कलमस्य शिखाः बिभ्रती व्यक्तशिरीषकोमला असौ शुकावलिः गोत्रभिदः धनुःश्रियम् अनुगच्छति । वाच्य—...शिखाः बिभ्रत्या...कोमलया अमुया शुकावल्या धनुःश्रीः अनुगम्यते ॥ ३६ ॥

मुखैरिति । विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः पिशङ्गवर्णाः कलमस्य शिखाः शाल्यग्राणि बिभ्रती व्यक्तशिरीषकोमला विकसितशिरीषसवर्णा असौ शुकावलिः गोत्रभिदः इन्द्रस्य धनुषः श्रियम् अनुगच्छति अनुकरोति । नानावर्णत्वात् इन्द्रधनुः इव आभाति इति उपमालङ्कारः ॥ ३६ ॥

৩৫। পদ্মপরাগবাহী, জলকণাযুক্ত বায়ু দ্বারা আকৃষ্ট হইয়া ঐ সকল ভৃঙ্গ, রাজভয়ভীত দুষ্টস্বভাব চৌরাদির ন্যায় আপনার গন্তব্যস্থান স্থির করিতে পারিতেছে না।

৩৬। বিকসিত শিরীষবর্ণ ঐ শুক সকল, কিসলয়তুল্য লোহিতবর্ণ মুখের দ্বারা পিঙ্গলবর্ণ শালির অগ্র ধারণ করিয়া ইন্দ্রধনুর শোভা ধারণ করিয়াছে।

३५। कमलकी केशरकी धूल लिये वहती और जलकी छोटी २ अंश वायुसे खींचे जाते वे भौंरे, राजासे डरे दुराचारी चोर आदिकोंकी तरह अपने जाने का स्थान निश्चित नहीं कर सकते।

३६। फुली सिरसकी तुल्य रंगवाले ये सुगे ( सोने ) मूंगेकी तरह लाल चोंचेसे पीले रंगके धान की ( बालो ) बाल लिये ( रहन से ) इन्द्रधनुकी शोभा धारण कर रहे हैं।

इति कथयति तत्र नातिदूरा-
दथ ददृशे पिहितोष्णरश्मिबिम्बः ।
विगलितजलभारशुक्लभासां
निचय इवाम्बुमुचां नगाधिराजः ॥३७॥
तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरि हिमानीगौरमासाद्य जिष्णुः ।

अन्वयः । अथ तत्र इति कथयति नातिदूरात् पिहितोष्णरश्मिबिम्बः नगाधिराजः विगलितजलभारशुक्लभासाम् अम्बुमुचां निचय इव ददृशे ॥ वाच्य—( अर्ज्जुनः )...रश्मिबिम्बं नगाधिराजम् अम्बुमुचां निचयम् इव ददर्श ॥ ३७ ॥

अन्वयः । जिष्णुः अतनुवनराजिश्यामितोपत्यकान्तम् उपरि हिमानीगौरं तं नगम् आसाद्य

इतीति । अथ तत्र तस्मिन् पूर्व्वोक्ते यक्षे इति इत्थं कथयति सति न अतिदूरात् अनतिदूरात् ईषद्दूरे इत्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपा इति समासः । पिहितोष्णरश्मिबिम्बः तिरोहितार्कमण्डलः इति औन्नत्योक्तिः । नगाधिराजः हिमाद्रिः विगलितः जलभारः येषां ते तथोक्ताः । अतएव शुक्लभासः । द्वयोः अन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः ; तेषां विगलितजलभारशुक्लभासां शुभ्राणाम् अम्बुमुचां निचय इव मेघवृन्दम् इव ददृशे दृष्टः ॥ ३७ ॥

तमिति । जिष्णुः अर्जुनः अतनुभिः महतीभिः वनराजिभिः श्यामिताः श्यामलाः उपत्यकान्ताः आसन्नभूमिप्रदेशाः यस्य तं तथोक्तम् । "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः । उपरि हिमानीभिः हिमसङ्घातैः गौरं शुभ्रं नगं हिमाद्रिम् आसाद्य व्यपगतः निवृत्तः मदरागः यस्य तस्य । अभितं

৩৭। সেই যক্ষ এই সকল বক্যাবলী বলিতে আরম্ভ করিলে, অর্জ্জুন অনতিদূরে—সূর্য্য কিরণাচ্ছাদনকারী হিমালয় পর্ব্বতকে জলভাররহিতহেতু শ্বেতবর্ণ মেঘাবলীর ন্যায় দেখিতে পাইলেন।

३७। वह यक्षसे सब बातें कह ही रहा था कि तब अर्जुनने कुछ दूरसे सूर्य्यकी किरणें छिपानेवाले हिमालयपर्व्वतको पानीका बोझ न रहने से उजले बादलों की तरह देखा।

व्यपगतमदरागस्यानुसस्मार लक्ष्मी-
मसितमधरवासो बिभ्रतः सीरपाणेः ॥३८॥

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
शरद्वर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

व्यपगतमदरागस्य असितम् अधरवासः बिभ्रतः सीरपाणेः लक्ष्मीम् अनुसस्मार ॥ वाच्य—जिष्णुना लक्ष्मीः अनुसस्मरे ॥ ३८ ॥

नीलम् अधरं वासः उत्तरीयं बिभ्रतः धृतवतः, सीरं हलं पाणौ यस्य तस्य सीरपाणेः हलायुधस्य । "हलायुधः । नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । सङ्कर्षणः सीरपाणिः" इत्यमरः । "सप्तमी विशेषणे" इति ज्ञापकात् व्यधिकरणपदः बहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तः" इति सप्तम्याः परनिपातः । लक्ष्मीं शोभाम् अनुसस्मार स्मृतवान् । अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात् स्मरणालङ्कारः । "सदृशं सदृशानुभवाद्यत्र स्मर्य्यते तत् स्मरणम्" इति विद्याधरः ॥ ३८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
चतुर्थः सर्गः ॥ ४ ॥

---

৩৮। অর্জ্জুন, সুবিপুল বনসমূহে দ্বারা শ্যামবর্ণ উপত্যকাযুক্ত, উপরিভাগে তুষার সকলে গৌরবর্ণ হিমালয় পর্ব্বতে উপস্থিত হইয়া মদরাগবর্জ্জিত, নীলাম্বরধারী হলধরের ( বলরামের ) সৌন্দর্য্য স্মরণ করিতে লাগিলেন।

३८। अर्जुन जंगली वृक्षों की पांती ( कतार ) से पूर्ण श्यामवर्ण आसपासकी जमीनों से युक्त हिमालय पर पंहुच कर, मदकी लालियासे रहित और नीली धोती पहरे हलधर ( बलदेव ) जीकी शोभा याद करने लगे।

---

# पञ्चमः सर्गः ।

अथ जयाय नु मेरुमहीभृतो
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं न विलङ्घयितुं नभः ॥ १ ॥
तपनमण्डलदीपितमेकतः
सततनैशतमोवृतमन्यतः ।

अन्वयः—अथ स मेरुमहीभृतः जयाय नु रभसया दिगन्तदिदृक्षया तु नभः विलङ्घयितु वा समुदितम् अभिययौ ॥ वाच्य—तेन समुदितः उच्छ्रितहिमाचलः अभिययो ॥ १ ॥

अथ हिमवद्वर्णनमारभते ; तत्र पञ्चदशभिः कुलकमाह—

अथेति। अथानन्तरं सोऽर्जुनो मेरुमहीभृतो हेमाद्रेर्जयाय नु जयार्थं वा नुशब्दोऽत्र वितर्के 'नु पृच्छायां वितर्के च' इत्यमरः। रभसो वेग 'रभसो वेगहर्षयोः' इति वैजयन्तीविश्वप्रकाशौ। तद्वत्या रभसया। अतीवोत्कण्ठतयेति यावत्। अर्शआदित्वादच्प्रत्ययः। दिगन्तानां दिदृक्षया नु द्रष्टुमिच्छया वा। नभोऽन्तरीक्षं विलङ्घयितुं व्यतिक्रमितुं वा। समुदितम्; समुत्पतितमिव स्थितमित्यर्थः। कुतः? उच्छ्रितमुन्नतं हिमस्याचलं हिमाचलमभिययौ। अत्र निर्धारितानेकफल औन्नत्यगुणनिमित्तोदिता क्रियोत्प्रेक्षा। सा च व्यञ्जकाप्रयोगात्प्रतीयमानेति संक्षेपः। द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ १ ॥

১। অনন্তর অর্জ্জুন অত্যুন্নত হিমালয়ের দিকে গমন করিতে লাগিলেন। হিমালয় কি সুমেরু পর্ব্বতকে জয় করিবার জন্য, অথবা অতিশয় উৎকণ্ঠার সহিত দিগ্‌দিগন্ত দেখিবার জন্য বা আকাশমণ্ডলকে অতিক্রম করিবার জন্যই অবস্থান করিতেছে?

१। अर्जुन अत्यन्त ऊंचे हिमालयकी ओर जाने लगे। हिमालयक्या सुमेरुको जीतनेके लिये? या अत्यन्त उत्कण्ठा (लालसा) केसाथ दिशाओंकी अन्तिम सीमा (आखिरी सरहद) देखनेके लिये अथवा आकाशमण्डल लांघकर ऊपर जानेके लिये उठ खड़ा हुआ है?

हसितभिन्नतमिस्रचयं पुरः
शिवमिवानुगतं गजचर्म्मणा ॥ २ ॥
क्षितिनभःसुरलोकनिवासिभिः
कृतनिकेतमदृष्टपरस्परैः।
प्रथयितुं विभुतामभिनिर्म्मितं
प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥

अन्वयः—एकतः तपनमण्डलदीपितम् अन्यतः सततनैशतमोवृतम् (अतः) पुरः हसितभिन्नतमिस्रचयं गजचर्म्मणा अनुगतं शिवमिव (स्थितम्) ॥ २ ॥ अस्मादारभ्य पञ्चदशश्लोकं यावत् हिमालयविशेषणं सर्व्वं द्वितीयान्तपरं वाच्यान्तरे प्रथमाविभक्त्या समाधेयम्।

तपनेति। पुनः एकत एकस्मिन् भागे। सार्वविभक्तिकस्तसिः। तपनमण्डलेन दीपितं प्रकाशितम्। अन्यतोऽन्यस्मिन् भागे सततेनानिषिद्धेन नैशेन निशिभवेन तमसा वृतम्। एकत्राह्ना रात्र्या चान्यत्र संगतमित्यर्थः। अतएव पुरोऽग्रे हसितेनाट्टहासेन भिन्नतमिस्रचयं निरस्ततमस्तोमं तथा गजचर्म्मणानुगतं पश्चाद्व्याप्तम्। 'पश्चात्सादृश्ययोरनु' इत्यमरः। शिवमिव स्थितम्। तपनतेजःप्रसारोऽप्यस्य कण इव क्वचित्परिसमाप्यत इति महत्त्वातिशयोक्तिः ॥ २ ॥

क्षितीति। परस्परैऽन्योन्ये 'कर्म्मव्यतिहारे सर्वनाम्नो द्वे भवतः' इति वक्तव्यात् परशब्दस्य द्विर्भावः। 'समासवच्च बहुलं यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य' इति वक्तव्यात्प्रथमैकवचनम्। सुट्। कस्कादित्वाद्विसर्ज्जनीयस्य सत्वं बहुवचनं चान्योऽन्यशब्दवत्। यथा माघे—'अन्योऽन्येषां पुष्करैरामृशन्तः' इति। अदृष्टाः परस्परे यैस्तेऽदृष्टपरस्परास्तैस्तथोक्तैः। क्षितौ नभसि सुरलोके च निवसन्तीति तैस्तथोक्तैः।

२। হিমালয়ের একদিক তপনকিরণে সমুজ্জ্বল, অপরদিক নৈশ অন্ধকারে সমাবৃত; সুতরাং ইহা অট্টহাস্যে সম্মুখস্থ অন্ধকার নাশক, পশ্চাৎভাগে গজচর্ম্মাবৃত শিবের ন্যায়ই যেন অবস্থান করিতেছে।

२। हिमालय एक ओर सूर्य्यकी किरणोंसे चमक रहाथा, दूसरी ओर रात अन्धकार था (इसलिये) अपने अट्टहाससे सामनेका अन्धकार नष्टकरने और हाथीका चमड़ा ओढ़े हुए शिवजीके तुल्य छटा हुआ था।

भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना ।
समुदितं निचयेन तड़िल्वतीं
लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

अन्वयः अदृष्टपरस्परैः चितिनभः सुरलोकनिवासिभिः कृतनिकेतम् ( अतः ) शम्भुना विभुतां प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिम् इव ( स्थितम् ) ॥ ३ ॥

अन्वयः—भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना ( अतः ) तड़िल्वतीम् शरदम्बुदसंहतिं लघयता निचयेन समुदितम् ॥ ४ ।

भूर्भुवः स्वर्लोकवासिभिरित्यर्थः । कृतनिकेतं कृतास्पदम् । अतएव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुमभिनिर्मितं जगतां प्रतिनिधिं प्रतिकृतिमिव स्थितमित्युत्प्रेक्षा । 'प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः । त्रैलोक्यस्याप्योपममपरिच्छेद्यं चेति भावः ॥३॥

भुजगेति । पुनश्च, भुजगराजसितेन शेषाहिधवलेन नभःश्रिता गगनस्पृशा कनकस्य राजिभी रेखाभिर्विराजिताः सानवो यस्य तेन तथोक्तेन । अतएव तड़िल्वतीं शरदम्बुदसंहतिं शरन्मेघचयं लघयता लघूकुर्वता तत्तुल्येनेत्यर्थः । अतएवोपमालङ्कारः । निचयेन शिखरसमूहेन समुदितं समुन्नतम् । निचयेनेति, यद्यपि निचयशब्दः शिखरस्यावाचकस्तथापि पर्वतवर्णनप्रकरणोन्नत्वात् पाषाणनिचयः शृङ्गवाची भवितुमर्हति । यथा—'कूटोऽस्त्री शिखरं शृङ्गम्' इति कूटशब्दः समूहापरपर्य्यायः । अतएव लक्षणाश्रयणीया । अतएवावाच्यवचनं न दोषः ॥४॥

৩। ভূঃ, ভুবঃ ও স্বর্গলোকবাসীগণ পরস্পরের দৃষ্টির অগোচর হইয়াই হিমালয়ে বাস করিতেছেন। শম্ভু যেন স্বীয় সামর্থ্য ব্যক্ত করিবার নিমিত্তই উহাকে জগতের প্রতিনিধি করিয়া নির্ম্মাণ করিয়াছেন।

৪। হিমালয় পর্ব্বত অত্যুচ্চশিখরবিশিষ্ট। উহার শিখর সকল সর্পপতির ন্যায় শ্বেতবর্ণ ও গগনস্পর্শী এবং সানুদেশ সুবর্ণসমূহের দ্বারা শোভিত; সুতরাং উহা তড়িৎজড়িত শারদীয় মেঘাবলির সদৃশ।

३। पृथ्वी अन्तरिक्ष और स्वर्गके रहनेवाले एक दूसरेलोगोंसे नहीं दिखाई पड़ते हुए हिमालय पर निवास कर रहे थे। ( इससे ) जानपड़ता था कि शिवजीने अपनी शक्ति दिखलानेके लिये उसको संसारका प्रतिनिधि ( नकल ) बना रखाथा।

४। हिमालय पर्वतकी अत्यन्त ऊंची ऊंची चोटियां थीं। वेसब शेषनागकी तरह उजली, आकाश चूम रही और शेषोंवद्ध ( कतारोंसे सजे ) सोनेसे शोभित थीं; इसी लिये निश्चय बिजलीसे युक्त शरत्कालके बादलोंकी तरह मालूम पड़तीथीं।

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

अविरतोज्झितवारिविपाण्डुभि-
र्विरहितैरचिरद्युतितेजसा ।
उदितपक्षमिवारतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥

अन्वयः—मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः उच्चशिलान्तरगोपुराः उदितपुष्पवनाः ( अतः ) पुरः इव भुवः दधतम् ॥ ५ ॥

अन्वयः—अविरतोज्झितवारिविपाण्डुभिः अचिरद्युतितेजसा विरहितैः आरतनिःस्वनैः पृथुनितम्बविलम्बिभिः अम्बुदैः उदितपक्षम् इव ॥ ६ ॥

मणीति । पुनः, मणिमयूखचया अंशुकानीव पटकादीनीव तैर्भासुराः । सुरवधूभिः परिभुक्ता लता गृहा इव यासु तास्तथोक्ताः । उच्चानि शिलान्तराणि गोपुराणीव शिलान्तराणि शिलामध्यानि पुरद्वाराणि यासु ताः । उदितान् ऊर्ज्जितानि पुष्पाणां वनानि यासु ताः । अतएव पुर इव नगराणीव स्थिताः भुवो दधतम् ॥ ॥

अविरतेति । पुनश्च, अविरतमविच्छिन्नमुज्झितवारयः, अवृष्टिमन्त इत्यर्थः । अतएव विपाण्डवश्च तैरविरतोज्झितवारिविपाण्डुभिः । अतएव हिमवत्पक्षत्वं सम्भवतीति भावः । अचिरद्युतितेजसा विरहितैर्विद्युत्तेजोरहितैः । आरतनिःस्वनैः प्रशान्तगर्ज्जितैश्च । अन्यथा पक्षत्वहानिः

৫। হিমালয়, নগরের নানা ভূভাগ ধারণ করিতেছে। যে সকল ভূভাগ মণিসকলের জ্যোতিরূপ সূক্ষ্মবস্ত্র দ্বারা জ্যোতির্ম্ময়, সুরবধুগণের উপযুক্ত লতাগৃহযুক্ত, উহার উচ্চ উচ্চ শিলাসকলের অন্তরস্থল পুরদ্বারবৎ বোধ জন্মায়, বহু সমৃদ্ধ পুষ্পবন তাহাতে বিরাজিত।

५। हिमालय, नगर ( शहर ) की तरह अनेक टुकाणकी विशेष स्थानकर रहा था। जैसव स्थान मणियोंकी ज्योतिरूप अत्यन्त पतली कपड़ोंसे चमचमा रहेथे, उनपर देवताकी स्त्रियों संयुक्त लताभवन थे ऊंचे ऊंचे चट्टानोंके मध्यभाग ( बीचके मैदान ) गोपुर फाटकसे मालूम पड़ते थे, और उनमें परिपूर्ण फलोंके उद्यान शोभ रहेथे।

दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताम्भसः
स्फुटसरोजवना जवना नदीः ॥ ७ ॥

अन्वयः—आकरिभिः करिभिः क्षतैः समवतारसमैः असमैः तटैः (उपलक्षितैः) महिताम्भसः विविधकामहिताः स्फुटसरोजवनाः नदीः दधतम् ॥ ७ ॥

स्यादिति भावः। पृथुनितम्बविलम्बिभिर्महाकटकसङ्गिभिः। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। अम्बुदैरुदितपक्षं संजातपक्षमिव स्थितम्। प्राक् छिन्नपक्षस्यापि हिमाद्रेर्धवलाम्बुदसम्बन्धात् पुनः पक्षोत्थानमुत्प्रेक्ष्यते ॥ ६ ॥

दधतमिति। पुनश्च, आकरः खनिरेषामस्तीति योनित्वेनेत्याकरिभिराकरजैः 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः। करिभिर्गजैः कर्तृभिः क्षतैः रुग्णैः समवतारेषु तीर्थेषु समैरविषमैरसमैरसदृशैः; अनुपमैरित्यर्थः। तटैरुपलक्षितास्तथा महिताम्भसः श्लाघ्योदका अतएव विविधेभ्यः कामिभ्योऽवगाहनाद्युपभोगिभ्यो हिता अनुकूलाः। 'चतुर्थी तदर्थ—'इत्यादिना समासः। स्फुटानि विकसितानि सरोजवनानि यासु ताः। जवना वेगवतीः। 'जुचङ्क्रम्य—'इत्यादिना युच्। नदीर्दधतम्। यमकवृत्त्यनुप्रासभेदत्वात् स्वयमेवालङ्कारः, अर्थालङ्कारस्त्वभ्युच्चयः। तस्यातिदुष्करत्वाद्रसपोषोऽपि नाद्रियते। तदुक्तम्—'प्रायसो यमके चित्रे रसपुष्टिर्न मृग्यते' ॥ ७ ॥

৬। নিরন্তর জলবর্ষণ হেতু পাণ্ডুবর্ণ, বিদ্যুৎপ্রভাহীন, গর্জ্জনবিরহিত বিপুল-নিতম্বিত মেঘসকল দ্বারা হিমালয়কে পক্ষবিশিষ্ট বলিয়াই বোধ হইতেছে।

৭। হিমালয়, প্রস্ফুটিত বহু কমলযুক্ত বেগবতী নদী ধারণ করিতেছে। ঐ নদীসকলের তীরভূমি আকরজাত হস্তিগণ কর্ত্তৃক ক্ষতবিক্ষত। নদীতীরের কোনও স্থানে স্নানের ঘাট নির্ম্মিত হওয়ায়—সমতল, কোনও ভাগ অসমতল; উহাদের জল অতি নির্ম্মল সুতরাং স্নানাদি দ্বারা উপভোগের একান্ত উপযুক্ত।

६। बराबर जल बरसनेसे उजले, बिजलीकी चमकसे रहित और कुछ शब्द करनेसाथ दोनों बगलमें उड़ते हुए बादलोंसे मालूम पड़ता थी। हिमालयमें पांख ब्यनेही है।

७। हिमालय, खिले हुए कमलोंसे युक्त तेज बहने वाली नदियोंको धारणकर रहाथा, इन नदियोंके पासकी भूमीखानोंमें रहनेवाले हाथियोंसे कोड़ी नारहीथा, नदिकिनारेकी कोई कोई स्थान घाट बंध जानेसे समतल और कोई कोई विषम (ऊंचे खाले) थे। उनकी जल निर्मल स्नानादिक व्यवहारमें अत्यन्त लाभ योग्य थे।

नवविनिद्रजपाकुसुमत्विषां
द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचि-
न्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

पृथुकदम्बकदम्बकराजितं
ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं
धृतसदानसदाननदन्तिनम् ॥ ९ ॥

अन्वयः—नवविनिद्रजपाकुसुमत्विषां द्युतिमतां महाश्मनां निकरेण क्वचित् निचितकाञ्चनभित्तिषु सानुषु विहितसान्ध्यमयुखम् इव । ८ ॥

अन्वयः—श्लोकोऽयं सान्वय एव वर्त्तते । ९ ॥

नवेति । पुनश्च ।—नवानि विनिद्राणि विकसितानि च यानि जवाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विषा इव त्विषो येषां ते तेषाम् । 'ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका' इति वाग्भटः । द्युतिमतां महाश्मनां मणीनाम्, पद्मरागाणामित्यर्थः । विशेषणसामर्थ्यात् । निकरेण समूहेन हेतुना क्वचिन्निचिताः सङ्घटिताः काञ्चनभित्तयो येषु तेषु सानुषु विहिताः सान्ध्यां सन्ध्यायां भवा मयुखा यस्मिंस्तमिव स्थितम् । काञ्चनभित्तिषु पद्मरागप्रभाप्रसरादुदितसन्ध्या राग इव भातीत्युत्प्रेक्षा ॥८॥

पृथ्वीति । पुनश्च—पृथुभिः कदम्बतां कदम्बकैर्नीपकुसुमसमूहैः राजितम् । 'कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके' इत्युभयत्रापि

৮। সদ্যঃপ্রস্ফুটিত জবাপুষ্পের ন্যায় কান্তিযুক্ত দ্যুতিময় কত মহামণি হিমালয় পর্ব্বতে রহিয়াছে। হিমালয়ের কাঞ্চনভিত্তিযুক্ত সানুদেশের কোন কোন স্থান ঐ সকল মহামণি দ্বারা পরিব্যাপ্ত হওয়াতে উহা সন্ধ্যাকালীন কিরণচ্ছটা বলিয়া বোধ হইয়া থাকে।

८। तत्काल खिलेमें नाम् पुस्पिका ( जवा ) फूलकी तरह लालरंगके चमकते कई उत्तम मणि हिमालय पर्वत पर है। हिमालयकी कई सुवर्णमय स्थान इनसब मणियोंसे भरे रहनेके कारण वह संध्याकालकी ( सुनहली ) किरणोंसे युक्तता मालूम पड़रहया।

रहितरत्नचयान्न शिलोच्चया-
नपलताभवना न दरीभुवः ।
विपुलिनाम्बुरुहा न सरिद्वधू-
रकुसुमान्दधतं न महीरुहान् ॥ १० ॥

अन्वयः—रहितरत्नचयान् शिलोच्चयान् न, अपलताभवना दरीभुवः न, विपुलिनाम्बुरुहाः सरिद्वधूः न (तथा) अकुसुमान् महीरुहान् न दधतम् ॥ १० ॥

विश्वः । ग्रथितमालैर्बद्धपंक्तिभिस्तमालवनैस्तापिच्छवनैराकुलमाकीर्णम् । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । लघुतुषारमल्पशीकरं यत्तुषारजलं हिमोदकं स्रोतति वर्षति तं तथोक्तम् । 'तुषारौ हिमसीकरौ' इति शाश्वतः । 'अन्येभ्योऽपि दृश्यते, इति क्विप् । सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनस्ते धृता येन तं तथोक्तम् ॥ ९ ॥

रहितेति । पुनश्च—रहितरत्नचयान् रहितः परित्यक्तो रत्नचयो यैस्तान् रत्नराशिरहिताञ्छिलोच्चयाञ्छिखराणि न दधतम् । अपलताभवना लतागृहरहिता दरीभुवोगुहाप्रदेशान्न दधतम् । 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः । विगतानि पुलिनान्यम्बुरुहाणि च यासां ताः । सरितो वध्व इव ताः सरि धूर्न दधतम् । अत्र सरितां वध्वौपम्यात्पुलिनानामम्बुरुहाणाञ्च वदनजघनौपम्यं गम्यते । अकुसुमान्महीरुहान् वृक्षाव दधतम् । किन्तु रत्नादिसम्पन्नानेव शिलोच्चयादीन्दधतमित्यर्थः । महाविभाषया नात्र नञ् समासः ॥ १० ॥

৯। হিমালয় অসংখ্য কদম্বপুষ্প দ্বারা সুশোভিত, শ্রেণীবদ্ধ তমালবন সমূহে পরিব্যাপ্ত, তথায় সর্ব্বদাই বিন্দু বিন্দু শিশিরজল বর্ষিত হইতেছে এবং মদজলস্রাবী বিশালগুণ্ড হস্তিগণ তথায় বিচরণ করে।

১০। হিমালয় যে সকল শিখর ধারণ করে, তাহা রত্নরাশিবিরহিত নহে, উহার গুহাগুলি লতাগৃহশূন্য নহে, নদীবধূগণ পুলিন ও পদ্মবর্জ্জিত নহে এবং বৃক্ষসকলও কুসুমবিহীন নহে। বস্তুতঃ হিমালয়ের শিখর রত্নপূর্ণ, গহ্বর লতাগৃহযুক্ত, নদীসকল পুলিন ও পদ্মযুক্ত এবং বৃক্ষসকল পুষ্পপূর্ণ।

९। हिमालय असंख्य कदम्बकी फुलोंसे अत्यन्त शोभ रहाथा, आजतक आजतार तमालवनोंके वनसे परिपूर्ण था, कुछ कुछ शबदे जलको फौआरे जिर रहेथे और मदजलकी धरायुक्त सुन्दर मुंह वाले हाथी थे।

व्यथितसिन्धुमनीरशनैः शनै-
रमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं
दयितरम्यलताबकुलैः कुलैः ॥ ११ ॥
ससुरचापमनेकमणिप्रभै-
रपपयोविशदं हिमपाण्डुभिः ।

अन्वयः—अनीरशनैः घनैः अमरलोकवधूजघनैः शनैः व्यथितसिन्धु दयितरम्यलताबकुलैः फणभृतां कुलैः अभितः ततं विततम् ॥ ११ ॥

अन्वयः—अनेकमणिप्रभैः हिमपाण्डुभिः ससुरचापम् अपपयोविशदम् अविचलं ध्वनितसूचितम् अम्बुमुचां चयं विभ्रतम् ॥ १२ ॥

व्यथितेति । पुनश्च ।—अनीरशनैरनिर्मेखलैः सरशनैरित्यर्थः । घनै-र्निविडैरमरलोकवधूजघनैः शनैर्मन्दंमन्दं व्यथितसिन्धुं चोभितनदीकम् । अयमपरः स्वर्ग इति भावः । ये रम्या लताश्च बकुलाः केसराश्च ते दयिताः प्रिया येषां तैस्तथोक्तैः । 'विशारदो मद्यगन्धो बकुलः स च केसरः' इति वैद्यके । फणभृतां सर्पाणां कुलैरभितस्ततं व्याप्तं तथा विततं विस्तृतम् ॥ ११ ॥

ससुरेति । अनेका विचित्रा मणिप्रभा येषां तैस्तथोक्तैः । हिमेन पाण्डुभिः शिखरैः कृत्वा ससुरचापं सेन्द्रचापम् । अपपया निर्जलोऽतएव विशदश्च तमपपयोविशदम् । अविचलं दैवान्निश्चलम् । अतः शिखर-

১১। হিমালয়ে নদীর স্রোতসমূহ দেবগণবধূর মেখলাশোভিত বিপুল নিতম্ব দ্বারা অল্প অল্প ক্ষুভিত। উহার চারিদিক, রমণীয়লতা ও মদ্যগন্ধপ্রিয় সর্পগণের দ্বারা পরিব্যাপ্ত।

१०। हिमालयकी चारियाँ रत्नोंखाली नहींथी, उसकी कन्दराएं लताभवनों ( कुञ्जों ) रहितथी औ नहीं नदियां भी सुन्दर झाड़नो और कमलके विना शून्य नदी और विना फूलके वृक्ष भी न थे। अर्थात् हिमालयकी चोटियां रत्नोंसे पूर्ण थी, कन्दराओंमें लताभवन थे नदियोंमें सुन्दर झाड़ और कमलके फुल तथा वृक्ष फुलोंसे भरे थे।

११। हिमालयपर नदियांके प्रवाह स्वर्गकी स्त्रियोंके मेखला ( करधनी ) से सुशोभित विशाल नितम्बों ( चूतड़ो ) करो कुछ खलबला रहे थे। वह चारो ओर सुन्दर लताओं और बकुल ( मौलसरी ) को प्यार करनेवाले सर्पोंसे भरा था।

अविचलं शिखरैरुपबिभ्रतं
ध्वनितसूचितमम्बुमुचां चयम् ॥ १२ ॥

विकचवारिरुहं दधतं सरः
सकलहंसगणं शुचि मानसम् ।
शिवमगात्मजया च कृतेर्ष्यया
सकलहं सगणं शुचिमानसम् ॥ १३ ॥

अन्वयः—विकचवारिरुहं सकलहंसगणं शुचि मानसं सरः दधतं, कृतेर्ष्यया अगात्मजया सकलहं सगणं शुचिमानसं शिवं च दधतम् ॥ १३ ॥

भङ्गाख्याभूदित्यर्थः। किन्तु ध्वनितेन सूचितं ज्ञापितमम्बुमुचां चयमविरतमुपबिभ्रतम्। अत्र किल कल्पितसादृश्याच्छिखरमेघसन्देहो मेघनिश्चयान्तः सन्देहालङ्कारः ॥ १२ ॥

विकचेति। पुनश्च।—विकचवारिरुहम्, नित्यविकसितारविन्दमित्यर्थः; वृत्तिसामर्थ्यात्। कलहंसगणैः सह वर्तत इति सकलहंसगणम् 'कादम्बः कलहंसः स्यात्' इत्यमरः। यद्वा—सकलाः सर्वे हंसगणा यस्मिन् तत्तथोक्तम्। शुचि नित्यनिर्मलं मानसं मानसाख्यं सरो दधतम्। किञ्च—कृतेर्ष्यया, कुतश्चिन्निमित्तात्कुपितयेत्यर्थः। अगात्मजया पार्वत्या सकलहं सविवादम्। सगणं सप्रमथम् 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती। शुचिमानसमविद्याविनिर्मुक्तचित्तं शिवं च दधतम्। एतेन सकलशैलवैलक्षण्यमस्योक्तम् ॥ १३ ॥

১২। হিমালয়ের, বিচিত্রমণিপ্রভা দ্বারা অলঙ্কৃত হিমপাণ্ডুরশিখরসমূহে ইন্দ্রধনুযুক্ত জলহীনতাহেতু স্বচ্ছ নিশ্চল মেঘসমূহ অবস্থিত আছে। ঐগুলি যে মেঘ তাহা কেবল গর্জ্জন দ্বারাই অনুমিত হয়।

१२। हिमालयकी चित्र विचित्र मणियोंकी प्रभासे शोभती हुई बर्फकी तरह उजली चोटियों पर इन्द्रधनुसे युक्त और जल न रहनेसे निर्म्मल तथा निश्चल बादल लगे हैं। "वे सब मेघ हैं" ऐसा अनुमान उनकी गरजने पर हो जाता है।

ग्रहविमानगणानभितो दिवं
ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं
त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥

अन्वयः—दिवम् अभितः ग्रहविमानगणान् ज्वलयता ओषधिजेन कृशानुना अनुक्षपम् उमापति-सेविनः त्रिपुरदाहं मुहुः अनुस्मरयन्तम् ॥ १४ ॥

ग्रहेति । दिवमभितो दिवोऽभिमुखम् 'अभितः परितः—'इत्यादिना द्वितीया । ग्रहाश्चन्द्रादयो विमानानि देवयानानि च 'व्योमयानं विमानोऽस्त्री' इत्यमरः । तेषां गणाज्ज्वलयता प्रदीपयता 'मितां ह्रस्वः' इति ह्रस्वः । ओषधिजेन तृणविशेषजन्येन कृशानुना वह्निना क्षपायां क्षपायामनुक्षपं प्रतिक्षपम् ; वीप्सायामव्ययीभावः । उमापतिसेविनः प्रमथादीन्, 'गति-बुद्धि—'इत्यादिना द्विकर्मत्वम् । त्रयाणां पुराणां समाहारस्त्रिपुरम्, 'तद्धितार्थ—'इत्यादिना समासः । 'पात्रादिभ्यः' प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गप्रतिषेधः । तस्य दाहं त्रिपुरदाहं मुहुरनुस्मरयन्तम् । ननु 'अधीगर्थ—' इत्यादिना दाहमित्यत्र षष्ठी किं न स्यात् ? तस्याः शेषार्थे विधानाच्छेषत्वस्याविवक्षितत्वात् । अत्र 'कविसम्मतसादृश्यात् स्मृतिः' इति स्मरणालङ्कारः ॥ १४ ॥

১৩। প্রস্ফুটিত পদ্মপরিপূর্ণ কলহংসকুলশোভিত নিত্য নির্ম্মল মানসসরোবর তথায় অবস্থিত আছে। কোনও কারণে ক্রুদ্ধা পার্ব্বতীর সহিত কলহপরায়ণ অবিদ্যা-বিনির্ম্মুক্ত শিব, প্রমথগণের সহিত তথায় বাস করেন।

১৪। হিমালয়স্থিত ওষধিসমূহ হইতে উৎপন্ন অগ্নিশিখায় স্বর্গভূমির চতুর্দ্দিকস্থিত গ্রহ ও দেবযান সকল প্রদীপ্ত হইতেছে। বোধহয় যেন হিমালয় প্রতিরাত্রে পার্ব্বতীনাথ-সেবক প্রমথদিগকে ত্রিপুরদাহের কথা বারংবার মনে করাইয়া দিতেছে।

१३। अत्यन्त खिले कमलोंसे भरा और मधुर शब्द करनेवाले हंसोंसे शोभित मानससरोवर था और किसी कारणवश कुपित हो पार्वतीके साथ झगड़कर अविद्या ( सांसारिक माया ) से रहित प्रमथ आदिक गणोंसे युक्त शिवजी निवास कर रहे थे।

विततशीकरराशिभिरुच्छ्रितै-
रुपलरोधविवर्तिभिरम्बुभिः ।
दधतमुन्नतसानुसमुद्धतां
धृतसितव्यजनामिव जाह्नवीम् ॥ १५ ॥

अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः ।
स जगदे वचनं प्रियमादरान्
मुखरतावसरे हि विराजते ॥ १६ ॥

अन्वयः—विततशीकरराशिभिः उच्छ्रितैः उपलरोधविवर्त्तिभिः अम्बुभिः धृतसितव्यजनाम् उन्नत-सानुसमुद्धतां जाह्नवीम् इव दधतम् ॥ १५ ॥

अन्वयः—अथो धनाधिपतेः अनुचरेण नगविलोकनविस्मितमानसः सः आदरात् प्रियं वचनं जगदे हि मुखरतावसरे विराजते ॥ वाच्य—अनुचरः नगविलोकनविस्मितमानसं तं प्रियं वचनं जगदे ॥ १६ ॥

वितेतेति । विततशीकरराशिभिर्विस्तृतशीकरपुञ्जैरुच्छ्रितैरुत्पतितैः । कुतः ? उपलरोधेन विवर्तिभिरम्बुभिर्हेतुभिर्धृतसितव्यजनामिव गृहीता-मलचामरामिव स्थितामित्युत्प्रेक्षा । उन्नतसानुषु समुद्धतां वहन्तीं जाह्नवीं गङ्गां दधतम् ॥ १५ ॥

अनुचरेणेति । अथोऽनन्तरम् ; 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । धनाधिपतेरनुचरेण यक्षेण नगविलोकनेन विस्मित-

১৫। হিমালয়ের অত্যুচ্চ সানুদেশে জাহ্নবী প্রবাহিতা হইতেছেন। তাহার জলরাশি শিলাসমূহে বাধাপ্রাপ্ত সুতরাং বিপরীতগামী হওয়াতে উহা হইতে প্রচুর শ্বেতজলকণা উৎপন্ন হইতেছে! তাহাতে মনে হয়, গঙ্গা যেন শ্বেতচামরধারিণী হইয়াছেন।

१४। हिमालयपर जनमी ओसधियोंसे उत्पन्न अग्निकी शिखा ( लू ) से देवताओंके सभी विमान चमकते थे। जान पड़ता था, कि हिमालय प्रत्येक रातमें उमापति महादेवजीके सेवक प्रमथ आदिकोंको त्रिपुरासुरके नगर जलना बार बार याद करा रहा है।

१५। हिमालयके बड़े ऊँचे चटान ( पत्थर ) से गङ्गा बह रही थी, उसकी प्रवाह शिलोंसे रुक कर उलटे बह रहे थे और उनकी उछालसे जलकी बुन्दें उड़ रही थी ; इससे जान पड़ता था, कि गङ्गाजीने उजला चामर ( चौंर ) धारण किया है।

अलमेष विलोकितः प्रजानां
सहसा संहतिमंहसां विहन्तुम्।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः॥ १७॥

अन्वयः—हिमगौरैः शिरोभिः घनवर्त्म सहस्रधा कुर्व्वन् इव एष अचलाधिपः विलोकितः एव प्रजानाम् अंहसां संहतिं सहसा विहन्तुम् अलम्। वाच्य—कुर्व्वता एतेन अचलाधिपेन विलोकितेन... समर्थ्यते॥ १७॥

मानसः सोऽर्जुनः, आदरात् प्रियं वचनं जगदे गदितः। गदतेर्गत्यर्थस्य दुह्यादित्वात् प्रधाने कर्मणि लिट्। अपृष्टपरिभाषणदोषं परिहरति—मुखरतेति। मुखरता वाचालत्वम्। अपृष्टपरिभाषित्वमिति यावत्। अवसरे श्रोतुराकाङ्क्षासमये विराजते हि। आकाङ्क्षितमपृष्टोऽपि ब्रूयादिति भावः॥ १६॥

अलमिति। हिमेन गौरैः शुभ्रैः शिरोभिः शिखरैर्घनवर्त्म खं सहस्रधा कुर्वन्विपाटयन्निवेत्युत् प्रेक्षा। एषोऽचलाधिपो हिमवान्विलोकितो दृष्टमात्र एव प्रजानामंहसां संहतिं पापसंघातं सहसा विहन्तुमलं समर्थः। 'पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्। औपच्छन्दसिकं वृत्तम्—'पर्यन्ते यौं तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्' इति स्मरणात्॥ १७॥

১৬। অনন্তর হিমালয়দর্শনে বিমুগ্ধচিত্ত অর্জ্জুনকে কুবেরানুচর যক্ষ আদরপূর্ব্বক প্রিয়বাক্য বলিলেন। বাস্তবিক, জিজ্ঞাসা না করিলেও কথা বলা, শ্রোতার আকাঙ্ক্ষাকালেই শোভা পায়।

১৭। হিমালয় তাহার তুষারশুভ্র শিখরসমূহ দ্বারা মেঘপথ আকাশকে সহস্রধা বিদীর্ণ করিয়াছে। অর্থাৎ হিমালয়ের অত্যুচ্চ বহু শিখর আছে। ঐ সকল শিখর দর্শন করা মাত্রই জনসমূহের সমুদয় পাপ বিনষ্ট হয়।

१६। अनन्तर हिमालय देखनेसे अर्जुनको मनको आश्चर्यमें पड़ा देख कुवेरका सेवक ( वह यच ) आदर पूर्व्वक मधुर वचन बोला। वस्तुत. ( असलमें ) नहीं पूछनेपर भी बातचीत देना सुननेवालेकी इच्छा होनेपर अच्छा मालूम पड़ता है।

१७। हिमालयने बर्फोंसे उजली अपनी चोटियोंसे बादलोंके आने जानेके रास्ते तक आकाश को हजारों टुकड़े कर डाला। अर्थात् हिमालयको बहुत दूर तक ऊपर चली गयी बड़ी ऊंची ऊंची कई चोटियां हैं। इन्हें देख लेनेसे ही लोगोंके पाप दूर हो जाते हैं।

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥१८॥

रुचिरपल्लवपुष्पलतागृहै-
रुपलसज्जलजैर्जलराशिभिः।
नयति सन्ततमुत्सुकतामयं
धृतिमतीरुपकान्तमपि स्त्रियः ॥१९॥

अन्वयः—इह असुतरम् अन्तरं दुरधिगमैः किञ्चिदेव सततं वर्णयन्ति, (किन्तु) अतिविपिनं दिग्व्यापिनम् अमुं परं पुरुषम् इव परं पद्मयोनिः वेद। वाच्य—किञ्चिदेव वर्ण्यते; अतिविपिनः दिग्व्यापी असौ परः पुरुषः इव पद्मयोनिना विविदे अथवा विदाञ्चक्रे ॥ १८ ॥

अन्वयः—अयं रुचिरपल्लवपुष्पलतागृहैः उपलसज्जलजैः जलराशिभिः उपकान्तं धृतिमतीः स्त्रियः सन्ततम् उत्सुकतां नयति : वाच्य—वनेन धृतिमत्यः स्त्रियः उत्सुकतां नीयन्ते ॥१९॥

इहेति। इह अस्मिन् पर्वते। सुतरं न भवतीत्यसुतरम्। दुस्तरमित्यर्थः। तरतेः खल् प्रत्ययः। अन्तरं मध्यभागम्। पुरुषे त्वन्तरं तत्त्वम्। दुरधिगमैर्दुरारोहैरन्यत्र दुर्ग्रहैरागमैर्वृद्धैरन्यत्र पुराणादिभिः 'पुराणेऽप्यागमो वृद्धे' इति रुद्रटः। किंचिदेव सततं वर्णयन्ति न तु कदाचित् प्रत्यक्षेणापि निःशेषं ज्ञातुमशक्यत्वादिति भावः। किन्त्वति 'विपिनमतिगहनं दिग्व्यापिनमुभयत्रापि समम्। अमुं गिरिं परं पुरुषं परमात्मानमिव परं केवलम् 'परमव्ययमिच्छन्ति केवले' इति विश्वः। पद्मयोनिर्ब्रह्मैव वेद नान्य इत्यर्थः। 'विदो लटो वा' इति णलादेशः। अत्रोपमायमकयोः संसृष्टिः। स्रमावृत्तम्—'तुरगरसयतिर्नौ भरौ गः स्रमा' इति लक्षणात् ॥ १८ ॥

১৮। বিদ্বান্‌গণ দুরধিগম্য পুরাণাদির সাহায্যেই এই দুরারোহ পর্ব্বতের দুর্গম অভ্যন্তরতত্ত্ব সর্ব্বদা অতি অল্পমাত্রই বর্ণন করেন। কিন্তু অতি গহন দিগ্‌ব্যাপী এই পর্ব্বতের দুর্গমতত্ত্ব পরমপুরুষের ন্যায় একমাত্র পদ্মযোনি ব্রহ্মাই অবগত আছেন।

१८। विद्वानोंने समझानेमें अत्यन्त कठिन पुराण आदिकोंकी सहायतासे ही, चढनेमें बहुत कठिन इस पर्वतके दुर्गम भीतरी तत्त्वको हमेशा बहुत ही कम वर्णन किया है।

सुलभैः सदा नयवतायवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना धनैः क्षितिभृतातिभृता
समतीत्य भाति जगती जगती ॥२०॥

अन्वयः । नयवता अयवता सदा सुलभैः निधिगुह्यकाधिपरमैः परमैः धनैः अमुना क्षितिभृता अतिभृता जगती समतीत्य भाति । वाच्य—अतिभृतया जगत्या जगत्या भायते ॥ २० ॥

रुचिरपल्लवेति । अयं गिरिः, रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथाभूता लतागृहा येषु तैस्तथोक्तैरुपसज्जलजैः शोभितकमलैर्जलराशिभिः सरोभिः करणैः उपकान्तं कान्तसमीपे धृतिमतीर्धैर्यवतीरपि समीपस्थानपि प्रियान्न गणयन्तीः । मानिनीरित्यर्थः । स्त्रियः सन्ततमुत्सुकतां नयति । तासां मानग्रन्थिं शिथिलयतीत्यर्थः । अथवा—उपकान्तं धृतिमतीस्तुष्टिमतीरपि सुरतक्षमा, अपि पुनरप्युत्सुकतां नयतीत्यर्थः, उभयत्राप्युद्दीपकत्वादतिशयोक्तिः । वृत्तमुक्तम् ॥ १९ ॥

सुलभैरिति । नयवता नीतिमतायवता भाग्यवता च सदा सुलभैः, नान्यैरित्यर्थः ; "अयः शुभावहो विधिः" इत्यमरः । निधीनां महापद्मादीनाम् । "महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥" इत्यमरः । गुह्यकानां चाधिपं कुबेरं रमयन्तीति तथोक्तैः । 'कर्मण्यण्' । परमैरुत्कृष्टैर्धनैः । करणैः अमुना क्षितिभृता हिमाद्रिणातिभृता पूर्णा सती जगती मही जगती

১৯। এই হিমালয়ে কমলশোভিত জলশালী বহু সরোবর আছে। ঐ সরোবর সমূহের তীরে মনোহর পত্র-পুষ্পশোভিত লতাগৃহসকল অবস্থান করিতেছে। হিমালয় ঐ সকল সরোবর দ্বারা পতিসমাগমপরিতৃপ্তা রমণীদিগকে পুনরায় উৎসুকবতী করিয়া থাকে।

१९। इस हिमालयपर कमलोंसे शोभित जलसे भरे कई तालाब हैं। इन तालावोंके किनारे सुन्दर फूलों और पत्तियोंसे शोभा धारण किये कई लताभवन हैं। हिमालय इन सब तालावोंके द्वारा पतिसमागमसे सन्तुष्ट हुई भी स्त्रियोंको फिरसे ललसा देता है।

अखिलमिदममुष्य गौरीगुरो-
स्त्रिभुवनमपि नैति मन्ये तुलाम् ।
अधिवसति सदा यदेनं जनै-
रविदितविभवो भवानीपतिः ॥२१॥

अन्वयः। अमुष्य गौरीगुरोः इदम् अखिलं त्रिभुवनमपि तुलां न एति (इति) मन्ये। यत् जनैः अविदितविभवः भवानीपतिः सदा एनम् अधिवसति। वाच्य—अनेन अखिलेन त्रिभुवनेन तुला न ईयते, अविदितविभवेन भवानीपतिना एष अध्युष्यते ॥२१॥

स्वर्गपाताललोकौ समतीत्यातिक्रम्य भाति। अमानुषैरपि दुर्लभाः सम्पदोऽत्र सम्भवन्तीति भावः। अत्र धनातिभूर्तेति पदार्थस्य विशेषणगत्या जगदतिक्रमणहेतुत्वोक्त्या काव्यलिङ्गम्। तस्य यमकेन संसृष्टिः। प्रमिताक्षरावृत्तम्—'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ २० ॥

अखिलमिति। अमुष्य गौरीगुरोर्हिमवत इदमखिलम्। त्रयाणां भुवनानां समाहारस्त्रिभुवनमपि 'तद्धितार्थ—'इत्यादिना समासः। पात्रादित्वात्स्त्रीत्वप्रतिषेधः। तुलां साम्यं नैतीति मन्ये। यद्यतो जनैरविदितविभवोऽज्ञातमहिमा भवानीपतिः शिवः सदैनं गिरिमधिवसति। अस्मिन्वसतीत्यर्थः। 'उपान्वध्याङ्वसः' इति कर्मत्वम्। अतोऽयं धर्मक्षेत्रमिति भावः। प्रभावृत्तम्—'स्वरशरविरतिनौं सरौ प्रभा' इति लक्षणात् ॥ २१ ॥

২০। নীতিমান্ এবং ভাগ্যবানদিগের সদা সুলভ, নিধি ও গুহ্যক (যক্ষ) দিগের অধিপতি কুবেরের রমণকারী উৎকৃষ্ট ধনরাশি দ্বারা এই বিপুলা পৃথ্বী পরিপূর্ণ হইয়া স্বর্গ এবং পাতালকেও অতিক্রম করিয়া বিরাজ করিতেছে। ইহার একমাত্র হেতু ঐ হিমালয়। অর্থাৎ হিমালয় পর্ব্বতে যে সকল সম্পদ্ আছে, তাহা কুবেরাদিরও দুর্লভ।

২১। সমগ্র ত্রিভুবনও এই গৌরীপিতা হিমালয়ের তুল্য নহে বলিয়া মনে করি। কেন না, জনগণ যাঁহার মহিমা বুঝিতে অসমর্থ, সেই ভবানীপতি শিব সর্ব্বদা এই হিমালয় পর্ব্বতে বাস করিয়া থাকেন।

२०। नीतिके अनुसार व्यवहार करनेवालों और भाग्यवानोंके लिये सुलभ निधियों (खजानों) और गुह्यको (यक्षों) के स्वामी कुबेरको आनन्द देनेवाले उत्तम धनकी ढेरसे परिपूर्ण हो यह विशाल भूमि स्वर्ग और पाताल इन दोनोंको जीत कर विराजमान हो रही है। इसमें प्रधान हिमालय ही है। अर्थात् हिमालयमें जो सम्पत्तियां हैं वे कुबेरके लिये भी दुर्लभ हैं।

वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम् ।
आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः ॥२२॥

अन्वयः । वीतजन्मजरसं ब्रह्मणः परं शुचि पदम् उपैतुम् इच्छताम् आगमात् इव तमोऽपहात् इतः भवच्छिदः मतयः सम्भवन्ति । वाच्य—भवच्छिद्भिः मतिभिः सम्भूयते ॥ २२ ॥

वीतेति । वीते निवृत्ते जन्मजरसी यस्य तद्वीतजन्मजरसम् । 'जराया जरसन्यतरस्याम्' इति जरसादेशः । अत्र तदन्तविधेरिष्टत्वात् परत्वेन स्यादेशबाधकत्वाच्च । तथाहि—'टाङसिङसामिनात्स्याः' इति स्यादेशबाधनात् । परत्वाज्जरसादेशं बभाषे भाष्यकृत् स्वयम् । सूत्रकारमते यत्तु ज्ञापकात्परबाधनम्, भवेत्तदपि टाङसोर्न पुनर्ङसि सम्भवि । मतद्वयेऽपि तत्तुल्यं ङसि यत्पूर्वबाधनम् । परत्वाज्जरसादेशस्तत् स्यात् स्यादेशबाधनात् । ज्ञापकं यच्च टाङसोर्यादेशाविनादिति । ईकारदीर्घयोस्तत्र वैयर्थ्यं तत्तु तौ विना । एत्वे सवर्णे दीर्घे च रूपसिद्धिर्भवेद्यतः । व्यर्थसूत्राचरत्यागाङ्गङ्क्तैतज ज्ञापकं फणी ॥ 'स्वातन्त्र्याज्जरसादेशं जगौ पूर्वस्य बाधनात् । समर्थनप्रपञ्चस्तु भाष्यकैयटयोः स्फुटः ॥' एवं च यदत्र जरस इति केषाञ्चित् पाठान्तरकल्पनं तदज्ञानविजृम्भितमेव । ब्रह्मणः परमात्मनः सम्बन्धि परमुत्कृष्टं शुचि निष्कलङ्कम् । पद्यत इति पदं स्थानं तादात्म्यलक्षणम् । मुक्तिमित्यर्थः । उपैतुं प्राप्तुमिच्छतां मुमुक्षूणामागमाच्छास्त्रादिव ; तमोपहन्तीति तमोपहादविद्यानिवर्तकात् । 'अपे क्लेशतमसोः' इति डप्रत्ययः । इतोऽस्माद्गिरेः । भवं छिन्दन्तीति भवच्छिदः संसारनिवर्तकाः । 'सत्सूद्विष—'इत्यादिना क्विप् । मतयस्तत्त्वज्ञानानि संभवन्त्युत्पद्यन्ते । क्षेत्रविशेषस्यापि ज्ञानोपायत्वादित्या-

२१ । मैं समझता हूं कि ये समस्त तीनो लोक भी इस पार्वतीके पिता हिमालयको बराबर नहीं कर सकते । क्योंकि लोगोंकी समझमें न आनेवाली महिमा धारण किये हुए पार्वतीके स्वामी शिवजी हमेशा निवास किया करते हैं ।

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीड़ाः ।
पीड़ाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः ॥२३॥

अन्वयः । अस्मिन् सचरणलाक्षारागाः निपतितपुष्पपीड़ाः पीड़ाभाजः कुसुमचिताः दिव्यस्त्रीणां शय्याः रागायाते साशंसं सुरतविशेषं शंसन्ति । वाच्य—लाक्षारागाभिः...पुष्पापीड़ाभिः पीड़ाभाग्भिः कुसुमचिताभिः शय्याभिः साशंसः सुरतविशेषः शंस्यते ॥ २३ ॥

अयः । न केवलमियं भोगभूमिः किन्तु मुक्तिक्षेत्रमपीति तात्पर्यार्थः । रथोद्धतावृत्तम् । तल्लक्षणम्—'रान्नराविह रथोद्धता लगौ' इति ॥२२॥

दिव्येति । अस्मिन् गिरौ चरणलाक्षारागैः सह वर्त्तन्ते ताः तथोक्ताः । धेनुकपुरुषायितादिबन्धेषु स्त्रियाः पादतलस्याधः सम्पर्कात्तद्रागाङ्किता इत्यर्थः । निपतिता व्यानतकरणे स्त्रीणामधोमुखत्वाद् भ्रष्टाः पुष्पापीड़ाः कुसुमशेखरा यासु तास्तथोक्ताः 'शिखास्वापीड़शेखरौ' इत्यमरः । पीड़ाभाजो विमर्द्दभाजः । भङ्गिमत्य इत्यर्थः । भ्रमरप्रेङ्खोलितादौ सर्व्वतः कटीपरिभ्रमणसम्भवादिति भावः । कुसुमैश्चिताः कुसुमव्याप्ताः । इभमार्जारादिकरणेषु स्तनभुजाद्यवयवानां शय्यातलस्थायित्वान् मार्द्दवाय कुसुमाचिता इत्यर्थः । दिव्यस्त्रीणां सम्बन्धिन्यः । शेरत आस्विति शय्यास्तल्पानि । 'संज्ञायां समजनिषद-'इत्यादिना क्यप् । रागायाते रागोद्रेके सति यः साशंसः सतृष्णः सुरतविशेषस्तम् । जातावेकवचनम् । सुरतविशेषानित्यर्थः । शंसन्ति सूचयन्ति । विवृण्वन्तीत्यर्थः ।

२२ শাস্ত্রজ্ঞান দ্বারা যেমন অজ্ঞান দূরীভূত হইয়া তত্ত্বজ্ঞান প্রাদুর্ভূত হয়, তদ্রূপ জন্মজরাহীন পরমাত্মার পরম নিষ্কলঙ্কপদ অর্থাৎ মুক্তিলাভে অভিলাষী জনদিগের সংসারনির্বর্তক তত্ত্বজ্ঞান এই মনোহর গিরি হইতে প্রাদুর্ভূত হয়।

२२। जिस प्रकार शास्त्रसे ज्ञानसे अज्ञान दूर होने पर तत्त्वज्ञानका उदय होता है, उसी प्रकार जन्म और बुढ़ापेसे रहित परमात्माका अत्यन्त निर्मल ज्ञान अर्थात् मुक्ति पानेकी इच्छा करनेवाले लोगोंको संसारसे मुक्तकरानेवाला तत्त्वज्ञान इसी अन्धकार ( अज्ञान नष्ट करनेवाले हिमालय पर उत्पन्न होता है।

गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम्।
नयशालिनी श्रिय इवाधिपतौ
विरमन्ति न ज्वलितुमौषधयः ॥२४॥

अन्वयः। जगतां महिते अत्र हिमवति औषधयः नयशालिनी अधिपतौ श्रियः इव गुणसम्पदा परं महिमानं समाधिगम्य ज्वलितुं न विरमन्ति। वाच्य—औषधिभिः श्रीभिरिवः न विरम्यते ॥ २४ ॥

अत्र लाक्षारागादिपदार्थानां सुरतविशेषशंसनं प्रतिविशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारो यमकेन संसृज्यते। जलधरमालावृत्तम्—'श्मौस्भौ चेत् स्याज्जलधरमाला ख्याता' इति लक्षणात्। धेनुकादिबन्धलक्षणं तु रतिरहस्ये—'न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढ़वल्लभा। अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये। स्वेच्छया भ्रमति वल्लभेऽपि या योषिदाचरति वल्लभायितम्। व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः। तत् कटिं समाधिरुह्य वल्लभः स्याद् वृषादिपशुसंस्थितिस्थितः। चक्रवद्भ्रमति कुञ्चिताङ्घ्रिका भ्रामरं न जघने समुन्नते। पर्व्वतः कटिपरिभ्रमो यदि प्रेङ्खपूर्व्वमिदमुक्तमूलितम्। भूगतस्तनयुगास्यमस्तकामुन्नतस्फिजमधोमुखीं स्त्रियम्। कामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते।' 'प्रसारिते पाणिपादे शय्यासुप्ते सुखोरसि। उन्नतायाः स्त्रियाः कट्यां मार्जारकरणं विदुः।' इति ग्रन्थान्तरे। 'कान्तोत्पीड़ा भ्मौ स्मौ' इति वृत्तम् ॥ २३ ॥

गुणेति। जगतां महिते जगद्भिः पूजिते पूज्यमाने। "मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः। 'क्तस्य च वर्त्तमाने,' इति षष्ठी। अत्र हिम-

२३। এই পর্ব্বতে চরণের অলক্ত দ্বারা রক্তবর্ণ, পতিতপুষ্পশেখর যুক্ত মর্দিত কুসুমসমূহ দ্বারা আস্তৃত সুররমণীগণের বহু শয্যা পতিত রহিয়াছে। এই সকল অবস্থা দ্বারা সতৃষ্ণ সুরত বিশেষই বুঝাইয়া দিতেছে।

२३। इस पर्वतपर पैरोंमें लगी रंगसे लाल, और गिरी फुलोंकी मालाओंसे युक्त, मईन किये गये फूलों भरी देवताओं की स्त्रियोंकी शय्यायें भ्रष्ट हो गयी थीं। इन्हें देखने पर कई तरहके सुरत बन्धका अनुमान हो जाता है।

कुररीगणः कृतरवस्तरवः
कुसुमानताः सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥२५॥

अन्वयः । इह कुररीगणः कृतरवः तरवः कुसुमानताः कमलं सकमलं वरणावरणाः सनलदानलदाः सिन्धवः करिणां मुदे ( भवन्ति ) । वाच्य—कुररीगणेन कृतरवेण तरुभिः कुसुमानतैः कमलेन सकमलेन वरणावरणाभिः सनलदानलदाभिः सिन्धुभिः ( भूयते ) ॥ २५ ॥

वती ओषधयस्तृणज्योतींषि नयशालिन्यधिपतौ नीतिसम्पन्ने राज्ञि श्रियः सम्पदः इव गुणसम्पदा चेतगुणसम्पत्त्या अन्यत्र सन्धादिगुणसम्पदा। परं महिमानम् । उभयत्रापि प्रकाशसामर्थ्यम् । समधिगम्य ज्वलितुं प्रकाशितुं न विरमन्ति । अविरतं ज्वलन्तीत्यर्थः । अन्यत्र रात्रादाविवेति भावः ॥२४॥

कुररीति । इहाद्रौ कुररीगणः उत्क्रोशसङ्घः । 'उत्क्रोशकुररौ समौ' कृतरवः कृतारवः । तरवः कुसुमैरानताः । कमलं जलं सकमलं सपद्मम् 'कमलं जलपद्मयोः' इति विश्वः । यद्वा कं जलकमलमत्यन्तं सपद्मं वर्त्तते । 'कं जले शिरसि च' इत्यमरः । किञ्च—वरणाः द्रुमाः आवरणं यासां ताः वरणावरणाः 'वरणो वरुणः सेतुस्तिक्तशाकः कुमारकः' इत्यमरः । सनलदाः सोशीराः । 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं

२४। নীতিসম্পন্ন নরপতিতে সম্পদসমূহ যেমন সর্ব্বদা শোভা পায়, এই জগৎপূজিত হিমালয়েও ওষধিসকল সেইরূপ গুণসম্পদে একান্ত সমৃদ্ধ হইয়া নিরন্তর জলিতেছে।

২৫। এই হিমালয় পর্ব্বতে কুররী ( কোড়াল ) নামক পক্ষীগণ যে সমস্ত বৃক্ষে বসিয়া শব্দ করিতেছে—সেই সকল বৃক্ষ কুসুমভারে অবনত ; জলসমূহ পদ্মপরিশোভিত ; বৃক্ষাবরণশালী নদীসকল সুগন্ধ বিন্নারমূল ( খশ্ খশ্ ) যুক্ত ও সন্তাপহারী হওয়াতে হস্তিগণের আনন্দ জনক হইয়াছে।

२४। नीतिसे परिपूर्ण राजाके पास रहने पर जिस प्रकार सारी सम्पत्तियां निरन्तर शोभा पाती है, संसारमें प्रशंसा प्राप्त किये इस हिमालय पर भी सभी ओषधियां उसी प्रकार अपने समान गुणों परिपूर्ण हो निरन्तर जलती रहती हैं।

साहृश्यं गतमपनिद्रचूतगन्धै-
रामोदं मदजलसेकजं दधानः ।
एतस्मिन् मदयति कोकिलानकाले
लीनालिः सुरकरिणां कपोलकाषः ॥२६॥

अन्वयः। एतस्मिन् अपनिद्रचूतगन्धैः साहृश्यं गतं मदजलसेकजम् आमोदं दधानः (अतः) लीनालिः सुरकरिणां कपोलकाषः अकाले कोकिलान् मदयति। वाच्य— आमोदं दधानेन लीनालिना कपोलकाषेण कोकिलाः माद्यन्ते ॥ २६ ॥

सेव्यम्' इत्यमरः। अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्तीत्यनलदाः। सनलदाश्च ताः अनलदाः सिन्धवो नद्यः करिणां मुदे भवन्तीति शेषः। न कुत्राप्युक्तवैपरीत्यमिति भावः॥ २५ ॥

साहृश्यमिति। एतस्मिन् पर्व्वतेऽपनिद्रचूतगन्धैः साहृश्यं गतं फुल्लाम्र-पुष्पगन्धसदृशं मदजलसेकजमामोदं परिमलं दधानो बिभ्राणः। अतएव लीनालिः संसक्तभृङ्गः सुरकरिणाम्। कष्यतेऽनेनेति काषः। कपोलानां काषः कषणस्थानं द्रुमस्कन्धादि। अकाले वसन्तातिरिक्ते कालेऽपि कोकिलान् मदयति। 'मितां ह्रस्वः' इति ह्रस्वः। अत्र वसन्तरूप कारणाभावेऽपि मदाख्यकार्य्योत्पत्तिकथनाद्विभावनालङ्कारः। तदुक्तम्— 'कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावना' इति। सा च चूतगन्धैः साहृश्यमित्युपमया आमोदं दधान इति पदार्थहेतुककाव्यलिङ्गेन चाङ्गाङ्गि-भावेन सङ्कीर्य्यते। किञ्च कोकिलानां मदगन्धे चूतगन्धभ्रान्त्या भ्रान्ति-मदलङ्कारो व्यज्यते। प्रहर्षिणीवृत्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षि-णीयम्' इति लक्षणात् ॥२६॥

২৬। এই হিমালয় পর্ব্বতে সুরহস্তিগণের গণ্ডঘর্ষণের স্থান বৃক্ষস্কন্ধ, তথায় হস্তি-গণের মদজল ক্ষরণহেতু প্রস্ফুটিত আম্রপুষ্পের ন্যায় গন্ধযুক্ত হওয়ায় ভ্রমরসকল তাহাতে আসক্ত হইয়াছে। সেই হেতু বসন্তকাল ব্যতীতও উহা কোকিলদিগকে মত্ত করিতেছে।

२५। इस हिमालय पर्व्वत पर कुररी (बाल हंसकी तरह पक्षीविशेष) जिन्हें घाटीं भी कहते हैं पक्षी जिन वृक्षोंपर बैठ मधुर शब्द कर रहे हैं, वे सब वृक्ष फूलोंके बोझसे झुक गये हैं, जल कमलोंसे शोभते हैं। वृक्षोंसे घिरी नदियां उशीर (खस) से युक्त हो सन्ताप दूर करती हुई हाथियोंको सन्तुष्ट कर देती है।

सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥२७॥

अन्वयः । सनाकवनितं नितम्बरुचिरं सुनिनदैः नदैः वृतम् अमुम् अवतः फणवतः नागराजस्य मता रसपरा परास्तवसुधा सुधा चिरम् अधिवसति । वाच्य—मतया रसपरया परास्तवसुधया सुधया अध्युष्यते ॥ २७ ॥

सनाकेति । पुनश्च—सनाकवनितं साप्सरस्कं नितम्बैः कटकैः रुचिरं। सुनिनदैः सुघोषैर्नदैः प्रवाहैर्वृतममूम् । अमुष्मिन् गिराविल्यर्थः। 'उपान्वध्याङ्वसः' इति कर्म्मत्वम् । अवतोऽधोलोकरक्षकस्य फणवतो नागराजस्य मतेष्टा । 'मतिबुद्धि—' इत्यादिना वर्त्तमाने क्तः । तद्योगात् षष्ठी । रसेन स्वादेन परोत्कृष्टा परास्तवसुधा त्यक्तभूलोका सुधामृतं चिरमधिवसति । अतोऽन्यत्र भूमण्डले कुत्रापि सुधा नास्तीत्यर्थः । मेरुप्रतिभटोऽयं गिरिरिति भावः । अत्र प्रस्तुतविशेषणसामर्थ्यादप्रस्तुतमेरुप्रतीतेः समासोक्तिरलङ्कारः । स च यमकेन संसृज्यते। जलोद्धतगतिर्वृत्तम्—'रसैर्जसजसा जलोद्धतगतिः' इति लक्षणात् ॥२७॥

२१। अप्सरागणसेवित, नितम्बशोभित, गभीरगर्ज्जनशाली नदादि द्वारा परिव्याप्त এই হিমালয় পর্ব্বতকে অধোলোক (পাতাল) রক্ষক ফণধারী নাগরাজ ধারণ করিয়া রহিয়াছেন। সেই নাগরাজের অভীষ্ট রসশ্রেষ্ঠ অমৃত ভূলোক পরিত্যাগ করিয়া এই হিমালয়ে চিরকাল অবস্থান করিতেছে।

२६। इस हिमालय पर्व्वतपर देवताओंके हाथिओंके कपोलसे घिसी, वृक्षोंकी मोटी शाखाएं उनके मदजलसे सींची जानेके कारण आमके खिले मंजरकी सुगन्धी धारण कर रही हैं। इसी गन्धके लिये उनपर भौंरे बैठे हैं। इसीसे वसन्त काल बीत जाने पर भी कोयल पक्षी वनवाले हो रहे हैं।

२७। विहार करती अप्सराओंसे शोभित निचले भागों और गम्भीर गर्जत छोटी बड़ी नदियोंसे परिपूर्ण इस हिमालयको नीचले लोक (पाताल) की रक्षा करनेवाले फणामण्डल धारण किये, सर्पों को राज शेषनाग धारण कर रहे हैं। इन्ही शेषनागका प्यारा और स्वादिष्ट अमृत पाताल त्याग कर हिमालयमें रहता है।

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्त्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥२८॥

ईशार्थमम्भसि चिराय तपश्चरन्त्या-
यादोविलङ्घनविलोलविलोचनायाः ।

अन्वयः । अस्मिन् श्रीमल्लताभवनम्, ओषधयः प्रदीपाः, नवानि हरिचन्दनपल्लवानि शय्याः, रतिश्रमनुदः सरोजवाताश्च सुरसुन्दरीभ्यः दिवः स्मर्त्तुं न दिशन्ति। वाच्य— श्रीमल्लताभवनेन ओषधिभिः प्रदीपैः नवैः हरिचन्दनपल्लवैः शय्याभिः रतिश्रमनुद्भिः सरोजवातैः द्यौः स्मर्त्तुं न दिश्यते ॥ २८ ॥

श्रीमदिति । अस्मिन्नद्रौ श्रीमत् समृद्धिमल्लता एव भवनम्, ओषधयस्तन्ज्योतींष्येव प्रदीपाः, नवानि हरिचन्दनपल्लवानि सुरतरुकिसलयान्येव शय्याः । "हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे" इति विश्वः । रतिश्रमनुदः सुरतश्रमहारिणः सरोजवाताश्च सुरसुन्दरीभ्यः । क्रियाग्रहणाच्चतुर्थी । दिवो दिवम् । 'अधीगर्थ—'इत्यादिना कर्म्मणि षष्ठी । स्मर्त्तुं न दिशन्ति । विस्मारयन्तीत्यर्थः । स्वर्गादप्यतिरिच्यतेऽसाविति भावः । अत्र पूर्वार्द्धे रूपकत्रयं स्फुटमेव ॥ २८ ॥

২৮। এই হিমালয়ে পরম সুন্দর লতাসমূহই বাসগৃহ। তৃণজ্যোতিসমূহই প্রদীপ, নবজাত হরিচন্দনপল্লবসকলই শয্যা এবং সুরতশ্রমহারী পদ্মগন্ধযুক্ত বায়ু, এই সমুদয়ই স্বর্গ সুন্দরীদিগকে আর স্বর্গের কথা মনে করাইতেছে না। অর্থাৎ হিমালয় সর্ব্বপ্রকারে স্বর্গ হইতে শ্রেষ্ঠ।

२८। इस हिमालय पर अत्यन्त सुन्दर लताओंके समूह ही निवास, मरनेके घर है, जलते हुए छोटे २ पौधे ही प्रदीप (दिये) हैं, चन्दनके नये नये पल्लव ही शय्याएं है, रतिश्रम हरण करनेवाली वायु इन सामग्रीओंसे स्वर्गकी सुन्दरस्त्रियोंके मनमें स्वर्गका स्मरण करने नहीं देती। अर्थात् हिमालय स्वर्गसे सभी अवस्थाओंमें श्रेष्ठ है।

आलम्बताग्रकरमत्र भवो भवान्याः
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥२९॥
येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।

अन्वयः। ईशार्थं चिराय अम्भसि तपश्चरन्त्याः (अतः) यादोविलङ्घनविलोलविलोचनायाः भवान्याः अग्रकरं भवः श्च्योतन्निदाघसलिलाङ्गुलिना करेण (अतः) आलम्बत। वाच्य—भवेन अग्रकरः आलम्ब्यत ॥ २९ ॥

ईशार्थमिति। ईशायेतीशार्थं यथा तथेति क्रियाविशेषणम्। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या'। चिराय चिरमम्भसि तपश्चरन्त्या अतएव यादोविलङ्घनविलोलविलोचनायाः जलजन्तुविघट्टितचकितेक्षणायाः। तपसोऽप्यधिकं दृष्टैरेव विलोभयन्त्या इति भावः। 'यादांसि जलजन्तवः' इत्यमरः। भवान्याः भवपत्न्याः। प्रयोगकालापेक्षोऽयं निर्देशः। 'इन्द्रवरुणभव—' इत्यादिना ङीप् आनुगागमश्च। करैकदेशस्यापि करत्वादग्रश्चासौ करश्चेति समानाधिकरणे समासः। अतएव वामनः—'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदौ' इति। तमग्रकरं भवः शिवः, श्च्योतन्निदाघसलिलाङ्गुलिना स्रवत्स्वेदाङ्गुलिनेति सात्त्विकोदयोक्तिः। करेणात्र गिरावालम्बत स्पृष्टवान्। अत्रादृभुतातीतवृत्तान्तस्य प्रत्यक्षवदभिधानाद्भाविकालङ्कारः—'अतीतानागते यत्र प्रत्यक्षवदलक्षिते। अत्यद्भुतार्थकार्य्यत्वाद्भाविकं तदुदाहृतम्' इति लक्षणात्। वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ २९ ॥

२৯। এই পর্ব্বতে, মহাদেবকে পাইবার নিমিত্ত, দীর্ঘকাল ব্যাপিয়া জলমধ্যে তপস্যাকারিণী, পার্ব্বতীর জলজন্তুগণের গমনাগমন উল্লম্ফনাদি হেতু চক্ষু চঞ্চল হইয়াছিল। তখন মহাদেব ঘর্ম্মজলস্রাবী নিজ করাঙ্গুলি দ্বারা ভবানীর কর গ্রহণ করিয়াছিলেন।

२९। इसी पर्व्वतपर, महादेवजीका पानेके लिये बहुत समय तक करनेवाली पार्वतीकी आंखें जलजन्तुओंके आने जाने और उछलनेके कारण चञ्चल हो गयी थी। ऐसे ही समय पर महादेवजीने पसीने भरी अंगुलियोंसे पार्वतीका हाथ पकड़ा था।

व्यावर्त्तनैरहिपतेरयमाहिताङ्कः

खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ ३०॥

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-

रानीलाभैर्विरचितपरभागा रत्नैः।

अन्वयः। देवासुरैः येन अपविद्धसलिलः स्फुटनागसद्मा अम्बुनिधिः अमृतं ममन्थे। अहिपतेः व्यवर्त्तनैः आहिताङ्कः अयं मन्दराद्रिः खं व्यलिखत् इव विभाति। वाच्य देवासुराः अपविद्धसलिलं स्फुटनागसद्मानम् अम्बुनिधिम् अमृतं ममन्थुः। आहिताङ्केन अनेन मन्दराद्रिणा खं व्यलिखतेव विभायते ॥ ३० ॥

येनेति। देवाश्चासुराश्च तैर्देवासुरैः। 'येषां च विरोधः शाश्वतिकः' इति नैकवद्भावः, एषां यतः कार्य्यत एव विरोधो न गोव्याघ्रादिवच्छाश्वतिक इत्याहुः। येन मन्दराद्रिणा। मन्थदण्डीकृतेनेति भावः। अपविद्धसलिलः क्षिप्तजलोऽतएव स्फुटं नागसद्म पातालं यस्मिन् सोऽम्बुनिधिरमृतं ममन्थे मथितः। मथ्नातेर्द्विकर्म्मत्वाद्दुहादित्वादप्रधाने कर्म्मणि लिट्। अहिपतेः मन्थगुणीकृतस्य वासुकेरित्यर्थः। 'मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्' इति भारतवचनात्। व्यावर्त्तनैर्वेष्टनैराहिताङ्कः कृतचिह्नः सोऽयं मन्दराद्रिः खमाकाशं व्यालिखन् व्यापाटयन्निव विभाति। अत्रौन्नत्यानुपादानेनैव खलेखनोत्प्रेक्षणादनुपात्तगुणनिमित्ता क्रियास्वरूपोत्प्रेक्षा ॥ ३० ॥

৩০। দেবাসুরগণ যে মন্দর পর্ব্বতকে মন্থনদণ্ড করিয়া জলধিতে অমৃতমন্থন করিয়াছিলেন, তখন মন্দরের মন্থনবেগে সাগর সলিল বিক্ষিপ্ত হওয়াতে নাগলোক (পাতাল) স্পষ্টই প্রকাশ পাইয়াছিল। সেই সময়ে মন্থনগুণীকৃত বাসুকীর বেষ্টন হেতু মন্দরের গাত্রে চিহ্ন উৎপন্ন হইয়াছিল। এই সেই মন্দর পর্ব্বত আকাশ লঙ্ঘন করিয়াই, যেন বিরাজিত রহিয়াছে।

३०। देवताओं और दैत्योंने जिस मन्दराचल को मन्थन दण्ड (मन्थन) बना समुद्रमन्थन कर अमृत निकाला था। उस समय मंदराचल के वेग से समुद्र के जल तमाम उच्छलने से नागलोक (पाताल) साफ दिखाई देरहा था, उसी समय मन्दराचल में मन्थन की जेही तरह लिपटे वासुकि सांपके रगड़ की रेखा हो गयी थी, वही यह मन्दराचल मालूम पड़ती है, कि आकाश को ऊपर फाड़ कर उठा हुआ है।

ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥३१॥
दधत इव विलासशालि नृत्यं
मृदु पतता पवनेन कम्पितानि ।
इह ललितविलासिनीजनभ्रू-
गतिकुटिलेषु पयःसु पङ्कजानि ॥३२॥

अन्वयः। इह अशिशिररश्मेः उस्रैः उच्छ्रायं नीता, आनीलाभैः रत्नैः विरचितपरभागा हंसश्येनी स्फटिकरजतभित्तिच्छाया, मध्याह्ने अपि मुहुः ज्योत्स्नाशङ्कां वितरति॥ वाच्य—नीतया विरचितपरभागया हंसश्येन्या स्फटिकरजतभित्तिच्छायया ज्योत्स्नाशङ्का वितीर्य्यते ॥३१॥

अन्वयः। इह मृदु पतता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु विलासशालि नृत्यं दधते इव॥ वाच्य कम्पितैः पङ्कजैः विलासशालि नृत्यं धीयते ॥ ३२ ॥

नीतेति। इहाद्रावशिशिररश्मेरुष्णांशोरुस्रैर्मयूखैः, संक्रान्तैरित्यर्थः। नीतोच्छ्रायमुच्छ्रायं नीता विस्तारितेत्यर्थः। तथानीलाभैरसितप्रभै रत्नैरिन्द्रनीलैर्विरचितपरभागा, तत्सन्निधानाल्लब्धोत्कर्षेत्यर्थः। हंस इव श्येनी श्वेतवर्णा 'विशदश्वेतपाण्डराः' इत्यमरः। 'वर्णादनुदात्तात्तोपधात्तो नः' इति श्वेतशब्दात् ङीप्, तकारस्य च नकारः। स्फटिकानां रजतानाञ्च भित्तयस्तासां छाया कान्तिः। अह्नो मध्ये मध्याह्नेऽपीत्यर्थः। मुहुर्ज्योत्स्नाशङ्कां ज्योत्स्नाभ्रान्तिं वितरति। ज्योत्स्नाकृते भ्रान्तिं जनयतीति भ्रान्तिमदलङ्कारः ॥ ३१ ॥

৩১। এই হিমালয়ে, হংসের ন্যায় শ্বেতবর্ণ স্ফটিক ও রজতপূর্ণ ভিত্তির উপর সূর্য্যের কিরণ প্রতিফলিত হওয়াতে উহাদের কান্তিসমূহ বিস্তারিত এবং নীলকান্তমণির সান্নিধ্য হেতু উৎকর্ষ প্রাপ্ত হইলে মধ্যাহ্নকালেও জ্যোৎস্নার ভ্রান্তি জন্মাইতেছে। অর্থাৎ হিমালয়ের স্ফটিক ও রৌপ্যপূর্ণ স্থানগুলি প্রদীপ্তসূর্য্যকিরণে অতিশয় উজ্জ্বলতা হইলেও, নীলকান্তমণির জ্যোতিঃ উহাতে পতিত হওয়ায় সেই উজ্জ্বলতা হ্রাস পাইয়া জ্যোৎস্নার ন্যায় স্নিগ্ধজ্যোতিসম্পন্ন হইয়াছে।

३१। इस हिमालय पर हंसकी तरह उजली स्फटिक और रूपे से भरी दिवारोंके ऊपर सूर्य्य की किरणों को छाया पड़ने पर उनमें से चमक निकल

अस्मिन्नगृह्यत पिनाकभृता सलील-
मावद्धवेपथुरधीरविलोचनायाः।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥३३॥

अन्वयः। अस्मिन् पिनाकभृता अधीरविलोचनायाः ईश्वरायाः आवद्धवेपथुः विन्यस्तमङ्गलमहौषधिः पाणिः, स्रस्तोरगप्रतिसरेण करेण अगृह्यत ॥ वाच्य – पिनाकभृत् आवद्धवेपथुं विन्यस्तमङ्गलमहौषधिं पाणिम् अगृह्णात् ॥ ३३ ॥

दधत इति। इहाद्रौ मृदु पतता मन्दं वहता पवनेन कम्पितानि पङ्कजानि, ललितविलासिनीजनस्य भ्रूगतिवत्कुटिलेषु ईषत्तरङ्गितेष्वित्यर्थः। पयःसु विलासशालिनृत्यं दधत इव सविलासं नृत्यन्तीवेत्युत्प्रेक्षा। पुष्पिताग्रावृत्तम् ॥ ३२ ॥

अस्मिन्निति। अस्मिन्नद्रौ पिनाकभृता शिवेनाधीरविलोचनायाश्चकित दृष्टेः उरगदर्शनादिति भावः। ईश्वरायाः गौर्याः। 'स्थेशभास-' इत्यादिना वरच्। पुंयोगविवक्षाभावान्न ङीप्। आवद्धवेपथुः प्राप्तकम्प इति सात्त्विकोक्तिः। 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः। विन्यस्ता मङ्गल महौषधिर्यवाङ्कुरादिर्यस्मिन् स पाणिः स्रस्तो गलित उरग एव प्रतिसरः कौतुकसूत्रं यस्य तेन। 'आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने' इति विश्वः। करेण सलीलमगृह्यतेति देवस्य पार्वतीपरिणयनवर्णनम्। ईशार्थमित्यत्र त्वनुग्रहमात्रोक्तिरित्यपौनरुक्त्यम्। भाविकमेवालङ्कारः ॥३३॥

৩২। এই হিমালয়-পর্ব্বতে মৃদুমন্দ প্রবাহিত পবন দ্বারা কম্পিত পদ্মসমূহ সুন্দরী বিলাসিনীগণের ভ্রূভঙ্গির ন্যায় চঞ্চল অর্থাৎ ঈষৎ তরঙ্গযুক্ত জলে যেন বিলাস সহকারে নাচিতেছে।

रही थी और पास ही नीलमणि चटान था इस लिये मध्याह्न मे भी चान्दनी का भ्रम हो जाता था। अर्थात् हिमालय के स्फटिक और रूपे से भरे सभी स्थान सूर्य्य की चमचमाती किरणों से अत्यन्त उजले होने पर भी नीलमणि की प्रभा (रोशनी) पड़ रही थी इसी से उजलापन छट जाने पर चान्दनी की तरह ज्योति से पूर्ण हो रहे हैं।

३२। इस हिमालय पर्व्वत पर धीरे धीरे वहती ठण्ढी वायुसे कुछ कंपते हुए कमल, अत्यन्त सुन्दर और विलास (हाव भाव आदिक) करनेवाली स्त्रियों की कुछ टेंढी भौंओं की तरह चञ्चल हो रहे थे, अर्थात् मन्द तरङ्गों से कुता जलमें जान पड़ता है कि हावभाव के साथ नाच रहे हैं।

क्रामद्भिर्घनपदवीमनेकसंख्यै-
स्तेजोभिः शुचिमणिजन्मभिर्विभिन्नः ।
उस्राणां व्यभिचरतीव सप्तसप्तेः
पर्य्यस्यन्निह निचयः सहस्रसंख्याम् ॥३४॥

अन्वयः । घनपदवीं क्रामद्भिः अनेकसंख्यैः शुचिमणिजन्मभिः तेजोभिः विभिन्नः (अतएव) पर्य्यस्यन् इह सप्तसप्तेः उस्राणां निचयः सहस्रसंख्यां व्यभिचरति इव। वाच्य—विभिन्नेन पर्य्यस्यता उस्राणां निचयेन सहस्रसंख्या व्यभिचर्यते ॥३४॥

क्रामद्भिरिति । घनपदवीमाकाशं क्रामद्भिर्व्यप्नुवानैरनेकसंख्यैः परःसहस्रैरित्यर्थः । क्वचित् 'अनेकवर्णैः' इति पाठस्तु प्रामादिक एव वैयर्थ्याद्व्याघाताच्चेति । शुचिमणिभ्यः स्फटिकेभ्यो जन्म येषां तैः। 'जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणोऽपीष्यते' इति वामनः । तेजोभिर्विभिन्नो मिश्रः अतएव पर्य्यस्यन् प्रसर्पन्निहाद्रौ सप्तसप्तेः सवितुरुस्राणां किरणानां निचयो निकरः । सहस्रमिति संख्या सहस्रसंख्या ताम् स्वनियतामिति शेषः । व्यभिचरत्यतिक्रामतीवेत्युत्प्रेक्षा ॥ ३४ ॥

৩৩। এই হিমালয়ে, পিণাকপাণি শিব, নিজদেহস্থিত সর্প দর্শনে চকিত নয়না গৌরীর মঙ্গলমহৌষধিযুক্ত কম্পিত হস্ত, লীলা সহকারে গ্রহণ করিয়াছিলেন। তখন মহাদেবের করস্থিত সর্পরূপ কৌতুকসূত্র খসিয়া পড়িয়াছিল।

৩৪। সুবিমলস্ফটিক হইতে উৎপন্ন সহস্র সহস্র রশ্মিজাল, আকাশে পরিব্যাপ্ত হইয়াছে। তাহাদের সহিত মিশ্রিত সুতরাং সুপ্রসারিত হইয়া সূর্য্যের কিরণজাল এই হিমালয় পর্ব্বতে সহস্র সংখ্যাকেও অতিক্রম করিয়াছে।

३३। इसी हिमालय पर 'पिनाक' धारण करनेवाले शिवजीने (शिवजीकी) देह में लिपटे सांपों को देख कर चञ्चलनेत्रवाली पार्व्वती की मङ्गल कारक ओषधिओं युक्त और कंपते हुए हाथ को विलास पूर्वक पकड़ा था। और उस समय उनके हाथ में लिपटे सांपरूपी कौतुकसूत्र (विवाहकाल का कङ्कणसूत्र) गिर पड़ा था।

३४। अत्यन्त निर्मल स्फटिक मणियोंसे उत्पन्न हाजारों रश्मि, आकाश में फैल रही है। उनके साथ मिलजाने पर सूर्य्य की अत्यन्त चमचमाती किरण, इस हिमालय पर हजार की हिमभी पार कर भई हजार वारे रही है।

व्यधत्त यस्मिन् पुरमुच्चगोपुरं
पुरां विजेतुर्धृतये धनाधिपः।
स एष कैलास उपान्तसर्पिणः
करोत्यकालास्तमयं विवस्वतः ॥३५॥

नानारत्नज्योतिषां सन्निपातै-
श्छन्नेष्वन्तःसानु वप्रान्तरेषु।
बद्धां-बद्धां भित्तिशङ्कामसुष्मि-
न्नावानावान्मातरिश्वा निहन्ति ॥३६॥

अन्वयः। अस्मिन् धनाधिपः पुरां विजेतुः धृतये उच्चगोपुरं पुरं व्यधत्त। स एषः कैलासः उपान्तसर्पिणः विवस्वतः अकालास्तमयं करोति॥ वाच्य—धनाधिपेन उच्चगोपुरं पुरं व्यधीयत। तेन एतेन कैलासेन अस्तमयः क्रियते॥ ३५॥

अन्वयः—असुष्मिन् अन्तःसानु नानारत्नज्योतिषां सन्निपातैः छन्नेषु वप्रान्तरेषु बद्धां बद्धां भित्तिशङ्कां आवान् आवान् मातरिश्वा निहन्ति॥ वाच्य—आवाता आवाता मातरिश्वना बद्धा बद्धा भित्तिशङ्का निहन्यते॥ ३६॥

व्यधत्तेति। यस्मिन् कैलासे धनाधिपः कुबेरः पुरां विजेतुः शिवस्य धृतये सन्तोषायोच्चगोपुरमुन्नतपुरद्वारम्। 'पुरद्वारं तु गोपुरम्' इत्यमरः। पुरमलकाख्यां पुरीं व्यधत्त निर्म्मितवान्, तत्सखित्वादिति भावः। स एष कैलासः उपान्तसर्पिणः प्रान्तचारिणो विवस्वतः सूर्य्यस्याकाले प्रसिद्धेतरकाले अस्तमयं करोतीवेत्युत्प्रेक्षा। वस्तुतस्तु तत्कारणाभावाद् व्यञ्जकाप्रयोगादगम्योत्प्रेक्षा। सा चोपान्तवर्त्तितया असम्बन्धे सम्बन्धलक्षणातिशयोक्त्युत्थापितेति विवेकः। अस्तमिति मकारान्तमव्ययम्, तस्य पचाद्यजन्तेनायशब्देन षष्ठीसमासः। वृत्तमुक्तम् ॥ ३५॥

৩৫। ধনাধিপতি কুবের যে কৈলাসপর্ব্বতে পুরারিমহাদেবের সন্তোষের নিমিত্ত উন্নতপুরদ্বারযুক্ত, অলকানাম্নীপুরী নির্ম্মাণ করাইয়াছিলেন, এই সেই কৈলাস। কৈলাসপর্ব্বত, তাহার একপার্শ্বে ভ্রমণকারী সূর্য্যের অসময়ে অন্তর্ধান করিতেছে।

३५। धनके स्वामी कुबेरने जिस कैलास पर्व्वतपर त्रिपुरासुरको मारनेवाले शिवजीको प्रसन्न करनेके लिये ऊंचे २ फाटकोंसे शोभित 'अलका' नामक पुरी बनवायी थी, यह वही कैलास है। कैलास पर्व्वत अपनी बगलमें चक्कर लगाते हुए सूर्य्यको समय आनेके पहले ही अन्त कर देता है।

रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥३७॥

अन्वयः। अस्मिन् शाद्वलेभ्यः रम्या नवद्युतिः न अपैति, नलिनीवनानि अनुदिनं श्यामीभवन्ति, विचित्रकुसुमस्तवकाचितानां शाखाभृतां पल्लवानि न परिणमन्ति ॥ वाच्य—रम्यया नवद्युत्या न अपेयते। नलिनीवनैः श्यामीभूयते, पल्लवैः परिणम्यते ॥ ३७ ॥

नानेति। अमुष्मिन् कैलासेऽन्तःसानु, सानुष्वित्यर्थः। विभक्त्यर्थे अव्ययीभावः। नानारत्नज्योतिषां अनेकमणिकान्तीनां सन्निपातैर्व्यतिकरैः छन्नेषु छादितेषु। 'वा दान्तशान्त-' इत्यादिना निपातः। वप्रान्तरेषु कटकान्तरेषु बद्धां बद्धामभीक्ष्णबद्धाम्; दृढ़ोत्पादितामित्यर्थः। 'नित्य-वीप्सयोः' इति नित्यार्थे द्विर्भावः। 'नित्यमभीक्ष्णम्' इति काशिका। एकपदं चैतत्। भित्तिशङ्कां भित्तिरिति सन्देहमावानावानभीक्ष्णमापतन्। आङ्पूर्व्वाद्दधातोः णमुलप्रत्ययः। द्विर्भावादि पूर्व्ववत्। मातर्य्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः, कनिन्प्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। निहन्ति निवर्त्तयति, वायुसञ्चाराद्भित्तिभावोऽवधार्य्यत इत्यर्थः। अतो निश्चयान्तःसन्देहालङ्कारः। शालिनी वृत्तम्। ३६ ॥

रम्येति। अस्मिन्नद्रौ। शादाः शष्पाणि सन्त्येष्विति शाद्वलास्तेभ्यः। 'शाद्वलः शादहरिते' इत्यमरः। 'नडशादाड्ड्वलच्'। रम्या नवा

৩৬। এই কৈলাসপর্ব্বতে, উর্দ্ধভাগে অবস্থিত সমতল ভূমিভাগে বহুপ্রকার রত্নের জ্যোতির সম্মিলনে গিরি-তটান্তরসকল সম্পূর্ণ আচ্ছাদিত হওয়ায় উহা ভিত্তি বলিয়া সন্দেহ জন্মিতেছে। কিন্তু উহার মধ্য দিয়া বায়ুর বারংবার সঞ্চার হওয়ায় উহা ভিত্তি নহে, তাহা বুঝা যাইতেছে।

३६। इस कैलास पर्व्वतके ऊपरवाले समतल स्थान पर कई प्रकारके रत्नोंकी ज्योति मिल एक साथ मिल जानेसे, दो पर्व्वतोंके बीचका शून्य स्थान दिवार (भीत) सन्देह उत्पन्न करता है। पर उस नाफसे बार बार वायु आती रहनेसे कारण मालूम पड़ जाता है कि वह दिवार नहीं है।

परिसरविषयेषु लीढमुक्ता
हरिततृणोद्गमशङ्कया मृगीभिः ।
इह नवशुककोमला मणीनां
रविकरसम्बलिताः फलन्ति भासः ॥३८॥

अन्वयः । इह परिसरविषयेषु मृगीभिः हरिततृणोद्गमशङ्कया लीढमुक्ताः नवशुककोमलाः मणीनां भासः रविकरसंवलिताः फलन्ति । वाच्य—लीढमुक्ताभिः नवशुककोमलाभिः भाभिः रविकरसंवलिताभिः फल्यते ॥ ३८ ॥

द्युतिर्नापैति, किन्तु नित्येत्यर्थः । नलिनीवनान्यनुदिनं सर्वदा श्यामीभवन्ति, न कदाचित् पाण्डुरीभवन्तीत्यर्थः । विचित्रकुसुमस्तवकैराचितानां व्याप्तानां शाखाभृतां तरूणां पल्लवानि न परिणमन्ति, न जीर्णानि भवन्तीत्यर्थः, सर्वदा नूतनान्यमेव सर्व्वाणि वर्त्तन्त इत्यर्थः । अत्र प्रस्तुतस्यैव तत्तद्वस्तुगतकान्तिस्थैर्य्यरूपकार्य्यस्य वर्णनात् प्रस्तुतमिव कारणं कश्चिदसाधारणः कैलासस्य महिमावगम्यत इति पर्य्यायोक्तिरलङ्कारः । तदुक्तम्—'कारणं गम्यते यत्र प्रस्तुतं कार्य्यवर्णनात् । प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यते ॥' इति ॥ ३७ ॥

परिसरेति । इहाद्रौ परिसरविषयेषु पर्य्यन्तदेशेषु । 'विषयो देशे' इति निपातः । मृगीभिर्हरिततृणोद्गमशङ्कया । नीलतृणाङ्कुरभ्रान्त्येति भ्रान्तिमदलङ्कारः । लीढाः पूर्व्वमास्वादिताः पश्चान्मुक्ता लीढमुक्ताः । "दग्धप्ररूढ" इत्यादिना समानाधिकरणसमासः । नवशुककोमलाः शुकसवर्णाः इत्यर्थं मणीनां मरकतमणीनां भासो रविकरैः सम्बलिताः मिश्रिताः सत्यः फलन्ति संमूर्च्छन्ति वर्त्तन्त इति यावत् ॥ ३८

৩৭। এই হিমালয়পর্ব্বতে নবীনতৃণপূর্ণ স্থানের রমণীয় নবীনছ্যতি দূরীভূত হয় না। পদ্মবনসমূহ সর্ব্বদা শ্যামবর্ণ থাকে, বিচিত্র পুষ্পস্তবক পরিব্যাপ্ত বৃক্ষগণের পত্র সকলও কখনই পক্ব হয় না।

३७। इस हिमालय पर्व्वतपर नयी घासों भरे स्थानोंकी सुन्दर नयी शोभा दूर कभीनहीं होती (अर्थात् ज्योंके त्यों बनी रहती है। कमल निरन्तर श्याम वर्ण बने रहते विचित्र फूलोंसे भरे वृक्षोंके पत्ते कभी नहीं पकते।

उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्त्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥३९॥

अन्वयः। वात्याभिः अमुष्मात् उत्फुल्लस्थलनलिनीवनात् उद्धूतः वियति समन्तात् विवर्त्तितः सरसिजसम्भवः परागः कनकमयातपत्रलक्ष्मीम् आधत्ते। वाच्य—उद्धूतेन विवर्त्तितेन सरसिजसम्भवेन परागेण कनकमयातपत्रलक्ष्मीः आधीयते ॥ ३९ ॥

उत्फुल्लेति। अस्मिन्नद्रौ वात्याभिर्वातसमूहैः। 'वातादिभ्यो यत्' इति यत्प्रत्ययः। अमुष्माद्दृश्यमानादुत्फुल्लस्थलनलिनीवनात्, जलपतितस्य परागस्योत्थानासम्भवात् स्थलग्रहणम्। उत्फुल्लसंफुल्लयोरुपसंख्याना-न्निष्ठातत्वम्। उद्धूत उत्थापितो वियति समन्ताद्विवर्त्तितः परिमण्डलितः, अन्तराले तु दण्डायमान एवेति भावः। सरसिजसम्भवः पद्मोद्भवः परागः। रूढ्यभिप्रायेणात्र सरसिजशब्दप्रयोगो द्रष्टव्यः। कनकमयात-पत्रलक्ष्मीमाधत्तेऽनुकरोति। अत्र परागस्यातपत्रलक्ष्मीसम्बन्धासम्भवा-त्तत्सदृशीं लक्ष्मीमिति प्रतिबिम्बनाक्षेपादसम्भविधर्म्मसम्बन्धेयं निदर्शना। तदुक्तम्—'असम्भवद्धर्म्मयोगादुपमानोपमेययोः। प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना।' इति ॥ ३९ ॥

:৩৮। এই হিমালয়ের পর্য্যন্তদেশে শুকের ন্যায় কোমল মরকত মণির কান্তি সূর্য্যকিরণে মিশ্রিত হইতেছে। মৃগীগণ নীলবর্ণ তৃণাঙ্কুর মনে করিয়া পূর্ব্বে ঐ সকল মরকতমণির আস্বাদনপূর্ব্বক পরে তাহা পরিত্যাগ করিয়াছে।

৩৯। ঐ যে স্থলপদ্মের বন দেখা যাইতেছে, উহা হইতে পদ্মের পরাগসকল বায়ু দ্বারা উত্থিত এবং আকাশের চারিদিকে মণ্ডলাকারে ঘূর্ণিত হইয়া কণকময় ছত্রের শোভা ধারণ করিতেছে।

३८। इस हिमालयके आसपास सूगीके तरह सुन्दर मरकतों (हरे मणियों) को चमक सुर्य्यके किरणमें मिल कर अधिक बढ़ रही है। हरिणी सब नीली घासके अङ्कुर समझ इन मरकत मणियों को चाट कर पीछे त्याग करती है।

३९। ये जो स्थलकमल दिखाई पड़ते हैं। उन परसे कमलकी धूलि वायुसे उड़कर ऊपर आकाशमें चारों ओर मण्डलाकार फैल जानेके कारण सोनेके छातेकी शोभा धारण कर रही है।

इह सनियमयोः सुरापगाया-
मुषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥४०॥

संमूर्च्छतां रजतभित्तिमयूखजालै-
रालोलपादपलतान्तरनिर्गतानाम् ।
घर्म्मद्युतेरिह मुहुः पटलानि धाम्ना-
मादर्शमण्डलनिभानि समुल्लसन्ति ॥४१॥

अन्वयः । इह उषसि सुरापगायां सयावक सव्यपादरेखा विषमपदा विवर्त्तनेषु पदवी, सनियमयोः शिवयोः शरीरयोगं कथयति । वाच्य— सयावकसव्यपादरेखया विषमपदया पदव्या शरीरयोगः कथ्यते ॥ ४० ॥

अन्वयः । इह रजतभित्तिमयूखजालैः संमूर्च्छतां आलोलपादपलतान्तरनिर्गतानां घर्म्मद्युतेः धाम्नां आदर्शमण्डलनिभानि पटलानि मुहुः समुल्लसन्ति । वाच्य—आदर्श-मण्डलनिभैः पटलैः समुल्लस्यते ॥ ४१ ॥

इहेति । इहाद्रावुषसि प्रभाते सुरापगायां लक्षणया तत्कुले, सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा । 'यावोऽलक्तो द्रुमामयः' इत्यमरः । तथा विषमाणि महदल्पानि पदानि यस्यां सा, विवर्त्तनेषु प्रदक्षिणक्रियासु पदवी, शिवयोः प्रदक्षिणपद्धतिरित्यर्थः । सनियमयोः सन्ध्यायां प्रणमतोरित्यर्थः । शिवा च शिवश्च तयोः शिवयोरुमाशङ्करयोः । 'पुमान् स्त्रिया' इत्येकशेषः । शरीरयोगमर्द्धाङ्ग-सङ्घटनारूपं कथयति । सनियमयोरितिनियमविषयेऽपि विरहासही इह विहरतः शिवाविति भावः । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः ॥ ४० ॥

৪০ । এই হিমালয় পর্ব্বতে প্রভাতকালে দেবনদীর তটদেশে নিয়মাবলম্বী উমা-মহেশ্বরের অলক্তাক্ত বামচরণযুক্ত সমবিষম প্রদক্ষিণ-পদ্ধতি, তাঁহাদের শরীরসংযোগের বিষয় বলিয়া দিতেছে ।

४० । इस हिमालय पर्व्वत पर प्रातःकाल गङ्गाके किनारे ( सन्ध्या आदिक ) नियम धारण किये शिवपार्व्वतीको, अलक्त ( महावट ) से युक्त वामी चरणकी साथ सम विषम प्रदक्षिण विधि, "उनके शरीर किस परिमाण मिले हैं" यह बात बता देती है ।

शुक्लैर्मयूखनिचयैः परिवीतमूर्त्ति-
र्वप्राभिघातपरिमण्डलितोरुदेहः ।
शृङ्गाण्यमुष्य भजते गणभर्त्तुरुक्षा
कुर्व्वन् बधूजनमनःसु शशाङ्कशङ्काम् ॥४२॥

अन्वयः । शुक्लैः मयूखनिचयैः परिवितमूर्त्तिः वप्रातिघातपरिमण्डलितोरुदेहः गणभर्त्तुः उक्षा, वधूजनमनःसु शशाङ्कशङ्कां कुर्व्वन् अमुष्य शृङ्गाणि भजते । वाच्य—परिवितमूर्त्तिना वप्राभिघातपरिमण्डलितोरुदेहेन उक्ष्णा शशाङ्कशङ्कां कुर्व्वता शृङ्गाणि भज्यन्ते ॥ ४२ ॥

संमूर्च्छितामिति । इहाद्रौ रजतभित्तिमयूखजालैः संमूर्च्छितां बहुलीभवतामालोलानां पादपलतानां तरुशाखानामन्तरेषु रन्ध्रेषु निर्गतानां प्रसृतानां घर्मद्युतेरुष्णांशोर्धाम्नां तेजसामादर्शमण्डलनिभानि दर्पणबिम्बसदृशानीत्युपमालङ्कारः । पटलानि मण्डलानि मुहुर्वारंवारं समुल्लसन्ति पुनः पुनः स्फुरन्ति, न तु सातत्येन, लतानामालोलत्वाभावात् । तच्च नान्यत्र मृत्पाषाणादिप्राये सम्भवतीति भावः ॥ ४१ ॥

शुक्लैरिति । शुक्लैर्मयूखनिचयैः शुभ्रकिरणसमूहैः परिवीतमूर्त्तिर्व्याप्तदेहः, वप्राभिघातेन वप्रक्रीड़या परिमण्डलितो वर्त्तूलीकृत उरुदेहो बृहच्छरीरं यस्य तथोक्तो गणभर्त्तुः प्रमथनाथस्योक्षा वृषभः । 'उक्षानड्वान् बलीवर्द ऋषभो वृषभो वृषः' इत्यमरः । वधूजनमनःसु शशाङ्कशङ्कां चन्द्रभ्रान्तिं कुर्व्वन्, तेषां मौग्ध्यादिति भावः । अमुष्याद्रेः शृङ्गाणि भजते सेवते । अत्र शङ्काशब्दस्य सन्देहार्थत्वे सन्देहालङ्कारः । भ्रान्तिपरत्वे भ्रान्तिमदलङ्कारः । यथेच्छसि तथास्तु । सचोक्तविशेषणोत्थेन काव्यलिङ्गेनाङ्गाङ्गिभावेन संकीर्य्यते ॥ ४२ ॥

४१। এই হিমালয়ে, চঞ্চল তরুশাখার রন্ধ্রপথে নির্গত দিবাকরের দর্পণপ্রতিবিম্বসদৃশ রশ্মিজাল, রজতভিত্তির ময়ূখমালা দ্বারা বৃদ্ধিপ্রাপ্ত হইয়া, পুনঃপুনঃ স্ফুরিত হইতেছে।

४१। इस हिमालयपर वृचोंकी झुमती शाखाओंके बीचसे निकली सूर्य्यकी दर्पण ( आयने ) की तरह ज्योति, रूपहली दिवारकी चमकसे मिल कर वार वार अत्यन्त चमक रही है।

४२। শুভ্রকিরণসমূহে ব্যাপ্তমূর্ত্তি, বপ্রক্রীড়া দ্বারা আকুঞ্চিত বিপুলদেহ, গণনাথ মহাদেবের বৃষভ, বধূজনের মনে চন্দ্রভ্রম জন্মাইয়া এই হিমালয়ের শৃঙ্গে বিচরণ করিতেছে।

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ॥४३॥

अन्वयः। इह विविधाः शिखरमणिरुचः सम्प्रति लघुनि क्षीणपयसि (अतएव) भिदां उपेयुषि जलधरपटले कथमपि शनकैः लब्धजन्म (अतएव) खण्डितविग्रहं बलभिदः धनुः पूरयितुं विभवः भवन्ति। वाच्य—विविधैः शिखरमणिरुग्भिः… विभुभिः सूयते ॥ ४३ ॥

सम्प्रतीति। इहाद्रौ विविधाः नानावर्णाः शिखरमणिरुचः, सम्प्रति शरदीत्यर्थः। लघुन्यगुरुणि कुतः क्षीणपयसि अत एव भिदां भेदम्। 'षिद्भिदादिभ्योऽङ्' इत्यङ् प्रत्ययः, उपेयुषि गते जलधरपटले मेघमण्डले कथमपि शनकैर्लब्धजन्म उत्पन्नमित्यर्थः। अत एव खण्डितविग्रहं छिन्नस्वरूपं बलभिद इन्द्रस्य धनुः पूरयितुं विभवः समर्था भवन्ति। अत्रेन्द्रधनुषो मणिरुचीनामसम्बन्धे सम्बन्धकथनादतिशयोक्तिरलङ्कारः। वंशपत्रपतितं वृत्तम्—'दिङ्मुनिवंशपत्रपतितं भरनभनलगैः' इति लक्षणात् ॥ ४३ ॥

४३। এই হিমালয়ে, এই শরৎকালে ছোট ছোট মেঘখণ্ডগুলি জলহীন হইয়া ছিন্নভিন্ন হইয়া যাইতেছে। ঐ সকল মেঘে অস্পষ্টভাবে ইন্দ্রধনুর আবির্ভাব হইলেও তাহা ছিন্ন হইয়া যাইতেছে। কিন্তু পর্ব্বতশিখরস্থিত নানাবর্ণ মণিসকলের প্রভা দ্বারা মণ্ডিত ইন্দ্রধনুর আকৃতি পূর্ণ হইতেছে।

४२। अत्यन्त उजला और सींगसे पर्व्वतको तिरछे खोदते रहनेके कारण टेढ़ा आकार धारण किये, क्योंकि स्वामी (महादेवजीका) बैल (नन्दी) स्त्रियोंका मनमें चन्द्रमाका भ्रम उत्पन्न करता फिरता इसी हिमालयपर रहता है। अर्थात् ऊपर कहे अनुसार हिमालयपर फिरते देख स्त्रियां उसे चन्द्रमा समझलेती है।

४३। इस हिमालयपर इस शरत्कालमें बादलोंको छोटे २ टुकड़े जल न रहनेसे छिन्न भिन्न हो रहे हैं। इन सब बादलों पर कुछ २ दिखाई पड़ती भी इन्द्रके धनुष छिन्न भिन्न हो गया परन्तु पर्व्वतकी चोटियोंपर कई रंगके मणिओंकी ज्योतिसे टूटे हुए भी इन्द्रधनुषका आकार पहलेको पूर्ण बना है।

स्नपितनवलतातरुप्रवालै-
रमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भो-
रमलयतीह वनान्तमिन्दुलेखा ॥४४॥

क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दरस्तव
पितुर्दयितो जगतीधरः ॥४५॥

अन्वयः । इह शम्भोः इन्दुलेखा स्नपितनवलतातरुप्रवालैः अमृतलवस्रुतिशालिभिः मयूखैः सततं असितयामिनीषु वनान्तं अमलयति । वाच्य—इन्दुलेखया वनान्तः अमल्यते ॥ ४४ ॥

अन्वयः । यः अनुवनं विततां रौचनिकीं रुचं बृहद्बृहतिकां इव क्षिपति । अनेकहिरण्मयकन्दरः अयं तव पितुः दयितः जगतीधरः । वाच्य—येन वितता रौचनिकी रुक् बृहद्बृहतिका इव क्षिप्यते ॥ ४५ ॥

स्नपितेति । इहाद्रौ शम्भोरिन्दुलेखा । स्नपितानि सिक्तानि नवानि लतानां तरूणाञ्च प्रवालानि यैस्तैः । अमृतलवस्रुत्यामृतबिन्दुनिःस्यन्देन शालन्ते ये तै र्मयूखैः सततं सर्वकालमसितयामिनीषु कृष्णपक्षरात्रिष्वपि वनान्तममलयति धवलयति । अन्यत्र नैतदस्तीति व्यतिरेको व्यज्यते ॥ ४४

क्षिपतीति । अथ योऽद्रिरनुवनं विततां रौचनिकीं रुचम्, सौवर्णीं कान्तिमित्यर्थः । रोचनया रक्तां रौचनिकीम् । 'लाक्षारोचनशकल-

৪৪। এই পর্ব্বতে চন্দ্রশেখরের ললাটস্থিত চন্দ্রকলার কিরণ দ্বারা বৃক্ষলতাদির নবীন পত্র সকল বিধৌত, উহা হইতে বিন্দু বিন্দু অমৃত ক্ষরিত হইতেছে। আর ঐ কিরণ দ্বারা সর্ব্বদা কৃষ্ণপক্ষের রাত্রিতেও বনান্তভূমি ধবলিত হইতেছে।

४४। इस पर्वतपर चन्द्रशेखर ( शिवजीके ) ललाटपर रहनेवाली चन्द्रमाकी कलाकी किरणोंसे धुल गये ( धो गये ) वृक्षों और लताओंके नये नये पत्तोंसे अमृत चू रहा है। और इन किरणोंसे कृष्ण पक्षकी रात में भी आस पासकी भूमि उज्ज्वल बनी रहती है।

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥

अन्वयः। अमुत्र अनिले जवात् लतानां सक्तिं अपनयति ( सति ) सहसा वैरोचनैः मयूखैः द्विगुणिताः, हिरण्मयीनां रोधोभुवां भासः मुहुः तडिद्विलसितानि विडम्बयन्ति। वाच्य—...द्विगुणितैः...रोधोभुवां भाभिः तडिद्विलसितानि विडम्ब्यन्ते ॥ ४६ ॥

कर्दमाट्ठक्' इति ठक्। 'टिड्ढाणञ्—' इत्यादिना ङीप्। उत्प्रेक्षते—बृहती चासौ बृहतिका च तां बृहद्बृहतिकां महोत्तरासङ्गमिव। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' इत्यमरः। क्षिपति प्रसारयति। अनेकाः हिरण्मय्यः कन्दराः यस्य सः। हिरण्मयशब्दो 'दाण्डिनायन—' इत्यादिना निपातनात् साधुः। अयम्, पुरोवर्त्ती गिरिरित्यर्थः। तव पितुरिन्द्रस्य दयितः प्रियः। जगत्या धरो जगतीधरः। यस्ते गन्तव्य इन्द्रकीलाख्य इत्यर्थः॥ ४५ ॥

सक्तिमिति। अमुत्रामुष्मिन्नद्रावनिले जवात्झटिति लतानां सक्तिमन्योन्यसङ्गमपनयति सति। सहसा हठात्। वैरोचनैः साविनैर्मयूखैर्द्विगुणाः द्विरावृत्ताः कृता इति द्विगुणिताः। 'गुणस्त्वावृत्तिशब्दादिष्विन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। हिरण्मयीनां हिरण्यविकाराणाम्। 'दाण्डिनायन—' इत्यादिना निपातनात् साधुः। रोधोभुवां तटभुवां भासो मुहुस्तडिद्विलसितानि विडम्बयन्ति, अनुकुर्वन्तीत्यर्थः। उपमालङ्कारः॥ ४६ ॥

৪৫। যে পর্ব্বত, প্রতিবনে সুদীর্ঘ উত্তরীয় বস্ত্রের ন্যায় স্বর্ণকান্তি প্রসারিত করিতেছে—এবং স্বর্ণপরিপূরিত বহুকন্দরশালী, তোমার পিতা ইন্দ্রের প্রিয়, ইন্দ্রকীল পর্ব্বত ঐ দেখা যাইতেছে।

৪৬। এই পর্ব্বতে বায়ুবেগ বশতঃ লতাসমূহের পরস্পরে আলিঙ্গন দূরীভূত হইতেছে। তাহাতে হঠাৎ সূর্য্যরশ্মি দ্বারা দ্বিগুণিত স্বর্ণময়ী ভূমির দীপ্তিচ্ছটা বিদ্যুৎস্ফূরণের অনুকরণ করিতেছে।

४५। जो पर्व्वत बहुत लम्बी चादर की तरह सोनेकी ज्योति फैला रहा है, जो पर्व्वत सोनेसे भरी कन्दराओंसे शोभता और तुमहारे पिता इन्द्रका प्यारा है वही यह इन्द्रकील-नाम दिखाई पड़ता है।

कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्ज्जितैः ।
इह मदस्नपितैरनुमीयते
सुरगजस्य गतं हरिचन्दनैः ॥४७॥

जलदजालघनैरसिताश्मना
मुपहतप्रचयेह मरीचिभिः ।
भवति दीप्तिरदीपितकन्दरा
तिमिरसम्बलितेव विवस्वतः ॥ ४८ ॥

अन्वयः । इह कषणकम्पनिरस्तमहाहिभिः क्षणविमत्तमतङ्गजवर्ज्जितैः मदस्नपितैः हरिचन्दनैः सुरगजस्य गतं अनुमीयते । वाच्य—···गतं अनुमिनोमि ॥ ४७ ॥

अन्वयः । इह जलदजालघनैः असिताश्मनां मरीचिभिः उपहतप्रचया, अदीपितकन्दरा विवस्वतः दीप्तिः तिमिरसंवलिता इव भवति । वाच्य ···उपहतप्रचयया अदीपितकन्दरया दीप्त्या तिमिरसंवलितया इव भूयते ॥ ४८ ॥

कषणेति । इहाद्रौ कषणेन कण्डूयनेन यः कम्पस्तेन निरस्ता महाहयो महासर्पाः येभ्यस्तैः । क्षणं विमत्तमतङ्गजवर्जितैर्मत्तमतङ्गजरहितैः । कुतः मदस्नपितैः ऐरावतमदसिक्तैरित्यर्थः । 'मितां ह्रस्वः' इति ह्रस्वः । हरिचन्दनैश्चन्दनद्रुमैः सुरगजस्यैरावतस्य गतं प्राप्तिरनुमीयते । हरिचन्दनविशेषणैः काव्यलिङ्गमुन्नेयम् ॥ ४७ ॥

४१। এই পর্ব্বতস্থিত হরিচন্দন বৃক্ষসমূহে হস্তিগণ কপোলঘর্ষণ করায় উহা কম্পিত হওয়াতে বৃক্ষস্থিত মহাসর্প সকল চলিয়া গিয়াছে। ঐরাবতের মদজলস্নাত ঐ হরিচন্দন-তরুতলে মত্তমাতঙ্গগণ আর আসিতেছে না। সুতরাং বুঝা যাইতেছে যে, এখানে সুরহস্তী ঐরাবত আসিয়াছিল।

४६। इस पर्व्वतपर वायुके वेगसे पहले आपसमें मिली लताएं दूर तक छिट फुट हो गयी। उनके तीनो बीच अचानक सूर्य्यकी किरणोंसे हो सुखी चमकती, सोने भरा भूमिकी ज्योति विजली सी जान पड़ता है।

४७। इस पर्व्वत पर जबसे चन्दनकी वृक्षोंमें हाथियोंकी कपोल (गाल) रगड़नेसे हिलते हुए वृक्षों परसे लिपटे बड़े २ बहुत सांप चले गये। मदजलसे भागे चन्दनके पेड़ोंके नीचे फिर दूसरे हाथी नहीं आसकते। बल्कि जान पड़ता है कि देवताओंके राजा इन्द्रका हाथी आया था।

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनान्तरायैः ॥४९॥

अन्वयः। इह भव्यः भवन् अपि मुनेः शासनेन क्षात्रे पथि स्थितः हतप्रमादः (सन्) तपस्य हि प्रायेण हितार्थकरे विधौ सति अपि। अन्तरायैः विना श्रेयांसि लब्धुम् असुखानि। वाच्य—भव्येन भवता…स्थितेन हतप्रमादेन (सता) तपस्यते। श्रेयोभिः · असुखैः सूयते ॥ ४९ ॥

जलदेति। इहास्मिन्नद्रौ जलदजालघनैर्मेघवृन्दसान्द्रैरसिताश्मनामिन्द्रनीलानां मरीचिभिर्दीधितिभिः। 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' इत्यमरः। उपहतप्रचया विघट्टितसङ्घाता अत एवादीपितकन्दरा अप्रकाशितगह्वरा विवस्वतो दीप्तिस्तिमिरैः सम्वलिता संहता व्यामिश्रितेव भवतीत्युत्प्रेक्षा ॥ ४८ ॥

भव्य इति। इहाद्रौ भव्यः शान्तो भवन्नपि मुनेर्व्यासस्य शासनेनेन्द्राराधनरूपेण क्षात्रे पथि क्षत्रियमार्गे स्थितः। गृहीतशस्त्र एवेत्यर्थः। हतप्रमादोऽप्रमत्तः सन्। तपस्य तपश्चर्य्यां कुरु। तपस्येति 'कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः' इति क्यङ्। तदन्ताद्धातोर्लोट्। न च सर्व्वभूतहितकारिणो मे प्रमादः किं करिष्यतीति विश्वसितव्यमित्यर्थान्तरन्यासेनाह—हि यस्मात् प्रायेण बाहुल्येन। 'प्रायो वयस्यनशने मृतौ

৪৮। এই হিমালয়ে, স্নিগ্ধ মেঘের তুল্য ইন্দ্রনীলমণির মরীচিনিকরে সূর্য্যকিরণ সন্নিবদ্ধ হওয়ায় পর্ব্বতগহ্বরসকল আলোকিত হইতেছে না। দিবাকরের কিরণসমূহ যেন অন্ধকাররাশির সহিত মিশ্রিত হইয়াই বিরাজ করিতেছে।

४८। इस हिमालय पर अत्यन्त घने बादलोंके तुल्य इन्द्रनीलमणिकी ज्योति पर किरणोंके निस्तेज हो जानेसे पर्व्वतकी कन्दराएं उजली (प्रकाशित) नहीं हो सकती हैं। बल्कि जान पड़ता है कि सूर्य्यकी किरण अन्धकार मिलाय (सुलह) कर शोभा परही है।

मा भुवन्नपथहृतस्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम्।
रक्षन्तस्तपसि बलञ्च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥५०॥

अन्वयः। तव इन्द्रियाश्वाः अपथहृतः मा भुवन्; सन्तापे शिवः शिवां प्रसक्तिं दिशतु; लोकपालाः तपसि बलं रक्षन्तः (सन्तः) कल्याणीं क्रियां अधिकफलां क्रियासुः। वाच्य——इन्द्रियाश्वैः अपथहरैः मा भावि। शिवेन शिवा प्रसक्तिः दिश्यताम्; लोकपालैः रक्षद्भिः (सद्भिः) कल्याणी क्रिया अधिकफला क्रियेष्ट ॥ ५० ॥

बाहुल्यतुल्ययोः' इति हेमचन्द्रः। हितमर्थं करोतीति हितार्थकरे विधौ व्यापारे सति अन्तरायैर्विघ्नैर्विना श्रेयांसि लब्धुमशक्यानि। अशक्यानीत्यर्थः। अतएव 'शकधृष—' इत्यादिना समानकर्त्तृकेषु तुमुन्। अकारणवैरिणः सर्वत्र सर्वस्यापि सन्तीति भावः॥ ४९ ॥

मा भुवन्निति। तवेन्द्रियाण्येवाश्वास्ते। अपथेन हरन्तीत्यपथहृतो मा भुवन्। त्वामपथं मा निनीषुरित्यर्थः, 'माङि लुङ्' इत्याशीरर्थे लुङ्। सन्तापे तपःक्लेशे सति शिवः शिवां साधीयसीं प्रसक्तिं प्रवृत्तिमुत्साहं दिशतु। किञ्चेति चार्थः। लोकपाला इन्द्रादयस्तपसि विषये बलं शक्तिं रक्षन्तो वर्द्धयन्तः सन्तः कल्याणीं साध्वीं क्रियामनुष्ठानमधिकफलां क्रियासुः कुर्व्वन्तु, करोतेराशिषि लोट् ॥ ५० ॥

৪৯। তুমি শান্তস্বভাব হইলেও মহামুনি ব্যাসদেবের আদেশক্রমে ক্ষত্রিয়ের পথাবলম্বী অর্থাৎ শস্ত্রধারী হইয়া অপ্রমত্তভাবে এই পর্ব্বতে তপস্যা কর। যেহেতু—কল্যাণজনক ব্যাপারেও বিঘ্নব্যতীত মঙ্গল লাভ করা যায় না।

৫০। তোমার ইন্দ্রিয়রূপ অশ্বসমূহ যেন বিপথগামী না হয়, তপঃক্লেশ উপস্থিত হইলে শিব তোমাকে প্রবল উৎসাহ প্রদান করুন; লোকপালগণ তপস্যা-ব্যাপারে তোমার শক্তি বৃদ্ধি করিয়া মঙ্গলময় অনুষ্ঠানকে অধিকতর ফলশালী করুন।

४९। इस पर्वत पर तुम शान्त स्वभाव रहने पर भी महामुनि व्यासदेवके उपदेशके अनुसार क्षात्रधर्म्म अर्थात् अस्त्र शस्त्र धारण किये सावधानीसे तपस्या करो। क्योंकि मङ्गल उत्पन्न करनेवाले व्यापारसे भी विघ्न बाधा बिना मङ्गल नहीं मिलता।

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः॥५१॥

तमनतिशयनीयं सर्वतः सारयोगा-
दविरहितमनेकेनाङ्कभाजा फलेन।

अन्वयः। प्रियार्हे राजराजभृत्ये इति हितं प्रियम् उक्त्वा सपदि स्वं धाम गतवति (सति) पृथासुतः सोत्कण्ठं किमपि दध्यौ। हि सद्वियोगः भृशम् अरतिं संधत्ते। वाच्य—पृथासुतेन किमपि दध्ये। सद्वियोगेन अरतिः सन्धीयते॥५१॥

अन्वयः। अक्षयलक्ष्मीः सः सर्वतः सारयोगात् अनतिशयनीयं अनेकेन अङ्कभाजा फलेन अविरहितम् अकृशं चेतसा आशंसितं तं शैलं स्वं पुरुषकारम् इव अभ्याससाद।

इतीति। प्रियार्हे राजराजभृत्ये इति पूर्वोक्तम्। हितं प्रियं वचनमिति शेषः। उक्त्वा सपदि स्वं स्वकीयं धाम स्थानं गतवति सति। पृथासुतोऽर्ज्जुनः सोत्कण्ठं सौत्सुक्यं किमपि प्रदध्यौ चिन्तयामास। तथाहि—सद्वियोगः सुजनवियोगो भृशमरतिं व्यथां सन्धत्ते। करोतीत्यर्थः। अर्थान्तरन्यासः॥५१॥

৫১। হিতকামী কুবেরভৃত্য এইরূপ হিতকরপ্রিয় বাক্য বলিয়া তৎক্ষণাৎ স্বস্থানে প্রস্থান করিলে, পৃথাসুত অর্জ্জুন অতিশয় উৎকণ্ঠার সহিত কি যেন চিন্তা করিতে আরম্ভ করিলেন। কেন না সুহৃজ্জনের বিরহ একান্তই দুঃখার্হ।

५०। तुम्हारे इन्द्रियरूपी घोड़े जिसमें बुरे रास्ते पर न भड़कनायें, तपस्याके क्लेश होने पर शिवजी तुम्हे प्रबल उत्साह दें। लोकपालगण तपस्या करनेमें तुम्हारी शक्ति बढ़ा कर मङ्गलमय अनुष्ठान को अत्यन्त सफल कर दें।

५१। भलाई चाहनेवाला, कुबेरका सेवक इस प्रकार हितकारक और मधुर वचन कह कर उसी समय अपने स्थान पर चला गया तो पृथाके पुत्र अर्जन बड़ी उत्कण्ठा (सरस) के साथ चिन्ता करने लगे। क्योंकि मित्रका वियोग अवश्य दुःख देता है।

अकृशमकृशलक्ष्मीश्चेतसाशंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ॥५२॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये
पञ्चमः सर्गः ।

वाच्य— अकृशलक्ष्म्या तेन...अनतिशयनीयः...अविरहितः अकृशः आशंसितः सः शैलः पुरुषकारः इव अभ्यासेदे ॥ ५२ ॥

तमिति । अकृशाः पूर्णाः लक्ष्म्यः शोभा यस्य सोऽकृशलक्ष्मीरिति बहुवचनाश्रितो बहुव्रीहिः । एवञ्च 'उरःप्रभृतिभ्यः—' इति कप्प्रत्ययानवकाशः । तत्र लक्ष्मीशब्दस्यैकवचनान्तस्यैव पाठात् । नापि 'नद्यृतश्च' इत्यस्यावकाशः । उरःप्रभृतिपाठसामर्थ्यादेव, शौषिकस्तु वैभाषिक इत्यविरोधः । सोऽर्जुनः सर्वतः सर्वत्र सारयोगादुत्कृष्टबलप्रयोगात् । 'सारो बले स्थिरांशे च नाय्ये क्लीबं वरे त्रिषु' इत्युभयत्राप्यमरः । अनतिशयनीयमनतिक्रमणीयमनेकेन बहुनाङ्कभाजा समीपं गतेन । शीघ्रभाविनेति यावत् । फलेन कार्य्यसिद्ध्याऽविरहितमशून्यम् । कार्य्यसिद्धेरवश्यं साधकमित्यर्थः । अकृशमतनुं चेतसाशंसितं प्राप्तुमिष्टं शैलमिन्द्रकीलं स्वमात्मीयम् । पुरुषस्य कारः कर्म्म तं पुरुषकारमुक्तविशेषणविशिष्टं पौरुषमिवाभ्याससाद प्राप्तवान् । मालिनीवृत्तम् ५२ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
पञ्चमः सर्गः ॥ ५ ॥

---

৫২। অত্যন্তশোভাসম্পন্ন অর্জ্জুন, সকলপ্রকার বলসম্পন্ন হেতু অনতিক্রমণীয়, অচিরভাবী ফলবহুল অর্থাৎ কার্য্যসিদ্ধির অবশ্য সাধক ; অতিশয় আকাঙ্ক্ষিত সেই ইন্দ্রকীল পর্ব্বতে আপন পুরুষকারের ন্যায় অধিষ্ঠান করিলেন।

५२। अत्यन्त शोभासे पूर्ण अर्जुनने सब प्रकारके बलसे सम्पन्न होनेके कारण दूसरेसे आक्रमण कर (दबाव में आ) सकने योग्य न होने हुए, बहुत समय तक असंख्य फलदायक अर्थात् कार्य्यमें अवश्य सिद्धि देनेवाले (इसलिये) अत्यन्त आकाङ्क्षित (पसन्द अर्थात् चित्तमें लगे हुए) इस इन्द्रनील पर्वत पर अपने पुरुषार्थ पर की तरह अधिकार लिया।

---

# षष्ठः सर्गः ।

—०—

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

रुचिराकृतिरिति । अथो आसादनानन्तरं रुचिराकृतिः सौम्यविग्रहो धृतसत्पथोऽवलम्बितसन्मार्गः । आकारानुरूपगुणवानित्यर्थः । 'यत्राकृतिस्तत्र गुणा वसन्ति' इति सामुद्रिकाः । उपमानेऽपि समानमेतत् । स पुरुहूतसुतोऽर्जुनः । कनकस्य विकाराः सानवो यस्य तं कनकसानुम् । गरुडसावर्ण्यार्थं विशेषणमेतत् । 'समुदाये विकारषष्ठ्याश्च' इति बहुव्रीहिरुत्तरपदलोपश्च । तमिन्द्रकीलम् । परमः पुमान् विष्णुः पततां पक्षिणां पतिं गरुडमिव । त्रिभिः पथिभिर्गच्छतीति त्रिपथगा भागीरथी । 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । उपपदसमास उत्तरपदसमासश्च । तामभितोऽभिमुखमारुरोह । 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः । प्रमिताक्षरावृत्तम्—'प्रमिताक्षरा सजससैरुदिता' इति लक्षणात् ॥ १ ॥

अथास्य कार्य्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति—

तमनिन्द्यबन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

तमिति। विहिता अलिनिक्कणा जयध्वनय इव यैस्ते तथोक्ताः, पवनेन वायुनेरिता तुन्ना अतएवाकुला लोला विजिह्मा वक्राश्च शिखाः शाखाग्राणि येषां ते तथोक्ताः। 'शिखा ज्वाला केकिमौल्योः शिखाशाखाग्रमौलिषु' इति वैजयन्ती। जगतीरुहो भूरुहः, क्विप्। अनिन्द्या अनवद्या बन्दिनः स्तुतिपाठकास्ते इव। तमिन्द्रसुतमर्जुनं कुसुमैरवचकरुः अभिवव्रषुरित्यर्थः। 'ऋच्छत्यृताम्' इति गुणः। अत्र किरतेर्व्याप्यत्वात् कुसुमानां करणत्वम्। विक्षेपार्थत्वे तु कर्म्मत्वमेव। यथा 'कटाक्षान् वामा किरति' इति। दृश्यते च धातूनामर्थभेदात् कारकव्यत्ययः। यथा सिञ्चतिः क्षरणार्द्रीकरणयोरर्थयोर्द्रवद्रव्यस्य कर्म्मत्वकरणत्वे। यथा—'मेघोऽमृतं सिञ्चति गौः पयश्च, सिञ्चतीवामृतं वपुः' इति। अत्र वाक्यसमासगतयोरुपमयोः साध्यसाधनभावादङ्गाङ्गिभावेन सङ्करः॥ २॥

अवधुतपङ्कजपरागकणा-
स्तनु जाह्नवीसलिलवीचिभिदः।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः॥ ३॥

अवधूतेति। अवधूताः पङ्कजपरागकणा यैस्ते तथोक्ता इति सौरभ्योक्तिः। तनूर्जाह्नव्याः सलिलवीचिर्भिन्दन्तीति तथोक्ता इति शैत्योक्तिः। सुखयन्तीति सुखाः, पचाद्यच्। सुखस्पर्शा इति मान्द्योक्तिः। मरुतो वातास्तमर्जुनं सुहृदः सखायमिवाभिमुखमेत्यागत्य परिरेभिरे आलिङ्गितवन्तः॥३॥

उदितोपलस्खलनसम्वलिताः
स्फुटहंससारसविरावयुजः।
मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुवप्रमपाम्॥ ४॥

उदितेति । उदितोपलेषून्नतपाषाणेषु स्खलनेन प्रतिघातेन सम्बलिताश्चूर्णिताः । अतस्तूर्य्यघोष इव घुमघुमायमाना इत्यर्थः । स्फुटैर्हंसानां सारसानाञ्च विरावैर्युज्यन्त इति तथोक्ताः, क्विप् । अनुवप्रमपाम, अन्तःपतन्तीनामिति शेषः । ध्वनयोऽस्यार्जुनस्य मङ्गलं प्रयोजनमेषां ते माङ्गलिकाः । 'प्रयोजनम्' इति ठञ् । तैस्तूर्य्यैः कृतां मुदं हर्षं प्रतेनुः । अत्रान्यस्यान्यकार्य्यकारणसम्भवात्तूर्य्यकृतमुत्सदृशीं मुदमिति प्रतिबिम्बेनाक्षेपान्निदर्शनालङ्कारः ॥ ४ ॥

अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम् ।
स ददर्श वेतसवनाचरितां
प्रणतिं बलीयसि समृद्धिकरीम् ॥५॥

अवरुग्णेति । सोऽर्जुनः पुरोऽग्रेऽवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतदेवदारुद्रुमे बलीयसि बलवत्तरे । अन्वन्तादीयसुनि मतुपो लुक् । सुरसरित्पयसां निचये पूरे विषये वेतसवनेन वानीरवनेनाचरिताम् । 'अथ वेतसे रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः' इत्यमरः । समृद्धिकरीं श्रेयस्करीम । लोके यथादृष्टामित्यर्थः । प्रणतिं ददर्श । या सर्व्वलोकदृष्टान्तभूतेति भावः ॥ ५ ॥

प्रबभूव नालमवलोकयितुं
परितः सरोजरजसारुणितम् ।
सरिदुत्तरीयमिव संहतिमत्
स तरङ्गरङ्गि कलहंसकुलम् ॥ ६ ॥

प्रबभूवेति । सोऽर्जुनः परितः सरोजरजसा कमलरेणुनारुणितं पाटलितम् । उत्तरीयञ्च कुसुमादिनारुणितं भवति । संहतिमन्नीरन्ध्र'

तरङ्गरङ्गि वारितरङ्गशोभि सरिदुत्तरीयं स्तनांशुकमिव स्थितं कलहंसकुलं कादम्बकुलमवलोकयितुमलमत्यर्थं न प्रबभूव न शशाक। तत्सौन्दर्यातिशयत्वादिति भावः॥ ६॥

दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान्॥ ७॥

दधतीति। सोऽर्जुनः क्षतीः क्षतानि दधति धारयति; कुतः? परिणतास्तिर्य्यग्दन्तप्रहारिणो द्विरदा यस्मिंस्तस्मिन्। 'तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः। मदस्रुतिभिर्मुदितालियोषिति रोधस्यधिकां धृतिं प्रीतिं बबन्ध। निश्चलोक्तवानित्यर्थः। तथाहि—महान् रुजन् पीड़यन्नपि महते गुणायोत्कर्षाय भवति। महत्कृता पीड़ापि शुभावहैवेत्यर्थः। तद्युक्तं गजरुग्णस्यापि रोधसः प्रीतिकरत्वमिति भावः॥ ७॥

अनुहेमवप्रमरुणैः समतां
गतमूर्मिभिः सहचरं पृथुभिः।
स रथाङ्गनामवनितां करुणै-
रनुबध्नतीमभिननन्द रुतैः॥ ८॥

अन्विति। सोऽर्जुनोऽनुहेमवप्रं कनकसानुसमीपे। समीपार्थेऽव्ययीभावः। अरुणैः कनककान्त्युपरञ्जनादिति भावः। पृथुभिरूर्मिभिः समतां तुल्यरूपतां गतम्। सादृश्याद्दुर्विवेच्यमित्यर्थः। सहभूतं सहचरं प्रियम्। सहशब्दस्य पचाद्यजन्तेन चरशब्देन समासः।

# षष्ठः सर्गः

——:०:——

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

तमनिन्द्यबन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

---

रुचिराकृतिरिति । अथो आसादनानन्तरं रुचिराकृतिः सौम्यविग्रहः । धृतसत्पथः अवलम्बितसन्मार्गः आकारानुरूपगुणवान् इत्यर्थः । "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकाः, उपमाने अपि समानम् एतत् । सः पुरुहूतसुतः अर्जुनः, कनकस्य विकाराः सानवो यस्य तं कनकसानुम् । गरुड़सावर्ण्यार्थं विशेषणम् एतत् । "समुदाये विकारषष्ठ्याश्च" इति बहुव्रीहिः उत्तरपदलोपश्च । तम् इन्द्रकीलं परमः पुमान् विष्णुः पततां पक्षिणां पतिं गरुड़म् इव । त्रिभिः पथिभिः गच्छतीति त्रिपथगा भागीरथी । "अन्येष्वपि दृश्यते" इति डप्रत्ययः, उपपदसमासः उत्तरपदसमासश्च । ताम् अभितः अभिमुखम् आरुरोह । "समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः । प्रमिताक्षरावृत्तम् । "प्रमिताक्षरा सजससैरुदिता" इति लक्षणात् ॥१॥

अथ अस्य कार्य्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति—तमिति । विहिताः अलिनिक्वणाः जयध्वनयः इव यैः ते तथोक्ताः । पवनेरिताः पवनेन वायुना नुन्नाः अतएव आकुलाः लोलाः विजिह्माः वक्राश्च शिखाः अग्राणि

अवधूतपङ्कजपरागकणा-
स्तनुजाह्नवीसलिलवीचिभिदः ।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः ॥ ३ ॥

उदितोपलस्खलनसंवलिताः
स्फुटहंससारसविरावयुजः ।
मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुवप्रमपाम् ॥ ४ ॥

अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम् ।

---

येषां ते तथोक्ताः । "शिखा ज्वाला केकिमौल्योः शिखाशाखाग्रमौलिषु" इति वैजयन्ती । जगतीरुहः भूरुहः । क्विप् । अनिन्द्याः अनवद्याः ये बन्दिनः स्तुतिपाठकाः ते इव तम् इन्द्रसुतम् अर्जुनं कुसुमैः अवचकरुः अभिववृषुः इत्यर्थः । "ऋच्छत्यृताम्" इति गुणः । अत्र किरतेर्वृष्ट्यर्थत्वात् कुसुमानां करणत्वं विक्षेपार्थत्वे तु कर्मत्वमेव । यथा "कटाक्षान् वामा किरति" इति दृश्यते च धातूनामर्थभेदात् कारकाव्यत्ययः । यथा सिञ्चतेः क्षरणार्द्रीकरणयोः अर्थयोः द्रवद्रव्यस्य कर्मत्वकरणत्वे । यथा—"मेघोऽम्बुतं सिञ्चति गौः पयश्च ।" "सिञ्चतीवाम्बुतैर्वपुः" इति । अत्र वाक्ये समासगतयोरुपमयोः साध्यसाधनभावात् अङ्गाङ्गिभावेन सङ्करः ॥ २ ॥

अवधूतेति । अवधूताः प्रसारिताः पङ्कजपरागकणाः यैः ते तथोक्ताः इति सौरभ्योक्तिः । तनुः जाह्नव्याः सलिलवीचीः भिन्दन्ति इति तथोक्ताः इति शैत्योक्तिः । सुखयन्ति इति सुखाः 'पचाद्यच्' सुखस्पर्शाः इति मान्द्योक्तिः । मरुतः वाताः तम् अर्जुनं सुहृदः सखायम् इव अभिमुखम् एत्य आगत्य परिरेभिरे आलिङ्गितवन्तः । ॥ ३ ॥

उदितेति । उदितोपलेषु उन्नतपाषाणेषु स्खलनेन प्रतिघातेन संवलिताः

स ददर्श वेतसवनाचरितां
प्रणतिं बलीयसि समृद्धिकरीम् ॥ ५ ॥

प्रबभूव नालमवलोकयितुं
परितः सरोजरजसाऽरुणितम् ।
सरिदुत्तरीयमिव संहतिमत्
स तरङ्गरङ्गि कलहंसकुलम् ॥ ६ ॥

---

चूर्णिताः अतः तूर्यघोष इव घुमघुमायमाना इत्यर्थः। स्फुटैः हंसानां सारसानां च विरावैः युज्यन्ते इति तथोक्ताः। क्विप्। अनुवप्रम् अपाम् अन्तःपतन्तीनाम् इति शेषः। ध्वनयः अस्य अर्जुनस्य मङ्गलं प्रयोजनम् एषां ते माङ्गलिकाः, "प्रयोजनम्" इति ठञ्। तैः तूर्यैः कृतां मुदं हर्षं प्रतेनुः। अत्र अन्यस्य अन्यकार्यकरणासम्भवात् तूर्यकृतमुत्सदृशीं मुदम् इति प्रतिबिम्बेन आक्षेपात् निदर्शनालङ्कारः ॥ ४ ॥

अवरुग्णेति। सः अर्जुनः पुरः अग्रे अवरुग्णतुङ्गसुरदारुतरौ मग्नोन्नतदेवदारुद्रुमे बलीयसि वलवत्तरे। मत्वन्तात् ईयसुनि "विन्मतोर्लुक्" इति मतुपो लुक्। सुरसरित्पयसां निचये पूरे विषये वेतसवनेन वानीरवनेन आचरिताम्। "अथ वेतसे रथाभ्रपुष्पविदुलशीतवानीरवञ्जुला," इत्यमरः। समृद्धिकरीं श्रेयस्करीं लोके यथा दृष्टाम् इत्यर्थः। प्रणतिं ददर्श। या सर्वलोकदृष्टान्तभूता इति भावः ॥ ५ ॥

प्रबभूवेति। सः अर्जुनः परितः सरोजरजसा कमलरेणुना अरुणितं पाटलितम् उत्तरीयं च कुसुमादिना अरुणितं भवति संहतिमत् नीरन्ध्रं तरङ्गरङ्गि वारितरङ्गशोभि सरिदुत्तरीयं स्तनांशुकम् इव स्थितं कलहंसकुलं कादम्बकुलम् अवलोकयितुम् अलम् अत्यर्थं न प्रबभूव न शशाक। तत्सौन्दर्योद्वेलत्वात् इति भावः ॥ ६ ॥

दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः ।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान् ॥ ७ ॥

अनुहेमवप्रमरुणैः समतां
गतमूर्मिभिः सहचरं पृथुभिः ।
स रथाङ्गनामवनितां करुणै-
रनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥

दधतीति । सः अर्जुनः क्षतीः क्षतानि दधति धारयति । कुतः ? परिणताः तिर्य्यग्दन्तप्रहारिणः द्विरदाः यस्मिन् तस्मिन् । "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः । मदस्रुतिभिः मुदितालियोषिति रोधसि अधिकां धृतिं प्रीतिं बबन्ध निश्चलीकृतवान् इत्यर्थः । तथाहि— महान् जनः रुजन् पीड़यन् अपि महते गुणाय उत्कर्षाय भवति महत्कृता पीड़ा अपि शुभावहा एव इत्यर्थः । तत् युक्तं गजरुग्णस्य अपि रोधसः प्रीतिकरत्वम् इति भावः ॥ ७ ॥

अन्विति । सः अर्जुनः अनुहेमवप्रं कनकसानुसमीपे । समीपार्थे अव्ययीभावः । अरुणैः कनककान्त्युपरञ्जनादिति भावः । पृथुभिः ऊर्मिभिः समतां तुल्यरूपतां गतम् । सादृश्यात् दुर्विवेच्यम् इति भावः । सहभूतं सहचरं प्रियं, सहशब्दस्य पचाद्यजन्तेन चरशब्देन समासः । करुणैः दीनैः रुतैः कूजितैः अनुबध्नतीम् अन्विष्यन्तीं रथाङ्गनामवनितां चक्रवाकीम् अभिननन्द । प्रकृष्टप्रेमदर्शनात् कस्य न आनन्द इति भावः । अत्र तावत् ऊर्मीणां स्वधावल्यत्यागेन आरुण्यस्वीकारात् तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयात् ।" इति लक्षणात् । तन्मूला च इयं चक्रवाक्याः स्वकान्ते तरङ्गभ्रान्तिरिति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥

सितवाजिने निजगदू रुचय-
श्चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि
स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

उपलाहतोद्धततरङ्गधृतं
जविना विधूतविततं मरुता ।
स दर्दर्श केतकशिखाविशदं
सरितः प्रहासमिव फेनमपाम् ॥ १० ॥

बहु बर्हिचन्द्रकनिभं विदधे
धृतिमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं
विकसद्विलोचनशतं सरितः ॥ ११ ॥

सितवाजिन इति । चलवीचीनां रागः रञ्जनं वर्णान्तरापादनं तस्य रचना क्रिया तत्र पटवः समर्थाः रुचयः प्रभाः अम्भसि निमग्नम् अपि मणिजालं स्वाश्रयभूतम् इति भावः । मनोगतं स्फुरतं रोषादिविकारम् आकृतयो भ्रूभङ्गादिवाह्यविकारा इव सितवाजिने अर्जुनाय निजगदुः ज्ञापयामासुरित्यर्थः । आकृत्या हि मनोगतं विचक्षणा जानन्ति इति भावः ॥ ९ ॥

उपलेति । उपलैः आहताः अतएव उद्धताश्च ये तरङ्गाः तैः धृतं निर्गमरोधात् इत्यर्थः । जविना वेगवता मरुता वातेन विधूतं विततं च केतकस्य शिखाग्रं तद्वत् विशदम् अपां फेनं हिण्डीरम् । "हिण्डीरोऽब्धिकफः फेन" इत्यमरः । सरितः प्रहासम् अट्टहासम् इव इति उत्प्रेक्षा । सः अर्जुनः ददर्श ॥ १० ॥

बह्विति । बर्हिचन्द्रकनिभं मयूरमेचकसदृशम् । "समा चन्द्रकमेचकौ" इत्यमरः । बहु अनेकधा दानपयसां पटलम् । जातावेकवचनम् । बहवः

प्रतिबोधजृम्भणविभिन्नमुखी
पुलिने सरोरुहदृशा ददृशे ।
पतदच्छमौक्तिकमणिप्रकरा
गलदश्रुविन्दुरिव शुक्तिवधूः ॥ १२ ॥

शुचिरप्सु विद्रुमलताविटप-
स्तनुसान्द्रफेनलवसम्वलितः ।
स्मरदायिनः स्मरयति स्म भृशं
दयिताधरस्य दशनांशुभृतः ॥ १३ ॥

---

मदाम्बुविन्दव इत्यर्थः। अवगाढम् अन्तःप्रविष्टम् । गाहेः कर्त्तरि क्तः। इभपतिम् ईक्षितुं विकसत् उन्मिषत् सरितः विलोचनशतम् इव इति उत्प्रेक्षा । अस्य अर्जुनस्य धृतिं प्रीतिं विदधे चकार ॥ ११ ॥

प्रतिबोधेति । प्रतिबोधः स्फुटनं निद्रापगमश्च तंच यज्जृम्भणमुच्छूनता जृम्भा च तेन विभिन्नमुखी विश्लिष्टाग्रा विवृतास्या च। अतएव पतन्प्रसरन्नच्छो मौक्तिकमणीनां प्रकरः स्तोमो यस्याः सा तथोक्ता अतएव गलदश्रुविन्दुरिव स्थितेत्युत्प्रेक्षा । शुक्तिर्वधूरिव शुक्तिवधूः पुलिने शयनीय इवेति भावः सरोरुहदृशार्जुनेन ददृशे दृष्टा। अत्र प्रतिबोधादिविश्लिष्टपदोपात्तानां प्रकृतानां शुक्तिवध्वोश्चोपमारूपकयोः साधकबाधकाभावात् सन्देहालङ्कारः। तत्सापेक्षा चाश्रुगलनोत्प्रेक्षेति तयोरङ्गाङ्गिभावः ॥ १२ ॥

शुचिरिति। अप्सु शुचिः स्वच्छस्तनुना सान्द्रेण च फेनस्य लवेन शकलेन सम्वलितः सङ्गतो विद्रुमलताया विटपः पल्लवः। 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः' इति विश्वः। स्मरदायिनः कामोद्दीपकस्य दशनांशुभृतो दन्तकान्तिकलितस्य दयिताधरस्य इत्यर्थः। 'अधीगर्थ—' इत्यादिना षष्ठी भृशं स्मरयति स्म। 'लट् स्मे' इति भूतार्थे लट्। 'मितां ह्रस्वः' इति ह्रस्वः। स्मरणालङ्कारः ॥ १३ ॥

उपलभ्य चञ्चलतरङ्गधृतं
मदगन्धमुत्थितवतां पयसः।
प्रतिदन्तिनामिव स सम्बुबुधे
करियादसामभिमुखान् करिणः॥ १४॥

स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः।
प्रहितं दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपां पटलम्॥ १५॥

स ततार सैकतवतीरभितः
शफरीपरिस्फुरितचारुदृशः।
ललिताः सखीरिव बृहज्जघनाः
सुरनिम्नगामुपयतीः सरितः॥ १६॥

उपलभ्येति। सोऽर्जुनश्चञ्चलतरङ्गैर्धृतं तत् संक्रान्तमित्यर्थः। मदगन्धमुपलभ्याघ्राय पयस उत्थितवतां रोषादिति शेषः। करयाकाराणां यादसाम्। शाकपार्थिवादिषु द्रष्टव्यः। प्रतिदन्तिनामिवाभिमुखान् अभियातानित्यार्थः। करिणो गजान् संबुबुधे ददर्शेत्यर्थः॥ १४॥

स इति। सोऽर्जुनः पुरोऽग्रे सहसा समुत्पिपतिषोः समुत्पतितुमिच्छोः, पतेः सन्नन्तादुप्रत्ययः। 'तनिपतिदरिद्रादिभ्यः सन इड्वा वक्तव्यः' इति विकल्पादिडागमः। फणिनः सर्पस्य प्रजविभिरतिवेगवद्भिः श्वसितैः फुत्कारैर्दिव्याकाशे प्रहितं प्रेरितं शरदभ्रस्य विभ्रमः सौन्दर्यं यस्य तत्। शुभ्रमभ्रव्यापकं चेत्यर्थः। अपां पटलं पुर उदीक्ष्य विस्मयं जगाम। अत्रोपमानुपाणिता स्वभावोक्तिरलङ्कारः॥ १५॥

स इति। सोऽर्जुनः सैकतवतीः पुलिनवतीरभितः शफरीणां मत्स्यीनां

अधिरुह्य पुष्पभरनम्रशिखैः
परितः परिष्कृततलां तरुभिः ।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः
शुचिमाससाद स वनान्तभुवम् ॥ १७ ॥

अनुसानु पुष्पितलताविततिः
फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरे-
स्तपसेऽधिवस्तुमचलामचलः ॥ १८ ॥

---

पपिस्फुरितान्येव चारवो दृशो यासां ताः । सुरनिम्नगां गङ्गासुप तीर्भजन्तीः । ङ्गणः शतुरुगित्त्वान्ङीप् । अतएव वृहज्जघना ललिता सखीरिव स्थिताः सरितः ततार अतिचक्रमे ॥ १६ ॥

अधिरुह्येति । सोऽर्जुनोऽधिरुह्य अर्थाद्गिरिमिति शेषः । पुष्प भरेण नम्रशिखैर्नताग्रैस्तरुभिः परितः परिष्कृततलतां भूषितस्वरूपाम् 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुड़ागमः । शुचिं शुद्धाम् अतएव मनसः प्रसत्तिमिव मूर्त्तं मनःप्रसादमिव स्थिताम् तद्धेतौ तद्भावोत्प्रेक्षा । गिरेर्मूर्ध्नि वनान्तभुवमाससाद । अन्त शब्दः स्वरूपवचनः । 'अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके' इति वैजयन्ती ॥ १७ ॥

अनुसान्विति । अनुसानु प्रतिसानु वीप्सार्थेऽव्ययीभावः । पुष्पिताः सञ्जातपुष्पा लताविततयो यस्मिन् सः । फलिता तरवो भूरुहा येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन् स तथोक्तः 'विविक्तौ पूत विजनौ' इत्यमरः । अचल इन्द्रकीलो हरेस्तनयस्यार्जुनस्य तपसे तपअ र्यार्थमधिवस्तुमधिष्ठातुम् । तन्निक्रियापेक्षया समानकर्तृकत्वामतुन् । अचलां धृतिमुत्साहमाततान । अत्राचलविशेषणपदार्थस्य धृतिकरणहेतुत्वात् काव्य लिङ्गमलङ्कारः ॥ १८ ॥

प्रणिधाय तत्र विधिनाथ धियं
दधतः पुरातनमुनेर्मुनिताम् ।
श्रममादधावसुकरं न तपः
किमिवावसादकरमात्मवताम् ॥ १९ ॥
शमयन्धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे
विमलः कलाभिरिव शीतरुचिः ॥ २० ॥
अधरीचकार च विवेकगुणात्
गुणेषु तस्य धियमस्तवतः ।

---

प्रणिधायेति । अथ तत्रादौ विधिना योगशास्त्रानुसारेण धियं चित्तवृत्तिं प्रणिधाय ध्येयविषये धियं नियम्य 'नेर्गद'—इत्यादिना णत्वम् । मुनितां दधतः तपस्यत इत्यर्थः । पुरातनमुनेः अर्जुनस्येत्यर्थः । असुकरं दुष्करं तपः श्रमं खेदं नादधौ न चकार । तथाहि आत्मवतां मनस्विनामवसादकरम-शान्तिजनकं किमिव न किञ्चिदित्यर्थः । इवशब्दो वाक्यालङ्कारे ॥ १९ ॥

शमयन्निति । धृतमिन्द्रियशमो विषयव्यावृत्तिरेवैकं मुख्यं सुखमाह्लादो येन स तथोक्तः आत्माराम इत्यर्थः । अन्यत्र धृतं कृतम् इन्द्रियाणां शमः सन्ताप-निवर्तनमेकमद्वितीयं सुखमाह्लादश्च येन स तथोक्तः । शुचिभिर्निर्मलैर्गुणै-र्मैत्र्यादिभिः अन्यत्र कान्त्यादिभि' अघमयं पापरूपं तमोऽज्ञानम् । अन्यत्रा-न्धकारं च शमयन्निवर्तयन् । विमलोऽमलिनः पापरहितः शुभ्रोऽन्यत्र सोऽर्जुनः प्रतिवासरं सुकृतिभिः सुकृतैः तपोभिरित्यर्थः । स्त्रियां क्तिन् । कलाभिः शीतरुचिश्चन्द्र इव ववृधे ॥ २० ॥

अधरीचकारेति । किं चेति चार्थः, विवेकस्तत्त्वावधारणं स एव गुणस्तस्मात् तेन हेतुनेत्यर्थः । 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमी ।

प्रतिघातिनीं विषयसङ्गरतिं
निरुपप्लवः शमसुखानुभवः ॥ २१ ॥
मनसा जपैः प्रणतिभिः प्रयतः
समुपेयिवानधिपतिं स दिवः ।
सहजेतरौ जयशमौ दधती
बिभराम्बभूव युगपन्महसी ॥ २२ ॥
शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्द्धनि तमालतरौ ॥ २३ ॥

---

अगुणेषु कामक्रोधादिदोषेषु विषये तद्विरोधेन नञ्समासः। धियं चित्तवृत्तिमस्तवतोः निवारितवतस्तस्यार्जुनस्य निरुपप्लवो निर्बाधः शमसुखानुभवः शान्त्यानन्दानुभवः प्रतिघातिनीं सोपप्लवां विषयसङ्गरतिं शब्दादुपभोगरुचिमधरीचकार विषयनिःस्पृहं चकारेत्यर्थः। उत्कृष्टसुखलाभस्य प्रकृष्टवैराग्यहेतुत्वादिति भावः ॥ २१ ॥

मनसेति। प्रयतोऽहिंसादिनिरतो मनसा ध्यानेन जपैर्गिशिष्टमन्त्राभ्यासैः प्रणतिभिर्नमस्कारैः। एवं मनोवाक्कायकर्मभिर्दिवोधिपतिमिन्द्रं समुपेयिवान् उपसेदिवान् सोऽर्जुनः सहजेतरौ नैसर्गिकागन्तुकौ जीयतेऽनेनेति जयो वीररसः 'एरच्' इत्यच्। शम्यतेऽनेनेति शमः। जयशमौ वीरशान्तिरसौ दधती पुष्णती महसी तेजसी युगपद्विभराम्बभूव बभार। 'भीह्रीभृहुवाम्'—इति विकल्पादामप्रत्ययः। अत्र युगपद्वीरशान्ताधिकरणत्वाभिधानादस्य लोकाद्भुतमहिमत्वं व्यज्यते ॥ २२ ॥

शिरसेति। हरिन्मणिनिभो मरकतमणिश्यामोऽभिषवणेन स्नानेन कृतजन्मनो जनिताः अतः पिशङ्गीरिति भावः। जटाः शिरसा वहन्

धृतहेतिरप्यधृतजिह्ममति-
श्चरितैर्मुनीनधरयन्शुचिभिः ।
रजयांचकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः ॥ २४ ॥

अनुकूलपातिनमचण्डगतिं
किरता सुगन्धिमभितः पवनम् ।
अवधीरितार्तवगुणं सुखतां
नयता रुचां निचयमंशुमतः ॥ २५ ॥

---

सोऽर्जुनोऽरण्यस्थानूरोर्दीधितिभिः परिच्छिष्टमूर्द्धे निव्यापृशिरसि तमालतरावुपमां तमालतरोः सादृश्यं ययावित्यार्थीयमुपमा। तरोरौपमप्राधिकरणत्वात्तदपेक्षया सप्तमी ॥ २३ ॥

धृतेति। धृतहेतिर्धृतायुधोऽप्यधृता जिह्मा मतिः कुटिलमतिर्येन सः। शुचिभिश्चरितैर्मुनीनधरयन् तिरस्कुर्वन्। वेषेणैव भीषणो न तु कर्म्मणेति भावः। कुतः? विरजा रजोगुणरहितः सोऽर्जुनो मृगान् रजयाञ्चकार रमयामास। 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' इति नलोपः। तथाहि—गुणा दयादयः कमिव रमयितुं नेशते। कं वा वशीकर्त्तुं न शक्नुवन्तीति भावः। शुद्धिरेव हि परं विश्वासबीजं परस्य न वेषो नापि संस्तव इति भावः ॥ २४ ॥

अथास्य त्रिभिस्तपः सिद्धिमाह—अनुकूलेत्यादिना।—अनूकूलेति। अनुकूलपातिनं न तु प्रतिकूलपातिनमचण्डगतिं मन्दगामिनं सुगन्धिम्। गन्धस्येत्वे तदेकान्तग्रहणेऽपि कवीनां निरङ्कुशत्वात् समासान्तः। अथवा केचिदागन्तुकत्वेऽप्येकवचनेन समासान्तमिच्छन्ति। पवनमभितः किरता प्रवर्त्तयतेत्यर्थः। ऋतुरस्य प्राप्तः आर्तवः 'ऋतोरण्' इत्यण्प्रत्ययः।

नवपल्लवाञ्जलिभृतः प्रचये
बृहतस्तरून् गमयतावनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम् ॥ २६ ॥
पतितैरपेतजलदान्नभसः
पृषतैरपां शमयता च रजः ।
स दयालुनेव परिगाढकृशः
परिचर्ययानुजगृहे तपसा ॥२७॥
महते फलाय तदवेक्ष्य शिवं
विकसन्निमित्तकुसुमं स पुरः ।

चासौ गुणस्तिग्मत्वरूपः सोऽधोरितस्तिरस्कृतो यस्य तमंशुमतो रुचां निचयं सुखतां सुखस्पर्शतां नयता प्रापयता । नयतेर्द्विकर्मकत्वम् ॥ २५ ॥

नवेति । प्रचये पुष्पावचयप्रसङ्गे नवपल्लवा एवाञ्जलयः तान् बिभ्रतीति तथोक्तान् बृहत उच्चान् तरून् अवनतिं नम्रतां गमयता 'गतिबुद्धि' इत्यादिना तरूणां कर्मत्वम् । प्रतिनिशं निशि निशि शयनीयतामुपयतीम् । शयनस्थानीभूतामित्यर्थः । वसुधां मृदुभिस्तृणैः स्तृणताच्छादयता ॥ २६ ॥

पतितैरिति । अपेतजलदात् निरभ्रात् नभसः पतितैरपां पृषतैर्जलबिन्दुभिः रजश्च शमयता तपसा कर्त्रा दयालुना इत्युत्प्रेक्षा । दयालुत्वे हेतुं सूचयति—परिगाढः कृशोऽतिक्षीणः सोऽर्जुनः परिचर्यया उक्तविधया शुश्रूषयानुजगृहेऽनुगृहीतः । अनुग्रहोऽत्र सहकारित्वमेव सर्वभूतानुकूल्यलिङ्गात्पचेलिमं तपोऽस्येति भावः । अत्र श्लोकत्रयस्याप्येकवाक्यत्वादुत्प्रेक्षेव प्रधानालङ्कारः ॥ २७ ॥

महत इति । सोऽर्जुनो महते फलाय श्रेयसे शस्याय च विकसत्पूर्वोक्तं शिवं सुखदं तन्निमित्तमेव कुसुमं पुरोऽग्रेऽवेक्ष्य विस्मयवशं न जगाम ।

न जगाम निस्मयवशं वशिनां
न निहन्ति धैर्य्यमनुभावगुणः ॥ २८ ॥
तदभूरिवासरकृतं सुकृतैः
उपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियः
शतयज्वनो वनचरा वसतिम् ॥ २९ ॥
विदिताः प्रविश्य विहितानतयः
शिथिलीकृतेऽधिकृतकृत्यविधौ ।
अनपेतकालमभिरामकथाः
कथयाम्बभूवुरिति गोत्रभिदे ॥ ३० ॥

तथाहि—वशिनामनुभाव एव गुणः स च धैर्य्यं न निहन्ति । विस्मयादिविकारं न जनयतीत्यर्थः । जनने वा तपः क्षीयेत । 'तपः क्षरति विस्मयात्' इति स्मरणादिति भावः ॥ २८ ॥

तदिति । सुकृतैस्तपोभिः करणैः अभूरिभिः कतिपयैरेव वासरैः कृतं तत्पूर्वोक्तं वैभवमतोऽन्यस्य न भवतीत्यनन्यभवम् अन्यस्यासम्भवतीत्यर्थः । पचाद्यजन्तोत्तरपदेन नञ्समासः । उपलभ्य निश्चित्य आस्थितविषादाः प्राप्तखेदाः धियो येषां ते वनचराः । 'तत्पुरुषे कृति बहुलम्' इति बहुलग्रहणाल्लुक् । शतेन शतस्य वा मखानां जज्वनः शतक्रतोः । अत्र सङ्ख्येयविशेषलाभो यजिसन्निधानादवगन्तव्यः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' वसतिमुपतस्थुः प्रापुः ॥ २९ ॥

विदिता इति । वनचरा इत्यनुवर्त्तनीयम् । विदिता ज्ञाताः । अनुमतप्रवेशाः सन्त इत्यर्थः । प्रविश्य विहितानतयः कृतप्रणामा अधिकृतकृत्यस्य नियुक्तकर्म्मणः शैलरक्षणात्मकस्य विधावनुष्ठाने शिथिलीकृते सति अनपेतकालमनतिक्रान्तकालं यथा तथा गोत्रभिदे शक्रायेति वक्ष्यमाणप्रकारेणाभि-

शुचिवल्कवीततनुरन्यतमः
तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः
पुरुषस्तपस्यति तपन्जगतीम् ॥ ३१ ॥

स बिभर्त्ति भीषणभुजङ्गभुजः
पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताः
चरितेन चातिशयिता मुनयः ॥ ३२ ॥

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।

---

रामकथाः आश्चवाचः 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इत्यङ्प्रत्ययः। कथ्य स्वभुवः ॥ ३० ॥

शुचीति। शुचिना वल्केन वल्कलेन वीता आच्छादिता तनुर्यस्य स तिमिरच्छिदां सूर्यादीनामन्यतम इव स्थित इत्युत्प्रेक्षा। अनघः पुरु हे मघवन्, भवतो गिरौ इन्द्रकीले जगतीं भुवं तपन् तापयान् महते जया तपस्यति तपश्चरति। 'कर्मणो रोमन्थ' इत्यादिना क्यङि लट् ॥ ३१ ॥

जयाय तपस्यतीत्युक्तम्। तत्र हेतुमाह—स इति। भीषयेते इति भीषणौ। नद्यादित्वात्युप्रत्ययः। तौ च तौ भुजङ्गौ च ताविव भुजौ यस्य स तथोक्तः। पुरुषो विद्विषां भयविधायि पृथु धनुर्बिभर्त्ति अतो जयार्थीत्यर्थः। अमलेन तस्य पुरुषस्य चरितेन धृतानि सच्चरितानि यैस्ते मुनयोऽतिशयिता अतिक्रान्ताः ॥ ३२ ॥

अथास्य तपःसिद्धिं वर्णयति—मरुत इत्यादिना। मरुतो वाताः शिवाः सुखाः जगती पृथ्वी नवतृणा शयनासनाद्यनुकूलेत्यर्थः। नभो विमलं नीहारा 'दिरहितं' रजसि सत्यपां वृष्टिः भवतीति शेषः, किं बहुना अस्य पुरुषस्य गुण

गुणसम्पदाऽनुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥
इतरेतरानभिभवेन मृगाः
तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये
परवान् स तेन भवतीव नगः ॥ ३४ ॥
उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥

सम्पदा भूतहितादिगुणसम्पत्त्यानुगुणतामनुकूलतां गमितः वशीकृत इत्यर्थः। भूतगणः पृथिव्यादिपञ्चकं भक्तिं सेवां कुरुत इवेत्युत्प्रेक्षा ॥ ३३ ॥

इतरेतरेति। किं च—मृगाः पशवस्तम् अन्ते अन्तिके सीदन्ति इत्यन्तसदः, अन्तेवासिनः। 'सत्सूद्विष' इति क्विप्। गुरुमिवेतरेतरेषामनभिभवेनाद्रोहेणोपासन्ते सेवन्ते। प्रचये पुष्पावचये तरवोऽस्य विनमन्ति करप्रचेया भवन्तीत्यर्थः। तस्येति सम्बन्धसामान्ये षष्ठी। किं बहुना—स नग इन्द्रकीलो भवतीव तेन पुरुषेण परवान् पराधीनः। सात्त्विकस्यापि तवैव तस्यातिशयो वर्त्तते इत्यर्थः ॥ ३४ ॥

उर्विति। किं च—विपरिश्रमतायासेऽपि श्रमराहित्यमुरु महत् सत्त्वमन्तःसारमाह—दुर्बलस्य श्रमजयासम्भवादिति भावः। परमसुत्तमं वपुर्जयं प्रथयति च। आकारेणैव जिष्णुत्वं गम्यते इत्यर्थः। शमिनः शान्तस्यापि तस्य नवसङ्गमनेऽपूर्वप्राप्तौ जनो विभुतायाः प्रभावस्यानुषङ्गीति भावः, भयमेति। शान्तोऽप्ययं प्राभवं गमयतीति भावः ॥ ३५ ॥

ऋषिवंशजः स यदि दैत्यकुले
यदि वान्वये महति भूमिभृताम् ।
चरतस्तपस्तव वनेषु सहा
न वयं निरूपयितुमस्य गतिम् ॥ ३६ ॥

विगणय्य कारणमनेकगुणं
निजयाथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः
क्व वनेचराः क्व निपुणा मतयः ॥ ३७ ॥

अधिगम्य गुह्यकगणादिति-
तन्मनसः प्रियं प्रियसुतस्य तपः ।

---

अथ ईदृशोऽसौ क इति चेत्तन्न विद्म इत्याह— ऋषीति । स पुरुषः ऋषिवंशजो वेति शेषः । काक्वर्वा । यदि वा दैत्यकुले जात इति शेषः। यदि वा महति भूमिभृतामन्वये जातः । तव वनेषु तपश्चरतोऽस्य गतिं स्वरूपं निरूपयितुं वयम् सहन्त इति सहाः, पचाद्यच् । न सहाः, क इति शेषः ॥ ३६ ॥

अपृष्टपरिभाषणापराधं परिहरन्ति—विगणय्येति । अनेकगुणं बहुफल इन्द्रत्वाद्यनेकफलसाधकत्वेन योग्यमित्यर्थः, कारणं तपोरूपं विगणय्य विचार्य्य अथवा निजया नैसर्गिक्या अल्पतया वालिश्येनाज्ञानत्वेन वा कथितं नोऽस्माकमदः इदम् वचनमित्यर्थः। असदसाध्वपि सहितुं सोढुम्। 'तोषसर्ग' इत्यादिना विकल्पादिडागमः । अर्हसि योग्योऽसि । तर्हि सदेव किं नोक्तं तत्राहुः । वनेचराः क्व ? निपुणा मतयो विवेकबुद्धयः क्व ? नोभयं सम्यक् इत्यर्थः, अज्ञानेन नापराध्यतीति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ३७ ॥

अधिगमेत्यति । मघवेन्द्र इति पूर्वोक्तगुह्यकगणात्तन्मनसः प्रियं प्रिय सुतस्यार्जुनस्य तपोऽधिगम्य ज्ञात्वा गुप्तयपेक्षया समानकर्तृकत्वात्तुल्यत्वात्

निजुगोप हर्षमुदितं मघवा
नयवर्त्मगाः प्रभवतां हि धियः ॥३८॥
प्रणिधाय चित्तमथ भक्ततया
विदितेऽप्यपूर्व्व इव तत्र हरिः।
उपलब्धुमस्य नियमस्थिरतां
सुरसुन्दरीरिति वचोऽभिदधे ॥ ३९ ॥
सुकुमारमेकमणु मर्मभिदाम्
अतिदूरगं युतममोघतया।
अविलक्ष्यमस्त्रमपरं कतमं
विजयाय यूयमिव चित्तभुवः ॥ ४० ॥

निर्देशः। उदितं तत्तपसो देवकार्य्यार्थत्वादुत्पन्नं हर्षं निजुगोप गोपयामास। तथा हि—प्रभवतां प्रभूणां धियो नयवर्त्मगाः नीतिमार्गानुसारिण्यो हि। अन्यथा मन्त्रभेदे कार्य्यहानिः स्यादिति भावः ॥ ३८ ॥

प्रणिधायेति। अथ हरिरिन्द्रश्चित्तं प्रणिधाय विषयान्तरपरिहारेणात्मन्यवस्थाप्य तत्र तस्मिन्नर्जुने भक्ततया विदिते सत्यपि उपलक्षणे तृतीया। अपूर्व्वः इव अविदितः इवेत्यर्थः। 'पूर्व्वादिभ्यो नवभ्यो वा' इति विकल्पान्न स्मिन्नादेशः। अस्यार्जुनस्य नियमे स्थिरतां दार्ढ्यमुपलब्धुम् परीक्षितुमित्यर्थः। लोकप्रतीत्यर्थमिति भावः। सुरसुन्दरीरिति वक्ष्यमाणप्रकारं वचोऽभिदधे ॥ ३९ ॥

सुकुमारमिति। मर्म्मभिदां मर्म्मच्छेदिनाम् अस्त्रान्तराणां मध्ये इत्यर्थः। 'यतश्च निर्धारणम्' इति षष्ठी। अपरमन्यत् कतमम्। 'वा बहूनां जातिपरिप्रश्ने डतमच्'। यूयमिव सुकुमारं कोमलं न तु कठिनम्। अन्यत्तु कठिनं भवति। तथैकं न बहु तत् तु अनेकं भवति। तथाणु सूक्ष्मं न स्थूलम् अलक्ष्यप्रवेशित्वादिति भावः। तत्तु लक्ष्यप्रवेशि तथाति-

भववीतये हतबृहत्तमसाम्
अवबोधवारि रजसः शमनम् ।
परिपीयमानमिव वोऽसकलैः
अवसादमेति नयनाञ्जलिभिः ॥ ४१ ॥

बहुधा गतां जगति भूतसृजा
कमनीयतां समभिहृत्य पुरा ।
उपपादिता विदधता भवतीः
सुरसद्मयानसुमुखी जनता ॥ ४२ ॥

तदुपेत्य विघ्नयत तस्य तपः
कृतिभिः कलासु सहिताः सचिवैः ।

---

दूरगं दूरलक्ष्यभेदि तच्च समीपलक्ष्यभेदि । तथाऽमोघतयाऽमोघत्वगुणेन युतं युक्तम् । न कदाचिद्व्यभिचरतीति भावः । अन्यत्तु कदाचिदपि लक्ष्या-दपराध्यति तथाऽविलक्ष्यमसत् प्रतीकारम् । अन्यत्तु विद्यमानप्रतीकारम् । अस्त्रं चित्तभुवः कामस्य कर्त्तरि षष्ठी ; विजयाय एतद्विशेषणविशिष्टमस्त्र-मस्तीति शेषः । न किञ्चिदस्तीत्यर्थः । अत्रोपमालङ्कारः । साभिप्राय-विशेषणत्वात् परिकरालङ्कारस्य । तयोरुभयोरङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

असमार्थ्यशङ्कां परिहरति—भवेति । भववीतये संसारनिवृत्तये हतबृह-त्तमसां निरस्तमहामोहानां योगिनां सम्बन्धि रजो गुणः । रजो धूलिरिति श्लिष्टरूपकम् । तस्य शमनं निवर्त्तकमवबोधस्तत्त्वज्ञानमेव वा तद्वो युष्माकम-सकलैरसमग्रैर्नयनानि एवाञ्जलयस्तैः परिपीयमाणमिवेत्युत्प्रेक्षा । अवसादं तपःक्षयमेति । मुक्तानपि बध्नतीनां वः कथमसामर्थ्यमिति भावः । अत्रोत्-प्रेक्षारूपकयोः सङ्करः ॥ ४१ ॥

बहुधेति । किं च, पुरा जगति बहुधा गतां नानामुखेन विप्रकीर्णां कमनीयतां चन्द्राद्युपमानद्रव्यगतलावण्यं समभिहृत्य संगृह्य भवतीर्विदधता

हृतवीतरागमनसां ननु वः
सुखसङ्गिनं प्रति सुखावजितिः ॥ ४३ ॥
अविमृष्यमेतदभिलष्यति सः
द्विषतां वधेन विषयाभिरतिम् ।
भववीतये न हि तथा स विधिः
क्व शरासनं क्व च विमुक्तिपथः ॥ ४४ ॥
पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद्विकृतिः ।

भूतसृजा ब्रह्मणा जनता जनसमूहः । 'ग्रामजन'—इत्यादिना तल् । सुर-सद्मयानसुमुखी स्वर्लोकयात्राप्रवणोपपादिता कृता । स्वर्गस्यापि यत्प्रसादात् सर्वलोकश्लाघ्यत्वम् । तासां वः कथमसामर्थ्यमिति भावः । अत्राऽप्सरसां प्रकीर्णलावण्यसंग्रहासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः ॥ ४२ ॥

अथ कार्य्यशक्तिमाह—तदिति । तत्तस्मात् समर्थत्वात् कलासु गीतवाद्यादिषु कृतिभिः कुशलैः सचिवैर्गन्धर्वैः सहिता उपेत्य गत्वा तस्य पुरुषस्य तपो विघ्नयत विघ्नवत्कुरुत विहतेत्यर्थः । विघ्नवच्छब्दान्मत्वन्तात् 'तत्करोति' इति णिचि लोट् । णाविष्टवद्भावान्मतुपो लुक् । न चाऽत्राऽसामर्थ्यशङ्का कार्य्येति अर्थान्तरन्यासेनाह—हृतेति । ननु सम्बोधने हे अप्सरसः, हृतानि वशीकृतानि वीतरागाणां निष्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिस्तासां वो युष्माकमप्सरसां सुखसङ्गिनं पुरुषं प्रति सुखाभिलाषिणं प्रति अवजितिर्विजयः सुखा सुखसाध्या न तु दुष्करा खलु । एतेनायं सुखार्थी न मुमुक्षुरित्युक्तम् । अर्थान्तरन्यासः ॥ ४३ ॥

अथ सुखसङ्गित्वलिङ्गमाह—अविमृष्येति । हे अप्सरसः, स पुरुषो द्विषतां शत्रूणां वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखमभिलष्यति वाञ्छति । 'वा भ्राश'—इत्यादिना श्यन्प्रत्ययः । एतद्विषयासक्तत्वमविमृष्यमविचार्य्यम् । अविमृष्यमसन्दिग्धव्यमिति । 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप् । भवतीभिर्न

स्वयशांसि विक्रमवतामवतां
न बधूष्वघानि विमृषन्ति धियः ॥ ४५ ॥

आशंसितापचितिचारु पुरः सुराणाम्
आदेशमित्यभिमुखं समवाप्य भर्तुः ।
लेभे परां द्युतिममर्त्यबधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥ ४६॥

प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।

---

सन्दिग्धव्यमित्यर्थः । हि यस्मात् स विधिः 'स बिभर्त्ति भीषणभुजङ्गभुजः' इत्यादिश्लोकोक्तोऽनुष्ठानप्रकारो भववीतये संसारमुक्तये न भवति। कुत इत्याह--शरासनं धनुः क्व ? विमुक्तेः पन्थाश्च क्व ? इयं परस्परं विरुद्धमित्यर्थः। न खलु हिंसासाध्या मुक्तिरिति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ४४ ॥

न च शापभयमपि सम्भाव्यमस्मादित्याह—पृथ्विति । पृथुधाम्नि महातेजसि तत्र तस्मिन् पुरुषविषयेऽन्यमुनिवदन्यस्मिन् मुनाविव । 'तत्र तस्येव' इति वतिप्रत्ययः। विकृतिः कोपविकारश्च भवतोभिर्मा परिबोधि मा विज्ञायि मा शङ्कीति यावत् । बुध्यतेः कर्म्मणि लुङ् । माङ्योगादाशीरर्थेऽडागमाभावश्च। तथा हि—स्वयशांसि अवतां रक्षताम् यशोधनानामित्यर्थः । विक्रमवतां धियश्चित्तानि बधूषु स्त्रीविषयेष्वघानि व्यसनानि । 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती। न विमृषन्ति । अर्थान्तरन्यासः । स्त्रीहिंसायाः शूराणां यशोहानिकरत्वान्न सर्व्वथा वो हिनस्ति स इत्यर्थः ॥ ४५ ॥

आशंसितेति । अमर्त्यबधूसमूहोऽप्सरसां गणः सुराणां पुरोऽग्रे आशंसितापचितिभिरपेक्षितसम्भावनाभिश्चारु यथा तथा । 'व्ययार्चयोरपचितिः' इत्यमरः। अभिमुखं समक्षं भर्तुः स्वामिन इति पूर्व्वोक्तमादेशं नियोगं समवाप्य परां द्युतिं लेभे । तथा हि—अधिकृतस्य क्वचिदधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥४६ ॥

प्रणतिमिति । अथ प्रणतिं विधाय सद्मनः इन्द्रभवानात् प्रस्थिताः प्रचलिताः

अचलनलिनलक्ष्मीहारि नालं बभूव
स्तिमितममरभर्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥४७॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये
षष्ठः सर्गः।

——:०:——

## सप्तमः सर्गः

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्तुः।
संमूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः॥ १ ॥

स्तनभरैर्नमितान्यङ्गानि यासां ताः। 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष्। प्रीतिभाजः स्वामिसम्भावनया सन्तुष्टास्ताः अङ्गनाः अचलनलिनानां स्थिरकमलानां लक्ष्मीर्हरतीति तत्तथोक्तम्। तद्वन्मनोहरमित्यर्थः। कुतः? स्तिमितं विस्मयनिश्चलममरभर्त्तुरक्ष्णां सहस्रं कर्तृ द्रष्टुमलं समर्थं न बभूव। तासां सौन्दर्य्यसागरस्योद्वेलत्वादिति भावः। अत्रोपमालङ्कारः॥ ४७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय-काव्यव्याख्यायां घण्टापथसमाख्यायां षष्ठः सर्गः॥

———

श्रीमद्भिरिति। अथ प्रस्थानानन्तरं श्रीमद्भिः शोभावद्भिः सह रथगजेन सरथगजास्तैः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। त्रयाणां लोकानां भर्तुस्त्रिलोकभर्तुरिन्द्रस्य। 'तद्धितार्थ'—इत्यादिना उत्तरपदसमासः। सचिवैर्गन्धर्वैर्गुप्तानां सुराङ्गनानां प्रस्थानं गमनमलघुषु महत्सु विमानरन्ध्रेषु विमानानां कुक्षिषु कुहरेषु भिन्नः प्रतिध्वानैरनेकीभूतोऽतएव संमूर्च्छन् व्याप्नुवन्

सोत्कण्ठैरमरगणैरणुप्रकीर्णात्
निर्याय ज्वलितरुचः पुरान्मघोनः ।
रामाणामुपरि विवस्वतः स्थितानां
नासेदे चरितगुणत्वमातपत्रैः ॥ २ ॥

धूतानामभिमुखपातिभिः समीरैः
आयासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूनाम्
उष्णांशुद्युतिजनितः कपोलरागः ॥ ३ ॥

---

मृदङ्गनादः समभिदधे आचख्यौ पारेभ्य इति शेषः । अस्मिन् सर्गे प्रहर्षिणी वृत्तम्—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' इति लक्षणात् ॥ १ ॥

सोत्कण्ठैरिति । सोत्कण्ठैः अवेक्षणोत्सुकैरित्यर्थः । अमरगणैरणु-प्रकीर्णादाकीर्णाज्ज्वलितरुचो दीप्तप्रभान्मघोन इन्द्रस्य पुरादमरावत्याः निर्याय निर्गत्य यातिः क्रोल्यप् । विवस्वतः उपरि स्थितानां रामाणाम् । आतपात्त्रा-यन्ते इत्यातपत्रैः । 'सुपि' इति योगविभागात् कप्रत्ययः । चरितगुणत्वं सार्थकत्वं नाऽसेदे न प्रापे । तासां सूर्योपरिस्थितत्वादातपासम्भवा-दितिभावः ॥२॥

धूतानामिति । अभिमुखपातिभिः समीरैः प्रतिकूलवायुभिर्धूतानामिति दुर्निमित्तसूचनम् । आयासाद्गतिप्रयासादविशदलोचनोत्पलानां वधूनामुष्णांशु-द्युतिजनितः आतपकृतः कपोलानां रागः पाटलत्वम् । मदेन जनितां श्रियं तत्सदृशीं श्रियमित्यर्थः । अतएव निदर्शनालङ्कारः । आनिन्ये आनीतवान् बभूवेति शेषः । आङ्पूर्व्वान्नयतेः कर्त्तरि लिट् । ञकारानु-बन्धत्वादात्मनेपदम् ॥ ३ ॥

तिष्ठद्भिः कथमपि देवतानुभावात्
आकृष्टैः प्रजविभिरायतं तुरङ्गैः ।
नेमीनामसति विवर्त्तनैरथौघैः
आसेदे वियति विमानवत्प्रवृत्तिः ॥ ४ ॥

कान्तानां कृतपुलकः स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियं तनोति ॥ ५ ॥

राजद्भिः पथिमरुतामभिन्नरूपैः
उल्कार्चिःस्फुटगतिभिर्ध्वजांशुकानाम् ।

तिष्ठद्भिरिति । कथमपि वाढ़म् । 'कथमादौ तथापरन्ते यत्ने गौरव-वाढ़योः' इति वैजयन्ती । देवतानामनुभावात्तिष्ठद्भिरपतद्भिरित्यर्थः । रथ-विशेषणमेतत् । प्रजविभिर्वेगवद्भिस्तुरङ्गैरायतं दूरमाकृष्टैरथौघैर्वियत्याकाशे नेमीनां चक्रधाराणाम् । 'चक्रधारा प्रधिर्नेमिः' इति यादवः । विवर्त्तने भ्रमणेऽसति विमानवद्विमानानामिवेत्युपमा । 'तत्र तस्येव' इति वतिप्रत्ययः । प्रवृत्तिर्गतिः आसेदे प्राप्ता । सदेः कर्मणि लिट् ॥ ४ ॥

कान्तानामिति । कान्तानां स्तनानामङ्गरागे कृतपुलकोजनितोद्भेदः कृतरोमाञ्च इत्यर्थः । च्युताः प्रमृष्टास्तिलका येषां तेषु वक्त्रेषु मौक्तिकाभः श्रम-सलिलोद्गमः स्वेदोद्भेदः विभूषा भूषणं सम्पेदे सम्पन्नः । कर्त्तरि लिट् । तथाहि—रम्याणां स्वभावसुन्दराणां विकृतिरपि श्रियं तनोति । अतः खेदस्यापि विभूषणत्वमुपपद्यते इति भावः ॥ ५ ॥

राजद्भिरिति । मरुतां पथ्याकाशे राजद्भिर्दीप्यमानैरभिन्नरूपैरविच्छिन्ना-कारैरतएवोल्कानामर्चींषीव स्फुटगतीनि दीप्तमार्गाणि येषां तैः । कनकस्य निकाषः कषणं तस्य राजिः रेखा तद्वद्गौरैररुणैः । 'गौरः पीतेऽरुणे श्वेते'

तेजोभिः कनकनिकाषराजिगौरैः
आयामः क्रियत इव स्म सातिरेकः ॥६॥

रामाणामवजितमाल्यसौकुमार्य्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥ ७ ॥

सिन्दूरैः कृतरुचयः सहेमकच्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।
सादृश्यं ययुररुणांशुरागभिन्नैः
वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥ ८ ॥

---

इति विश्वः । ध्वजांशुकानां तेजोभिः पताकाकान्तिभिः आयामः तेषामेव दैर्घ्यं सातिरेकः सातिशयः क्रियते स्मेव कृत इव दीर्घा ध्वजपटाः स्वतेजः प्रसारेण दीर्घतमा इव लक्ष्यन्ते इत्युत्प्रेक्षा । सा चोल्काद्युपमानुप्राणिता ॥६॥

रामाणामिति । मालैव माल्यं तस्य सौकुमार्य्यमवजितं येन तस्मिन् कुसुमादपि सुकुमार इत्यर्थः । रामाणां वपुषि आतपस्य । कृद्योगे कर्मणि षष्ठी । सहते इति सहः क्षमः पचाद्यच् । तस्य भावः सहत्वम् । तत् सम्प्राप्ते सत्यधिगतविस्मयैः सम्प्राप्ताश्चर्यैर्गन्धर्वैर्विधातुर्विधिषु सृष्टिषु कल्याणी साध्वी श्रेयसी । उपकारकत्वादिति भावः । विचित्रता नानाविधत्वं प्रतीये अवगता ज्ञाता प्रतिपूर्व्वादिणः कर्म्मणि लिट् ॥ ७ ॥

सिन्दूरैरिति । सिन्दूरैर्नागसम्भवाख्यैरागद्रव्यैः । 'सिन्दूरं नागसम्भवम्' इत्यमरः । कृतरुचयः अलङ्कृता इत्यर्थः । सह हेम्नः कच्याभिर्मध्यभबन्धनैः सहेमकच्याः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'कच्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । स्रोतोभिः सप्तभिर्म्मदनाड़ीभिः । 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदच्युतिः' इति पाल-

अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्य्यन्तादहिममयूखमण्डलस्य ।
आशानामुपरचितामिवैकवेणीं
रम्योर्मिं त्रिदशनदीं ययुर्बलानि ॥ ९ ॥
आमत्तभ्रमरकुलाकुलानि धुन्वन्
उद्भूतग्रथितरजांसि पङ्कजानि ।
कान्तानां गगननदीतरङ्गशीतः
सन्तापं विरमयति स्म मातरिश्वा ॥ १० ॥
सम्भिन्नैरिभतुरगावगाहनेन
प्राप्योर्वीरनुपदवीं विमानपङ्क्तीः ।

कावेत्र । करान्नासारभ्राभ्यामित्यर्थः । मदं चरन्तो वर्षन्तस्त्रिदशगजाः अरुणस्य अर्कस्य अंशूनां रागेण आरुण्येन भिन्नैः संसृष्टैर्व्वपुर्भिः स्फुरितशतह्रदैः स्फुरिततड़ित्कैः पयोदैः सादृश्यं ययुरित्युपमालङ्कारः ॥ ८ ॥

अत्यर्थमिति । बलानि सैन्यानि अत्यर्थं दुरुपसदाद् दुःसहादहिममयूखमण्डलस्य सूर्य्यविम्बस्य पर्य्यन्तात् समीपाद्दूरमुपेत्य आगत्य आशानाम् उपरचितां गुम्फितामेकवेणीमिव स्थितामिवेत्युत्प्रेक्षा । रम्याः ऊर्म्मयस्तरङ्गाः भङ्गास्य यस्यास्तां त्रिदशनदीं मन्दाकिनीं ययुः प्रापुः ॥ ९ ॥

आमत्तेति । आमत्तैर्भ्रमरकुलैराकुलानि उद्धतानि उत्थापितानि ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि पङ्कजानि धुन्वन् कम्पयन् सुरभिः इत्यर्थः । गगननदीतरङ्गैः शीतो मातरिश्वा वायुः कान्तानां सन्तापं विरमयति स्म शमयामास । मातरि अन्तरिक्षे श्वयतीति मातर्य्याश्वयतीति वेति नैरुक्ताः ॥ १० ॥

सम्भिन्नैरिति । इभतुरगावगाहनेन हस्त्यश्वावलोड़नेन सम्भिन्नैः सङ्क्षुभितैः सुरापगायाः पयोभिः कर्त्तृभिः पदवीमनुपदव्यामित्यर्थः । 'लक्षणेत्थं

तत्पूर्व्वं प्रतिविदधे सुरापगाया
वप्रान्तस्खलितविवर्त्तनं पयोभिः ॥ ११ ॥
क्रान्तानां ग्रहचरितात् पथो रथानाम्
अक्षाग्रक्षतसुरवेश्मवेदिकानाम् ।
निःसङ्गं प्रधिभिरुपाददे विवृत्तिः
सम्पीडक्षुभितजलेषु तोयदेषु ॥ १२ ॥
तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः ।
युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ १३ ॥

भूत'—इत्यादिना कर्म्मप्रवचनीयत्वात् द्वितीया । उर्व्वीर्विपुला विमानपङ्क्तीः प्राप्य तदेव पूर्व्वंतत्पूर्व्वमिदं प्रथमं यथा तथा आकाशगङ्गायास्तटाभावादिति भावः। वप्रान्तेषु रोधोभूमिषु स्खलितानि तैर्व्विवर्त्तनं प्रत्यावृत्तिर्व्वप्रान्तस्खलितविवर्त्तनं तटान्तस्खलनप्रतिवर्त्तनम् । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' इति वैजयन्ती । प्रतिविदधे चक्रे इत्यतिशयोक्तिः ॥ ११ ॥

क्रान्तानामिति । ग्रहैः सूर्य्यादिभिश्चरितादाश्रितात् । कर्म्मणि क्तः। पथः मार्गात् क्रान्तानां निष्क्रान्तानाम् अक्षाश्चक्रधरा दारुविशेषास्तेषामग्रैः क्षताः दारिताः सुरवेश्मवेदिकाः यैस्तेषां रथानां प्रधिभिर्नेमिभिः चक्रान्तैः। 'चक्रं रथाङ्गं तस्यान्ता नेमिः स्त्री स्यात् प्रधिः पुमान्' इत्यमरः। सम्पीडनोदनेन क्षुभितानि जलानि येषां तेषु तोयदेषु निःसङ्गमप्रतिघातं यथा तथा विवृत्तिः परिभ्रमणमुपाददे स्वीकृतेत्यतिशयोक्तिः स्वभावोक्त्या संसृज्यते॥१२॥

तप्तानामिति । विषाणभिन्नाः गजदन्तक्षताः । 'विषाणं दन्तशृङ्गयोः' इति हलायुधः । अतएव क्षरन्तः स्रवन्तो घनास्तप्तानां सुरकरिणां प्रह्लादमुपदधिरे उपचक्रिरे । तथाहि—परोपकारे युक्तानामासक्तानां महतां सतां

संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम् ।
पर्य्यस्यत्पृथुमणिमेखलांशुजालं
सञ्जज्ञे युतकमिवान्तरीयमूर्वोः ॥ १४ ॥

प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।
कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान् बहुसुकृतं हिनस्ति दोषः ॥१५ ॥

रुजत्स्वपि पीड़यत्स्वपि विषये कल्याणी हितकारिणी खलु प्रवृत्तिर्व्यापारो भवतीत्यर्थान्तरन्यासोऽलङ्कारः। ततो युक्तं मेघानां गजदन्तचतानामपि तदाह्लादकत्वमिति भावः ॥ १३ ॥

संवातेति। संवाता संवहता। वातेर्गत्यर्थत्वाच्छतृप्रत्ययः। अनिलेन कामिनेवेति भावः। दिव्यस्त्रीणां जघनेषु वरं श्रेष्ठं यदंशुकं तस्मिन् विवृत्तिमपसारं मुहुर्नीयमाने सति पर्य्यस्यत् प्रसर्पत् पृथु विशालं मणिमेखलांशुजालम् ऊर्वोर्युतकं चलनाख्यमिव। 'युतकं संश्रये युग्मे यौतके चलनेऽपि च' इति विश्वः। अन्तरे भवमन्तरीयमधोऽंशुकम्। 'गहादिभ्यश्च' इति छप्रत्ययः। 'अन्तरीयोपसंव्यानपरिधानान्यधोऽंशुके' इत्यमरः। संजज्ञे सञ्जातम्। जनिधातोः कर्त्तरि लिट्। उत्प्रेक्षालङ्कार ॥ १४ ॥

प्रतीति। तुषारपातैः शीकरवर्षैः 'तुषारौ हिमशीकरौ' इति विश्वः। प्रत्यार्द्रीकृततिलकाः मार्जितविशेषकाः अपि शमितपरिश्रमाः प्रह्लादमानन्दं दिशन्तः पयोदाः कान्तानाम्। कर्त्तरि षष्ठी। बहुमतिं संमानमाययुः। तथाहि—अल्पीयानल्पो दोषो बहु प्रभूतं सुकृतमुपकारं न हिनस्ति न हन्ति। अर्थान्तरन्यासोऽलङ्कारः ॥ १५ ॥

यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।
आतेनुस्त्रिदशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभा मणीनाम् ॥ १६ ॥

संसिद्धाविति करणीयसंनिबद्धैः
आलापैः पिपतिषतां विलङ्घ्य वीथीम् ।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७ ॥

यातस्येति । ग्रथिततरङ्ग' बद्धोर्मि यत् सैकतं तस्य आभा इव आभा यस्य तस्मिन् विगतानि पयांसि यस्मात् तस्मिन् निर्जले । 'शेषाद्विभाषा' इत्यादिना विकल्पात् नञ् समासान्तः । उरःप्रभृतिपाठस्तु पयःशब्दस्यैकवचनान्तस्यैवेति न कश्चिद्विरोधः । वारिवाहजाले मेघवृन्दे विच्छेदं त्रुटिं यातस्य सुरधनुषः इन्द्रचापस्य त्रिदशवधूजनाङ्गभाजां मणीनां तदङ्गसङ्गिविभूषामणीनामित्यर्थः । प्रभाः कान्तयः सन्धानमातेनुः चक्रुः । अत्राभरणप्रभानामिन्द्रधनुःसन्धानासम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः ॥ १६ ॥

संसिद्धाविति । संसिद्धौ कार्य्यसिद्धिविषये इतीत्थंभाविना प्रकारेण । कर्त्तव्यमिति करणीयं तेन सन्निबद्धैः संयोजितैरित्यर्थः । आलापैराभाषणैरुपलक्षितया । 'स्यादाभाषणमालापः' इत्यमरः । दशशतानि सङ्ख्या येषु तानि लोचनानि यस्य सः सहस्रलोचन इत्यर्थः । तस्य ध्वजिन्या सेनया पिपतिषतां पक्षिणां वीथीं मार्गम् । 'पितृसन्तो नभसङ्गमाः' इत्यमरः । 'तनिपति'—इत्यादिना विकल्पादिड़ागमः । विलङ्घ्य जीमूतैः जीवस्य उदकस्य मूतः पटबन्धो येषां ते तैः । पृषोदरादित्वात् साधुः । अपिहितसानुराच्छादिततटः उन्नत इत्यर्थः । इन्द्रकीलः आसेदे प्राप्तः । सीदतेः कर्म्मणि लिट् ॥ १७ ॥

आकीर्णा मुखनलिनैर्व्विलासिनीनाम्
उद्धूतस्फुटविशदातपत्रफेना ।
सा तूर्य्यध्वनितगभीरमापतन्ती
भूभर्तुः शिरसि नभोनदीव रेजे ॥ १८ ॥

सैतुल्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथान् जवेन ।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः ॥ १९ ॥

माहेन्द्रं नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदा दिवः पतन्तः ।

आकीर्णेति । विलासिनीनां मुखनलिनैः । उपमितसमासः । आकीर्णा व्याप्ता उद्धूतानि ऊर्द्ध्वमुत्क्षिप्तानि स्फुटानि असङ्कुचितानि विशदातपत्राणि श्वेतच्छत्राणि फेना इव यस्यास्तथोक्ताः तूर्य्यध्वनितैर्व्वाद्यघोषैर्गभीरं यथा तथा भूभर्तुरिन्द्रकीलस्य शिरसि आपतन्ती सा सेना नभोनदी इव रेजे ॥ १८ ॥

सैतुल्वमिति । पयोमुचां विताने सैतुल्वं दधति सति संरम्भादाटोपाज्जवेन अभिपततः मेघवृन्दमधरीकृत्य धावतः इत्यर्थः । तथाभूतान् रथान्नियमितैराकृष्टैरश्मिभिः प्रग्रहैर्भुग्नाः आकुञ्चिता घोणाः प्रोथाः येषां तैः । 'कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं वेल्लितं वक्रम्' इत्यमरः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः । अवनमन्तीत्यवनामिनोऽवनतपूर्व्वकायास्तुरङ्गाः कृच्छ्रेण महता प्रयत्नेन क्षितिमानिन्युरिति स्वभावोक्तिः ॥ १९ ॥

माहेन्द्रमिति । माहेन्द्रं नगमभितः इन्द्रकीलाभिमुखम् । 'अभितः परितः'—इत्यादिना द्वितीया । दिवोऽन्तरिक्षात्पतन्तोऽवतरन्तः पर्य्यन्तस्थिताः पार्श्वस्था जलदाः येषां ते करेणुवर्य्याः करेणुषु वर्य्याः श्रेष्ठा इत्यर्थः ।

साहश्यं निलयननिष्प्रकम्पपक्षै:
आजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥२०॥
उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन ।
आमूलादुपनदि सैकतेषु लेभे
सामग्री खुरपदवी तुरङ्गमाणाम् ॥ २१ ॥
सध्वानं निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन् प्रतिनिनदैरधित्यकासु ।

'न निर्धारणे' इति षष्ठीसमासनिषेधात् 'सप्तमी' इति योगविभागात् सप्तमी-समासः। निलयने स्थाने निष्प्रकम्पपक्षैर्निश्चलपक्षैर्जलनिधिशायिभिर्नगेन्द्रैर्मैनाकादिभिः साहश्यमाजग्मुरित्युपमा ॥ २० ॥

उत्सङ्ग इति । महाद्रेरुत्सङ्गे मूर्ध्नि विषये यत् समविषमं समं च विषमं च निम्नोन्नतं तस्मिन् द्वन्द्वैकवद्भावः। वियदभिपातलाघवेन गगन-सञ्चारपाटवेन सममेकरूपम् आरोहावरोहरहितमित्यर्थः । क्रान्तानां गच्छतां तुरङ्गमाणां खुरपदवी खुरपङ्क्तिरुपनदि नदीसमीपे । 'अव्ययीभावश्च' इति नपुंसकत्वात् ह्रस्वत्वम्। सैकतेषु आमूलात् मूलमारभ्य आदित आरभ्येति यावत् । समग्रस्य भावः सामग्री साकल्यम् भावे ष्यञ् ङीप् । लेभे सैकतात् अन्यत्र निम्नेषु गगनचारिण समग्रदेशवद् विषमे खुरस्पर्शाभावाद्विच्छिन्ना खुरसरणिः सैकतेषु तु सर्वत्र समन्तादविच्छिन्नेत्यर्थः ॥ २१ ॥

सध्वानमिति । सध्वानं सशब्दं निपतिता निर्झराः प्रवाहाः यासु तासु । 'प्रवाहो निर्झरो झरः' इत्यमरः। अधित्यकासु नगोर्ध्वभूमिषु 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां,—इत्यादिना त्यकन्प्रत्ययः। मन्द्रैः गम्भीरैः 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः। प्रतिनिनदैः प्रतिध्वानैः संमूर्च्छन् वर्द्धमानः रथानां ध्वनिर्घनरवशङ्कया मेघगर्जितभ्रमेणेति भ्रान्तिमद-

उदग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥ २२॥
सम्भिन्नामविरलपातिभिर्मयूखैः
नीलानां भृशमुपमेखलं मणीनाम् ।
विच्छिन्नामिव वनिता नभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयाम्बभूवुः ॥ २३ ॥
आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४ ॥

लङ्कारः । उदग्रीवैर्मयूरैः सोत्कण्ठम् उपशुश्रुवे उपश्रुतः । शृणोतेः कर्मणि लिट् ॥ २२ ॥

सम्भिन्नामिति । अविरलपातिभिर्निरन्तरप्रसारिभिरुपमेखलं मेखलातटेषु इत्यर्थः । 'अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धने' इति यादवः । नीलानां मणीनां मयूखैर्भृशं सम्भिन्नामेकीभूतामतएव नभोऽन्तराले विच्छिन्नामिव स्थितामित्युत्प्रेक्षा । वप्राम्भःस्रुतिं वप्रोदकधारां वनिताः अवलोकयाम्बभूवुः । वप्राम्भःस्रुतेः स्वधवलिमत्यागेनेन्द्रनीलानां नीलिम स्वीकाररूपतद्गुणोत्थापिता विच्छेदोत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सङ्करः । तेन च नैल्यविच्छेदभ्रमरूपो भ्रान्तिमान् व्यज्यते ॥ २३ ॥

आसन्नेति । धुरं गतास्तेषां धूर्गतानां नियन्तॄणां धियमवमत्य अगणयित्वा अवज्ञाय इति यावत् आसन्नायां द्विपपदव्यां वनगजमार्गे यो मदानिलः तस्मै क्रुध्यन्तस्तं प्रति कुप्यन्तः । 'क्रुधद्रुह'—इत्यादिना सम्प्रदानत्वाच्चतुर्थी । सव्याजं सकपटं निजकरिणीभिरात्तचित्ताः आकृष्टचित्ताः सुरकरिणो देवनागाः प्रस्थानं गमनं कथञ्चित् कष्टेन ईषुरभिलेषुः ॥ २४ ॥

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं
पर्य्यस्यत् नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा
धर्म्मान्तक्षुभितजलेव जह्नुकन्या ॥ २५ ॥

सम्भोगक्षमगहनामथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहाया
वृत्रारेरविरलशाद्वलां धरित्रीम् ॥ २६ ॥

भूभर्तुः समधिकमादधे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः ।

नीरन्ध्रमिति । नीरन्ध्रं सान्द्रं पथिषु रथाङ्गैश्चक्रैर्नुन्नं प्रेरितम् । 'नुत्त-नुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समाः' इत्यमरः । पर्य्यस्यत् प्रसर्पन्नवसलिलमिवारुणं रजो वहन्ती सा वाहिनी सेना धर्म्मान्ते प्रावृषि क्षुभितजला कलुषोदकेत्यर्थः । जह्नुकन्या गङ्गेव वनानि फलकुसुमप्रधानानि गहनानि जीर्णानि च तानि च वनगहनानि आतेने व्यानशे । अत्र समासगतवाक्यगतोपमयोः सजातीययोरङ्गाङ्गिभावेन सङ्करः ॥ २५ ॥

सम्भोगेति । अथ वृत्रारेः शक्रस्य सहायाः सचिवाः गन्धर्व्वाः उपगङ्गं गङ्गासमीपे । अव्ययीभावस्य नपुंसकत्वात् ह्रस्वत्वम् । सम्भोगक्षमगहनामुपभोगयोग्यवनां ज्वलिता मणयो येषु तानि सैकतानि बिभ्राणाम् । भृञः कर्त्तरि लटः शानच् । च्युतैः स्वयं पतितैः कुसुमैः आचितां व्याप्तामविरलाः सान्द्राः शाद्वलाः शादप्रायप्रदेशा यस्यां सा तां धरित्रीम् अध्यूषुः अधितस्थुः । वसतेर्य्यजादित्वात् सम्प्रसारणम् । अत्र धरित्रीविशेषणार्थानामधिवासहेतुत्वादनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २६ ॥

भूभर्तुरिति । तदा हरिसखवाहिनीनिवेशो गन्धर्व्वसेनाशिबिरम् ।

संसक्तौ किमसुलभं महोदयानाम्
उच्छ्रायं नयति यदृच्छयापि योगः ॥ २७ ॥
सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किसलयशालिनी लतानाम् ।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८ ॥
क्लान्तोऽपि त्रिदशवधूजनः पुरस्तात्
लीनाहिश्वसितविलोलपल्लवानाम् ।

'निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्तितः' इति शाश्वतः। भूभर्तुः पर्व्वतस्य उर्व्याः समधिकं पूर्व्वस्मादभ्यधिकं यथा तथा श्रीमत्तां श्रियमित्यर्थः। आदधे जनयामास। तथाहि—महोदयानां महात्मनां संसक्तौ सम्यक् सम्बन्धे। 'सम्भक्तौ' इति पाठे तु सम्यक् सेवायाम् किमसुलभम्? न किञ्चिद्दुर्लभमित्यर्थः। यतः—यदृच्छया दैवाद्योगोऽपि उच्छ्रायमुत्कर्षं नयति। अत्र कृतयदृच्छया योगस्योत्कर्षाभिधानादप्रकृतभक्तियोगस्योत्कर्षाधायकत्वे कैमुतिकन्यायेनार्थापत्तिरिति प्राकरणिकादप्राकरणिकरूपार्थापत्तिरलङ्कारः। तदुक्तम्—'एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा पतेत्। कैमुत्येन यतः सा स्यादर्थापत्तिरलङ्क्रिया॥' इति ॥ २७ ॥

सामोदा इति। सामोदाः ससौरभाः कुसुमप्रधानास्तरवः शाकपार्थिवादिषु द्रष्टव्यः। तेषां श्रियः समृद्धयः विविक्ताः विजनप्रदेशाः। 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः। किसलयशालिनीलतानां नवपल्लवयुतवल्लीनां सम्पत्तिरिति। अमराङ्गनोपभुक्ताः सत्यः साफल्यं ययुः। तथाहि—यया लक्ष्म्या करणेन परेषामुपकुरुते लक्ष्मीवानिति शेषः। सा लक्ष्मीः न अन्येति भावः। परेषामित्यत्र 'अनुकरोति भगवतो नारायणस्य' इत्यादिवत् क्रियायोगे हि सम्बन्धसामान्ये षष्ठी ॥ २८ ॥

क्लान्त इति। क्लान्तोऽपि त्रिदशवधूजनः पुरस्तादग्रे लीनानां संश्रितानाम्

कि—२८

सेव्यानां हतविनयैरिवावृतानां
सम्पर्कं परिहरति स्म चन्दनानाम् ॥ २९ ॥

उत्सृष्टध्वजकुथकङ्कटा धरित्रीम्
आनीता विदितनयैः श्रमं विनेतुम् ।
आक्षिप्तद्रुमगहना युगान्तवातैः
पर्यस्ता गिरय इव द्विपा विरेजुः ॥ ३० ॥

प्रस्थानश्रमजनितां विहाय निद्राम्
आमुक्ते गजपतिना सदानपङ्के ।
शय्यान्ते कुलमलिनां क्षणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥ ३१ ॥

अहीनां श्वसितैर्निश्वासैर्विलोलाः पल्लवा येषां तेषां चन्दनानां सम्पर्कं हतविनयैर्दुर्जनैः खलैरावृतानां संवृतानां सेव्यानां प्रभूणां सम्पर्कमिव परिहरति स्म। दुष्टवद्दुष्टसंसृष्टा गुणाढ्या अपि त्याज्या इति भावः ॥ २९ ॥

उत्सृष्टेति। उत्सृष्टा आक्षिप्ताः ध्वजाः कुथाः आस्तरणानि कङ्कटास्तनुत्राणानि च येभ्यस्ते। 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः। विदितनयैः शिक्षाभिज्ञैर्यन्तृभिः श्रमं विनेतुं क्लममपनेतुं धरित्रीमानीताः निवेश्यमाना इत्यर्थः। द्विपा युगान्तवातैराक्षिप्तानि उद्धतानि द्रुमाणां गहनानि वनानि येभ्यस्ते पर्यस्ता विपर्यासिता गिरय इव विरेजुः शुशुभिरे ॥ ३० ॥

प्रस्थानेति। गजपतिना प्रस्थानश्रमेण गमनक्लेशेन जनितां निद्रां विहाय आमुक्ते अतएव सदानपङ्के गजमदयुक्ते शय्यान्ते शयनीयप्रदेशे क्षणं विलीनं लग्नम् अलिनां कुलं संरम्भेणोत्थानसम्भ्रमेण च्युतं भ्रष्टं शृङ्खलं निगडमिवेत्युत्प्रेक्षा। 'अथ शृङ्खले—अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः। चकाशे शुशुभे ॥ ३१ ॥

आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्द्धानं निहितशिताङ्कुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥ ३२ ॥
आरोढुः समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।
संमार्जन्नरुणमदस्रुतौ कपोलौ
सस्यन्दे मद इव शीकरः करेणोः ॥ ३३ ॥
आघ्राय क्षणमतितृष्यतापि रोषात्
उत्तीरं निहितविवृत्तलोचनेन ।

आयस्त इति । वनगजदानस्य गन्धोऽस्यास्तीति तथोक्तं रोधः परकूलमित्यर्थः । सम्प्राप्तुं गन्तुमायस्तः उत्सुकः प्रयत्नं कुर्व्वाण इत्यर्थः । 'यसु प्रयत्ने' इति धातोः कर्त्तरि क्तः । किन्तु सुरसरिदोघेन गङ्गाप्रवाहेण रुद्धं वर्त्म यस्य सः । नागो गजो निहितो दत्तः शितस्तीक्ष्णोऽङ्कुशो यस्मिन् । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः । तं मूर्द्धानं विधुन्वन् रोषादिति भावः । यन्तारं न विगणयाञ्चकार न विगणयामास ॥ ३२ ॥

आरोढुरिति । समवनतस्य जलपानार्थमानतपूर्व्वकायस्य करेणोर्गजस्य । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । करेण पीतस्य शेषे पयसि आरोढुर्हस्तिपकात् साशङ्कं सभयं समीरिते क्षिप्ते सतीत्यर्थः । शीकरोऽम्बुकणः अरुणे मदस्रुती मदधारे ययोस्तौ कपोलौ संमार्जन् प्रमृजन् । 'मृजेरजादौ सङ्क्रमे विभाषावृद्धिर्व्वक्तव्या' इति वृद्धिः । मद इव सस्यन्दे सुस्राव स्रवन्मदसम्पृक्तस्य मदसादृश्यान्मदोपमा ॥ ३३ ॥

आघ्रायेति । अतितृष्यता अपि अतिपिपासतापि क्षणमाघ्राय रोषादुत्तीरं परतीरे । विभक्त्यर्थेऽव्ययीभावः । निहिते विवृत्ते घूर्णिते लोचने यस्य

सम्पृक्तं वनकरिणां मदाम्बुसेकै:
नाचेमे हिममपि वारि वारणेन ॥ ३४ ॥
प्रस्रोतन्मदसुरभीणि निम्नगाया:
क्रीड़न्तो गजपतय: पयांसि कृत्वा ।
किञ्जल्कव्यवहितताम्रदानलेखै:
उत्तेरु: सरसिजगन्धिभि: कपोलै: ॥ ३५ ॥
आकीर्णं बलरजसा घनारुणेन
प्रक्षोभै: सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ ३६ ॥

तेन प्रतिगजदिदृक्षयेति भाव:। वारणेन हिमं शीतलमपि वनकरिणां मदाम्बुसेकैर्दानधाराभि: सम्पृक्तं वारि न आचेमे न पीतम्। चमु अदने इति धातो: कर्मणि लिट् ॥ ३४ ॥

प्रस्रोतदिति। क्रीड़न्तो विहरन्तो गजपतय: निम्नगाया: गङ्गाया: पयांसि प्रस्रोतद्भि: चरद्भिर्मदै: सुरभीणि कृत्वा किञ्जल्कै: केसरैर्व्यवहितास्तिरोहिता-स्ताम्रवर्णा दानलेखा मदराजयो येषु तैरत एव सरसिजगन्धिभि: कपोलैरुप-लक्षिता: सन्त: उत्तेरुर्निर्जग्मु:। अत्र मदसरसिजगन्धयो: समयोर्विनिम-योक्तया समपरिवृत्तिरलंकार:। तेन च गजानां निम्नगायाश्च परिमलव्यत्यया-न्तरसंरम्भो व्यज्यते ॥ ३५ ॥

आकीर्णमिति। घनारुणेन सान्द्रलोहितेन विशेषणसमास:। बलरजसा सेनापरागेणाकीर्णं सपदि प्रक्षोभैरालोडनैस्तटेषु तीरेषु तरङ्गितं संजात-तरङ्गम्। तारकादित्वादितच्। यद्वा तरङ्गवत् कृतं मत्वन्तात् 'तत्करोति' इति णिचि कर्मणि क्त:। णाविष्टवद्भावात्मतुपो लुक्। तथा मातङ्गैरुन्मथितानां लुलितानां सरोजानां रेणुभि: पिङ्गं पिशङ्गमम्बु माञ्जि-

श्रीमद्भिर्नियमितकन्धरापरान्तैः
संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निस्रुतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७ ॥

निःशेषं प्रशमितरेणु वारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम् ।
आमोदं व्यवहितभूरिपुष्पगन्धो
भिन्नैलासुरभिमुवाह गन्धवाहः ॥ ३८ ॥

ष्ठेन महारञ्जनेनारक्तं माञ्जिष्ठं वसनमिव निर्बभासे 'तेन रक्तं—' इत्यण् । 'माञ्जिष्ठम्' इत्यत्र 'कौशेयम्' इति वा पाठे 'कोशाड् ढञ्' । 'कौशेयं कृमिकोशोत्थम्' इत्यमरः ॥ ३६ ॥

श्रीमद्भिरिति । श्रीमद्भिः शोभावद्भिर्नियमिताः कन्धराः अपरान्ताश्चरमपादाग्राणि च येषां तैः । 'अपरः पश्चिमः पादः' इति वैजयन्ती । अगुरुवनेषु साङ्गहारं साङ्गविक्षेपं यथा तथा संसक्तैर्निस्रुतानि प्रस्रुतानि मदाम्बूनि येषां तैर्गजेन्द्रैः प्रस्यन्दिनो जलस्राविणः प्रचलिता ये गण्डशैलाश्च्युतोपलास्तेषां शोभा संप्रापे प्राप्ता । कर्मणि लिट् । 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः । अत्र अन्यस्य अन्यशोभाप्राप्त्यसंभवात्तत्सदृशी शोभेति प्रतिबिम्बत्वाक्षेपान्निदर्शनालंकारः ॥ ३७ ॥

निःशेषमिति । गन्धं वहतीति गन्धवाहो वायुः कर्मण्यण् । निःशेषं यथा तथा प्रशमितो रेणुर्येन तन्मदजलं स्रोतोभिर्मदनाडीभिरजस्रमुज्झतां वर्षतां वारणानां सम्बन्धिनं व्यवहितस्तिरस्कृतो भूरिर्बहुलः पुष्पगन्धो येन सः । भिन्नाः फुल्ला एला लताविशेषाः । 'पृथ्वीका चन्द्रवालैला' इत्यमरः । तत्पुष्पाणि च एलाः । 'पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले' इत्यमरः । भिन्नैलावत्सुरभिं सुगन्धिं घ्राणेन्द्रियतर्पणमित्युपमा । आमोदं परिमलमुवाह वहति स्म ॥ ३८ ॥

साहश्यं दधति गभीरमेघघोषै-
रुन्निद्रक्षुभितमृगाधिपश्रुतानि ।
आतेनुश्चकितचकोरनीलकण्ठान्
कच्छान्तानमरमहेभबृंहितानि ॥ ३९ ॥

शाखावसक्तकमनीयपरिच्छदाना-
मध्वश्रमातुरवधूजनसेवितानाम् ।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ ४० ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये सप्तमः सर्गः ।

साहश्यमिति । गभीरैर्मेघघोषैः सान्द्रगर्जितैः साहश्यं दधतीत्युपमा । दधातेः शतृप्रत्ययः । 'वा नपुंसकस्य' इति विकल्पान्नुमभावः । उन्निद्रा बृंहितश्रवणादेव प्रबुद्धाः क्षुभिताः संरब्धाश्च ये मृगाधिपास्तैः श्रुतानि आकर्णितानि न तु प्रबुद्धानीति भावः । अमरमहेभबृंहितानि महान्तश्च ते इभा गजाश्च इति महेभाः अमराणां महेभा तेषां बृंहितानि गर्जितानि कच्छान्तान् अनुपप्रदेशान् । 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' इत्यमरः । चकिता गर्जितशङ्कया सम्भ्रान्ताश्चकोराः पक्षिविशेषा नीलकण्ठा मयूराश्च येषु तान् तथाभूतान् आतेनुः । भ्रान्तिमदलङ्कारः ॥ ३९ ॥

शाखेति । परिच्छाद्यतेऽनेनेति परिच्छदः परिकरो वसनाभरणादिः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । 'छादेर्घेऽद्व्युपसर्गस्य' इति ह्रस्वत्वम् । शाखासु अवसक्ताः कमनीयाः परिच्छदा येषां तेषामध्वनि अमस्तेनातुरैः पीडितैर्वधूजनैः सेवितानां निवेशनविभागैरावसतिकावच्छेदैः परिष्कृतानामलङ्कृतानाम् । 'सम्पर्युपेभ्यः'—इत्यादिना सुट् । वनपादानामरण्यवृक्षाणां पुरे यदुपवनं कृत्रिमवनं तत्र जाता पुरोपवनजा लक्ष्मीः शोभा जज्ञे जाता । अत्रान्योन्यलक्ष्मीसम्बन्धासम्भवात्तत्सदृशीति साहश्याक्षेपाद-

## अष्टमः सर्गः ।

अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम् ।
सुराङ्गना गोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः ॥ १ ॥

यथायथं ताः सहिता नभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः
क्षणद्युतीनां दधुरेकरूपताम् ॥ २ ॥

सम्भवे तद्वस्तुसम्बन्धेयं निदर्शना । वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ४० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां सप्तमः सर्गः ।

अथेति । अथ निवेशनानन्तरं सुराङ्गना अप्सरसः स्वमायया स्वेच्छाविशेषेण कृतैः निर्मितैः उज्ज्वलं दीप्तम्' ज्वलन्तो मणयो यस्मिन् तद्व्योमसदां गन्धर्वाणां सनातनं सदातनम् । 'सायं चिरं' इत्यादिना भावार्थे ट्युप्रत्ययः । गौः वज्रं तत्पतिरिन्द्रस्तच्चापवर्णानि गोपुराणि यस्य तत्तथोक्तमित्युपमा । पुरं नगरं वनानां विजिहीर्षया वनानि विहर्तुमिच्छया कर्मणि षष्ठी । जहुस्तत्यजुः 'जहातेर्लिट्' । अत्र ज्वलं ज्वलदिति पुरं पुरमिति च असकृद्व्यञ्जनद्वयावृत्त्या छेकानुप्रासः । अन्यत् तद्वैपरीत्यात् वृत्त्यनुप्रास इति तयोः उपमायाश्च संसृष्टिः । अस्मिन् सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

निवृत्तवृत्तोरुपयोधरक्लमः
प्रवृत्तनिर्ह्रादिविभूषणारवः ।
नितम्बिनीनां भृशमादधे धृतिं
नभःप्रयाणादवनौ परिक्रमः ॥ ३ ॥

घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयान्यपहाय शाखिनः ।
पुरोऽभिसस्रे सुरसुन्दरीजनैः
यथोत्तरेच्छा हि गुणेषु कामिनः ॥ ४ ॥

यथायथमिति । यथायथं यथास्वं स्वकीयमनतिक्रमेणेत्यर्थः । 'यथास्वं तु यथायथम्' इत्यमरः । नपुंसकत्वात् ह्रस्वत्वम् । नभश्चरैर्गन्धर्वैः मेघैः च सहिताः प्रभाभिः स्वदीप्तिभिरुद्भासिताः शैलवीरुधो याभिस्ताः पूर्वोक्ता वनजायतेक्षणाः पद्मलोचनाः स्त्रियो वनं विशन्त्यः क्षणं द्युतिर्यासां तासां क्षणद्युतीनां विद्युतामेकरूपतां समानरूपतां दधुः । मुहुर्मुहुर्भ्रमान्तराले तासां स्फुरणस्य क्षणिकत्वादिति भावः । श्लेषानुप्राणितेयमुपमा । श्लेषत्वमिति केचित् । उभयथाप्यनुप्रासेन संसर्गः ॥ २ ॥

निवृत्तेति । निवृत्तो गतो वृत्तस्य वर्तुलस्य ऊरुपयोधरस्य क्लमो यस्मिन् सः पादप्रक्षेपेषु विश्रान्तिसम्भवादिति भावः किञ्च—प्रवृत्तो जातो निर्ह्रादिविभूषणानां नूपुरादीनामारवो यस्मिन् सः । अवनौ पृथिव्यां परिक्रमः सञ्चारो नितम्बिनीनां नभःप्रयाणाद्भृशमधिकम् । 'पञ्चमी विभक्ते' इति पञ्चमी । धृतिं सन्तोषमादधे । अत्र विशिष्टपरिक्रमस्य धृत्याधान-हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ३ ॥

घनानीति । घनानि सान्द्राणि न तु विरलानि । करप्रचेयानि हस्त-ग्राह्याण्यनुच्चानि 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः । कामं कुसुमानि बिभ्रतः नवकुसुमितान् शाखिनस्तरून् अपहाय सुरसुन्दरीजनैः पुरोऽग्रेऽभिसस्रेऽभिगतम् । भावे लिट् । तथाहि—कामिनो गुणेष्वतिशयेषु

तनूरलक्तारुणपाणिपल्लवाः
स्फुरन्नखांशूत्करमञ्जरीभृतः ।
विलासिनीबाहुलता वनालयो
विलेपनामोदहृताः सिषेविरे ॥ ५ ॥

निपीयमानस्तवका शिलीमुखै-
रशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनै-
रमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥

करौ धुनाना नवपल्लवाकृती
वृथा कृथा मानिनि, मा परिश्रमम् ।

विषये उत्तरमुत्तरम्, वीप्सार्थेऽव्ययीभावः । यथोत्तरम् इच्छा येषां ते यथोत्तरेच्छाः उत्तरोत्तराभिलाषुका हि । अत्र परिकरोत्थापितोऽर्थान्तरन्यासोऽलङ्कारः ॥ ४ ॥

तनूरिति । विलेपनामोदैर्हृता आकृष्टा वनालयो वनभृङ्गास्तनूः कृशाः अलक्तैररुणाः पाणय एव पल्लवा यासां ताः स्फुरन्तो नखांशूनामुत्कराः पुञ्जा एव मञ्जर्यस्ता बिभ्रतीति तथोक्ताः, क्विप् । विलासिनीनां बाहवः एव लतास्ताः सिषेविरे । अत्र समस्तवस्तुविषयरूपकालङ्कारः । बाह्ववयवानां लतावयवानां पल्लवादीनामपि निरूपणादिति ॥ ५ ॥

निपीयमानेति । शिलीमुखैरलिभिः 'अलिबाणौ शिलीमुखौ' इत्यमरः । निपीयमानः स्तवको गुच्छो यस्याः सा चलाः बालपल्लवाः यस्याः सा । अत एवामन्दं दृढं दष्टः ओष्ठः यस्मिन् तत्करावधूननं करकम्पनं तद्विडम्बयन्ती । स्तवकपानेनौष्ठदंशनं पल्लवचलनेन करावधूननं चानुकुर्वतीत्यर्थः धूञो ल्यन्तात् लुयट् । णिचि धूञ्प्रीञोर्नुग्वक्तव्यः । अशोकयष्टिः अशोकशाखेत्यर्थः । वधूजनैर्ददृशे दृष्टा । अत्र विडम्बयन्तीति प्रस्तुताशोकशाखाविशि-

उपेयुषी कल्पलताभिशङ्कया
कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ७ ॥

जहीहि कोपं दयितोऽनुगम्यतां
पराऽनुशेते तव चञ्चलं मनः ।
इति प्रियं काञ्चिदुपैतुमिच्छतीं
पुरोऽनुनिन्ये निपुणः सखीजनः ॥ ८ ॥

समुन्नतैः काशदुकूलशालिभिः
परिक्वणत्सारसपङ्क्तिमेखलैः ।
प्रतीरदेशैः स्वकलत्रचारुभिः
विभूषिताः कुञ्जसमुद्रयोषितः ॥ ९ ॥

षणभूतोपमामहिम्ना अप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुत्तिष्ठमानयैवोपमयाऽङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ६ ॥

अथ कश्चिन्मधुकराक्रान्तां काञ्चिदाह—कराविति । मानपरिहारेण मधुपाश्रयणे तु न कश्चिद्बाध इत्याशयेन सम्बोधयति—हे मानिनीति। नवपल्लवस्य आकृतिरिव आकृतिः ययोरित्युपमा । तौ करौ धुनाना, धूञः क्रैयादिकात् कर्त्तरि लटः शानच् । वृथा व्यर्थं परिश्रमं मा कृथा मा कुरुष्व। करोतेराशीरर्थे माङि लुङ् । वृथात्वे हेतुमाह—कल्पलताभिशङ्कया कल्पवल्लीभ्रमेणेति भ्रान्तिमदलङ्कारः । उपेयुषी उपगता षट्पदावलिः कथं नु इतस्त्रस्यति बिभेति न त्रस्यत्येवेत्यर्थः । 'वा भ्राश'—इत्यादिना विकल्पेन श्यन्प्रत्ययः । अत्र कान्तापरिश्रमवैयर्थ्यरूपकार्य्यस्य षट्पदावलेः कल्पवल्लीभ्रमनिबन्धनविलासरूपकारणसमर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासो भ्रान्तिमताङ्गाङ्गिभावेन सङ्कीर्णः सन् उपमया संसृज्यते ॥ ७ ॥

अथ काचित् सखी काञ्चित् प्रणयकुपितामाह—जहीहीति । प्रियमुपेतुं स्वयमेवानुसर्तुमिच्छतीम् । 'आच्छीनद्योर्नुम्' इति विकल्पानुम

विदूरपातेन भिदामुपेयुषः
च्युताः प्रवाहादभितः प्रसारिणः ।
प्रियाङ्कशीताः शुचिमौक्तिकत्विषो
वनप्रहासा इव वारिबिन्दवः ॥ १० ॥

सखीजनं प्रेम गुरूकृतादरं
निरीक्षमाणा इव नम्रमूर्त्तयः ।

भावः । काश्चिन्नायिकां निपुणश्चिन्तकः सखीजनः कोपं जहीहि त्यज । 'आ च हौ' इति विकल्पादीकारादेशः । दयितोऽनुगम्यतामनुस्रियताम् । उभयथापि प्रार्थनायां लोट् । अन्यथा चञ्चलमस्थिरं तव मनः पुरोऽनुशेतेऽग्रे अनुशयिष्यते अनुतप्स्यते इत्यर्थः । 'यावत् पुरानिपातयोर्लट्' इति लट् । इत्यनेन प्रकारेण पुरः पूर्व्वमेवानुनिन्ये प्रसादयामास ॥ ८ ॥

अथ चतुर्भिः श्लोकैः कलापकमाह—समुन्नतैरिति । समुन्नतैः काशानि अश्ववालकुसुमानि तानि दुकूलानीव तैः शालन्ते इति तथोक्तैः सारसपङ्क्तयो मेखला इव ताः परिक्वणन्त्यो येषु ते तैः स्वेषां कलत्राणि श्रोण्यस्तद्वच्चारुवस्तैः । 'कलत्रं श्रोणिभार्य्ययोः' इत्यमरः । प्रतीरदेशैर्विभूषितास्तटप्रदेशैर्भूषिताः कुञ्जसमुद्रयोषितः वननद्यः इत्यर्थः । अत्र तीरादीनां कलत्रादौपम्योपमेयत्वात् योषिच्छब्दसामर्थ्याच्च नदीनां योषिदौपम्यं गमयते ॥ ९ ॥

विदूरेति । विदूरपातेन भिदां भेदम् । 'षिद्भिदादिभ्योऽङ्' उपेयुषः उपगतात् प्रवाहाच्च्युताः अतएवाभितः प्रसारिणः प्रसर्पन्तः इति प्रियाया अङ्कः उत्सङ्गः इव शीताः शीतलाः शुचीनां मौक्तिकानां त्विष इव त्विषो येषां ते । किञ्च—वनस्य प्रहासा इव स्थिता इत्युत्प्रेक्षा । वारिबिन्दवश्च । अत्रोपमयोः उभयोरुत्प्रेक्षायाश्च संसृष्टिः ॥ १० ॥

सखीति । द्वौ रेफौ वर्णविशेषौ येषां ते द्विरेफाः । भ्रमरशब्देन तदर्थो लक्ष्यते । 'द्व्यक्षरं मासमिति विदधाति' इति भाष्यकारः । स्थिराः निश्चलाः

स्थिरद्विरेफाञ्जनशारितोदरैः

विसारिभिः पुष्पविलोचनैर्लताः ॥ ११ ॥

उपेयुषीणां बृहतीरधित्यका

मनांसि जह्रुः सुरराजयोषिताम् ।

कपोलकाषैः करिणां मदारुणै:

उपाहितश्यामरुचश्च चन्दनाः ॥ १२ ॥

॥ कलापकम् ॥

स्वगोचरे सत्यपि चित्तहारिणा

विलोभ्यमानाः प्रसवेन शाखिनाम् ।

द्विरेफा एवाञ्जनानि तः शारितानि शबलीकृतानि उदराणि येषां तैः । 'शारः शबलवातयोः' इति विश्वः । विसारिभिर्विसृतैः पुष्पाण्येव विलोचनानि तैः प्रेम्णा गुरुकृतः आदरो यस्मिन् कर्म्मणि तत्तथा सखीजनं निरीक्षमाणाः पश्यन्त्य इव स्थिताः । कुतः ? नम्रमूर्त्तयोऽवनताङ्ग्यः लताश्च । अत्र रूपकोत्प्रेक्षयोः सङ्करः ॥ ११ ॥

उपेयुषीणामिति । मदेनारुणैरव्यक्तरागैः । 'अव्यक्तरागस्त्वरुणः' इत्यमरः । करिणां कपोलानां काषैः कषणैरुपाहितश्यामरुचो जनितकृष्णवर्णा इति तद्भूषणालङ्कारः । चन्दना मलयजाः । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः । बृहतीरधित्यका ऊर्द्ध्वभूमीरुपेयुषीणां सुरराजयोषितां मनांसि जह्रुः । अत्र चतुःश्लोक्या नद्यादीनां विशिष्टानामेवाप्सरोमनोहरणहेतुत्वोक्त्या काव्यलिङ्गमुन्नेयम् ॥ १२ ॥

स्वगोचर इति । चित्तहारिणा मनोहरेण शाखिनां प्रसवेन पुष्पजातेन विलोभ्यमानाः आकृष्यमाणा योषितः स्वगोचरे स्वविषये स्वकरप्रचये सत्यपीत्यर्थः । प्रसवे इति शेषः । उपकर्त्तुं परिचरितुमिच्छतां नभश्चरानां

नभश्चराणामुपकर्तुमिच्छतां
प्रियाणि चक्रुः प्रणयेन योषितः ॥ १३ ॥
प्रयच्छतोच्चैः कुसुमानि मानिनी
विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं
लिलेख बाष्पाकुललोचना भुवम् ॥ १४ ॥
प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया ।
समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम् ॥ १५ ॥

गन्धर्वाणां प्रणयेन सहायहेतुना प्रियाणि चक्रुः । स्वकरग्राह्यमपि प्रसवं स्वकान्तप्रियार्थं तद्दीयमानमिवाग्रहीषुरित्यर्थः ॥ १३ ॥

प्रयच्छतेति । कुसुमानि प्रयच्छता ददता दयितेन उच्चैः उच्चैस्तरां विपक्षगोत्रं सपत्नीनामधेयं लम्भिता प्रापिता तन्नाम्ना आहूतेत्यर्थः । 'नाम गोत्रं कुलं गोत्रम्' इति शाश्वतः । मानिनी अतएव न किञ्चिदूचे । कर्त्तरि लिट् । किन्तु केवलं बाष्पाकुललोचना सती चरणेन भुवं लिलेख । गोत्रस्खलनजनितेर्ष्यानिमित्तनिर्वेदादिति भावः । मानिनी अतएव न किञ्चिदूचे इत्युक्तम् । तदुक्तं दशरूपके—'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना । तत्र चिन्तास्रुनिःश्वासवैवर्ण्योच्छ्वासदीनता' इति ॥ १४ ॥

प्रिय:इति । वाचं यच्छति ददति समालपतीत्यर्थः । दाणः शत्रप्रत्ययः । 'पाघ्रा' इत्यादिना यच्छादेशः । प्रिये निबद्धदृष्टिरतएवोन्मुखी शिथिलः श्लथः आकुलश्चलितश्च तादृशः उच्चयो नीवीबन्धो यस्याः सा । 'नारीकट्यंशुकग्रन्थौ नीविः स्यादुच्चयोऽप्यथ' इति मार्त्तण्डः । अपरा अन्या स्त्री अंशुकं न समादधे न बबन्ध, रागपारवश्यादिति भावः । पुष्पेषु वृथा व्यर्थमाहितम्

सलीलमासक्तलतान्तभूषणं
समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीडं नुनुदे नितम्बिना
घनेन कश्चिज्जघनेन कान्तया ॥ १६ ॥

कलत्रभारेण विलोलनीविना
गलद्दुकूलस्तनशालिनोरसा ।
बलिव्यपायस्फुटरोमराजिना
निरायतत्वादुदरेण ताम्रता ॥ १७ ॥

विलम्बमानाकुलकेशपाशया
कयाचिदाविष्कृतबाहुमूलया ।

आरोपितम् अस्थाने प्रसारितमित्यर्थः । पाणिपल्लवं च न विवेद, प्रियासक्तचित्तत्वादिति भावः । एषा च प्रगल्भा नायिका । 'पाणिपल्लवम्' इत्यत्रान्यतरसाधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करः ॥ १५ ॥

सलीलमिति । आसक्ता लतान्ताः पल्लवा भूषणं यस्य तत् पल्लवैः सह ग्रथितमित्यर्थः । कुसुमावतंसकं पुष्पशेखरम्, कान्तदत्तमिति भावः । सलीलं सविलासं समासजन्त्या शिरसि प्रतिदधत्या । 'दंशसञ्जस्वञ्जां शपि' इति नलोपः । कान्तया कश्चित् स्तनाभ्यामुपपीड्येति स्तनोपपीडम् । 'सप्तम्यां च' इत्यादिना णमुल्प्रत्ययः । नितम्बिना प्रशंसायामिनिः । घनेन निविडेन जघनेन । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । नुनुदे नुन्नः, अंशुकातिरेकादिति भावः । एषा च प्रगल्भैव ॥ १६ ॥

अथ युग्मेनाह कलत्रेति । विलोलनीविना गात्रोन्नमनाद्विश्लिष्टवस्त्रग्रन्थिना कलत्रभारेण श्रोणिभारेण । 'कलत्रं श्रोणिभार्य्ययोः' इत्यमरः । तथा गलत् स्रंसमानं दुकूलं याभ्यां ताभ्यां स्तनाभ्यां शालते इति तथोक्तेन उरसा तथा बलिव्यपायेन भङ्गिनिवृत्त्या स्फुटा रोमराजिर्यस्मिन् तेन निराय

तरुप्रसूनान्यपदिश्य सादरं
मनोऽधिनाथस्य मनः समाददे ॥ १८ ॥
॥ युग्मम् ॥

व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मना:
प्रियं जघानोन्नतपीवरस्तनी ॥ १९ ॥

इमान्यमूनीत्यपवर्ज्जिते शनैः
यथाभिरामं कुसुमाग्रपल्लवे ।

त्वात् अपसारितत्वात् तामग्रता तनूभवता उदरेण च उपलक्षितया स्वभावोक्ति-रलङ्कारः ॥ १७ ॥

विलम्बमानेति । विलम्बमानो विस्रंसमानः आकुलो विलुलितश्च केशपाशो यस्यास्तया आविष्कृतबाहुमूलया दर्शितकक्षप्रदेशया कयाचित् कान्तया तरुप्रसूनानि अपदिश्य प्रसूनग्रहणं व्याजीकृत्येत्यर्थः । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । सादरं साभिलाषं मनोऽधिनाथस्य प्रियस्य मनः समाददे आचकर्षे । कर्म्मणि लिट् । सर्व्वाङ्गसौष्ठवदर्शनात् सद्योलग्नं प्रियमनस्तत्रेति भावः । अत्र प्रियमनोहरणहेतुभिः कान्ताविशेषणपदार्थैः काव्यलिङ्ग-मुत्तिष्ठमानं स्वभावोक्त्या सहाङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १८ ॥

व्यपोहितुमिति । उन्नतौ च पीवरौ च स्तनौ यस्याः सा उन्नतपीवरस्तनी । 'स्वाङ्गाच्च' इत्यादिना ङीष् । काचित् लोचनतः स्वनेत्रात् पुष्पजं रजः परागं मुखानिलैः फूत्कारमारुतैर्व्यपोहितुम् अपनेतुमपारयन्तं किलाशक्नुवन्तं किलेत्यलीके । वस्तुतस्तदास्यस्पर्शलोभादपारयन्तमित्यर्थः । प्रियमुन्मनाः उत्सुका सती अतएव पयोधरेणोरसि जघान तत्कपटपरिज्ञानजन्यादौत्सुक्यादिति भावः । हननस्थानत्वादुरसीति सप्तमी, इयं च प्रगल्भैव ॥ १९ ॥

इमानीति । यथाभिरामम् वीप्सायामव्ययीभावः । कुसुमानि अग्र-

विहाय निःसारतयेव भूरुहान्
पदं वनश्रीर्वनितासु सन्दधे ॥ २० ॥

प्रवालभङ्गारुणपाणिपल्लवः
परागपाण्डूकृतपीवरस्तनः ।
महीरुहः पुष्पसुगन्धिराददे
वपुर्गुणोच्छ्रायमिवाङ्गनाजनः ॥ २१ ॥

वरोरुभिर्वारणहस्तपीवरैः
चिराय खिन्नान्नवपल्लवश्रियः ।
समेऽपि यातुं चरणाननीश्वरान्
मदादिव प्रस्खलतः पदे पदे ॥ २२ ॥

पल्लवानि च कुसुमाग्रपल्लवं तस्मिन् । 'जातिरप्राणिनाम्' इत्येकवद्भावान्नपुंसकत्वम् । इमान्यमूनीतीत्यम्, निर्देशपूर्वकमित्यर्थः । इदमदसी सन्निकृष्टविप्रकृष्टार्थे । अनैरपवर्जितेऽपचिते सति वनश्रीर्निःसारतयेवेति हेतूत्प्रेक्षा । भूरुहान् तरून् विहाय वनितासु पदं सन्दधे । अत्र वनितागतायाः पुष्पप्रसाधनसम्भाव्यमानाया लक्ष्म्या विषयभूताया निगरणेन विषयिणा वनश्रियो वनितागतत्वोत्प्रेक्षया सम्बन्धेऽसम्बन्धरूपाभेदेऽभेदरूपाऽतिशयोक्तिरलङ्कारः । विषयस्यानुपादानाद्विषयुत्प्रेक्ष्यते । यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता' । इति लक्षणादुत्प्रेक्षाङ्गत्वमस्याः ॥ २० ॥

प्रवालेति । प्रवालभङ्गेन पल्लववलयेन अरुणः पाणिपल्लवो यस्य तदनुरञ्जनादित्यर्थः । परागेण पुष्परजसा पाण्डूकृतौ पीवरौ स्तनौ यस्य स पुष्पैः सुगन्धिः सुरभिरङ्गनाजनो महीरुहो वृक्षजातात् वपुर्गुणस्य स्वदेहगुणस्य उच्छ्रायः पाणिपल्लवारुण्यादेः यः उत्कर्षस्तमाददे लब्धवानिवेत्युत्प्रेक्षा । वस्तुतस्तु स्वाभाविक एव प्रवालभङ्गादिभिः अभिव्यज्यते इति भावः ।

विसारिकाञ्चीमणिरश्मिलब्धया
मनोहरोच्छ्रायनितम्बशोभया ।
स्थितानि जित्वा नवसैकतद्युतिं
श्रमातिरिक्तैर्जघनानि गौरवैः ॥ २३ ॥

समुच्छ्वसत् पङ्कजकोशकोमलै-
रुपाहितश्रीण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु
स्तनातिभारादुदराणि नम्रताम् ॥ २४ ॥

उत्कृष्टः आय उच्छ्राये' इति घञन्तेन तु प्रादिसमासः। न तु उपसृष्टात् घञ्प्रत्ययः। 'श्रिणीभुवोऽनुपसर्गे' इति प्रतिषेधात् ॥ २१

पञ्चभिः कुलकमाह—वरोरुभिरित्यादिभिः। अनुसानु सानुषु यद्वर्त्म ततः सकाशाद्गुरुणा खेदेन मन्थरमलसं विनिर्य्यतीनां निर्गच्छन्तीनां सुराङ्गनानां सम्बन्धिभिर्व्वारणहस्तपीवरैः करिकरस्थूलैः वराश्च ते ऊरवश्चेति तैः। चिराय खिन्नान्। किञ्च नवपल्लवानां श्रीरिव श्रीर्य्येषां तान् तद्वत् मृदून् इत्यर्थः। अतएव समे समस्थलेऽपि किं पुनर्व्विषमे इति भावः। यातुं गन्तुमनीश्वरान् अशक्तान् अतएव मदादिव पदे पदे वीप्सायां द्विर्भावः, प्रस्खलतश्चरणान्। मदादिवेत्युपमा ॥ २२ ॥

विसारीति। विसारिभिः काञ्चीमणिरश्मिभिर्लब्धया तज्जनितयेत्यर्थः। मनोहरः उच्छ्रायः उत्सेधः येषां तेषां नितम्बानां शोभया करणेन नवसैकतानां द्युतिं शोभां जित्वा स्थितानि तत्तुल्यानीत्यर्थः। अतएव उपमालङ्कारः। श्रमेणातिरिक्तैरतिशयितैर्गौरवैर्गुरुत्वैरुपलक्षितानि नितरां भारायमाणानीत्यर्थः। जघनानि च। उच्छ्रायो व्याख्यातः ॥ २३ ॥

समुच्छ्वसदिति। समुच्छ्वसत् पङ्कजकोशकोमलैः उल्लसत् कमलमुकुलैः इव मुग्धैरित्युपमा। नाभिभिः प्रतारिकाख्यैः। 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका' इति केशवः। पुंलिङ्गतायां तु कविरेव प्रमाणम्।

समानकान्तीनि तुषारभूषणैः
सरोरुहैरस्फुटपत्रपङ्क्तिभिः ।
चितानि घर्म्माम्बुकणैः समन्ततो
मुखान्यनुत्फुल्लविलोचनानि च ॥ २५ ॥
विनिर्य्यतीनां गुरुखेदमन्थरं
सुराङ्गनानामनुसानु वर्त्मनः ।
सविस्मयं रूपयतो नभश्चरान्
विवेश तत् पूर्व्वमिवेक्षणादरः ॥ २६ ॥

॥ कुलकम् ॥

अथ स्फुरन् मीनविधूतपङ्कजा
विपङ्कतीरस्खलितोर्म्मिसंहतिः ।

उपनीवि नीविसमीपे उपाहितश्रीणि जनितशोभानि तथा बलीविभङ्गिषु ऊर्मिमत्सु मध्येषु जघनस्थलेषु स्तनातिभारान्नम्रतां दधन्ति बिम्बाणानि। 'वा नपुंसकस्य' इति विकल्पे नुमागमः । उदराणि च ॥ २४ ॥

समानेति । किञ्च घर्म्माम्बुकणैः स्वेदोदकबिन्दुभिः समन्ततश्चितानि व्याप्तानि अनुत्फुल्लविलोचनानि अविकसदक्षीणि अतएव तुषारभूषणैः शीकरपरिवृतैः। 'तुषारौ हिमशीकरौ' इति शाश्वतः । अस्फुटपत्रपङ्क्तिभिरविकचदलावलिभिः । 'व्याकोशविकचस्फुटाः' इत्यमरः । सरोरुहैः समानकान्तीनीत्युपमा । मुखानि च ॥ २५ ॥

विनिर्य्यतीनामिति । सविस्मयं रूपयतः पूर्व्वोक्तचरणादीनि वर्णयतो नभश्चरान् गन्धर्व्वान् तत् पूर्व्वमिव तदेव प्रथमं यथा तथेत्युत्प्रेक्षा । ईक्षणादर आलोकनकौतुकं विवेश । पूर्व्वार्द्धं व्याख्यातम् । अत्र कुलके स्वभावोक्तिरुत्प्रेक्षाङ्गम् ॥ २६ ॥

सम्प्रति सलिलक्रीड़ावर्णनमारभते—अथेति । अथ पुष्पावचयानन्तरं

पयोऽवगाढुं कलहंसनादिनी
समाजुहावेव वधूः सुरापगा ॥ २७ ॥

प्रशान्तघर्म्माभिभवः शनैर्व्विवान्
विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकर-
स्तरङ्गमालान्तरगोचरोऽनिलः ॥ २८ ॥

गतैः सहावैः कलहंसविक्रमं
कलत्रभारैः पुलिनं नितम्बिभिः ।
मुखैः सरोजानि च दीर्घलोचनैः
सुरस्त्रियः साम्यगुणान्निरासिरे ॥ २९ ॥

स्फुरद्भिश्चलद्भिर्मीनैर्व्विधूतपङ्कजेति सद्दशत्वात् मुखवीच्चणोक्तिः । विपङ्कं पङ्करहितम् विहारयोग्यमिति यावत् । तत्र तीरे स्खलिता विचलिता ऊर्म्मिसंहतिर्य्यस्याः सा इति हस्तसंज्ञोक्तिः । कलहंसनादिनी कादम्बशब्दवतीति वाग्व्यापारोक्तिः । अतएव सुरापगा गङ्गा वधूरप्सरसः पयोऽवगाढुमवगाहितुम् । गाहेरुदित्वात् इड्विकल्पः । समाजुहाव इव आकारयामास इवेत्युत् प्रेच्चा । 'हूतिराकारणाह्वानम्' इत्यमरः । ह्वयतेर्लिट् । 'अभ्यस्तस्य च' इति सम्प्रसारणम् ॥ २७ ॥

प्रशान्तेति । प्रशान्तघर्म्माभिभवः प्रशान्तोष्णबाधः । 'वा दान्तशान्त' इत्यादिना निपातनात् साधुः । शनैर्व्विवान्मन्दं वहन् । वातेः शतृप्रत्ययः । परिमृष्टपङ्कजः पद्मगन्धोत्यर्थः । आत्तशीकरः धुतः ? तरङ्गमालानामन्तरे मध्ये गोचरः स्थानं यस्य सोऽनिलो विलासिनीभ्यो भुजावलम्बनं ददाविवेत्युत् प्रेच्चा विशिष्टवायुसम्पर्कात्तथोच्छ्वसुरित्यर्थः ॥ २८ ॥

गतैरिति । सुरस्त्रियोऽप्सरसः सहावैः सविलासैः गतैर्गतिभिः । नपुंसके भावे क्तः । कलहंसानां विक्रमं गतिम्, विलासविधुरमिति शेषः ।

विभिन्नपर्य्यन्तगमीनपङ्क्तयः
पुरो विगाढाः सखिभिर्म्मरुत्वतः ।
कथञ्चिदापः सुरसुन्दरीजनैः
सभीतिभिस्तत् प्रथमं प्रपेदिरे ॥ ३० ॥

विगाढमात्रे रमणीभिरम्भसि
प्रयत्नसम्बाहितपीवरोरुभिः ।
विभिद्यमाना विससार सारसान्
उदस्य तीरेषु तरङ्गसंहतिः ॥ ३१ ॥

तथा नितम्बिभिः प्रशस्तनितम्बैः कलत्रभारैर्जघनभारैः पुलिनम्, नितम्बभारशून्यमित्यर्थः। तथा दीर्घलोचनैर्मुखैः सरोजानि च स्वलोचनानीति शेषः। साम्यगुणात् 'समानगुणत्वान्निरासिरे निरस्तवत्यः। गुणवदगुणयोः कुतः साम्यमिति भावः। अस्यतेः कर्त्तरि लिट्। 'उपसर्गादस्यत्यूह्योर्वा' इति विकल्पादात्मनेपदम् ॥ २९ ॥

विभिन्नेति। विभिन्ना विद्रुतसञ्जाताः पर्य्यन्तगाः प्रान्तगता मीनानां पङ्क्तयो यासां ताः, कुतः ? मरुत्वतः सखिभिरिन्द्रस्य सचिवैर्गन्धर्वैः पुरः पूर्वं विगाढाः प्रविष्टाः तासां विश्वासार्थं गर्त्तग्राहादिपरीक्षार्थं चेति भावः। सभीतिभिरप्रविष्टविषयत्वात् सभयैः। 'विषादिभिः' इति पाठेऽप्ययमेवार्थः लभ्यः। सुरसुन्दरीजनैस्तदेवावगाहनं प्रथमं यथा तथा अतएव कथञ्चिद्भयात् कृच्छ्रेणापः प्रपेदिरे जगाहिरे ॥ ३० ॥

विगाढेति। प्रयत्नेन सम्बाहिताः सञ्चारिताः पीवराः स्थूला ऊरवो याभिस्ताभिः रमणीभिरम्भसि विगाढमात्रे प्रविष्टे एव सति। सुप्सुपेति समासः। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। विभिद्यमाना स्वयं विशीर्य्यमाणा। कर्म्मकर्त्तरि शानच्। तरङ्गसंहतिस्तीरेषु सारसान् पक्षिविशेषान् 'सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः' इति यादवः। यद्वा—सारसान्

शिलाघनैर्नाकसदामुरःस्थलै-
र्बृहन्निवेशैश्च बधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना
रुषेव भेजे कलुषत्वमम्भसा ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः
सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद्विहितागसो मुहुः
प्रकम्पमीयुः सभया इवोर्म्मयः ॥ ३३ ॥

हंसान् । 'चक्राङ्गः सारसो हंसः' इति शब्दार्णवे । उदस्योत्सार्य्य विससार वितस्तार ॥ ३१ ॥

शिलेति । शिलावद्घनैः कठिनैर्नाकसदां गन्धर्व्वाणामुरःस्थलैर्बृहन्निवेशैर्महासंस्थानैः अतिस्थूलैरित्यर्थः । बधूपयोधरैश्च तटमभितो नीतेन प्रापितेन अतएव विभिन्नवीचिना भग्नोर्म्मिणा अम्भसा कर्त्रा । रुषा इवेति हेतूत्प्रेक्षा । कलुषत्वमाविलत्वं मनःक्षोभश्च ध्वन्यते भेजे, कर्म्मणि लिट् । यथा कश्चित् मृदुस्वभावः केनचित् कठिनादिना साङ्गभङ्गं ताड़यित्वा निष्कासितः क्षुभ्यति तद्वदिति भावः । कलुषत्वमित्यत्र वाच्यप्रतीयमानयोरभेदाध्यवसायः । अन्यथा शुद्धवाच्यस्याविलत्वस्य रोषहेतुकत्वादुत्प्रेक्षानुविधानादिति ॥ ३२ ॥

विधूतेति । विधूता विक्षिप्ताः केशाः यैस्ते परिलोलिता विलोलिताः स्रजो यैस्ते प्रविलुप्तचन्दनाः प्रमृष्टाङ्गरागाः अतिप्रसङ्गादविच्छेदात् सुराङ्गनानां विहितागसः कृतमण्डनखण्डनरूपापराधाः अतएवोर्म्मयस्तरङ्गाः । सभया इव क्षोभ्य भीता इव मुहुः प्रकम्पमीयुः । स्वाभाविकस्य कम्पस्य भयहेतुकत्वमुत्प्रेक्ष्यते । यद्वा—सुराङ्गनानां विधूतकेशा इत्यादियोजना । सापेक्षत्वेऽपि गमकत्वात् समासः । स्त्रीसङ्ग्रहणसाहसमपराधः । भयं तु राजादिभ्य इति ॥ ३३ ॥

विपक्षचित्तोन्मथना नखव्रणा-
स्तिरोहिता विभ्रममण्डनेन ये ।
हृतस्य शेषानिव कुङ्कुमस्य तान्
विकत्थनीयान् दधुरन्यथा स्त्रियः ॥३४॥
सरोजपत्रे नु विलीनषट्पदे
विलोलदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्वित् नतपक्ष्मसन्तते-
र्द्विरेफवृन्दं नु विशब्दनिश्चलम् ॥ ३५ ॥
अगूढहासस्फुटदन्तकेसरं
मुखं स्विदेतत् विकसत् नु पङ्कजम् ।

विपक्षेति । विपक्षस्य सपत्नीजनस्य चित्तानामुन्मथनाः व्यथका इत्यर्थः । बहुलग्रहणात् कर्त्तरि ल्युट् । ये नखव्रणा नखक्षतानि 'व्रणोऽस्त्रीयाम्' इत्यमरः । विभ्रमस्य सौन्दर्य्यस्य मण्डनं । तादर्थ्येऽपश्वघासादिवत्षष्ठीसमासः, न तु चतुर्थीसमासः, यूपदार्व्वादिवत् प्रकृतिविकाराभावादिति । तेन कुङ्कमलेपादिना तिरोहिताश्छन्नाः हृतस्य चालितस्य कुङ्कुमस्य व्यञ्जकत्वेन शेषान् इवावशिष्टलेशान् इव स्थितान् इत्युत्प्रेक्षा । विकत्थनीयान् भर्तृवाल्लभ्यस्य व्यञ्जकत्वेन श्लाघनीयान् तान्नखव्रणान् स्त्रियोऽन्यथा दधुः । प्रकाशं दधुरित्यर्थः ॥ ३४ ॥

अथ युग्मेनाह—सरोजेत्यादिना । अमू पुरोवर्त्तिनी विलीनषट्पदे संसक्तभृङ्गे सकनीनिकत्वमक्ष्णोरर्थसिद्धमितुपमानं विशिष्यते । सरोजपत्रे नु यद्वा—विलोलदृष्टेः चञ्चलाक्ष्या विलोचने स्वित् । नुस्विच्छब्दौ वितर्के । किञ्च—नतपक्ष्मसन्ततेः चञ्चलाक्ष्याः शिरोरुहाः स्विन्निःशब्दं निरवं च तद्‌निश्चलं च तद्द्विरेफवृन्दं नु ॥ ३५ ॥

अगूढेति । किञ्च—अगूढहासं व्यक्तस्मितं तेन स्फुटाः दन्ताः केसरा

इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुः सुचिरेण योषितः ॥ ३६ ॥
॥ युग्मम् ॥

प्रियेण सङ्ग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ३७ ॥

असंशयं न्यस्तमुपान्तरक्ततां
यदेव रोद्धुं रमणीभिरञ्जनम् ।
हृतेऽपि तस्मिन् सलिलेन शुक्लतां
निरास रागो नयनेषु न श्रियम् ॥ ३८ ॥

इव दन्तकेसरा यस्य तन्मुखं स्वित्? यद्वा—विकसत् पङ्कजं नु इतीत्थं संशयेनेति शेषः। नलिनीवने प्रलीनां निगूढां सखीं योषितः सुचिरेणाति-विलम्बात् विदाम्बभूवुर्विविदुः निश्चिक्युरित्यर्थः। 'उषविदजागृभ्योऽन्यतर-स्याम्' इति विकल्पादाम्प्रत्ययः। अत्र युग्मे निश्चयान्तसन्देहालङ्कारः॥ ३६ ॥

प्रियेणेति। काचित् प्रियेण सङ्ग्रथ्य स्वयमेव रचयित्वा विपक्षसन्निधौ सपत्नीजनसमक्षं पीवस्तने वक्षस्युपाहितां स्रजं मालां जलाविलाम् म्लदि-तामपीत्यर्थः। तां न विजहौ न तत्याज। न च निर्गुणायां तत्र का प्रीतिः-इति वाच्यमित्यर्थान्तरन्यासेनाह—गुणाः प्रेम्णि वसन्ति, वस्तुनि न वसन्ति हि। यत् प्रेमास्पदं तदेव गुणवत्, अन्यत्तु गुणवदपि निर्गुणमेव। प्रेम तु न वस्तुपरीक्षामपेक्षते इति भावः॥ ३७ ॥

असंशयमिति। स्त्रीणां नेत्रशोभार्थमञ्जनधारणमम्बुविहारोपगमाद्रक्ता-वर्णत्वं च अक्ष्णां ततः शुक्लत्वतिरोधानं च निश्चितमित्युत्प्रेक्ष्यते। रमणीभिः यत् अञ्जनं न्यस्तं तदिति शेषः। यत्तदोर्नित्यसम्बन्धात्। तद-

द्युतिं वहन्तो वनितावतंसका
हृताः प्रलोभादिव वेगिभिर्ज्जलैः ।
उपप्लुतास्तत्क्षणशोचनीयतां
च्युताधिकाराः सचिवा इवाययुः ॥ ३९ ॥

विपत्त्रलेखा निरलक्तकाधराः
निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् ।

ञ्जनमुपान्तयोः रक्ततां रोद्धुं प्रतिवद्धुमेव न्यस्तं न तु शोभार्थमित्यर्थः। अन्यथा रागाभिव्यक्त्या शुक्लत्वतिरोधानं स्यादित्यर्थः। असांशयमित्युत्प्रेक्षा-व्यञ्जकम्। संशयस्याप्यभावः नात्र संशयोऽस्तीत्यर्थः। अर्थाभावेऽव्ययीभावः। कुत एतदिति चेत् ? यतस्तस्मिन् अञ्जने सलिलेन हृते क्षालिते सत्यपि रागः पूर्व्वोक्त एवोपान्तरक्तता किन्तु प्रतिबन्धाभावादभितो व्याप्येत्याशयः। नयनेषु शुक्लतां निरास निरस्तवान्। अस्यतेर्लिट्। श्रियं शोभां तु न निरास। अतः शुक्लत्वविरोधिरागनिरोधार्थमेवेदमञ्जनं स्यात्, न तु शोभार्थम्। तस्यास्तदभावेऽपि सद्भावादित्यर्थः। अञ्जनापगमेऽपि तन्नयनानां राग एवालङ्कारोऽभूदिति भावः। अत्राञ्जनन्यासमनूद्य तस्य शोभार्थत्वनिषेधेन रागरोधार्थत्वोत्प्रेक्षणमुदितम् उत्तरार्द्धे तस्यैव समर्थनात्। एवमुपान्तरक्ततां रोद्धुं यत्र अञ्जनं न्यस्तमित्येकान्वये विध्यनुवादविरोधः स्यात् ॥ ३८ ॥

द्युतिमिति। द्युतिं शोभां तेजश्च वहन्तो वेगिभिर्ज विभिर्जलैर्जडैरेव उलयोरभेदात्। 'जलं गोकवले नीरे क्लीवेरे च जडेन्यवत्' इति विश्वः। प्रलोभान्मोहाद्धृता गृहीता उपप्लुता स्रदिताः। यद्वा—कर्त्तरि क्तः। प्लवमाना इत्यर्थः। अन्यत्र—धनग्रहणबन्धनादिना पीड़िताः वनितावतंसकाः च्युताधिकाराः भ्रष्टाधिकाराः सचिवा इव तत्क्षणं शोचनीयतामाययुः प्रापुः ॥ ३९ ॥

विपत्रेति। विगताः पत्रलेखास्तिलकविशेषा यासां ता विपत्रलेखाः निरलक्तकाः क्षालितरागा अधरा यासां ताः। निरञ्जनान्यक्षीणि यासां ता निरञ्जनाक्षीरपि। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'। 'बिदुगौरा

निरीक्ष्य रामा बुबुधे नभश्चर-
रलङ्कृतं तद्वपुषैव मण्डनम् ॥ ४० ॥

तथा न पूर्व्वं कृतभूषणादरः
प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया
ददाह दृष्टीश्च विपक्षयोषिताम् ॥ ४१ ॥

शुभाननाः साम्बुरुहेषु भीरवो
विलोलहाराश्चलफेनपङ्क्तिषु ।

दिभ्रश्च' इति ङीष् । तथापि श्रियं बिभ्रतीः शोभाकारणाभावेऽपि शोभमाना इति विभावनालङ्कारः । रामा निरीक्ष्य नभश्चरैर्गन्धर्वैस्तासां वपुषैव मण्डनमलङ्कृतम्, नतु मण्डनेन तद्वपुरित्यक्षरार्थः । इति बुबुधे ज्ञातम् । कर्म्मणि लिट् । स्वभावरमणीयानां किमलङ्करणैरिति भावः ॥ ४० ॥

तथेति । विलासिनीजनः पूर्व्वं जलविहारात् प्राक् प्रियानुरागेण कृतो भूषणेषु आदरः आसक्तिर्येन सः । अनुरक्तप्रियत्वात् सम्यक् प्रसाधितः सन्नपीत्यर्थः । प्रियस्यानुरागेण च विपक्षयोषितां सपत्नीनां दृष्टीश्चक्षुंषि तथा न ददाह न दुःखीचकार । यथा जलार्द्रः सन नखशब्देन नखक्षतानि लक्ष्यन्ते । तान्येव मण्डनं तस्य श्रिया तत्कृतशोभयेत्यर्थः । यथा ददाह तापयामास । मण्डनान्तरादपि नखमण्डनानुरागादपि च तदनुभाव एव सपत्नीनां दुःखहेतुरिति भावः । जलार्द्रो ददाहेति विरुद्ध कार्य्योत्पत्तिरूपो विषमालङ्कारः । 'विरुद्धकार्य्यस्योत्पत्तिर्य्यत्रानर्थस्य वा भवेत् । विरूपघटना वा स्याद्विषमालङ्कृतिस्त्रिधा । इति लक्षणात् ॥ ४१ ॥

शुभेति । शुभानना विलोलहारा नितान्तगौर्य्योऽरुणाङ्ग्यः । 'गौरोऽरुणे सिते पीते' इति वैजयन्ती । भीरवस्ताः स्त्रियः साम्बुरुहेषु चलाः फेनपङ्क्तयो येषु तेषु हृतानि कुङ्कुमानि यैस्तेषु कुङ्कुमसङ्क्रमारुणेष्वित्यर्थः । ऊर्म्मिषु विषयि-

कि—३२

नितान्तगौर्यो हृतकुङ्कुमेष्वलं
न लेभिरे ताः परभागमूर्मिषु ॥ ४२ ॥
रुद्दाम्भसि व्यस्तवधूकराहते
रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहुः स्तनैस्तालसमं समाददे
मनोरमं नृत्यमिव प्रवेपितम् ॥ ४३ ॥
श्रिया हसद्भिः कमलानि सस्मितै-
रलङ्कृताम्बुः प्रतिमागतैर्मुखैः ।
कृतानुकूल्या सुरराजयोषितां
प्रसादसाफल्यमवाप जाह्नवी ॥ ४४ ॥

ष्वलमत्यर्थं परभागं गुणोत्कर्षं लेभिरे। 'परभागो गुणोत्कर्षः' इति यादवः। तासामूर्मीणां च अरुणत्वादिगुणसाम्यान्न कश्चिद्विशेषो लक्ष्यते इत्यर्थः। अतएव सामान्यालङ्कारः 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्, शुभाननत्वसाम्बुरुहत्वादुभयविशेषणानां क्रमेणोभयस्मिन् समन्वयाद्यथासङ्ख्यालङ्कारस्य। 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयात्' इति काव्यप्रकाशे लक्षणात्। अनयोरङ्गाङ्गिभावेन सङ्करः। ४२ ॥

रुद्देति। व्यस्ताभ्यां विपर्यासिताभ्यां वधूकराभ्यामाहते एकेन करेणोत्सार्यान्येन ताड़िते इत्यर्थः। रुद्दाम्भसि मृदङ्गध्वनिवद्धीरं गम्भीरं रवमुज्झति सति तथा ध्वनति सतीत्यर्थः। मुहुः स्तनैस्तालो गीतवाद्यनृत्यानां कालपरिच्छेदः। 'तालः कालक्रियामानम्' इत्यमरः। तस्य समम् अनुरूपं मनोरमं नृत्यमिव प्रवेपितं प्रकम्पितम्। भावे क्तः। समाददे स्वीकृतम्। उपमालङ्कारः ॥ ४३ ॥

श्रियेति। श्रिया शोभया कमलानि हसद्भिः कमलसदृशैरित्यर्थः। 'हसतीर्ष्यत्यसूयति' इति दण्डिना सदृशपर्य्यायपरा उक्ताः। सस्मितै-

परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥ ४५ ॥

भयादिवाश्लिष्य झषाहतेऽम्भसि
प्रियं मुदानन्दयति स्म मानिनी ।
अकृत्रिमप्रेमरसाहितैर्मनो
हरन्ति रामाः कृतकैरपीहितैः ॥ ४६ ॥

तिरोहितान्तानि नितान्तमाकुलै-
रपां विगाहादलकैः प्रसारिभिः ।

प्रतिमागतैः प्रतिविम्बगतैरित्यर्थः । 'प्रतिमाज' प्रतिबिम्ब' प्रतिमा' इत्यमरः । मुखैरलङ्कृतानि अम्बूनि यस्याः सा । किञ्च सुरराजयोषितां कृतमानुकूल्यं विहाराद्युपकारो यया सा । इत्थं योषिद्भिरुपकृता स्वयं च तासामुपचिकीर्षुर्जाह्नवी गङ्गा प्रसादस्य स्वच्छत्वस्य साफल्यम् । अर्थगौरववत् षष्ठीसमासनिर्व्वाह' अवाप, अप्रसन्नाम्भसि विहारविम्बग्रहणयोरसम्भवादित्यर्थः । स्वच्छा एव हि परैरुपक्रियन्ते स्वयं चोपकुर्व्वते तेषामिति भावः । 'कृतानुकारा' इति पाठेऽनुकारोऽनुकूलकरणमुपकार इत्येवं व्याख्येयम् । अत्र जाह्नवीविशेषणपदार्थस्य साफल्यं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

परीति । परितः स्फुरद्भिर्व्विवर्त्तमानैर्म्मीनैर्व्विघट्टिता ऊरवो यासां ता अतएव त्रासविलोलदृष्टयो भयविकसन्नेत्राः कम्पितपाणिपल्लवाश्च सुराङ्गनाः सखीजनस्यापि विलोकनीयतामुपाययुः किमुत प्रियजनस्येति भावः । स्वभावोक्तिरलङ्कारः ॥ ४५ ॥

भयादिति । मानिनी दुर्लभस्वयंग्रहणा इति भावः । अम्भसि जले झषेण मत्स्येनाहते सति । 'पृथुलोमा झषो मत्स्यः' इत्यमरः । भयादिव,

ययुर्बधूनां वदनानि तुल्यतां
द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ४७ ॥

करौ धुनाना नवपल्लवाकृती
पयस्यगाधे किल जातसम्भ्रमाः ।
सखीषु निर्व्वाच्यमधार्ष्ट्यदूषितं
प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ४८ ॥

प्रियैः सलीलं करवारिवारितः
प्रवृद्धनिःश्वासविकम्पितस्तनः ।

वस्तुतस्तु न तथेति भावः, किन्तु मुदा औत्सुक्येनैवाश्लिष्य प्रियमानन्दयति स्म। तथाहि—रामाः स्त्रियोऽकृत्रिमोऽनारोपितो यः प्रेमैव रसस्तेनाहितैर्जनितैः कृतकैः कृत्रिमैरपीत्यर्थः ईहितैश्चेष्टितैर्मनो हरन्ति । आरोपितमपि भयं प्रेममूलत्वात् मनोहरं बभूवेत्यर्थः । अत्राल्पानुभावेन भयेन सहजराग निगूहनात् मीलनालङ्कारः—'मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्' इति लक्षणान्तरसम्भवादर्थान्तरन्यासेन संसृज्यते ॥ ॥ ६ ॥

तिरोहितेति । अपां विगाहान्नितान्तमाकुलैर्विकीर्णैः प्रसारिभिरायतैरलकैः केशैस्तिरोहितान्तानि छन्नप्रान्तानि बधूनां वदनानि द्विरेफवृन्दैः अन्तरितानि छन्नानि सरोरुहाणि कैः सरोरुहैस्तुल्यतां ययुरित्युपमालङ्कारः ॥४७॥

कराविति । मानिनी पयसि अगाधे सति । किल इत्यलीके । मज्जनभयादिवेत्यर्थः । जातसम्भ्रमा उत्पन्नभया अतएव नवपल्लवाकृती करौ धुनाना कम्पयन्ती, धूनोतेः क्र्यादिकात् कर्त्तरि लटः शानच । सखीषु विषये निर्व्वाच्यम् अवाच्यम् अनिन्द्यमित्यर्थः धार्ष्ट्यदूषितञ्च न भवतीत्यधार्ष्ट्यदूषितस्तम्। वस्तुतो रागमूलमपि भयमलत्वारोपादिति भावः । प्रियाङ्गसंश्लेषमवाप। अत्रापि तुल्याङ्गेन भये ।गन्तुकेन सहजानुरागनिगूहनात् मीलनालङ्कारः; तदुक्तं काव्यप्रकाशे—'समानलक्षणं वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुना वापि तन्मीलनमुदाहृतम्' इति ॥ ४८ ॥

प्रियैरिति । प्रियैः कामिभिः सलील' करवारिभिरञ्जलिलैर्व्वारितोऽव-

सविभ्रमाधूतकराग्रपल्लवो
यथार्थतामाप विलासिनीजनः ॥ ४९ ॥

उदस्य धैर्यं दयितेन सादरं
प्रसादितायाः करवारिवारितम् ।
मुखं निमीलन्नयनं नतभ्रुवः
श्रियं सपत्नीवदनादिवाददे ॥ ५० ॥

विहस्य पाणौ विधृते धृताम्भसि
प्रियेण वध्वा मदनार्द्रचेतसः ।

रुद्धः सिक्त इत्यर्थः । प्रवृद्धैः सन्ततनिःश्वासैर्विकम्पितौ कम्पितौ स्तनौ यस्य सः । सविभ्रमं सविलासमाधूतानि कराग्रपल्लवानि पाणिपल्लवानि येन सः । विलसनशीला विलासिनी । 'वौ कषलसकत्थस्रम्भः' इति घिनुण् प्रत्ययः । सेव जनः, जातावेकवचनम्, यथार्थताम् आप । उक्तरीत्यानेकविलासवत्तया यथार्थनामकत्वमवापेत्यर्थः । 'क्वचिद्गम्यमानार्थस्याप्रयोगः' इति । नाम्नो न प्रयोगः । यथा माघे—'चिराय याथार्थ्यमलम्भि दिग्गजैः' इति । क्वचित् प्रयुज्यते च । यथा रघुवंशे—'परन्तपो नाम यथार्थनामा' इति । नैषधेऽपि—'स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः' इति । स्वभावोक्ति-रलङ्कारः ॥ ४९ ॥

उदस्येति । दयितेन धैर्य्यं काठिन्यमुदस्यापनीय अनुनीयेत्यर्थः । सादरं यथा तथा प्रसादितायाः सौमनस्यं गमितायाः नतभ्रुवः स्त्रियः सम्बन्धि करवारिभिर्वारितमवरुद्धमतएव निमीलती नयने यस्य तन्मुखं सपत्नी-वदनादिव श्रियमाददे जग्राह । तदानीं तद्वदनस्य निःश्रीकत्वात्तदीय-श्रीग्रहणमुत्प्रेक्ष्यते ॥ ५० ॥

विहस्येति । धृताम्भसि प्रियसेचनार्थं गृहीतजले पाणौ अञ्जलौ इत्यर्थः । प्रियेण विहस्य विधृतेऽवलम्बिते सति । अतएव मदनार्द्रचेतसो मदनपरवशाया इत्यर्थः, वध्वाः सम्बन्धि नीवीोच्चयबन्धं मुक्तनीविग्रन्थि स्रंसमान-

सखीव काञ्ची पयसा घनीकृता
बभार वीतोच्चयबन्धमंशुकम् ॥ ५१ ॥

निरञ्जने साचिविलोकितं दृशा-
वयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयति स्म विग्रहे
बलिक्रिया चातिलकं तदास्पदम् ॥ ५२ ॥

निमीलदाकेकरलोलचक्षुषां
प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः ।
श्रमो नु तासां मदनो नु पप्रथे ॥ ५३ ॥

मित्यर्थः। अंशुकं पयसा घनीकृता काञ्ची सखीव बभार जग्राह। स्त्रीणां किल स्त्रीषु एवायत्तं लज्जारक्षणमिति भावः ॥ ५१ ॥

निरञ्जने इति। नतभ्रुवोऽङ्गनाया विग्रहे वपुषि निरञ्जने निर्धौतकज्जले दृशौ विलोचने कर्म साचिविलोकितं तिर्यग्वीक्षणं कर्तृ मण्डयति स्म। 'तिर्यगर्थे साचि तिरः' इत्यमरः। अयावकं क्षालितलाक्षारागमोष्ठपल्लवं वेपथुः कम्पो मण्डयति स्म। 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः। अतिलकं तिलकरहितं तदास्पदं तिलकस्थानं ललाटम्। 'आस्पदं प्रतिष्ठायाम्' इति निपातः। बलिक्रिया रेखाबन्धश्च मण्डयति स्म। तदा निरलङ्कारस्याङ्गनाशरीरस्य तच्छरीरविकारैरेवालङ्कारः समजनीत्यर्थः ॥ ५२ ॥

निमीलदिति। प्रियोपकण्ठं प्रियसमीपे। अत्यन्तसंयोगे द्वितीया। निमज्जतीनां विगाह्यमानानामतएव निमीलन्ति निमिषन्ति आकेकराणि आकेकरवन्ति लोलानि चक्षूंषि यासां तासाम्। आकेकरलक्षणं तु नृत्यविलासे— 'दृष्टिराकेकरा किञ्चित्स्फुटापाङ्गे प्रसारिता। मीलितार्धपुटा लोके तारा-व्यावर्तनोत्तरा' इति। तासां स्त्रीणां कृतो गात्राणां वेपथुः कम्पो येन

प्रियेण सिक्ता चरमं विपक्षत-
श्चुकोप काचिन्न तुतोष सान्त्वनैः ।
जनस्य रूढप्रणयस्य चेतसः
किमप्यमर्षोऽनुनये भृशायते ॥ ५४ ॥

इत्थं विहृत्य वनिताभिरुदस्यमानं
पीनस्तनोरुजघनस्थलशालिनीभिः ।
उत्सर्पितोर्मिचयलङ्घिततीरदेश-
मौत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ॥ ५५ ॥

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः ।

सः श्वसितैर्निःश्वासैरुन्नतौ उत्पतितौ स्तनौ येन सः श्रमः खेदो नु मदनो नु पप्रथे प्रादुर्बभूव । निमज्जनप्रियसंनिधानरूपोभयकारणसम्भवान्नेत्रनिमीलनगात्रकम्पनिश्वासधारणाच्च सन्देहः, स एवालङ्कारः ॥ ५३ ॥

प्रियेणेति । काचित् प्रियेण विपक्षतः सपत्नीतश्चरमं पश्चात् सिक्ता सती चुकोप । 'पृष्ठन्तु चरमं तनोः' इत्यमरः । सान्त्वनैरनुनयैर्न तुतोष । तथाहि—रूढप्रणयस्य गाढप्रेम्णो जनस्य सम्बन्धी चेतसो मनसोऽमर्षः प्रकोपः किमपि कुतोऽपि हेतोः अनुनये सति भृशायते गाढो भवति । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङ् । अन्यत्र शान्तिहेतुरनुनयोऽत्र प्रकोपायैव भवति । तत्र कारणं तु न ज्ञायते इत्यर्थः ॥ ५४ ॥

इत्थमिति । पीनैः स्तनैरुरुभिर्जघनस्थलैश्च शालन्ते इति तथोक्ताभिरिति सलिलनोदनसामर्थ्योक्तिः । स्थलस्य साक्षात् अप्राण्यङ्गत्वान्न द्वन्द्वैकवद्भावः । वनिताभिरित्थं विहृत्योदस्यमानं नुद्यमानमुत्सर्पितैरुपरिभावं प्रापितैः ऊर्मिचयैर्लङ्घितस्तीरदेशो येन तद्वारि औत्सुक्यं विहारासहिष्णुत्वं तेन नुन्नं प्रेरितमिवेत्युत्प्रेक्षा । 'नुदविद' इत्यादिना निष्ठानत्वम् । पुरोऽग्रे प्रतस्थे स्वजनवदिति भावः ॥ ५५ ॥

संरेजिरे सुरसरिज्जलधौतहारा-
स्तारावितानतरला इव यामवत्यः ॥ ५६ ॥

संक्रान्तचन्दनरसाहितवर्णभेदं
विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्म्मि नाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥५७॥

इति भारविकृतौ किरातार्जुनीये महाकाव्ये अष्टमः सर्गः ।

तीरान्तराणीति । रथाङ्गनाम्नां मिथुनानि चक्रवाकद्वन्द्वानि अन्यानि तीराणि तीरान्तराणि नीत्वा नियोज्येत्यर्थः । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः । विलोलिता विलुलिताः सरोजवनश्रियो याभिस्ताः सुरसरिज्जलैर्धौतहाराः क्षालितमुक्तावलयस्ताः स्त्रियस्तारावितानैरुडुगणैस्तरला भासुराः । 'तरलो भासुरे हारे चञ्चलेऽपि' इति वैजयन्ती । यामवत्यो रात्रय इव संरेजिरे शुशुभिरे ॥ ५६ ॥

संक्रान्तेति । संक्रान्तैश्चन्दनरसैर्मलयजद्रवैराहितो वर्णभेदो रूपान्तरं यस्य तत् । विच्छिन्नानि त्रुटितानि यानि भूषणानि तेषां ये मणिप्रकरा मणिगणास्तेषाम् अंशुभिश्चित्रं नानावर्णं बद्धोर्म्मि तरलं तरङ्गितं नाकवनिताभिः परिभुक्तमुक्तं पूर्व्वं परिभुक्तं पश्चान्मुक्तम् । 'पूर्वकाल'— इत्यादिना तत्पुरुषः । सिन्धोर्गङ्गायाः सलिलं शेरतेऽत्रेति शयनीयं तल्पम् । बहुलग्रहणात् साधुः । तस्य लक्ष्मीं बभार । अतएव निदर्शनालङ्कारः । लक्षणं तूक्तम् ॥५७॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीकाव्यव्याख्यायां घण्टापथसमाख्यायामष्टमः सर्गः ॥८॥

——:०:——

## नवमः सर्गः ।

वीक्ष्य रन्तुमनसः सुरनारीः
आत्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्तं
भानुमानुपपयोधि ललम्बे ॥ १ ॥
मध्यमोपलनिभे लसदंशौ
एकतश्च्युतिमुपेयुषि भानौ ।

वीक्ष्येति । अथ जलक्रीड़ानन्तरं भानुमान् अंशुमान् सूर्यः आत्तचित्रपरिधानविभूषाः स्वीकृतविविधवस्त्राभरणाः सुरतसन्नाहं वहतीः इत्यर्थः । अतएव रन्तुमनसः । "समानकर्त्तृकेषु तुमुन्" । "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति मकारलोपः । सुरनारीः वीक्ष्य तासां प्रियार्थं तत्प्रियार्थम् इव अवसरदानरूपं प्रियं कर्त्तुम् इव इत्यर्थः । फलोत्प्रेक्षा इयम् । अस्तम् अदर्शनम् मकारान्तम् अव्ययम् एतत् । यातुं प्राप्तुम् उपपयोधि पयोधिसमीपे ललम्बे सस्रंसे । अस्मिन् सर्गे स्वागतावृत्तम् । "स्वागतेति रनभाद् गुरुयुग्मम्" इति लक्षणात् ॥ १ ॥

अग्रसानुषु नितान्तपिशङ्गै-
र्भूरुहान् मृदुकरैरवलम्ब्य।
अस्तशैलगहनं नु विवस्वान्
आविवेश जलधिं नु महीं नु ॥ ७ ॥
आकुलश्चलपतत्रिकुलाना-
मारवैरनुदितौषसरागः।
आययावहरिदश्वविपाण्डु-
स्तुल्यतां दिनमुखेन दिनान्तः ॥ ८ ॥

दूत्य इव वनिताभिः सादरं यथा तथा ददृशिरे दृष्टाः। सायन्तनार्कभासां प्रियसमागमसूचकत्वादेव दूत्य इव तासु स्त्रीणामादरोऽभवदित्यर्थः ॥६॥

अग्रे इति। विवस्वान् सूर्यः अग्रे अस्तशैलशिखरे ये सानवः तेषु ये भूरुहाः तान् नितान्तपिशङ्गैः अत्यन्तारुणैः मृदुभिः करैः अंशुहस्तैः इति श्लिष्टरूपकम्। "बलिहस्तांशवः कराः" इत्यमरः। यद्वा करैः मृदु यथा अवलम्ब्य अस्तः इति शैलः अस्तशैलः। "अस्तस्तु चरमक्ष्माभृत्" इत्यमरः। तस्य गहनं काननं नु, आविवेश। तपनस्य तपनसन्देह एव दृष्टः। पतनं तु क्व च अस्य तत् न ज्ञायते शीघ्रगमनात् इत्यर्थः। अत्र तपने तपनस्य आरोप्यमाणस्य गहनाद्यनेकविषयत्वेन सन्देहालङ्कारः। उत्प्रेक्षा इति केचित् ॥ ७ ॥

आकुल इति। चलानां कुलायेभ्यः कुलायान् प्रति चलतां पतत्रिकुलानाम् आरवैः शब्दैः आकुलः व्याप्तः। अनुदितशब्देन अभावमात्रम् उषःशब्देन सन्ध्यामात्रं च विवक्षितं उषसि भवः औषसः। "सन्धिवेला" इत्यादिना योगविभागात् अण्प्रत्ययः,अन्यथा कालात् ठञ् स्यात्। तथा च अनुदितौषसराग इति अविद्यमानसन्ध्याराग इत्यर्थः। एकत्र अपगमात् अन्यत्र अनुदयात् च इति भावः। अहरिदश्वः अविद्यमानसूर्यः एकत्र अनुदयात् अन्यत्र अस्तमयात् च इति भावः। अतएव विपाण्डुः तिमिरानुदयात् इति शेषः। दिनान्तः सायंकालः दिनमुखेन प्रातःकालेन तुल्यताम् आययौ तद्वत् बभूव इत्यर्थः। अतएव उपमालङ्कारः ॥ ८ ॥

आस्थितः स्थगितवारिदपङ्क्त्या
सन्ध्यया गगनपश्चिमभागः ।
सोर्मिविद्रुमवितानविभासा
रञ्जितस्य जलधेः श्रियमूहे ॥ ९ ॥

प्राञ्जलावपि जने नतमूर्ध्नि
प्रेम तत्प्रवणचेतसि हित्वा ।
सन्ध्ययानुविदधे विरमन्त्या
चापलेन सुजनेतरमैत्री ॥ १० ॥

औषसातपभयादपलीनं
वासरच्छविविरामपटीयः ।
सन्निपत्य शनकैरिव निम्नात्
अन्धकारमुदवाप समानि ॥ ११ ॥

आस्थित इति । स्थगितवारिदपङ्क्त्या पिहितमेघवृन्दया सन्ध्यया आस्थितः आक्रान्तः व्याप्तः गगनपश्चिमभागः । सोर्मिः ऊर्मिसंक्रान्त इत्यर्थः तया विद्रुमवितानविभासा प्रवालप्रकरकान्त्या रञ्जितस्य स्वप्रावर्ण्यम् आपादितस्य जलधेः श्रियम् ऊहे सन्ध्याया रक्तवर्णत्वादिति भावः । वहतेः कर्त्तरि लिट् । तत् सदृशीं श्रियमुवाहेत्यर्थः । अतएव निदर्शनालङ्कारः ॥९॥

प्राञ्जलाविति । प्रबद्धः अञ्जलिः येन तस्मिन् प्राञ्जलौ बद्धाञ्जलौ । "तौ युतावञ्जलिः पुमान्" इत्यमरः । प्रादिभ्यो धातुजस्य बहुव्रीहिर्वाचरः वोत्तरपदलोपश्च । नतमूर्ध्नि नमस्कुर्वाणे तत्प्रवणं तत्र सन्ध्यायामेव आहितं चेतः यस्य तस्मिन् एवंविधे अपि जने विषये प्रेम हित्वा विहाय विरमन्त्या निवर्त्तमानया । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । सन्ध्यया चापलेन अस्थैर्येण । युवादित्वात् अण्प्रत्ययः । सुजनात् इतरः दुर्जनः तस्य मैत्री सख्यम् अनुविदधे अनुचक्रे । कर्मणि लिट् । यथा दुर्जनमैत्री स्निह्यन्तमपि जहाति तत्वत् सन्ध्यापि सेवमानं जनम् अहासीत् इत्यर्थः । मित्रस्य कर्म मैत्री । अणन्तात् ङीप् । अत्र सन्ध्यादुर्जनमैत्र्योः चापलं समानधर्मो अनुविधानम् अत एव अर्थरूपेण इयमुपमा ॥१०॥

औषसेति । औषसात् प्राभातिकात् आतपात् भयं तस्मात् इव इति

एकतामिव गतस्य विवेकः
कस्यचिन्न महतोऽप्युपलेभे ।
भास्वता निदधिरे भुवनानाम्
आत्मनीव पतितेन विशेषाः ॥ १२ ॥
इच्छतां सह वधूभिरभेदं
यामिनीविरहिणां विहगानाम् ।
आपुरेव मिथुनानि वियोगं
लङ्घ्यते न खलु कालनियोगः ॥ १३ ॥
यच्छति प्रतिमुखं दयितायै
वाचमन्तिकगतेऽपि शकुन्तौ ।

उत्प्रेक्षा । अपलीनं क्वचित् गूढं वासरच्छवेः आतपस्य विरामात् हेतोः पटीयः प्रभविष्णुतरम् अन्धं करोति इति अन्धकारं ध्वान्तम् । "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः । अथ सन्ध्यापगमनानन्तरं शनकैः मन्दमन्दं निम्नात् सन्निपत्य आगत्य समानि समस्थलानि उदवाप व्यानशे । अत्र प्रस्तुतान्धकारविशेषणसाम्यात् अप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः । उत्प्रेक्षालङ्कृतः स्यात् ॥११॥

एकतामिति । एकताम् अभेदं गतस्य इव तमोव्याप्तत्या तथा प्रतीतेः इयम् उत्प्रेक्षा । महतः शैलादेः अपि कस्यचित् कस्यापि पदार्थस्य विवेकः भेदः न उपलेभे न गृहीतः । अतएव उत्प्रेक्ष्यते पतितेन अस्तमितेन भास्वता सूर्येण । "भास्वद्विवस्वत्सप्ताश्व" इत्यमरः । भुवनानां भुवनस्थपदार्थानामित्यर्थः । विशेषाः भूधरादिभेदाः आत्मनि स्वस्मिन् एव निदधिरे इव निहिता इव । कथमन्यथा न उपलभ्येरन् इत्यर्थः । अत्र उत्प्रेक्षयोः सजातीययोः सापेक्षत्वात् अङ्गाङ्गिभावेन सङ्करः ॥१२॥

इच्छतामिति । वधूभिः स्वकामिनीभिः सह अभेदम् अवियोगम् इच्छतां तथा सङ्कल्पवतामपीत्यर्थः । यामिनीषु विरहिणां नियतवियोगानामित्यर्थः । रहतेः आवश्यके अर्थे णिनिः, यद्वा निन्दायाम् इनिः । तेषां विहगानां चक्रवाकाणामित्यर्थः । मिथुनानि वियोगम् आपुः एव । न तु न आपुः । इति अयोगव्यवच्छेदः. तथाहि कालनियोगो दैवाज्ञा न लङ्घ्यते खलु । दुर्वार इत्यर्थः ॥१३॥

नीयते स्म नतिमुज्झितहर्षं
पङ्कजं मुखमिवाम्बुरुहिण्या ॥ १४ ॥

रञ्जिता नु विविधास्तरुशैला:
नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥ १५ ॥

यच्छतीत शकुन्ती चक्रवाकपक्षिणि सामान्यस्य प्राकरणिकविशेष-पर्यवसानात्। "शकुन्तपक्षिशकुनि शकुन्त शकुनद्विजाः" इत्यमरः। अन्तिकगते समीपस्थे अपि दयितायै चक्रवाकै प्रतिमुखम् अभिमुखं यथा तथा वाचं यच्छति वाचम् एव ददाने सति न तु सङ्गच्छमाने सति इत्यर्थः। "पाघ्राध्मा" इत्यादिना दाणः यच्छादेशः। अम्बुरुहिण्या नलिन्या उज्झितहर्षं चक्रवाकदुर्दशादर्शनादिव त्यक्तविकासं पङ्कजं मुखमिव नतिं नम्रत्वं नीयते स्म नीतम्। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति मयतेः द्विकर्मकत्वात् प्रधाने कर्मणि लिट्। प्रायेण दुःखदर्शनात् स्त्रियः खिद्यन्ते विशेषेण विरहदर्शनात् इति भावः। अत्र पंकजावनतेः चक्रवाकविक्रोशानन्तर्यात् तद्धेतुकत्वम् उत्प्रेक्ष्यते। तच्च मुखोपमाद्ययम् अम्बुरुहिण्या कामिनीसाम्यं गमयन्त्या निरूप्यते इति उपमोत्प्रेक्षयोः अङ्गाङ्गिभावेन संकरः। व्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा ॥ १४ ॥

रञ्जिता इति। तिमिरेण अन्धकारेण विविधाः तरवः शैलाश्च रञ्जिताः स्वसावर्ण्यम् आपादिताः नु? अन्यथा कथमेषां नीलाढ्यत्वमिति भावः। तथा गगनं नामितं नु आभूतलत् इति शेषः। "मितां ह्रस्वः" इत्यत्र वाशब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणात् लघु ह्रस्वः। यद्वा गगनं स्थगितम् आच्छादितं नु? उभयत्र अपि तमसावृतत्वात् न दृश्यते इति भावः। तथा धरित्री विषमेषु निम्नोन्नतेषु पूरिता समीकृता नु? अन्यथा तद्विवेकः कथं न स्यात्? इति भावः। ककुभः दिशश्च संहृताः नु लुप्ताः किम्? "दिशस्तु ककुभः काष्ठाः आशाश्च हरितश्च ताः" इत्यमरः। कथम् अन्यथा न दृश्यन्ते इति भावः। अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकम् आरोप्य सन्दिह्यते इति सन्देहालंकारः। अनेन नुशब्दस्य सम्भावनाद्योतकत्वम् अतोत्प्रेक्षाप्रकारमिति अलंकारसर्वस्वकारः ॥ १५ ॥

रात्रिरागमलिनानि विकाशं
पङ्कजानि रहयन्ति विहाय ।
स्पष्टतारकमियाय नभःश्री-
र्वस्तुमिच्छति निरापदि सर्वः ॥ १६ ॥

व्यानशे शशधरेण विमुक्तः
केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्ति-
र्वासवस्य दिशमंशुसमूहः ॥ १७ ॥

उज्झती शुचमिवाशु तमिस्राम्
अन्तिकं व्रजति तारकराजे ।
दिक्प्रसादगुणमण्डनमूहे
रश्मिहासविशदं मुखमैन्द्री ॥ १८ ॥

रात्रीति । श्रीः शोभा कर्त्री रात्रेः सन्ध्यायाः रागेण स्वच्छायोपरञ्जनेन मलिनानि अतएव विकाशं रहयन्ति त्यजन्ति । रहयतेः त्यागार्थात् शतृप्रत्ययः । पङ्कजानि विहाय त्यक्त्वा स्पष्टतारकं नभः खम् इयाय प्राप तथाहि सर्वः जनः निरापदि निर्बाधस्थले वस्तुं स्थातुम् । "एकाच उपदेशेऽनुदात्तात्" इति इट्प्रतिषेधः घसिस्व सान्तेषु वसिः प्रसारिणीति वचनात् । इच्छति ॥ १६ ॥

अस्तादिसन्ध्यान्तं वर्णयित्वा चन्द्रोदयवर्णनम् आरभते । व्यानशे इति । शशधरेण चन्द्रेण विमुक्तः क्षिप्तः केतकीकुसुमकेसरः इव पाण्डुः लम्भिता प्रापिता कान्तिः यस्य सः अंशुसमूहः रश्मिसमूहः चूर्णस्य कर्पूरचूर्णस्य मुष्टिः इव । मुष्टिशब्दस्य द्विलिङ्गत्वे अपि अत्र पुंलिङ्गता एव ग्राह्या । उपमेयानुसारात् । वासवस्य इन्द्रस्य दिशं प्राचीं व्यानशे व्याप । अनेन निशानिशाकरयोः नायिकानायकौपम्यं गम्यते ॥ १७ ॥

उज्झतीति । इन्द्रस्य इयम् ऐन्द्री दिक् प्राची तारकराजे नक्षत्रनाथे । "कनीनिकायां नक्षत्रे तारकं तारकापि च" इति विश्वः । अन्तिकं समीपं व्रजति सति आशु तमिस्राम् अन्धतमसम् । "तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे … इति वैजयन्ती । शुचम् इव विरहदुःखमिव इत्यर्थः ।

नीलनीरजनिभे हिमगौरं
शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं
वारिधेः पयसि गाङ्गमिवाम्भः ॥ १९ ॥

द्यां निरुन्धदतिनीलघनाभं
ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा
शम्भुनेव करिचर्म चकासे ॥ २० ॥

अन्तिकान्तिकगतेन्दुविसृष्टे
जिह्मतां जहति दीधितिजाले ।
निःसृतस्तिमिरभारनिरोधात्
उच्छ्वसन्निव रराज दिगन्तः ॥ २१ ॥

उज्झती विजहती प्रसादः नैर्मल्यम् एव गुणः सः एव मण्डनं यस्य तत् । रश्मयः हास इव तेन विशदं मुखम् इव मुखम् अग्रभागम् । श्लिष्टोपमेयम् । ऊहे वहति स्म । अत्र दिक्चन्द्रयोः नायिकानायकौपम्यं गम्यते ॥ १८ ॥

नीलेति । शैलरुद्धवपुषः उदयगिरितिरोहितमण्डलस्य सितरश्मेः इन्दोः सम्बन्धि नीलनीरजनिभे श्यामकमलतुल्ये खे आकाशे निपतत् प्रसरत् । हिमवत् गौरं शुभ्रं करजालं अंशुसमूहः वारिधेः पयसि निपतत् गाङ्गम् अम्भ इव रराज । उपमाने अपि विशेषणं योज्यम् ॥ १९ ॥

द्यामिति । द्यां निरुन्धत् आकाशम् आवृन्वत् अतिनीलघनाभं मेचकम् । उद्यताः कराः अंशवः हस्ताश्च यस्य तेन । असिताभ्य इतराः शुभ्राः भासः यस्य तेन चन्द्रेण पुरस्तात् प्राच्याम् अग्रे च क्षिप्यमाणं नुद्यमानं ध्वान्तं शम्भुना क्षिप्यमाणं करिचर्म इव चकासे उपमाने अपि विशेषणानि योज्यानि ॥ २० ॥

अन्तिकेति । अन्तिकान्तिके अतिसमीपे "प्रकारे गुणवचनस्य" इति द्विर्भावः । कर्मधारयवद्भावात् सुपः लुक् । अन्तिकान्तिकगतेन इन्दुना विसृष्टे सृष्टे दीधितिजाले किरणसमूहे जिह्मतां सङ्कोचं जहति त्यजति सति

लेखया विमलविद्रुमभासा
सन्ततं तिमिरमिन्दुरुदासे ।
दंष्ट्रया कनकटङ्कपिशङ्ग्या
मण्डलम्भुव इवादिवराहः ॥ २२ ॥

दीपयन्नथ नभः किरणौघैः
कुङ्कुमारुणपयोधरगौरः ।
हेमकुम्भ इव पूर्वपयोधेः
उन्ममज्ज शनकैस्तुहिनांशुः ॥ २३ ॥

उद्गतेन्दुमविभिन्नतमिस्रां
पश्यति स्म रजनीमवितृप्तः ।
व्यंशुकस्फुटमुखीमतिजिह्मां
व्रीड़या नवबधूमिव लोकः ॥ २४ ॥

तिमिरभारैः तमःस्तोमैः निरोधात् उपरोधात् निःसृतः निर्गतः दिगन्तः उच्छ्वसन् प्राणन् इव रराज इति उत्प्रेक्षालङ्कारः ॥ २१ ॥

लेखयेति । इन्दुः विमलविद्रुमभासा स्वच्छप्रवालसवर्णया लेखया कलया सन्ततं सान्द्रं तिमरम् आदिवराहः कनकस्य टङ्कः शिलाभेदकं शस्त्रम् । "टङ्कः पाषाणदारणः" इत्यमरः । तद्वत् पिशङ्ग्या लोहितवर्णया । "पिशङ्गा-दुपसंख्यानम्" इति ङीप् । दंष्ट्रया भुवः मण्डलम् इव उदासे उत्क्षिप-वस्यतेः कर्त्तरि लिट् । सोपसर्गात् असयतेः आत्मनेपदं विकल्पात् ॥ २२ ॥

दीपयन्निति । अथ उदयानन्तरं किरणौघैः नभः दीपयन् प्रकाशयन् कुङ्कुमेन अरुणः यः पयोधरः कुचः तद्वत् गौरः अरुणः उदयरागात् इति भावः । तुहिनांशुः इन्दुः शनकैः पूर्वपयोधेः पूर्वसागरात् हेम्नः कुम्भ इव उन्ममज्ज उज्जगाम इति उत्प्रेक्षा ॥ २३ ॥

उद्गतेन्दुमिति । लोकः जनः । "लोकस्तु भुवने जने" इत्यमरः । उद्गतेन्दुम् उदितचन्द्राम् अविभिन्नतमिस्राम् अनिःशेषितध्वान्तां रजनीं व्यंशुकाम् अपनीतावगुण्ठनम् अतएव स्फुटं दृश्यमानं मुखं यस्याः सा तां तथापि व्रीड़या अतिजिह्मां वक्रां नववधूं नवोढाम् । "वधुर्व्रीड़ाशीलायां

न प्रसादमुचितं गमिता द्यौः
नोद्धृतं तिमिरमद्रिवनेभ्यः ।
दिङ्मुखेषु न च धाम विकीर्णं
भूषितैव रजनी हिमभासा ॥ २५ ॥

मानिनीजनविलोचनपातान्
उष्णबाष्पकलुषान् प्रतिगृह्णन् ।
मन्दमन्दमुदितः प्रययौ खं
भीत भीत इव शीतमयूखः ॥ २६ ॥

श्लिष्यतः प्रियवधूरुपकण्ठं
तारकास्ततकरस्य हिमांशोः ।
उद्वमन्नभिरराज समन्तात्
अङ्गराग इव लोहितरागः ॥ २७ ॥

स्नुषाभार्य्याङ्गनासु च" इति धरणिः । स्त्रियम् इव अविद्वसः सन् पश्यति स्म ॥ २४ ॥

नेति । हिमभासा चन्द्रेण द्यौः आकाशम् उचितं योग्यं प्रसादं न गमिता । अद्रयः वनानि च तेभ्यः तिमिरं न उद्धृतं न उत्सारितं दिशां मुखेषु धाम तेजश्च न विकीर्णं न पर्य्यस्तं तथापि रजनी भूषिता एव किमुत उक्तगुणसम्पत्तौ इति भावः । अत्र प्रसाधनकारणाभावे अपि तत्कार्य्य-भूषणोक्त्या विभावनालङ्कारः ॥ २५ ॥

मानिनीति । उदितः शीतमयूखः उष्णेन विरहतप्तेन बाष्पेण कलुषान् आविलान् मानिनीजनस्य कलहान्तरितनायिकाजनस्य विलोचनपातान् मानभङ्ग-जनितरोषेण भीषणान् इति भावः । "कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विता । कलहान्तरिता प्रोक्ता नायिका नयशालिभिः ॥" इति दशरूपके । प्रतिगृह्णन् स्वीकुर्वन् अपराधस्य अपरिहार्य्यत्वात् इति भावः । अतएव भीतभीतः भीतप्रकारः इव इति उत्प्रेक्षा । मन्दमन्दं मन्दप्रकारम् उभयत्रापि "प्रकारे गुणवचनस्य" इति द्विर्भावे कर्मधारय-वद्भावात् सुलोपः । खम् आकाशं प्रययौ ॥ २६ ॥

श्लिष्यत इति । ततः प्रसारिताः कराः एव कराः अंशुहस्ता येन तस्य

प्रेरितः शशधरेण करौघः
संहतान्यपि नुनोद तमांसि ।
क्षीरसिन्धुरिव मन्दरभिन्नः
काननान्यविरलोच्चतरूणि ॥ २८ ॥

शारतां गमितया शशिपादैः
छायया विटपिनां प्रतिपेदे ।
न्यस्तशुक्लबलिचित्रतलाभिः
तुल्यता वसतिवेश्ममहीभिः ॥ २९ ॥

आतपे धृतिमता सह बध्वा
यामिनीविरहिणा विहगेन ।

मतकरस्य तारका एव प्रियवधूः उपकण्ठम् अन्तिके कण्ठे वा । अत्यन्तसंयोगे द्वितीया । विभक्त्यर्थे अव्ययीभावः । श्लिष्यतः प्रत्यासीदतः आलिङ्गतश्च हिमांशोः सम्बन्धी समन्तात् उद्‌गमन् उत्सर्पन् अर्थान्तरत्वात् अकर्म्मकत्वम् । "धातोरर्थान्तरे वृत्तेः" इति वचनात् । लोहितरागः अरुणप्रभः अङ्गराग इव अभिरराज आलिङ्गनात् रागः गलति इति प्रसिद्धिः । अत्र रूपकोपमयो रङ्गाङ्गिभावेन सङ्करः ॥ २७ ॥

प्रेरित इति । शशधरेण चन्द्रेण प्रेरितः विसृष्टः करौघः संहतानि सान्द्राणि अपि तमांसि मन्दरेण मन्दराचलेन भिन्नः क्षुब्धः क्षीरसिन्धुः अविरलाः सान्द्राः उच्चाः उन्नताश्च तरवः येषु तानि काननानि इव नुनोद चिक्षेप दूरीचकार ॥ २८ ॥

शारतामिति । शशिपादैः चन्द्ररश्मिभिः । "पादा रश्म्यङ्घ्रि‚तुर्यांशाः" इत्यमरः । शारतां शबलतां गमितया । "शारः शबलपीतयोः" इति विश्वः । विटपिनां तरूणां छायया न्यस्तैः निक्षिप्तैः शुक्लबलिभिः श्वेतपुष्पाद्युपहारैः चित्राणि तलानि उपरिभागाः यासां ताभिः । "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः । वसतिवेश्ममहीभिः निवासगृहभूमिभिः तुल्यता साम्यं प्रतिपेदे प्राप्ता । कर्म्मणि लिट् । आर्थीयमुपमा ॥ २९ ॥

आतप इति । आतपे दुःखकरे अपि इति भावः । बध्वा चक्रवाक्या

सेहिरे न किरणा हिमरश्मे-

र्दुःखिते मनसि सर्वमसह्यम् ॥ ३० ॥

गन्धमुद्धतरजःकणवाही

विक्षिपन् विकसतां कुमुदानाम् ।

आदुधाव परिलीनविहङ्गा

यामिनीमरुदपां वनराजीः ॥ ३१ ॥

संविधातुमभिषेकमुदासे

मन्मथस्य लसदंशुजलौघः ।

यामिनीवनितया ततचिह्नः

सोत्पलो रजतकुम्भ इवेन्दुः ॥ ३२ ॥

सह अतएव धृतिमता सन्तोषवता यामिनीषु विरहिणा नियतविरहेण अतएव विहगेन चक्रवाकेण हिमरश्मेः चन्द्रस्य किरणा न सेहिरे। तथाहि—दुःखिते सञ्जातदुःखे मनसि सर्वं मनोहरम् अपीति भावः। असह्यं सोढ़म् अशक्यम्। "शकिसहोश्च" इति यत्प्रत्ययः। पूर्वं तु "आतपाः इति पेठुः। तत्र बध्वा सह आतपाः अपि सेहिरे। तद्विरहिणा तु शशि-किरणाः अपि न सेहिरे इति योज्यम्। फलन्तु समानम् ॥ ३० ॥

गन्धमिति। अपां कणवाही। योग्यान्वये व्यवधानम् अपि सोढ़व्यम्। विकसतां कुमुदानां गन्धं सौरभम् उद्धतं रजः परागः यस्मिन् कर्मणि तत् यथा तथा। "शेषाद्विभाषा" इति विकल्पात् न कप्। विक्षिपन् विकिरन् इत्थं शिशिरः सुरभिः यामिनीमरुत् रात्रिवायुः परितः लीनाः शयिताः विहङ्गाः यासु ताः वनराजीः आदुधाव ईषत् कम्पयामास। विहङ्गशयनाविरोधेन वनराजिः किञ्चित् कम्पिता इत्यर्थः। "आङीषदर्थेऽभिव्याप्तौ" इत्यमरः। यथा कश्चित् कामिनीं गन्धोदकादिना सिञ्चन् आकर्षति तद्वदिति भावः ॥ ३१ ॥

संविधातुमिति। यामिनी वनिता इव तया रात्रिरूपया कान्तया मन्मथस्य अभिषेकं त्रिभुवनजैत्रयात्राभिषेकं संविधातुं सम्यक् कर्त्तुम् अंशवः जलानीव तेषाम् ओघः पूरः लसन् यस्मिन् सः। ततचिह्नः स्फुटलाञ्छनः इन्दुः सोत्पलः रजतकुम्भ इव उदासे उत्क्षिप्तः। अस्यतेः कर्मणि लिट्।

ओजसापि खलु नूनमनूनं
नासहायमुपयाति जयश्रीः ॥
यद्विभुः शशिमयूखसखः स-
न्नाददे विजयि चापमनङ्गः ॥ ३३ ॥

सद्मनां विरचनाहितशोभै-
रागतप्रियकथैरपि दूत्यम् ।
सन्निकृष्टरतिभिः सुरदारै-
र्भूषितैरपि विभूषणमीषे ॥ ३४ ॥

न स्रजो रुरुचिरे रमणीभ्य-
श्चन्दनानि विरहे मदिरा वा ।
साधनेषु हि रतेरुपधत्ते
रम्यतां प्रियसमागम एव ॥ ३५ ॥

अत्र संविधातुम् इति तुमुना प्रतीयमानोत्प्रेक्षया अनुप्राणितः अयमुप-मोत्प्रेक्षयोः सङ्करः ॥ ३२ ॥

ओजसेति। ओजसा अनूनं सम्पूर्णम् अपि असहायं सहायरहितं पुरुषम् इति शेषः। जयश्रीः न उपयाति खलु नूनम्। कुतः ? यदि अस्मात् विभुः समर्थः अपि अनङ्गः शशिमयूखानां सखा सहचरः तथोक्तः ससहायः सन् इत्यर्थः। विजयि विजयशीलम्। "जिदृक्षि" इत्यादिना इनप्रत्ययः। चापम् आददे। विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासः ॥ ३३ ॥

इत्थम् उद्दीपनसामग्रीम् उपवर्ण्य संप्रति तत्कार्यभूतं रतिवर्णनम् आरभते—सद्मनामित्यादि। सन्निकृष्टरतिभिः आसन्नसुरतोत्सवैः अतएव सुरदारैः सुरवधूभिः आहितशोभैः प्रागेव विहितकेलिगृहमण्डनैः अपि पुनः सद्मनां केलिगृहाणां विरचना मण्डनम् ईषे अभिलेषे। ईषेः कर्मणि लिट्। आगतप्रियकथैः प्राप्तप्रियजनवृत्तान्तैः अपि दूतस्य कर्म दूत्यं दूती-व्यापारः ईषे। "वा दूतवणिग्भ्याञ्च" इति दूतस्य भावकर्मणोर्यप्रत्ययः तथ भूषितैः अपि विभूषणं प्रसाधनम् ईषे। औत्सुक्यातिरेकादिति भावः ॥ ३४ ॥

नेति। विरहे वियोगावस्थायां स्रजः माल्यानि चन्दनानि गन्धाः मदिराः मद्यानि वा रमणीभ्यः। "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वात्

प्रस्थिताभिरधिनाथनिवासं
ध्वंसितप्रियसखीवचनाभिः ।
मानिनीभिरपहस्तितधैर्य्यः
सादयन्नपि मदोऽवललम्बे ॥ ३६ ॥

कान्तवेश्म बहु सन्दिशतीभि-
र्यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां
प्रायशः स्खलितमप्युपकारि ॥ ३७ ॥

आशु कान्तमभिसारितवत्या
योषितः पुलकरुद्धकपोलम् ।

चतुर्थी । न रुरुचिरे न रोचन्ते स्म । हि यस्मात् प्रियसमागम एव रतेः साधनेषु स्रगादिषु रम्यतां मनोहरत्वं रुचिकरत्वमिति यावत् उपधत्ते आदत्ते । तदभावात् अरुचिः युक्तेवेत्यर्थः । अतएव वैधर्म्यात् कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः । रम्यन्ते एष्विति रम्याणि । "पोरदुपधात्" इति यत्प्रत्ययः । "कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् अधिकरणार्थः ॥ ३५ ॥

प्रस्थिताभिरिति । अधिनाथनिवासं प्रियगृहं प्रति प्रस्थिताभिः प्रचलिताभिः ध्वंसितानि खण्डितानि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवाय इत्येवं रूपाणि याभिः ताभिः मानिनीभिः कोपनाभिः । "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इति लक्षणात् । अपहस्तितं निरस्तं धैर्य्यं येन सः तथा सादयन् मानं शरीरञ्च कर्षयन् अपि सदोषः अपीत्यर्थः । मदः अवललम्बे स्वीकृतः । अज्ञानव्याजेन लाघवापङ्कवमोक्षणा-दिति भावः ।

कान्तेति । रतये सुरताय बहु सन्दिशतीभिः अनेकं वाचिकं कथयन्तीभिः सन्देशव्यसनात् गन्तव्यम् अपि अजानतीभिरित्यर्थः । रमणीभिः कान्तवेश्म यातं प्राप्तमेव न तु मध्ये मार्गात् निवृत्तम् इत्यर्थः । तथाहि—मन्मथेन परिलुप्तमतीनां स्खलितं विरुद्धाचरणमपि प्रायशः उपकारि भवति ॥ ३७ ॥

आश्विति । आशु कान्तम् अभिसारितवत्याः अभिगतवत्याः । स्वार्थे

निर्जिगाय मुखमिन्दुमखण्डं
खण्डपत्रतिलकाकृति कान्त्या ॥ ३८ ॥

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ॥ ३९ ॥

किं गतेन न हि युक्तमुपेतुं
कः प्रिये सुभगमानिनि मानः ।
योषितामिति कथासु समेतैः
कामिभिर्बहुरसा धृतिरूहे ॥ ४० ॥

॥ युग्मम् ॥

णिच् । योषितः सम्बन्धि पुलकैः रुद्धौ आवृतौ कपोलौ यस्य तत् । खण्डा प्रमृष्टा पत्राणां पत्रलेखानां तिलकस्य च आकृतिः सन्निवेशः यस्य तत्; तथोक्तं मुखं कान्त्याखण्डं पूर्णमिन्दुं निर्जिगाय जयति स्म । आर्थीयमुपमा । जयति द्वेष्टि" इति दण्डिना सादृश्यार्थेषु गणनात् ॥ ३८ ॥

अथ युग्मेन सखीनायिकासंवादमाह—उच्यतामिति । तत्र नायिका आह—स धूर्त्तः अशेषम् अखिलं वचनीयं वक्तव्यम् उच्यतां, निःशङ्कम् उपालभ्यताम् इत्यर्थः । ब्रुञो दुह्यादित्वात् अप्रधाने कर्मणि लोट् । अथ सखी आह—हे सखि ! ईश्वरे भर्त्तरि नायके विषये परुषता पारुष्यं न साध्वी न हिता । अथ नायिका आह—हे सखि ! तर्हि एनम् अनुनीय सान्त्वयित्वा आनय । पुनः सखी आह—विप्रियाणि जनयन् अप्रियाणि कुर्वन् स कथं वा अनुनेयः अनुनायार्हः ॥ ३९ ॥

किमिति । पुनर्नायिका आह—तर्हि गतेन तं प्रतिगमनेन किं कः अर्थः इत्यर्थः । कुतः ? उपेतुं गन्तुं न युक्तं हि । पुनः सखी आह—हे सुभगमानिनि ! सौन्दर्य्यमानिनि ! सुभगम् आत्मानं मन्यते इति "आत्ममाने खश्च" इति चकारात् णिनिप्रत्ययः । तस्मिन् प्रिये विषये कः मानः ? मानो न कर्त्तव्य इत्यर्थः । यद्वा नहि इत्यादि सखीवाक्यम् । तत्र न हि इत्येकं वाक्यं तद्युक्तं सखीत्यर्थः । हे सखि ! किन्तु उपेतुं

योषितः पुलकरोधि दधत्या
घर्मवारि नवसङ्गमजन्म ।
कान्तवक्षसि बभूव पतन्त्या
मण्डनं लुलितमण्डनतैव ॥ ४१ ॥

शीधुपानविधुरासु निगृह्णन्
मानमाशु शिथिलीकृतलज्जः ।
सङ्गतासु दयितैरुपलेभे
कामिनीषु मदनो नु मदो नु ॥ ४२ ॥

द्वारि चक्षुरधिपाणि कपोलौ
जीवितं त्वयि कुतः कलहोऽस्याः ।
कामिनामिति वचः पुनरुक्तं
प्रीतये नवनवत्वमियाय ॥ ४३ ॥

युक्तम् । कुतः ? सुभगमानिनि प्रिये कः मानः तादृग्जनस्य दुर्लभत्वादिति भावः । इत्येवंरूपासु योषितां कथासु विषये समेतैः समीपम् आगत्य आकर्णयद्भिरित्यर्थः । कामिभिः बहुरसा अनेकस्वादा धृतिः सन्तोषः जहे जढ़ा । अत्र रौद्र्यौत्सुक्यनिर्वेदाद्यनेकभावशाबल्यपरिपूर्णकान्ताकथाकर्णनात् उत्तरोत्तरम् अपूर्वं हृदयानन्दनिष्यन्दम् आनन्दसन्दोहम् अविन्दन् इत्यर्थः । प्रायेण अत्र प्रौढ़ाः कलहान्तरितास्च नायिकाः ॥ ४० ॥

योषित इति । पुलकरोधि रोमाञ्चव्यापि नवसङ्गमेन जन्म यस्य तत् घर्मवारि स्वेदोदकं दधत्या इति स्वात्त्विकोक्तिः । कान्तवक्षसि पतन्त्याः इति औत्सुक्योक्तिः । योषितः या लुलितमण्डनता उत्सृष्टप्रसाधनत्वम् भावे तल् । सैव मण्डनं बभूव । तादृशफलत्वात् तस्येति भावः ॥ ४१ ॥

शीधिति । शिध्यते अनेन इति शीधु पक्वेक्षुरसविकारः मद्यविशेषः तस्य पानेन विधुरासु विमूढ़ासु तथा दयितैः सङ्गतासु स्वयं प्राप्तासु च कामिनीषु अतिमानवतीषु आशु मानं कोपं निगृह्णन् निवर्त्तयन् शिथिलीकृता लज्जा येन स मदनः नु ? मदः नु उपलेभे लभ्यते स्म इत्यर्थः । प्रियसमागमशीधुपानरूपोभयकारणाभङ्गात् उभयथा माननिग्रहाद्यनुभावसाधारण्याच्च सन्देहः स एव अलङ्कारः ॥ ४२ ॥

साचि लोचनयुगं नमयन्ती
रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां
सङ्गतावुपरराम च लज्जा ॥ ४४ ॥

सव्यलीकमवधीरितखिन्नं
प्रस्थितं सपदि कोपपदेन ।
योषितः सुहृदिव स्म रुणद्धि
प्राणनाथमभिबाष्पनिपातः ॥ ४५ ॥

शङ्किताय कृतबाष्पनिपाताम्
ईर्ष्यया विमुखितां दयिताय ।

द्वारीति । द्वारि त्वदागमनमार्गे एव चक्षुरिति औत्सुक्योक्तिः । अधिपाणि पाणौ करे कपोलौ इति चिन्तोक्तिः । किं बहुना, जीवितं त्वयि त्वदधीनं त्वां विना न जीवति इत्यर्थः । इति गाढानुरागोक्तिः । अतोऽस्याः कलहः विग्रहः कुतः ? इत्येवं कामिनीनां प्रीतये पुनरुक्तं पुनःपुनः उच्यमानं वचः दूतीवाक्यं नवनवत्वं नवप्रकारत्वम् अपूर्ववद्भावम् इयाय । प्रकारार्थे द्विर्भावः कर्मधारयवद्भावात् सुपो लुक् । कान्तानुरागप्रकटनात् कामिनः प्रहर्षयन्ति इति भावः । कलहान्तरितेयम् ॥ ४३ ॥

साचीति । लोचनयुगं साचि तिर्यक् नमयन्ती प्रीये तिर्यक् पातयन्ती न तु क्रिया इत्यर्थः । दयितवक्षसि पातं रुन्धती इष्टम् अपि प्रतिबध्नती लज्जा सुभ्रुवः नायिकायाः विभूषां शोभां जनयति स्म । सङ्गतौ सुरतप्रसङ्गे सति उपरराम च । एवं यतः तदा चाभूषणं न दूषणम् एवेति भावः । "विभाषाकर्मकात्" इति परस्मैपदम् ॥ ४४ ॥

सव्यलीकमिति । सव्यलीकं सापराधम् अतएव अवधीरितः अवज्ञातः सन् खिन्नः तम् । पूर्वकाल" इत्यादिना तत्पुरुषः । सपदि कोपस्य पदेन व्याजेन प्रस्थितं निर्गच्छन्तं प्राणनाथं प्रियं योषितः सम्बन्धि अभिबाष्पनिपातः आभिमुख्येन अश्रुमोचः सुहृत् इव रुणद्धि स्म रुरोध । बाष्पपातस्य मन्युमोचलिङ्गतया प्रस्थानप्रतिबन्धकत्वात् सुहृदौपम्यम् । इयम् अधीरा खण्डिता । "ज्ञातेऽन्यासङ्गिनि पत्यौ खण्डितेर्ष्याकषायिता । अधीरा तु विमुञ्चन्ती विज्ञेया चात्र नायिका ॥" इति दशरूपके ॥ ४५ ॥

मानिनीमभिमुखाहितचित्तां
शंसति स्म घनरोमविभेदः ॥ ४६ ॥

लोलदृष्टि वदनं दयिताया-
श्चुम्बति प्रियतमे रभसेन ।
व्रीड़या सह विनीवि नितम्बा-
दंशुकं शिथिलतामुपपेदे ॥ ४७ ॥

ह्रीतया गलितनीवि निरस्यन्
अन्तरीयमवलम्बितकाञ्चि ।
मण्डलीकृतपृथुस्तनभारं
सस्वजे दयितया हृदयेशः ॥ ४८ ॥

शङ्कितायेति । शङ्किताय नायकाय अविश्वस्ताय दयिताय ईर्ष्यया विमुखीतां विमुखीकृताम् अतएव कृतवाष्पनिपातां मानिनीं घनरोमविभेदः सान्द्रपुलकोदयः अभिमुखम् आहितं चित्तं यया तां निष्कोपामित्यर्थः । शंसति स्म व्यनक्ति स्म इत्यर्थः । अन्यथा सात्त्विकानुदयादिति भावः । अत्रापि पूर्वोक्तैव नायिका । ४३ ॥

अथ सम्भोगशृङ्गारमाह। स आन्तरः वाह्यश्च तत्रापि वाह्यरतमाह—लोलेति । प्रियतमे लोलदृष्टि चञ्चलेक्षणं दयितायाः वदनं रभसेन बलात्कारेण चुम्बति सति विनीवि निर्गतबन्धनम् अंशुकं नितम्बाद्व्रीड़या सह शिथिलताम् उपपेदे उभयम् अपि शिथिलम् आसीत् इत्यर्थः । अत्र व्रीड़ांशुकरूपसम्बन्धिभेदभिन्नवृत्तिस्रंसनरूपशैथिल्ययो अभेदाध्यवसायनिबन्धनातिशयोक्तिमूलः सहोक्तिविशेषोऽलङ्कारः । अतएव व्रीड़ांशुकौपम्यञ्च कल्प्यम् । अत्र वात्स्यायनः-वाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते । अत्राद्यं-चुम्बनाश्लेषनखदन्तक्षतादिकम् । द्वितीयं सुरतं साक्षान्नानाकारेण कल्पितम् ।" इति ॥४७ ॥

ह्रीतयेति । गलितनीवि गलितबन्धनं तथापि अवलम्बिता काञ्ची येन तत् काञ्चीलग्नमित्यर्थः । तदन्तरीयम् अधोंऽशुकम् । "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके" इत्यमरः । निरस्यन् आक्षिपन् हृदयेशः प्रियः ह्रीतया वस्त्रापगमात् लज्जितया । ह्रीधातोः कर्त्तरि क्तः । दयितया

आहता नखपदैः परिरम्भा-

श्चुम्बितानि घनदन्तनिपातैः ।

सौकुमार्य्यगुणसम्भृतकीर्त्ति-

र्वाम एव सुरतेष्वपि कामः ॥ ४९ ॥

पाणिपल्लवविधूननमन्तः

सीत्कृतानि नयनार्द्धनिमेषाः ।

योषितां रहसि गद्गदवाचा-

मस्त्रतामुपययुर्मदनस्य ॥ ५० ॥

मण्डलीकृतः वर्त्तुलीकृतः पृथुः स्तनभारः यस्मिन् कर्म्मणि तत् यथा तथा गाढ़म् इत्यर्थः। सस्वजे आश्लिष्टः, प्रियदृष्टेः प्रतिबन्धार्थमित्यर्थः ॥ ४८ ॥

आहता इति । परिरम्भा आलिङ्गनानि नखपदैः हेतुभिः आहता अभिमताः। हेतौ इति तृतीया। तथा चुम्बितानि चुम्बनानि घनदन्तनिपातैः गाढ़दन्तक्षतैः हेतुभिः आहतानि इति लिङ्गविपरिणामः। सुरतसुखोद्दीपकत्वात् नखदन्तक्षतपूर्वकेषु आलिङ्गनचुम्बनेषु आदरः संवृत्त इत्यर्थः। ननु सुकुमारे कामतन्त्रे कथं पीड़ाकरेषु आदर इति न वाच्यम् इति आह—सौकुमार्य्यम् एव गुणः तेन सम्भृतकीर्त्तिः लब्धयशाः कामः सुरतेषु सम्भोगेषु अपि न केवलं विप्रलम्भेषु इति भावः। वामः क्रूर एव सुकुमारः कामः इति वादमात्रम्। वस्तुतस्तु पीड़यन् एव सुखम् आवहति इति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। ॥ ४९ ॥

अथ आभ्यन्तरं रतमाह—पाणीति। रहसि एकान्ते इति विश्रान्तियोक्तिः। गद्गदवाचां स्खलद्गिरां योषितां सम्बन्धीनि पाणिपल्लवयोः विधूननं कम्पनम् अन्तःसीत्कृतानि सीत्काराः। एतेन कुट्टमिताख्यो भाव उक्तः। "अधरपीड़नादौ सुखेऽपि दुःखवदुपचारः कुट्टमितम्" इति लक्षणात्। नयनानाम् अर्द्धनिमेषाः अर्द्धनिमीलितानि। रहसि एकान्ते गद्गदवाचां योषितामिति विशेषणसामर्थ्यात् गद्गदकण्ठत्वं च इति एतानि मदनस्य अस्त्रताम् उपययुः अस्त्रवत् पुंसाम् उद्दीपनानि आसन् इत्यर्थः। अत्र सीत्काराद्धनिमेषादिना सुखपारवश्यं व्यज्यते। तदुक्तं रतिरहस्ये—"स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम्। ... प्रयोगे स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुला॥" इति॥ ५० ॥

पातुमाहितरतीन्यभिलेषु-
स्तर्षयन्त्यपुनरुक्तरसानि ।
सस्मितानि वदनानि वधूनां
सोत्पलानि च मधूनि युवानः ॥ ५१ ॥

कान्तसङ्गमपराजितमन्यौ
वारुणीरसनशान्तविवादे ।
मानिनीजन उपाहितसन्धौ
सन्दधे धनुषि नेषुमनङ्गः ॥ ५२ ॥

कुप्यताशु भवतानतचित्ताः
कोपितांश्च वरिवस्यत यूनः ।
इत्यनेक उपदेश इव स्म
स्वाद्यते युवतिभिर्मधुवारः ॥ ५३ ॥

अथ मधुपानवर्णनमारभते—पातुमित्यादिना । युवानः आहितरतीनि वर्द्धितरागाणि अतएव अपुनरुक्तरसानि पुनःपुनः पानेनापि अपूर्वस्वादानि अतएव तर्षयन्ति तृष्णोत्पादकानि अत्यभिकराणीत्यर्थः । सस्मितानि वधूनां वदनानि सोत्पलानि मधूनि च पातुमभिलेषुः इच्छन्ति स्म । अत्र प्रस्तुतानामिव वदनानां मधूनां च पानक्रियौपम्यस्य गम्यत्वात् केवलं प्राकरणिकविषयतया तुल्ययोगितालङ्कारः । "प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥" इति लक्षणात् ॥ ५१ ॥

कान्तेति । कान्तसङ्गमेन पराजितमन्यौ व्यक्तरोषे तदवधिकत्वात्तस्येति भावः । किञ्च वारुणीरसनेन मध्वास्वादेन शान्तः विवादः वाक्कलहादिः यस्य तस्मिन्, अतः उपाहितसन्धौ प्रियैः सह कृतसन्धाने मानिनीजने विषये अनङ्गः धनुषि इषुं न सन्दधे सन्धानं नाकरोत् । सिद्धसाध्ये साधनवैयर्थ्यादिति भावः ॥ ५२ ॥

कुप्यतेति । यूनः प्रियान् कुप्यत यूनां कोपं जनयत । नात्र "क्रुधद्रुह" इत्यादिना यूनां सम्प्रदानत्वे चतुर्थी, तस्य "यं प्रति कोपः" इति नियमात् । अत्र कोपस्तावत् कृत्रिम इति । आशु आनतचित्ताः अनुकूलचित्ताः भवत ।

भर्त्तृभिः प्रणयसम्भ्रमदत्तां
वारुणीमतिरसां रसयित्वा ।
ह्रीविमोहविरहादुपलेभे
पाटवं नु हृदयं नु वधूभिः ॥ ५४ ॥
स्वादितः स्वयमथैधितमानं
लम्भितः प्रियतमैः सह पीतः ।
आसवः प्रतिपदं प्रमदानां
नैकरूपरसतामिव भेजे ॥ ५५ ॥

किञ्च कोपितास्तान् वरिवस्यत परिचरत । "नमो वरिवश्चित्रङः क्यच्" इति क्यच् । वरिवसः परिचर्य्यायामित्यर्थे तस्य नियमस्य । इत्येवम् अनेकः अनेकप्रकारः यः उपदेशः । प्रवर्त्तकवाक्यं स इव मधुवारः मधुपानावृत्तिः । "मधुवारा मधुक्रमा" इत्यमरः युवतिभिः स्वाद्यते स्म । मधुवारस्य कोपादिकार्य्यप्रवर्त्तकत्वसाम्यात् उपदेश इवेति उत्प्रेक्षा । अनियताः खलु मत्तचेष्टा इति भावः ॥ ५३ ॥

भर्त्तृभिरिति । भर्त्तृभिः प्रणयसम्भ्रमाभ्यां प्रेमादराभ्यां दत्ताम् । "संभ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति विश्वः । अतएव अतिरसाम् अधिकस्वादां वारुणीं वरुणात्मजाम् । "सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा" इत्यमरः । रसयित्वा आस्वाद्य वधूभिः ह्रीविमोहविरहात् मदेन लज्जाजाड्यापगमात् हेतोः पाटवं पटुत्वं नु हृदयं ज्ञानविशेषं नु उपलेभे । अतएव हृदयस्य तत्कार्य्यज्ञानसामर्थ्यात् हृदयमेव प्रागसत् पश्चात् लब्धमिति सन्देहः । अन्यथा कथं प्रियं प्रति वक्रोक्त्याद्यर्थेषु प्रवृत्तिरिति भावः । सन्देहालङ्कारः ॥ ५४ ॥

स्वादित इति । स्वयं स्वादितः आदौ स्वयमेव आदाय पीतः, अथ अनन्तरं प्रियतमैः एधितमानं वर्द्धितबहुसम्मानं यथा तथा लम्भितः ग्राहितः स्वहस्तेन प्रापित इत्यर्थः । ततः प्रियतमैः सह पीतः, युगपदेकपात्रेण पीत इत्यर्थः । आसवः प्रमदानां प्रतिपदं प्रतिक्षणं न एकरूपरसतामनेकविधस्वादुत्वम् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नञ्समासे नलोपः स्यात् । भेजे इव प्राप इव । प्रायेण उपचारविशेषाद्भोज्येषु रसविशेषः स्वादिति भावः । आस्वादनादिपदार्थानाम् अनेकरसताप्राप्तिहेतुत्वात् काव्यलिङ्ग

भ्रूविलाससुभगाननुकर्त्तुं
विभ्रमानिव बधूनयनानाम् ।
आददे मृदुविलोलपलाशै-
रुत्पलैश्चषकवीचिषु कम्पः ॥ ५६ ॥

ओष्ठपल्लवविदंशरुचीनां
हृद्यतामुपययौ रमणानाम् ।
फुल्ललोचनविलोलसरोजै-
रङ्गनास्यचषकैर्मधुवारः ॥ ५७ ॥

प्राप्यते गुणवतापि गुणानां
व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं
व्यानशे मधु रसातिशयेन ॥ ५८ ॥

तावत् एकं स्वादनादीनाम् अनेकधर्माणाम् एकस्मिन् एव सर्व्वक्रमेण सम्बन्धात् पर्य्यायभेदस्य, तयोश्च संसृष्टयोः अनेकरसत्वोत्प्रेक्षाबीजत्वात् तया सह अङ्गाङ्गिभावेन सङ्करः ॥ ५५ ॥

भ्रुविलासेति । भ्रूविलासैः सुभगान् सुन्दरान् बधूनयनानां विभ्रमान् अनुकर्त्तुं तैः आत्मानं समीकर्त्तुमिवेति फलोत्प्रेक्षा । मृदुविलोलपलाशैः ईषच्चञ्चलदलैः उत्पलैः चषकेषु याः वीचयः मधूर्मयः तासु यः कम्पः सः आददे स्वीकृतः न तु स्वकम्पः तस्य विलोलविशेषणेनैव उक्तत्वात् तत्स्वीकारस्य तद्योग एव । पूर्वं नेत्रमात्रसाम्यभाजाम् उत्पलानां कम्पमानवाचियोगात् सभ्रूविन्यासनेत्रसाम्यं जातमित्यर्थः ॥ ५६ ॥

ओष्ठेति । ओष्ठ एव पल्लवः तस्य विदंशे दंशने रुचिः अभिलाषः येषां तेषां सुखसुरापानमिषेण अधरं पिपासतामित्यर्थः । रमणानां फुल्लानि लोचनानि एव विलोलसरोजानि येषु तैः अङ्गनास्यानि एव चषकाणि पानपात्राणि । "चषकोऽस्त्री पानपात्रम्" इत्यमरः । तैः मधुवारः मधुपानावृत्तिः हृद्यतां हृदयप्रियताम् उपययौ । "हृदयस्य प्रियः" इति यत् प्रत्ययः । "हृदयस्य हृल्लेखयदण्लासेषु" इति हृद्भावः । रमणविशेषणार्थ-हेतुककाव्यलिङ्गसङ्कीर्णरूपकालङ्कारः ॥ ५७ ॥

वीच्य रत्नचषकेष्वतिरिक्तां
कान्तदन्तपदमण्डनलक्ष्मीम् ।
जज्ञिरे बहुमताः प्रमदाना-
मोष्ठयावकनुदो मधुवाराः ॥ ५९ ॥

लोचनाधरकृताहृतरागा
वासिताननविशेषितगन्धा ।
वारुणी परगुणात्मगुणानां
व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

प्राप्यत इति । गुणवतापि आश्रयवशेन गुणानां विशेषः प्रकर्षः प्राप्यते व्यक्तं तत् तथा यदुक्तं तथैवेत्यर्थः । हि यस्मात् दयितायाः आननेन करणेन दत्तं मधु रसातिशयेन स्वादुप्रकर्षेण कर्त्री व्यानशे व्याप्तम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५८ ॥

वीच्येति । रत्नचषकेषु स्फटिकादिमणिपात्रेषु अतिरिक्तां यावकापगमात् पूर्वाभ्यधिकां कान्तस्य यत् दन्तपदमण्डनं तस्य लक्ष्मीं शोभां प्रतिबिम्बितामिति शेषः । वीच्य ओष्ठयावकनुदः अधरलाक्षारागहारिणः मधुवाराः मधुपानाभ्यासाः प्रमदानां बहुमताः अभिमताः । वर्त्तमाने क्तः तद्योगात् षष्ठी । जज्ञिरे जाताः । तेषां प्रियानुरागचिह्नप्रकाशकत्वादिति भावः ॥ ५९ ॥

मधुपानात् विलोचनेषु रागोत्पत्तिः अधरेभ्यश्च लाक्षारागनिवृत्तिः मध्वाननयोश्च अन्योन्यगन्धसङ्क्रान्तिरिति स्थिते सति उत्प्रेक्षते—लोचनेति । लोचने च अधरश्च लोचनाधरम् । "समुद्राभ्राद्घः" इति व्यभिचारशापकात् नात्राधरशब्दस्य पूर्वनिपातः । कृतश्चासौ आहृतश्च इति विशेषणसमासः । लोचनाधरस्य कृताहृतः रागः यया सा तथोक्ता लोचनयोः कृतरागा अधरात् आसमन्तात् हृतरागा चेत्यर्थः । षष्ठ्याश्च अर्थसम्बन्धात् सामान्यस्य योग्यविशेषन पर्य्यवसाननियमेन अधिकरणापादानार्थयोराक्षेपात् । तथा च अधरलोचनपरगुणयोः रागतद्विरहयोः स्थानविपरिवृत्तिं कृतवतीत्यर्थः । तथा वासितेन स्वगन्धसंक्रान्तिसुरभितेन आननेन विशेषितः अतिशयितः गन्धो यस्याः सा ॥ यद्वा वासितानना चासौ अर्थात् आननेनैव विशेषितगन्धा चेति कृतद्वं

तुल्यरूपमसितोत्पलमक्ष्णोः
कर्णगं निरुपकारि विदित्वा।
योषितः सुहृदिव प्रविभेजे
लम्भितेक्षणरुचिर्मदरागः॥ ६१॥

क्षीणयावकरसोऽप्यतिपानैः
कान्तदन्तपद-लम्भित-(सम्भृत)शोभः।
आययावतितरामिव वध्वाः
सान्द्रतामधरपल्लवरागः॥ ६२॥

व्रीहिविशेषणसमासः। उभयथापि आननसंक्रान्तस्वगन्धा स्वसंक्रान्ताननगन्धा चेत्यर्थः। एवम्भूता वारुणी मदिरा परगुणात्मगुणानां परयोः लोचनाधरयोः गुणौ च परस्य आननस्य गुणः आत्मनः वारुण्याः गुणश्च परगुणात्मगुणाः तेषां परगुणात्मगुणानाम् व्यत्ययं नु विनिमयं नु वितेने विस्तारयामास। विना प्रामादिकी वस्तुपरिवृत्तिर्व्यत्ययः। बुद्धिपूर्वा वस्तुपरिवृत्तिस्तु विनिमयः। अत्र तन्त्रोच्चरितस्य परगुणशब्दस्य आवृत्त्या परगुणौ च परगुणात्मगुणौ चेति विग्रहः कथञ्चित् अगत्या सोढव्यः। उपमानपूर्वपदबहुव्रीहिवत्। तथाचायमर्थः—परगुणयोः अधरलोचनगुणयोः रागतद्विरहयोर्व्यत्ययं नु विनिमयं नु वितेने? तथा परगुणात्मगुणयोराननगन्धात्मगन्धयोश्च व्यत्ययं नु विनिमयं नु वितेने? अन्यथा कथम् अन्यस्मिन् अन्यधर्मोपलम्भः सम्भवतीति भावः। अत्र लोचनाधररागयोस्तदभावयोर्वा भेदे अपि अभेदाध्यवसायात् एकत्ववाचो युक्तिः, तस्मात् तन्मूलातिशयोक्त्यनुप्राणिता चेयं व्यत्ययविनिमययोरन्यतरकरणोत्प्रेक्षा इति संक्षेपः। सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नुशब्दस्तु संशये॥ ६०॥

तुल्येति। अक्ष्णोस्तुल्यरूपम् अक्षितुल्याकृति योषितः कर्णगं कर्णावतंसीकृतम् असितोत्पलं निरुपकारि अनुपकारकं विदित्वा ज्ञात्वा तत्कार्यशोभायाः कर्णान्तविश्रान्तेन अक्ष्णा एव कृतत्वादिति भावः। मदरागः सुहृत् इव उत्पलस्य बन्धुरिव अनिष्टवारकत्वादिति भावः। लम्भितेक्षणरुचिः प्रापितनयनकान्तिः सन् प्रविभेजे वर्णान्तरापादनेन प्रविभक्तवान्।

रागकान्तनयनेषु नितान्तं
विद्रुमारुणकपोलतलेषु ।
सर्वगापि ददृशे वनितानां
दर्पणेष्विव मुखेषु मदश्रीः ॥ ६३ ॥

बद्धकोपविकृतीरपि रामा-
श्चारुताभिमततामुपनिन्ये ।
वश्यतां मधुमदो दयितानां-
मात्मवर्गहितमिच्छति सर्वः ॥ ६४ ॥

अवैलक्षण्यकरात् अक्ष्णः व्यावर्त्तयामास । ततः विच्छित्तिकरत्वादिति भावः ॥ ६१ ॥

क्षीणेति / अतिपानैः क्षीणयावकरसः क्षीणलाक्षारागोऽपि कान्तस्य दयितस्य दन्तपदेन दन्तक्षतेन सम्भृता शोभा यस्य सः वध्वा अधरपल्लवरागः अतितराम् अतिमात्रम् । अतिशब्दात् तरप्प्रत्यये "किमेत्तिङव्यय" इत्यादिना आम्प्रत्ययः । "तद्धितश्चासर्वविभक्तिः" इति अव्ययसंज्ञा। सान्द्रतां घनत्वम् । आययौ इव प्रियोपभोगचिह्नमण्डितानां कामिन्यवयवानां किम् अन्यैः मण्डनैरिति भावः । अत्र क्षीणस्यापि सान्द्रतेति विरोधात् कान्तदन्तेत्यादिविशेषणगत्या सान्द्रत्वे हेतूक्त्या काव्यलिङ्गं तत्सङ्कीर्णा च उत्प्रेक्षा॥ ६२ ॥

रागेति। वनितानां सर्वगा अपि सर्वाङ्गगता अपि । "अन्तात्यन्त" इत्यादिना डः । मदश्रीरागेण कान्तानि नयनानि येषु तेषु विद्रुमवत् अरुणानि कपोलतलानि येषु तेषु मुखेषु दर्पणेषु इव नितान्तं ददृशे, तेषां नयनादिनैर्मल्येन रागाभिव्यक्तिसम्भवादिति भावः। अत्र मदश्रीः सर्वगतापि मुखेषु इव ददृशे इति विरोधः। तस्य मुखविशेषणैः समाधानात् काव्यलिङ्गानुप्राणितो विरोधवदाभासोऽलङ्कारः। स च उपमया संसृज्यते ॥ ६३

बद्धेति। बद्धा कोपेन विकृतिः याभिः ताः तथाभूताः अपि रामाः कर्म्म चारुता तासां सौन्दर्य्यं कर्त्री अभिमततां प्रियवाल्लभ्यम् उपनिन्ये। सौन्दर्य्यं हि विकृतिम् अपि रोचयते इति भावः। मधुमदः दयितानां वश्यतां विधेयत्वम् उपनिन्ये। तथाहि—सर्वः आत्मवर्गहितम् इच्छति अतः

वाससां शिथिलतामुपनाभि
ह्रीनिरासमपदे कुपितानि ।
योषितां विदधती गुणपक्षे
निर्ममार्ज मदिरा वचनीयम् ॥ ६५ ॥

भर्तृषूपसखि निक्षिपतीना-
मात्मनो मधुमदोद्यमितानाम् ।
व्रीडया विफलता वनितानां
न स्थितं न विगतं हृदयेषु ॥ ६६

रुन्धती नयनवाक्यविकाशं
सादितोभयकरा परिरम्भे ।

चारुता स्त्रीत्वात् स्त्रीणाम् उपचकार । मधुमदस्तु पुंस्त्वात् पुंसाम् इति युक्त मित्यर्थः । अत्र विरुता अपि अभिमताः कुपिताः अपि वश्याः इति विरोधस्य चारुतामदाभ्यां समाधानात् उभयथापि विरोधाभासो भवन् अर्थान्तरन्यासेन संसृज्यते ॥ ६४ ॥

वाससामिति । उपनाभि नाभिसमीपे वाससां शिथिलतां ह्रीनिरासं लज्जात्यागम् अपदे कुपितानि अस्थानकोपांश्च गुणपक्षे गुणकोटौ विदधती निवेशयन्ती, दोषान् अपि एतान् गुणान् कुर्वतीत्यर्थः । मदिरा अपि योषितां वचनीयम् । "न नाभिं दर्शयेत्" इति शास्त्रनिषिद्धाचरणनिन्दां निर्ममार्ज । तथा दोषाणामपि वस्त्रशैथिल्यादीनां तदानीं गुणत्वात् न कश्चित् वचनीयावकाश इत्यर्थः ॥ ६५ ॥

भर्तृष्विति । उपसखि सखीसमीपे । समीपार्थे अव्ययीभावः । आत्मनः स्वदेहान् । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" इति वैजयन्ती । भर्तृषु निक्षिपतीनां निपातयन्तीनां भर्तृणामुपरि पतन्तीनामित्यर्थः । "शाश्वतोनद्योर्नुम्" इति विकल्पात् नुमभावः । कुतः ? मधुमदेन उद्यमितानां प्रेरितानां न तु स्वेच्छया इति भावः । वनितानाम् अनुरक्तस्त्रीणाम् । "वनिता जनितात्यर्थानुरागायां च योषिति" इति विश्वः । हृदयेषु विफलया, अनुचिताचरणादिति भावः । व्रीडया न स्थितं न विगतम् । वैफल्यात् तस्याः मदोपाधिकत्वाच्चेति भावः । अतएव न उभयनिषेधविरोधः ॥ ६६ ॥

व्रीड़ितस्य ललितं युवतीनां
क्षीवता बहुगुणैरनुजह्रे ॥ ६७ ॥

योषिदुद्धतमनोभवरागा
मानवत्यपि ययौ दयिताङ्कम् ।
कारयत्यनिभृता गुणदोषे
वारुणी खलु रहस्यविभेदम् ॥ ६८ ॥

आहिते नु मधुना मधुरत्वे
चेष्टितस्य गमिते नु विकाशम् ।
आबभौ नव इवोद्धतरागः
कामिनीष्ववसरः कुसुमेषोः ॥ ६९ ॥

रुन्धतीति । नयनानां वाक्यानां च विकाशं प्रागल्भ्यं रुन्धती प्रतिबध्नती । तथा परिरम्भे आलिङ्गने सादितौ स्तम्भितौ उभौ करौ यया सा युवतीनां सम्बन्धिनी क्षीवता मत्तता । कर्त्तरि क्तः । "अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः" इति निपातनात् साधुः । क्षीवा मत्ता तस्याः भावः क्षीवता । त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । बहुगुणैरिष्टसङ्कोचादिभिः व्रीड़ितस्य व्रीड़ायाः । भावे क्तः । ललितं विलासम् अनुजह्रे अनुचक्रे । कर्त्तरि लिट् । व्रीड़ाकार्य्यकरत्वात् व्रीड़ानुकरणम् इति उपमालङ्कारः ॥ ६७ ॥

योषिदिति । उद्धतः उत्कटः मनोभवेन यो रागः प्रीतिः सः यस्याः सा योषित् मानवती अपि दयितस्य अङ्कं ययौ । यतः मानात् रागः बलीयान् इति भावः । लाघवदोषं परिहरति—कारयतीति । अनिभृता चपला न कार्य्यकारिणीत्यर्थः । वारुणी मदिरा गुणेषु दोषेषु च विषये । सर्वोऽपि द्वन्द्वः विभाषया एकवद् भवति । रहस्यविभेदं रहस्यभङ्गं कारयति खलु । बलात् निगूहितौ अपि गुणदोषौ प्रकाशयतीत्यर्थः । यतोऽतिगूढ़रागप्रकटनं प्रकटमानत्यागश्च प्रमत्तायाः न लाघवम् आवहति अबुद्धिपूर्व्वकत्वादिति भावः ॥ ६८ ॥

आहित इति । मधुना मद्येन चेष्टितस्य रतिव्यापारस्य मधुरत्वे माधुर्य्ये आहिते नु ? सम्पादिते नु ? प्रागसत्येव मनोहरत्वे सम्प्रति उत्पादिते वा । विकाशं गमिते नु प्राक्सत्येव माधुर्य्ये प्रकर्षं प्रापिते वा । उद्धतरागः

मा गमन्मदविमूढ़धियो नः
प्रोज्झ्य रन्तुमिति शङ्कितनाथाः ।
योषितो न मदिरां भृशमीषुः
प्रेम पश्यति भयान्यपदेऽपि ॥ ७० ॥

चित्तनिर्वृतिविधायि विविक्तं
मन्मथो मधु मदः शशिभासः ।
सङ्गमश्च दयितैः स्म नयन्ति
प्रेम कामपि भुवं प्रमदानाम् ॥ ७१ ॥

उद्भिन्नरागः । अत एव कुसुमेषोः कामिनीषु अवसरः प्रवेशः नव इव आवभौ नित्यसन्निहितोऽपि मदनः कामिनीषु मदकृततात्कालिकचेष्टामाधुर्य्याद् रागोद्रेके सति अपूर्ववत् उद्दीप्तः अभूदित्यर्थः । संशयानुप्राणितेयमुत्प्रेक्षा ॥ ६९

मा गमन्निति । शङ्कितनाथाः अविश्वस्तपुरुषाः योषितः मदेन विमूढ़धियः स्तब्धबुद्धयो नः अस्मान् प्रोज्झ्य विसृज्य । प्रपूर्वात् उज्झतेः समासे अनञ् पूर्वे क्त्वो ल्यप् । रन्तुं मा गमन् न गच्छन्तु इति मनीषयेति शेषः । गमेर्माङि लुङ्, "न माङ्योगे" इति अड़ागमप्रतिषेधः । मदिरां भृशम् अतिमात्रं न ईषुः न इच्छन्ति स्म, किन्तु भर्तृवियोगभयात् ईषदेव पपुरित्यर्थः । तथाहि—प्रेम स्नेहः अपदे अस्थाने अपि भयानि अनिष्टानि पश्यति उत्प्रेक्षते, शङ्कते इति यावत् । शङ्काहेतौ प्रेम्णि कर्त्तृत्वोपचारः ॥ ७०

चित्तेति । चित्तस्य निर्वृतिविधायि सुखकरं विविक्तं रहः । "विविक्तं रहसि स्मृतम्" इति विश्वः । मन्मथः मधुमदः मद्यमदः शशिभासः चन्द्रिकाः दयितैः सह सङ्गमश्च । "वृद्धो यूना" इति निर्देशात् सहशब्दाप्रयोगेऽपि सहार्थे तृतीया । एतानि प्रमदानां स्त्रीणां प्रेम वियोगासहत्वावस्थासम्भोगं कामपि भुवं काञ्चित् दशां नयन्ति स्म । रत्यवस्थामपि अतिक्रम्य शृङ्गारावस्थां क्रीड़ामयीं निन्युरित्यर्थः । "प्रेमाभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा । शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्त्तितः ॥" इत्युक्तं रसरत्नाकरे । 'प्रेमा दिदृक्षा रम्येषु तच्चिन्ताप्यभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया । तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम् शृङ्गारस्तत्समं क्रीडा सम्भोगः सप्तधा क्रमः ॥" इति ॥ ७१ ॥

धार्ष्ट्यलङ्घितयथोचितभूमौ
निर्दयं विलुलितालकमाल्ये ।
मानिनीरतिविधौ कुसुमेषु-
र्मत्तमत्त इव विभ्रममाप ॥ ७२ ॥

शीधुपानविधुरेषु वधूनां
निघ्नतामुपगतेषु वपुःषु ।
ईहितं रतिरसाहितभावं
वीतलक्ष्यमपि कामिषु रेजे ॥ ७३ ॥

अन्योन्यरक्तमनसामथ बिभ्रतीनां
चेतोभुवो हरिसखाप्सरसां निदेशम् ।
वैबोधिकध्वनिविभावितपश्चिमार्द्धा
सा संहृतेव परिवृत्तिमियाय रात्रिः ॥ ७४ ॥

क्रीडावस्थामाह—धार्ष्ट्येति । धार्ष्ट्येन प्रागल्भ्येन लङ्घिता अतिक्रान्ता यथोचिता योग्या भूमिः मर्य्यादा यस्मिन् तथोक्ते । चुम्बनताड़नमणितसीत्कारपुरुषायितादौ स्वयम् उच्छृङ्खलवृत्तिरिति भावः । निर्दयं यथा तथा विलुलितानि आकर्षणाकुलितानि अलकमाल्यानि च यस्मिन् तस्मिन् मानिनी रतिविधौ स्त्रीसुरते कुसुमेषुः कामः मत्तमत्तः मत्ताकारः इव विभ्रमं विजृम्भणम् आप प्राप । मत्तः किं न करोतीति भावः कारयितरि कर्त्तृत्वोपचारात् उत्प्रेक्षा ॥ ७२ ॥

शीधुविति । शीधुपानेन मद्यपानेन विधुरेषु विह्वलेषु । "मैरेयमासवशीधुः" इत्यमरः । अतएव वपुःषु अङ्गेषु निघ्नतां प्रियपराधीनतामुपगतेषु सत्सु । "अधीनो निघ्न आयत्तः" इत्यमरः । वधूनां सम्बन्धिनि रतिरसे सुरतरसास्वादे आहितभावं दत्तचित्तं कामिषु विषये ईहितं चुम्बनताड़नादिचेष्टितं वीतलक्ष्यं निर्विषयम्, अस्थानकृतमपीत्यर्थः । रेजे रागिणां स्खलितम् अपि शोभते इति भावः । विरोधालङ्कारः ॥ ७३ ॥

अन्योन्येति । अथ हरिसखाः इन्द्रसचिवाः गन्धर्वाः तेषाम् अप्सरसां च अन्योन्यरक्तमनसां परस्परानुरक्तचित्तानां चेतोभुवः कामस्य निदेशम् आज्ञां बिभ्रतीनां स्मरविधेयानां, तासु रममाणास्विः इत्यर्थः । "वधी

निद्राविनोदितनितान्तरतिक्लमाना-
मायामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूनां
तत्पूर्वतामिव समादधिरे रतानि ।। ७५ ।।
कान्ताजनं सुरतखेदनिमीलिताक्षं
संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धा-
नाविश्चकार रजनीपरिवृत्तिवायुः ।। ७६ ।।

चानादरे'' इति षष्ठी । विबोधः प्रबोधनं शीलम् एषामिति वैबोधिकाः वैतालिकाः । "शीलम्" इति ठक् । तेषां ध्वनिभिः मङ्गलरवैः विभावितः अभ्यूहितः ज्ञातः पश्चिमार्द्धः चरमभागो यस्याः सा तथोक्ता सा रात्रिः संहृता संक्षिप्ता एवेति उत्प्रेक्षा । सुखिनां भूयानपि कालः लघीयानिव भवतीति भावः । परिवृत्तिं विवृत्तिम् इयाय प्रभातकल्पा अभूदित्यर्थः ।।७४।।

निद्रेति । निद्रया विनोदितः अपनीतः नितान्तम् अत्यर्थं यः रतयाः क्लमः सः येषां तेषाम् आयामिभिः आयामवद्भिः दीर्घैः मङ्गलनिनादैः वैबोधिकध्वनिभिः विबोधितानाम् यूनां रामासु । "सुन्दरी रमणी रामा" इत्यमरः । भावविरहेण आकुलितासु सतीषु रतानि तान्येव पूर्वाणि प्रथमानि तत्पूर्वाणि तेषां भावः तत्पूर्वता ताम् । भावे तल्-प्रत्ययः । समादधिरे प्रापुः इवेत्युत्प्रेक्षा । आद्यसुरतवत् आदरात् प्रवर्त्तन्ते इत्यर्थः । यदुत्तरकालं दुर्लभं तत् अतितृष्णया अनुभूयते इत्यर्थः । ।। ७५ ।।

कान्तेति । सुरतखेदेन निमीलितानि अक्षीणि येन तं कान्ताजनं स्त्रीसमूहं संवाहितुं सेवितुम् इव, खेदापनोदार्थम् अङ्गमर्दनं कर्त्तुमित्यर्थः । संवाहनं वाहनेऽपि नरादेरङ्गमर्द्दने" इति विश्वः । "वाह प्रयत्ने" इति धातोः अण्यन्तात् तुमुन् । अन्यथा णिज्ग्रहणे संवाहयितुमितिस्यात् । मन्दमन्दं मन्दप्रकारम् । "प्रकारे गुणवचनस्य इति द्विर्भावे कर्मधारयवद्भावात् सुपो लुक् । समुपयान् संवान् रजनीपरिवृत्तिवायुः निशावसानमरुत् । हर्म्येषु माल्यानि च मदिरा च परिभोगः विमर्दश्च तेषां गन्धान् आविश्चकार प्रकटं प्रकाशयामास इत्यर्थः । अत्र

आमोदवासितचलाधरपल्लवेषु
निद्राकषायितविपाटललोचनेषु ।
व्यामृष्टपत्रतिलकेषु विलासिनीनां
शोभां बबन्ध वदनेषु मदावशेषः ॥ ७७ ॥

गतवति नखलेखालक्ष्यतामङ्गरागे
समददयितपीताताम्रबिम्बाधराणाम् ।
विरहविधुरमिष्टा सत्सखीवाङ्गनानां
हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥ ७८ ॥

इति सुरसुन्दरीसम्भोगवर्णनं नाम नवमः सर्गः ॥ ९ ॥

संवाहितुमिव इत्युत्प्रेक्षा । मान्द्यगुणमूलत्वात् गुणनिमित्तक्रियाफला उत्प्रेक्षा ॥७६॥

आमोदेति । आमोदेन मद्यगन्धेन वासिताः सुरभिताः चलाः दष्टमुक्तत्वात् स्फुरन्तश्च अधरपल्लवाः येषु तेषु, निद्रया कषायितानि अपटूकृतानि विपाटलानि लोचनानि येषु तेषु । "कषायस्तुवरे न स्त्री निर्यासे रञ्जकादिके । सुरभावपटौ रक्ते सुन्दरे लवणेऽपि च ॥" इति केशवः । व्यामृष्टानि प्रमृष्टानि पत्राणि तिलकाश्च येषां तेषु. विलासिनीनां वदनेषु मदावशेषः शोभां बबन्ध । मण्डनान्तरापाये मदशेष एव मण्डनं बभूव इत्यर्थः । स्त्रीणां मद एव विभूषणमिति भावः ॥७७॥

गतवतीति । अङ्गरागे अङ्गविलेपने नखरेखासु लक्ष्यतां दृश्यतां गतवति सति विमर्दात् तन्मात्रावशेषे सतीत्यर्थः । किञ्च बिम्बतुल्याः अधराः बिम्बाधराः । "शाकपार्थिवादित्वात् मध्यमपदलोपी समानाधिकरणसमासः" इति वामनः । समदैः दयितैः पीताः पीडिताः अतएव अतिपीडनात् आताम्राः आसमन्तात् रक्ताः बिम्बाधराः यासां तासाम् अङ्गनानां सम्बन्धि विरहेण प्राह्निकेन वियोगेन विधुरं विह्वलं हृदयं रात्रिसम्भोगलक्ष्मीः नखपदादिशोभा इत्यर्थः । इष्टा आप्ता सतसखीव निपुणसहचरी इव अवललम्बे धारयामास । प्रियसम्भोगचिह्नशोभा स्पष्टा बभूव इत्यर्थः । प्रियोपभोगचिह्नशोभावलोकनलालसाः कथं विरहं सहन्त इत्यर्थः । श्रौतिपूर्णोपमालङ्कारः । मालिनीवृत्तम् । लक्षणं तु उक्तम् ॥ ७८

इति किरातार्जुनीयकाव्यस्य नवमसर्गव्याख्या समाप्ता ॥ ९

## दशमः सर्गः ।

अथ परिमलजामवाप्य लक्ष्मीम्
अवयवदीपितमण्डनश्रियस्ताः ।
वसतिमभिविहाय रम्यहावाः
सुरपतिसूनुविलोभनाय जग्मुः ॥ १ ॥

द्रुतपदमभियातुमिच्छतीनां
गगनपरिक्रमलाघवेन तासाम् ।
अवनिषु चरणैः पृथुस्तनीनाम्
अलघुनितम्बतया चिरं निषेदे ॥ २ ॥

अथागन्तुकसहजशोभासम्पन्नतया समग्रसाधनाः स्त्रियो मुनिमनःप्रलोभनार्थं प्रास्थन्नित्याह । अथेति । अथ प्रभाते परिमलजां सम्भोगसम्भूतां लक्ष्मीं शोभामवाप्य । "सम्भोगः स्यात्परिमले" इति वैजयन्ती । सम्भोगात् स्त्रियः शोभन्त इति भावः । एतेन आगन्तुकशोभासम्पत्तिरुक्ता । अतएव सुरतादिवर्णनस्य प्रस्तुतोपयोगित्वञ्चोक्तम् । अथ सहजशोभासम्पत्तिमाह—अवयवेति । अवयवैः स्तनादिभिर्दीपिता मण्डिता मण्डनश्रीः प्रसाधनशोभा याभिः ताः । रम्यहावा मनोहरविलासास्ताः स्त्रियः । "हावो विलासश्चेष्टायाम्" इति विश्वः । वसतिं शिविरम् अभिविहाय सर्वतः त्यक्त्वा सुरपतिसूनोः अर्जुनस्य विलोभनाय जग्मुः । अत्र अवयवदीपकतया प्रसिद्धस्य मण्डनस्य तद्दीप्यत्वासम्बन्धेऽपि सम्बन्धाभिधानात् अवयवसौन्दर्य्यातिशयद्योतनार्थत्वात् अतिशयोक्तिरलङ्कारः । अस्मिन् सर्गे पुष्पिताग्रावृत्तम् । "अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ १ ॥

द्रुतेति । गगनपरिक्रमलाघवेन गगनगमनवेगेन द्रुतपदं यथा तथा अभियातुं गन्तुमिच्छतीनां पृथुस्तनीनां तासाम् अप्सरसाम् अलघुनितम्बतया न लघवो नितम्बा यासां तासां भावः तत्ता तया चरणैः अवनिषु चिरं निषेदे स्थितम् । अभ्यासपाटवेन मनसा त्वरमाणानामपि तासां स्तनजघनभारात् चरणा नोत्तस्थुरित्यर्थः ॥ २ ॥

निहितसरसयावकैर्बभासे
चरणतलैः कृतपद्धतिर्वधूनाम् ।
अविरलविततेव शक्रगोपैः
अरुणितनीलतृणोलपा धरित्री ॥ ३ ॥

ध्वनिरगविवरेषु नूपुराणां
पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरवविततो वनानि चक्रे
मुखरसमुत्सुकहंससारसानि ॥ ४ ॥

अवचयपरिभोगवन्ति हिंस्रैः
सहचरितान्यमृगाणि काननानि ।

निहितेति । निहिताः आरोपिताः सरसयावकाः सान्द्रलाक्षारागाः येषु तैः वधूनां चरणतलैः चरणन्यासैः कृतपद्धतिः कृतमार्गरेखा । अतएव अरुणिताः अरुणीकृताः नीलास्तृणोलपास्तृणानि दूर्वादीनि उलपा वल्वजाख्यः तृणविशेषाश्च यस्याः सा । "उलपा वल्वजाः प्रोक्ता" इति हलायुधः । 'उलपा उशीरतृणानि' इति क्षीरस्वामी । ब्राह्मणपरिव्राजकवत् उलपानां पृथङ् निर्देशः । धरित्री शक्रगोपैः इन्द्रगोपाख्यैः कीटकैः । "इन्द्रगोपस्त्वग्निरज" इति हैमः । अविरलं निरन्तरं यथा तथा वितता व्याप्तेव इत्युत्प्रेक्षा । बभासे ॥ ३ ॥

ध्वनिरिति । अगविवरेषु नगरन्ध्रेषु गुहास्वित्यर्थः । प्रतिरवैः प्रतिध्वनिभिः । विततः सम्मूर्च्छितः पृथुभिः रशनागुणानां शिञ्जितैः स्वनितैः अनुयातः अनुगतो मिलित इति यावत् । अश्नोतेर्युच् स्यात्, रशादेशश्च । रशना काञ्ची तालव्यशकारवानयं जिह्वावाची तु दन्त्यसकारवानिति सिद्धान्तः । "काञ्ची सप्तकी रसना तथा" इत्यमरः । "स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्" इत्यमरः । नूपुराणां ध्वनिः ध्वानः वनानि मुखराः शब्दायमानाः समुत्सुका उत्कण्ठिता हंसाः सारसाश्च येषां तानि चक्रे । अत्र हंसादिमुखरसमुत्सुकीकरणरूपेण वस्तुना तेषां नूपुरादिध्वनौ सादृश्यात् हंससारसान्तरकूजितभ्रान्तिप्रतीतेः भ्रान्तिमदलङ्कारो व्यज्यते ॥ ४ ॥

अभिदधुरभितो मुनिं वधूभ्यः
समुदितसाध्वसविक्लवश्च चेतः ॥ ५ ॥
नृपतिमुनिपरिग्रहेण सा भूः
सुरसचिवाप्सरसां जहार तेजः ।
उपहितपरमप्रभावधाम्नां
न हि जयिनां तपसामलङ्घ्यमस्ति ॥ ६ ॥
सचकितमिव विस्मयाकुलाभिः
शुचिसिकतास्वतिमानुषाणि ताभिः ।
क्षितिषु ददृशिरे पदानि जिष्णो-
रुपहितकेतुरथाङ्गलाञ्छनानि ॥ ७ ॥
अतिशयितवनान्तरद्युतीनां
फलकुसुमावचयेऽपि तद्विधानाम् ।

अवचयेति । अवचयः पुष्पफलादिच्छेदनम् । परिभोगः उपभोगः । तद्वन्ति हिंस्राः घातुकाः व्याघ्रादयः । "शरारुर्घातुको हिंस्रः" इत्यमरः । तैः सहचरिताः सहचरन्तः । कर्त्तरि क्तः । 'मतिबुद्धि" इत्यादिसूत्रेण चकारात् सुप्तशयितादिवत् वर्त्तमानार्थता । अन्ये हिंस्रेतरे मृगा हरिणादयः येषु तानि सहचरितानि अमृगाणि काननानि । तथा समुदितेन साध्वसेन विक्लवं विवशं चेतश्च वधूभ्यः । "क्रियाग्रहणमपिकर्त्तव्यम्" इति सम्प्रदानत्वात् चतुर्थी । अभितः मुनिम् अभिदधुः आसन्नं सूचयामासुरित्यर्थः । अवचयादिलिङ्गचतुष्टयेन आसन्नः मुनिरिति अन्वमीयतेत्यर्थः ॥ ५ ॥

नृपतिमुनिपरिग्रहेणेति । सा भूः नृपतिरेव मुनिः तस्य परिग्रहेण अधिष्ठानेन हेतुना सुरसचिवानां गन्धर्वाणाम् अप्सरसां च तेजः जहार । तदाश्रमप्रवेशादेव निस्तेजस्काः अभूवन् इत्यर्थः । ननु कथं मानुषेण अमानुषतेजो निरस्तमित्याशङ्क्याह—हि यस्मात्, उपहिते आहिते परमे प्रभावधाम्नी सामर्थ्यतेजसी येषां तेषां जयिनां जयशीलानाम् । "महताम्" इति पाठे महताम् उत्कटानां तपसाम् अलङ्घ्यं न अस्ति । किमपि असाध्यं न अस्तीति भावः ॥ ६ ॥

ऋतुरिव तरुवीरुधां समृद्ध्या
युवतिजनैर्जगृहे मुनिप्रभावः ॥ ८ ॥
मृदितकिसलयः सुराङ्गनानां
ससलिलवल्कलभारभुग्नशाखः ।
बहुमतिमधिकां ययावशोकः
परिजनतापि गुणाय सद्गुणानाम् ॥ ९ ॥
यमनियमकृशीकृतस्थिराङ्गः
परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्ततागरीयान्
कृतपदपङ्क्तिरथर्वणेव वेदः ॥ १० ॥

सचकितमिति । विस्मयाकुलाभिः ताभिः स्त्रीभिः कर्त्रीभिः शुचयः सिक्ताः यासु तासु, पादरेखाभिव्यक्तियोग्यासु इत्यर्थः । क्षितिषु उपहितानि विन्यस्तानि केतुरथाङ्गलाञ्छनानि रेखास्वरूपध्वजचक्राणि एव चिह्नानि येषु तानि अतएव अतिमानुषाणि जिष्णोः अर्जुनस्य पदानि सचकितमिव सभयमिव यथा तथा ददृशिरे दृष्टानि । अद्भुतवस्तुदर्शनात् भयविस्मयौ भवत इति भावः ॥ ७ ॥

अतिशयितेति । अतिशयिता अतिक्रान्ता वनान्तराणां द्युतिः याभिः तासाम् । कुतः ? फलानां कुसुमानाञ्च अवचयेऽपि लवनेऽपि सा एव विधा प्रकारः यासां तद्विधानाम् । तथैव समग्राणामित्यर्थः । तरूणां वीरुधाञ्च समृद्ध्या लिङ्गेन युवतिजनैः मुनिप्रभावः ऋतुः इव जगृहे निश्चितः कारणतया इति शेषः । उपमालङ्कारः ॥ ८ ॥

मृदितेति । ससलिलम् आर्द्रं यत् वल्कलं तदेव भारः तेन भग्नशाखः नम्रशाखः "वल्कं वल्कलमस्त्रियाम्" इत्यमरः । अतएव मृदितकिसलयः विलुलितपल्लवः । "क्वचिन्न" इति प्रतिषेधात् न मृदेर्गुणः । अशोकः वृक्षविशेषः सुराङ्गनानाम् अप्सरसां सम्बन्धिनीम् अधिकां बहुमतिं तत्कर्तृकसम्मानं सज्जनसेवी धन्योऽयमिति यथौ प्राप । ननु सेवकेषु का श्लाघा इत्यत्राह—परीति । सद्गुणानां महतां परिजनतापि अनुचरत्वमपि । भावे तल् । गुणाय उत्कर्षाय भवतीति शेषः । एतेन तासां मुनेः प्रभावदर्शनादेव तत्पारवश्यं गम्यते ॥ ९ ॥

शशधर इव लोचनाभिरामै-

र्गगनविसारिभिरंशुभिः परीतः ।

शिखरनिचयमेकसानुसद्मा

सकलमिवापि दधन्महीधरस्य ॥ ११ ॥

सुरसरिति परन्तपोऽधिगच्छन्

विधृतपिशङ्गबृहज्जटाकलापः ।

हविरिव विततः शिखासमूहैः

समभिलषन्नुपवेदि जातवेदाः ॥ १२ ॥

सदृशमतनुमाकृतेः प्रयत्नं

तदनुगुणामपरैः क्रियामलङ्घ्याम् ।

यमेति । यमः देशकालाद्यनपेक्षया शुद्धिहेतुः अहिंसादिः, नियमः तदपेक्षया शुद्धिहेतुः तपःस्वाध्यायादिः, ताभ्यां कृशीकृतान्यपि स्थिराणि दृढान्यङ्गानि यस्य सः । विधृतायुधः धृतशस्त्रः अतएव तपःक्षात्रयुक्तः स अर्जुनः शमः शान्तिः अभ्युदयकाण्डे दीप्तता उग्रता अभिचारकाण्डे ताभ्यामनुपमाभ्यां गरीयान् उदग्रः । अथर्वणा वशिष्ठेन कृता रचिता पदानां पङ्क्तिः आनुपूर्वी यस्य सः वेदः चतुर्थवेद इत्यर्थः । अथर्वणस्तु मन्त्रोद्धारे वशिष्ठकृत इत्यागमः । स इव ताभिः स्त्रीभिः परिददृशे दृष्टः ॥ १० ॥

अथ चतुर्भिस्तमेव विशिनष्टि—शशधरेत्यादिभिः । शशधरः चन्द्र इव लोचनाभिरामैः नेत्राह्लादकरैः गगनविसारिभिः अंशुभिः तेजोभिः परीतः व्याप्तः । अम्बरवदेकं सानु सद्म यस्य सः, एकदेशस्थोऽपीत्यर्थः । महीधरस्य इन्द्रकीलस्य सकलं शिखरनिचयमपि दधत् आवृण्वन् इवेति उत्प्रेक्षा ॥ ११ ॥

सुरेति । पुनः सुरसरिति गङ्गाकूले परन्तपः अधिगच्छन् अर्जयन् फलाभिलाषिणेति शेषः । हविः समभिलषन् इति उपमानविशेषणसामर्थ्यात् । तथा विधृतः पिशङ्गबृहज्जटाकलापो येन सः । अतएव उपवेदि वेद्याम् । विभक्त्यर्थे अव्ययीभावः । शिखासमूहैः ज्वालाजालैः विततः विस्तृतः हविः आज्यादिकं समभिलषन् । जातं वेदः हिरण्यं भोज्यं कर्मफलम् इति यावत् यस्मादिति जातवेदाः वह्निरिव स्थितः ॥ १२ ॥

दधदलघु तपः क्रियानुरूपं
विजयवतीञ्च तपःसमां समृद्धिम् ॥ १३ ॥
चिरनियमकृशोऽपि शैलसारः
शमनिरतोऽपि दुरासदः प्रकृत्या ।
ससचिव इव निर्जनेऽपि तिष्ठन्
मुनिरपि तुल्यरुचिस्त्रिलोकभर्त्तुः ॥ १४ ॥
तनुमवजितलोकसारधाम्नीं
त्रिभुवनगुप्तिसहां विलोकयन्तः ।
अवययुरमरस्त्रियोऽस्य यत्नं
विजयफले विफलं तपोऽधिकारे ॥ १५ ॥
मुनिदनुतनयान् विलोभ्य सद्यः
प्रतनुबलान्यधितिष्ठतस्तपांसि ।
अलघुनि बहु मेनिरे च ताः स्वं

सदृशमिति । पुनराकृतेः वपुषः । "आकृतिः कथिता रूपे सामान्यवपुषोरपि" इति विश्वः । सदृशं तुल्यम् अतनुं महान्तं प्रयत्नं उद्योगं दधत् तथा तदनुगुणां प्रयत्नानुगुणां अपरैः अन्यैः अलङ्घ्यां कर्त्तुम् अशक्यमित्यर्थः । क्रियां व्यापारं दधत् । तथा क्रियानुरूपम् क्रियानुगुणम् अलघु गुरु तपो दधत् । तथा विजयवतीं सर्वोत्कर्षवतीं विजयफलां वा तपः क्रियानुरूपां तपःसमां समृद्धिम् ऐश्वर्यं दधत् । अत्र पूर्वं प्रति उत्तरस्य विशेषणतया स्थापनात् प्रथमैकावल्यलङ्कारः । "यथापूर्वं परस्य विशेषणतया स्थापनमेकावली" इति सर्वस्वसूत्रात् ॥ १३ ॥

चिरनियमेति । पुनश्च चिरनियमेन दीर्घकालतपसा कृशः क्षीणाङ्गोऽपि शैलसारः । उपमानपूर्वपदो बहुव्रीहिः । शमे निरतोऽपि प्रकृत्या स्वभावेन दुरासदः दुर्धर्षः । निर्जने विजने देशे तिष्ठन्नपि ससचिवः सपरिवारः इव । किञ्च मुनिरपि ऐश्वर्यरहितोऽपीत्यर्थः । त्रयाणां लोकानां भर्त्तुः इन्द्रस्य । "तद्धितार्थ" इत्यादिना उत्तरपदसमासः । तुल्यरुचिः समानतेजाः अपिशब्दः सर्वत्र विरोधद्योतनार्थः । स च मुनेरतर्क्य महिमत्वेन निरस्त इति विरोधालङ्कारः । "विरोधाभासत्वं विरोधः" इति सूत्रात् ॥ १४ ॥

कुलिशभृता विहितं पदे नियोगम् ॥ १६ ॥
अथ कृतकविलोभनं विधित्सौ
युवतिजने हरिसूनुदर्शनेन ।
प्रसभमवततार चित्तजन्मा
हरति मनो मधुरा हि यौवनश्रीः ॥ १७ ॥
सपदि हरिसखैर्वधूनिदेशात्
ध्वनितमनोरमवल्लकीमृदङ्गैः ।
युगपदृतुगणस्य सन्निधानं
वियति वने च यथायथं वितेने ॥ १८ ॥

तनुमिति । अवजिते तिरस्कृते लोकानां सारधाम्नी सत्त्वतेजसी यया ताम् । "अन उपधा" इत्यादिना ङीप् । त्रयाणां भुवनानां समाहारः त्रिभुवनम् । "तद्धितार्थ" इत्यादिना समाहारार्थे तत्पुरुषः पात्रादित्वात् स्त्रीत्वप्रतिषेधः । तस्य गुप्तौ रक्षणे क्षमां समर्थाम् । पचाद्यच् । तनुं मूर्त्तिं विलोकयन्त्यः अमरस्त्रियः अप्सरसः विजयफले विजयार्थे तपोऽधिकारे तपोऽनुष्ठाने अस्य अर्जुनस्य यत्नं विफलम् अवययुः मेनिरे । त्रैलोक्याधिपत्यादिमहाफलसाधनस्य रथस्य तुच्छफलाभिलाषः मत्तमाङ्गमांसभोगोचितस्य कण्ठीरवस्य जीर्णतृणचर्वणोत्कण्ठा इव न शोभामावहतीति भावः । अत्र विशिष्टतनुविलोकनस्य स्त्रीविशेषणवैफल्यज्ञानहेतुत्वोक्त्या पदार्थहेतुकः काव्यलिङ्गमलङ्कारः ॥ १५ ॥

मुनीति । प्रतनुबलानि अनुत्कृष्टसाराणि तपांसि अधितिष्ठतः अनुतिष्ठतः मुनीन् दनुतनयान् दानवांश्च सद्यस्तत्क्षणमेव विलोभ्य आकृष्य चिरात् कुलिशभृता शक्रेण अलघुनि महति पदे स्थाने विहितं दत्तं स्वं स्वकीयं नियोगम् अधिकारं ताः स्त्रियः बहु यथा तथा मेनिरे । निकृष्टपदवृत्तीनाम् उत्कृष्टपदलाभो महान् । बहुमानमूलमिति भावः । विलोभ्य मेनिरे इति अन्वयः । यद्वा विलोभ्यः लोभं कारयित्वा विहितं शक्रेणेति अन्वयात् समानकर्त्तृकत्वनिर्वाहः ॥ १६ ॥

अथेति । अथ अनन्तरं कृतकविलोभनं कृत्रिमं विलोभनं विधित्सौ विधातुमिच्छौ । विपूर्वाद्धधातेः सन्नन्तात् उप्रत्ययः । युवतिजने हरिसूनोः अर्जुनस्य दर्शनेन चित्तजन्मा कामः प्रसभं बलात् अवततार । दैवततूपरं वञ्चयितुम् आगतस्य मोहो भवति, यतः स्वयं मुनिवञ्चनप्रवृत्ताः

सजलजलधरं नभो विरेजे
विवृतिमियाय रुचिस्तडिल्लतानाम् ।
व्यवहितरतिविग्रहै वितेने
जलगुरुभिस्तनितैर्दिगन्तरेषु ॥ १९ ॥

परिसुरपतिसूनुधाम सद्यः
समुपदधन्मुकुलानि मालतीनाम् ।
विरलमपजहार बद्धविन्दुः
सरजसतामवनेरपां निपातः ॥ २० ॥

स्त्रियः तेन वञ्चिता इत्यर्थः । युक्तञ्चैतत् । हि यस्मात् मधुरा मनोहरा यौवनश्रीः मनो हरति, बलादिति शेषः ॥ १७ ॥

सपदीति । संपदि बधनां निदेशात् नियोगात् ध्वनिताः नादिताः मनोरमाः वल्लक्यः वीणाः मृदङ्गाश्च यैः तैः हरिसखैः गन्धर्वैः वियति आकाशे वने च युगपत् ऋतुगणस्य ऋतुषट्कस्य सन्निधानम् आविर्भावः यथायथं यथास्वम्, असङ्करेण इत्यर्थः । "यथास्वं तु यथायथम्" इति निपातः । वितेने वितस्तरे । उद्दीपनसामग्री सम्पादिता इत्यर्थः ॥ १८ ॥

अथ वर्षाक्रमेण ऋतून् वर्णयति—सजलेत्यादि । सजलाः जलधराः यस्मिन् तन्नभो विरेजे । तड़ितः लता इव तासां रुचिः प्रभा विवृतिं विजृम्भणम् इयाय । तथा व्यवहितरतिविग्रहैः दूरीकृतरतिप्रकल्पित-प्रणयकलहैः जलगुरुभिः जलभारात् गम्भीरैरित्यर्थः । स्तनितैः गर्जितैः दिगन्तरेषु वितेने विततैरभावि । भावे लिट् । अकर्मकत्वं वैवक्षिकम् । अतएव दिगन्तरेष्विति अधिकरणत्वेन प्रयोगः, अन्यथा कर्मत्वमेव स्यात् ॥ १९ ॥

परीति । परिसुरपतिसूनुधाम अर्जुनाश्रमं प्रति । परीति लक्षणार्थे कर्मप्रवचनीयस्य योगात् द्वितीया ; यद्वा वर्जनार्थस्य तस्यात्र विरोधात् विभक्त्यर्थे अव्ययीभावः । तथा च सुरपतिसूनुधाम्नीत्यर्थः । सद्यः मालतीनां जातीलतानाम् । "सुमना मालती जातिः" इत्यमरः । मुकुलानि समुपदधत् जनयन् । विरलं यथा तथा बद्धविन्दुः अपां निपातः वृष्टिः अवनेः सम्बन्धिनीं सरजसतां सरजस्कत्वम् । "अचतुर" इत्यादिसूत्रेण साकल्यार्थे अव्ययीभावः । "समासान्तनिपातश्च बहुव्रीह्यर्थंस्तु लक्ष्यते ।" अव्ययीभावदशनन्तु प्रायिकमिति केचित् । अपजहार धूलिं शमयामास इत्यर्थः ॥२०॥

प्रतिदिशमभिगच्छताभिमृष्टः
ककुभविकाससुगन्धिनानिलेन।
नव इव विबभौ सचित्तजन्मा
गतधृतिराकुलितश्च जीवलोकः॥ २१॥

व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुफलोपभोगहृष्टा।
परभृतयुवतिः स्वनं वितेने
नवनवयोजितकण्ठरागरम्यम्॥ २२॥

अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे।
जन इव न धृतेश्चचाल जिष्णु-
र्न हि महतां सुकरः समाधिभङ्गः॥ २३॥

प्रतिदिशमिति। दिशि दिशि प्रतिदिशम्। यथार्थे अव्ययीभावः शरत्प्रभृतित्वात् समासान्तनिपातः। अभिगच्छता संवाता ककुभानि अर्जुनकुसुमानि। "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। तेषां विकासेन सुगन्धिना मनोज्ञगन्धेन। गन्धस्येत्वे तदेकान्तग्रहणं प्रायिकम्। अनिलेन अभिमृष्टः अतएव सचित्तजन्मा कामाक्रान्त इत्यर्थः। अतएव गतधृतिः गतधैर्यः आकुलितः क्षोभितश्च रति प्रतीति भावः। एवम्भूतः जीवलोकः नव इव अवस्थान्तरप्राप्त्या अपूर्व इव विबभौ भातिस्म। इति उत्प्रेक्षा २१॥

व्यथितमिति। व्यथितं दुःखितमपि मनो भृशं हरन्ती किमुत सुखितमिति भावः। जम्ब्वाः फलं जम्बु। "वार्हतञ्च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्" इत्यमरः। "जम्ब्वा वा" इति अणाभावपक्षे अञि "फले लुक्" इति लुक्। "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययनिवृत्तिः, जम्बु च तत् फलञ्चेति सामान्यविशेषयोः सह निर्देशः। यद्वा जम्ब्वा फलमिति विग्रहः। "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः। तस्य परिनतस्य उपभोगेन हृष्टा। अतएव परभृतयुवतिः कोकिलाङ्गना नवनवं नवप्रकारं यथा तथा योजितेन सम्पादितेन कण्ठरागेण कण्ठमाधुर्य्येण रम्यं सौम्यमित्यर्थः। स्वनं स्वरं वितेने वर्षास्व अपि मधुराः स्वराः कोकिलाया इति प्रसिद्धिः॥२२॥

धृतबिसवलयावलिर्वहन्ती
कुमुदवनैकदुकूलमात्तबाणा ।
शरदमलतले सरोजपाणौ
घनसमयेन वधूरिवाललम्बे ॥ २४ ॥

समदशिखिरुतानि हंसनादैः
कुमुदवनानि कदम्बपुष्पवृष्ट्या ।
श्रियमतिशयिनीं समेत्य जग्मु-
र्गुणमहतां महते गुणाय योगः ॥ २५ ॥

सरजसमपहाय केतकीनां

अभिभवतीति । कदम्बवायौ कदम्बसम्बन्धिनि मारुते मदमधुरे शिखण्डिनां निनादे च मनः अभिभवति अभिहरति सति जिष्णुः जयनशीलः अर्जुनः जनः पृथग्जन इव धृतेः धैर्यान्न चचाल ; वर्षा अपि तदुद्दीपनाय न शेकुरित्यर्थः । हि यस्मात् महतां समाधिभङ्गः न सुकरः । न केनापि कर्त्तुं शक्यत इत्यर्थः ॥२३॥

धृतेति । बिसानि वलयानि इव तेषामावलिः धृता यया सा । कुमुदवनमेकं मुख्यं दुकूलमिव तद् वहन्ती । आत्तानि गृहीतानि बाणानि नीलझिण्टीनि यया सा आत्तबाणा धृतशरा च । "गृह्णीयात् क्षत्रियाशरम्" इति स्मरणात् । "बाणोक्ता नीलझिण्टी च" इति वैजयन्ती । शरद्वधूः जाया इव घनसमयेन वर्षर्त्तुना वरेणेति शेषः । अमलतले निर्मलतले सरोजं पाणिरिव तस्मिन् आललम्बे जगृहे । कर्म्मणि लिट् । वधूवरसमागमवदृतुसन्धिः अशोभत इत्यर्थः । अत्र "आत्तबाणा" इति झिण्टीशरयोः बाणयोः अभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरुपमाङ्गमिति अनयोः सङ्करः ॥ २४ ॥

अथ ऋतुसन्धिं वर्णयति—समदेति । समदशिखिरुतानि मत्तमयूरकूजितानि हंसनादैः समेत्य तथा कुमुदवनानि कदम्बपुष्पवृष्ट्या कदम्बपुष्पसम्पदा समेत्य अतिशयिनीम् अतिशयवतीं श्रियं जग्मुः । तथाहि—गुणमहतां गुणाधिकानां योगः परस्परसमागमः महते गुणाय उत्कर्षाय भवतीति शेषः । अत्र त्रिपाद्यां समालङ्कारः । 'सा समालङ्कृतिर्योग्यवस्तुनोरुभयोरपि" इतिलक्षणात् । सोऽपि चतुर्थेन अर्थान्तरन्यासेन स्वसमर्थकेन अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ २५ ॥

प्रसवमुपान्तिकनीपरेणुकीर्णम् ।
प्रियमधु रसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि ॥ २६ ॥
मुकुलितमतिशय्य बन्धुजीवं
धृतजलबिन्दुषु शाद्वलस्थलीषु ।
अविरलवपुषः सुरेन्द्रगोपा
विकचपलाशचयश्रियं समीयुः ॥ २७ ॥
अविरलफलिनीवनप्रसूनः
कुसुमितकुन्दसुगन्धिगन्धवाहः ।
गुणमसमयजं चिराय लेभे
विरलतुषारकणस्तुषारकालः ॥ २८ ॥

सरजसमिति। प्रियमधुः इष्टमकरन्दः। नात्र कप्समासान्तः "पुलिङ्गोत्तरपदो बहुव्रीहिः" इति केचित्। नपुंसकलिङ्गस्य एव मधुशब्दस्य उरःप्रभृतिषु पाठात्। 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः॥" इति अभिधानात्। षट्पदाली षट् पदावलिः उपान्तिके यानि नीपानि कदम्बकुसुमानि तेषां रेणुभिः परागैः कीर्णं व्याप्तं, किञ्च स्वतोपि सह रजसा सरजसं न तु अरजस्कमिति भावः। साकल्ये अव्ययीभावः। "अचतुर" इत्यादिना निपातः। केतकीनां प्रसवं पुष्पमपहाय विनीलबन्धनानि नलिनवृन्तानि असनानि प्रियकपुष्पाणि मकरन्दभरितानीति शेषः। 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः" इत्यमरः। मलिनयति स्म। यथा वृन्तात् अन्यत्रापि मालिन्यं स्यात्, तथा मधुलोभात् छादयामास इत्यर्थः। नहि मध्वासक्तः [मधुलाभे] असति विभूतिषु आसज्जतीति भावः ॥२६॥

मुकुलितमिति। धृताः जलबिन्दवः यासु तासु शाद्वलस्थलीषु शाद्वलहरितप्रदेशेषु अविरलवपुषः स्थूलमूर्त्तयः सुरेन्द्रगोपाः कीटविशेषाः मुकुलितं मुकुलीकृतं बन्धुजीवं बन्धुजीवकमुकुलमित्यर्थः। "बन्धुको बन्धुजीवकः" इत्यमरः। अतिशय्यातिक्रम्य विकचपलाशचयः विकसितकिंशुकराशिः। "पलाशे किंशुकः पर्णः" इत्यमरः। तस्य श्रियं तत्सदृशीं श्रियमित्यर्थः। अतएव निदर्शनालङ्कारः। समीयुः प्रापुः ॥ २७ ॥

निचयिनि लवलीलताविकाशे
जनयति लोध्रसमीरणे च हर्षम् ।
विकृतिमुपययौ न पाण्डुसूनु-
श्चलति नयान्न जिगीषतां हि चेतः ॥ २९ ॥
कतिपयसहकारपुष्परम्य-
स्तनुतुहिनोऽल्पविनिद्रसिन्धु-[न्दु]वारः ।
सुरभिमुखहिमागमान्तशंसी
समुपययौ शिशिरः स्मरैकबन्धुः ॥ ३० ॥
कुसुमनगवनानुपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम् ।

अथ हेमन्तवर्णनमाह—अविरलेति । अविरलानि घनानि फलिनीवनानां प्रियङ्गुवनानां प्रसूनानि यस्मिन् सः । "प्रियङ्गुः फलिनी फली" इत्यमरः । कुसुमितैः कुन्दैः माध्यकुसुमैः सुगन्धिः गन्धवाहः यस्मिन् सः । "माध्यं कुन्दम्" इत्यमरः । शैशिराणामपि कुन्दानां हेमन्ते प्रादुर्भावात् अविरोधः । विरलतुषारकण इति प्रारम्भोक्तिः । तुषारकालः हेमन्तः चिराय असमग्रजम् अकालसम्भवं गुणम् उत्कर्षं लेभे ॥ २८ ॥

निचयिनीति । निचयिनि उपचयवति लवलीलतानां विकाशे पुष्पविजृम्भणे तथा लोध्रसमीरणे च हर्षं प्रसादम् उत्कण्ठां जनयति सति पाण्डुसूनुः विकृतिं न उपययौ । कुतः ? हि यस्मात् जिगीषतां जेतुमिच्छतां चेतः नयात् नीतेः न चलति । न हि क्रोधाक्रान्ते चेतसि शृङ्गाररसस्य विकाशः, तद्विरुद्धत्वात् रोषस्येति भावः ॥ २९ ॥

कतिपयेति । कतिपयैरेव सहकारपुष्पैः चूतकुसुमैः रम्यः न तु वसन्तवत् समग्रैः, नापि हेमन्तवत् तद्रहितैरिति भावः । तनुतुहिनः अल्पहिमः, न तु हेमन्तवत् बहुतुहिनः, नापि वसन्तवत् विरलतुहिनः इति भावः । अल्पानि कतिपयानि विनिद्राणि सिन्धु[न्दु]वाराणि विकसितनिर्गुण्डीकुसुमानि यस्मिन् सः । अत्रापि सहकारवत् अभिप्रायो द्रष्टव्यः । "सिन्धु[न्दु]वारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः । इत्थं सुरभिमुखं वसन्तप्रारम्भं हिमागमान्तं हेमन्तावसानञ्च शंसति सूचयतीति स तथोक्तः । स्मरस्य एकबन्धुः सहकारी उभयर्त्तुधर्मसम्पत्तेरिति भावः । शिशिरः समुपययौ ॥ ३० ॥

क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ३१ ॥
विकसितकुसुमाधरं हसन्तीं
कुरवकराजिवधूं विलोकयन्तम् ।
ददृशुरिव सुराङ्गना निषण्णं
सशरमनङ्गमशोकपल्लवेषु ॥ ३२ ॥
मुहुरनुपतता विधूयमानं
विरचितसंहति दक्षिणानिलेन ।

अथ वसन्तप्रारम्भमाह—कुसुमेति । कुसुमप्रधानानां नगानां वृक्षाणां कुसुमानां नगा वृक्षा वा तेषां वनानि उपेतुम् आरोढुं कामो यस्याः सा । 'शैलवृक्षौ नगावगौ' इत्यमरः । "लुम्पेदवश्यं मः कृत्ये तुं काममनसोरपि" इति मकारलोपः । वसन्तलक्ष्मीः किसलयिनीं पल्लविनीं चूतयष्टिं चूतशाखामिवेति भावः । अवलम्ब्य अवष्टभ्य, अन्यथा आरोढुमशक्यत्वादिति भावः । क्वणत् शिञ्जमानं शब्दायमानम् अलिकुलं नूपुरमिव यस्याः सा तथोक्ता सती । "क्वणदविकुलनपुरम्" इत्यपि पाठः । अन्यत्र अलिकुलवत् नूपुरं नलिनवनेषु पदं निरासे निदधे । तेषु प्रथमं प्रादुरासीदित्यर्थः । "उपसर्गादस्यत्यूह्योर्वा" इति वचनात् आत्मनेपदम् । अत्र प्रक्रान्तवसन्तलक्ष्मीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥ ३१ ॥

विकसितेति । विकसितः विश्लिष्टः कुसुममेवाधरो यस्मिन् कर्मणि यद् यथा तथा हसन्तीं स्मयमानां कुरवकराजिरेव वधूः तां विलोकयन्तं कामुकतयेति भावः । अतएव अशोकपल्लवेषु पल्लवसंस्तरेषु निषण्णं स्थितमित्यर्थः । रिरंसयेति शेषः । सशरं नित्यविजयित्वादिति भावः । इत्थं शृङ्गारवीरयोरेकाधिकरणभूतम् अनङ्गं सुराङ्गनाः ददृशुरिवेति उत्प्रेक्षा । अशोकाद्यवलोकनात् मदनसाक्षात्कारादिव महान् मनःक्षोभः तासाम् आसीदित्यर्थः । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ३२ ॥

मुहुरिति । अनुपतता अनुधावता दक्षिणानिलेन मलयमारुतेन मुहुर्विधूयमानं कम्पितम् अतएव विरचिता संहतिर्येन, तत्सम्भूतमित्यर्थः । पङ्कजिन्याः यत् नलिनं मुखमिव तस्य अन्तर्विसर्पि प्रान्तचारि अलिकुलं कर्तृ अलकाकृतिम् अलकसादृश्यं प्रपेदे ॥ ३३ ॥

अलिकुलमलकाकृतिं प्रपेदे
नलिनमुखान्तविसर्पि पङ्कजिन्याः ॥ ३३ ॥

श्वसनचलितपल्लवाधरोष्ठे
नवनिहितेर्ष्यमिवावधूनयन्ती ।
मधुसुरभिणि षट्पदेन पुष्पे
मुख इव शाललतावधूश्चुचुम्बे ॥ ३४ ॥

प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा ।
अवजितभुवनस्तथा हि लेभे
सिततुरगे विजयं न पुष्पमासः ॥ ३५ ॥

कथमिव तव सम्मतिर्भवित्री
सममृतुभिर्मुनिनावधीरितस्य ।

श्वसनेति । षट्पदेन शाललता सर्जतरुशाखा वधूरिव शाललता-वधूः "प्राकारग्रहयोः शालः शालः सर्ज्जतरुः स्मृतः" इति शाश्वतः । श्वसनेन वायुना निःश्वासेन च चलितः पल्लवः अधरोष्ठ इव यत्र तस्मिन् । "ओत्वोष्ठयोः समासे वा" इति पररूपं वक्तव्यम् । मधुना मकरन्देन मद्येन च सुरभिणि पुष्पे मुखे इव नवं यथा तथा निहितेर्ष्यं कृतकोप-मिवेति क्रियाविशेषणम् । तथा अवधूनयन्ती कम्पयन्ती । "धूञ्प्रीञो-र्नुम् वक्तव्यः" इति णिचि नुमागमः । चुचुम्बे चुम्बिता । अत्र श्वसन-शब्दार्थमधुशब्दार्थयोश्च स्वस्वभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः । सा च उपमाङ्गमित्यनयोः सङ्करः ॥ ३४ ॥

प्रभवतीति । परः शत्रुस्तदा तस्मिन् काले विजेतुं न प्रभवति न शक्नोति । यदा जितेन्द्रियता इन्द्रियजयित्वम् आत्मरक्षा भवति विद्यते । तथाहि—अवजितभुवनः त्रैलोक्यविजयी पुष्पमासो वसन्तः सिततुरगे अर्जुने विषये विजयं न लेभे । अतो जितेन्द्रिया दुर्जया इत्यर्थः । विशेषेण सामान्यार्थसमर्थनरूपः अर्थान्तरन्यासः अलङ्कारः ॥ ३५ ॥

अथ ग्रीष्मं वर्णयति—कथमिति । विरचितमल्लिकाविकाशः निदाघः कालः ग्रीष्मः ऋतुभिः वर्षादिभिः समं मुनिना अवधीरितस्य तिरस्कृतस्य तव सम्मतिः लोके योग्यत्वेन अनुमतिः मान्यत्वं कथमिव भवित्री ? न

इति विरचितमल्लिकाविकाशः
स्मयत इव स्म मधुं निदाघकालः । ॥ ३६ ॥
बलवदपि बलं मिथो विरोधि
प्रभवति नैव विपक्षनिर्जयाय ।
भुवनपरिभवी न यत्तदानीं
तमृतुगणः क्षणमुन्मनीचकार ॥ ३७ ॥
श्रुतिसुखमुपवीणितं सहायै-
रविरललाञ्छनहारिणश्च कालाः ।

सम्मानः कथञ्चित् भविष्यतीत्यर्थः । इति इत्थं मधुर्वसन्तः "चैत्रे दैत्ये वसन्ते च जीवे कोके मधुः स्मृतः" इति विश्वः । स्मयते स्म इव जहास किम्? इति उतप्रेक्षा । "लट् स्मे" इति भूतार्थे लट् । प्रहासस्य शुभ्रत्वेन प्रसिद्धेर्मल्लिकाविकाशे हासत्वाध्यवसायः । अत्र ऋतुभिः सममवधीरितस्य इत्यत्र अभेदाध्यवसायमूला सहोक्तिरलङ्कारः । सम्बन्धिभेदभिन्नस्य अवधीरणस्य अभिन्नतया अध्यवसायात् तदेव अवधीरणम्। सम्मतिहारा स्मयोत्प्रेक्षेति अनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३६ ॥

बलवदिति । बलवत् प्रबलमपि प्रकृष्टगामि इति यावत् । मिथो विरोधि परस्परस्पर्द्धि बलं सैन्यम् । "वरूथिनी बलं सैन्यम्" इत्यमरः विपक्षनिर्जयाय शत्रुविजयाय । "तुमर्थाच्च" इत्यादिना चतुर्थी । शत्रून् जेतुमित्यर्थः, न प्रभवति न शक्नोति एव । कुतः ? यत् यस्मात् कारणात् भुवनानां परिभवी जेता अपि । "जिदृक्षि" इत्यादिना इनिप्रत्ययः । ऋतुगणः तदानीं तम् अर्जुनं क्षणमपि न उन्मनीचकार अनुन्मनसम् उन्मनसं न चकार । "अरुर्मनश्चक्षुः" इतग्रादिना अभूततद्भावे च्विप्रतयः सलोपश्च । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

एवं तटस्थस्य उद्दीपनसामग्री विफला इत्युक्तम् । सम्प्रति विपरिता जातेत्याह—श्रुतीति । सहायैः तासां सहचरैः गन्धर्वैः कृतमिति शेषः । "न लोक" इत्यादिना षष्ठीप्रतिषेधः, कर्त्तरि तृतीया । श्रुतिसुखं श्रोत्रमधुरम् उपवीणितं वीणया उपगानम् "सत्यापपाश" इत्यादिना वीणाशब्दात् णिजन्तात् भावे क्तः । अविरलैः भूयोभिर्लाञ्छनैः पूर्वोक्तैः फलकुसुमादिभिश्चिह्नैः हारिणः मनोहराः कालाः वसन्तादि-ऋतवः अविहिना प्रकृता हरिसूनोरर्जुनस्य विक्रिया मनोविकृतिर्यैः तानि तथाभूतानि

अविहितहरिसूनुविक्रियाणि
त्रिदशवधूषु मनोभवं वितेनुः ॥ ३८ ॥
न दलति निचये तथोत्पलानां
न च विषमच्छदगुच्छयूथिकासु ।
अभिरतिमुपलेभिरे यथासां
हरितनयावयवेषु लोचनानि ॥ ३९ ॥
मुनिमभिमुखतां निनीषवो याः
समुपययुः कमनीयतागुणेन ।
मदनमुपदधे स एव तासां
दुरधिगमा हि गतिः प्रयोजनानाम् ॥ ४० ॥
प्रकृतमनुससार नाभिनेयं
प्रविकसदङ्गुलिः पाणिपल्लवं वा ।

सन्ति, "नपुंसकमनपुंसक" इत्यादिना नपुंसकैकशेषः। त्रिदशवधूषु मनोभवं वितेनुः विस्तारयामासुः। सः अयम् परप्रहारार्थम् उद्यतमायुधं स्वात्मानमेव प्रहरतीति, न्यायवत् जात इति भावः। अत्र मुनिविक्रियार्थं स्त्रीणां विक्रियारूपानर्थोत्पत्तिकथनात् द्वितीयो विषमालङ्कारः। तथाच सूत्रम्—"विरूपकार्य्यानर्थयोरुत्पत्तिरूपसंघट्टनाद्विषमालङ्कारः" इति ॥ ३८ ॥

तटस्थवत् आलम्बनगणः अपि विपरीतोऽभूदिति श्लोकद्वयेनाह—नेत्यादि। आसां लोचनानि हरितनयावयवेषु यथा तथादलति विकसति उत्पलानां निचये अभिरतिं न उपलेभिरे न प्रापुः। तथा विषमच्छदगुच्छाः सप्तपर्णस्तवकाः यूथिकामल्लिकाश्च तासु अभिरतिं न उपलेभिरे। "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः। तथा रमणीयत्वात् तदवयवानामित्यर्थः, इति चक्षुःप्रीतिरुक्ता। ३९ ॥

अथ मनःसङ्गं सूचयति—मुनिमिति। याः स्त्रियः कमनीयता सौन्दर्य्यं सैव गुणः तेन मुनिम् अर्जुनम् अभिमुखतां निनीषवः नेतुम् इच्छवः समुपययुः। तासां स्त्रीणां सः मुनिरेव मदनम् उपदधे जनयामास। तथाहि—प्रयोजनानाम् उद्देश्यानां गतिः परिणतिः दुरधिगमा हि दुर्ज्ञेया खलु। अतः क्वचित् भवति क्वचित् न भवतीति भावः ॥ ४० ॥

प्रथममुपहितं विलासि चक्षुः
सिततुरगे न चचाल नर्त्तकीनाम् ॥ ४१ ॥
अभिनयमनसः सुराङ्गनाया
निहितमलक्तकवर्त्तनाभिताम्रम् ।
चरणमभिपपात षट्पदाली
धृतनवलोहितपङ्कजाभिशङ्का ॥ ४२ ॥
अविरलमलसेषु नर्त्तकीनां
द्रुतपरिषिक्तमलक्तकं पदेषु ।
सवपुषमिव चित्तरागमूहु-
र्नमितशिखानि कदम्बकेसराणि ॥ ४३ ॥
नृपसुतमभितः समन्मथायाः

अथ आसाम् अनुरागमेव कार्य्यतः प्रपञ्चयति—प्रथमिति । विलासि सविलासं नर्त्तकीनां सम्बन्धि । "शिल्पिनि ष्वुन्" इति ष्वुन्प्रत्ययः "नृतिखनिरञ्जिभ्य एव" इति नियमः । चक्षुः कर्त्तृ प्रकृतं प्रक्रान्तम् अभिनेयम् अभिनेतव्यं रसभावादिव्यञ्जकं न अनुससार । तद्दूषणं तदानुगुण्येनैव दृष्टिप्रयोगनियमादिति भावः । तथा प्रविकसदङ्गुलि पाणिपल्लवं वा न अनुससार । स च दोषः "यतो हस्तस्ततो दृष्टिः" इति नियमादिति भावः । "पल्लवोऽस्त्री किसलयम्" इत्यमरः । "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः । किन्तु प्रथमं प्रवेश एव सिततुरगे अर्जुने उपहितं सत् न चचाल तत्रैव लग्नं तस्थौ । रागार्त्तैर्न किञ्चित् करणीयमनुसन्धेयमिति भावः ॥ ४१ ॥

अभिनयेति । अभिनयः रसभावादिव्यञ्जकचेष्टाविशेषः । "व्यञ्जकाभिनयौ समौ" इत्यमरः । तत्र मनो यस्याः तस्याः व्यासङ्गात् भृङ्गापातम् अजानत्या इत्यर्थः । सुराङ्गनायाः सम्बन्धि अलक्तकवर्त्तनेन लाक्षारसरञ्जनेन अभिताम्रं निहितं न्यस्तं चरणं षट्पदाली कर्त्री धृता नवलोहितपङ्कजानामभिशङ्का प्रत्यग्रकोकनदभ्रमो यया सा अभिपपात अभिधावति स्म । अत्र षट्पदाल्याः स्त्रीचरणे पङ्कजभ्रमाभिधानात् भ्रान्तिमदलङ्कारः, तेन च उपमा व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः ॥ ४२ ॥

परिजनगात्रतिरोहिताङ्गयष्टेः ।
स्फुटमभिलषितं बभूव बध्वा
वदति हि संवृतिरेव कामितानि ।। ४४ ।।
अभिमुनि सहसा हृते परस्या
घनमरुता जघनांशुकैकदेशे ।
चकितमवसनोरु सत्रपायाः
प्रतियुवतीरपि विस्मयं निनाय ।। ४५ ।।
धृतबिसवलये निधाय पाणौ
मुखमधिरूषितपाण्डुगण्डलेखम् ।

अविरलमिति। नमितशिखानि नर्त्तकीपादपीड़नात् नमिताग्राणि कदम्बकेशराणि रङ्गपूजादत्तानीति शेषः। अविरलं सान्द्रं यथा तथा द्रुतं रागोष्मणा विगलितम् अतएव परिषिक्तं नर्त्तकीनाम् अलसेषु पदेषु पादन्यासेषु अलक्तकं लाक्षारागं सवपुषं मूर्त्तिमन्तं चित्तरागम् उत्कण्ठतया वहिर्निःसृतं मुनिविषयकं रागमिवेत्युत्प्रेक्षा। ऊहुर्वहन्ति स्म ॥ ४३ ॥

अथ आसां शृङ्गारचेष्टां कथयति नृपेति। नृपसुतम् अर्जुनम् अभितः सम्मुखं परिजनस्य सखीजनस्य गात्रेण तिरोहिताः लज्जया साकारगोपनाय अन्तर्हिता अङ्गयष्टिः यस्याः सा तस्याः समन्मथाया बध्वाः अभिलषितं मुनिं प्रति अनुरागः स्फुटं बभूव। न च संव्रियमाणस्य अभिव्यक्तिर्विरुद्धेति वाच्यम् इति आह—यतः संवृतिः सम्यक् गोपनमेव कामितानि अनुरागान्। कामयतेर्भावे क्तः। वदति हि प्रकटयति इत्यर्थः। अयम् अनुरागस्य स्वभावः उक्तः, यया चेष्टया रागः संव्रियते सा एव अस्य प्रकाशिकेति भावः ॥ ४४ ॥

अभिमुनीति। अभिमुनि मुनिसमक्षं घनेन मरुता जघनांशुकस्य एकदेशे सहसा हृते सति सत्रपायाः सलज्जाया परस्याः सम्बन्धि अवसनौ निरावरणौ ऊरू यस्मिन् तत् चकितं भयसंभ्रमः प्रतियुवतीरपि सपत्नीरपि विस्मयं निनाय। किमुत अन्यजनमिति अपिशब्दार्थः। न तु मुनिमित्याशयः ॥ ४५ ॥

धृतेति। अपरा स्त्री स्मराभितापाद्धेतोः धृतानि बिसानि एव वलयानि येन तस्मिन् पाणौ अधिरूषितं चन्दनादिचर्चितं पाण्डू गण्डलेखे गण्डस्थली यस्य तत् मुखं निधाय आरोप्य असमशुमदे मधुमदरहिते तथापि अलसे

नृपसुतमपरा स्मराभितापा-
दमधुमदालसलोचनं निदध्यौ ॥ ४६ ॥
सखिदयितमिहानयेति सा मां
प्रहितवती कुसुमेषुणाभितप्ता ।
हृदयमहृदया न नाम पूर्वं
भवदुपकण्ठमुपागतं विवेद ॥ ४७ ॥
चिरमपि कलितान्यपारयन्त्या
परिगदितुं परिशुष्यता मुखेन ।
गतघृण गमितानि सत्सखीनां
नयनयुगैः सममार्द्रतां मनांसि ॥ ४८ ॥
अचकमत सपल्लवां धरित्रीं
मृदुसुरभिं विरहय्य पुष्पशय्याम् ।

लोचने यस्मिन् कर्मणि तत् यथा तथा तं नृपसुतं निदध्यौ पश्यति स्म । "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः ॥ ४६ ॥

अथ पञ्चभिर्मुनिं प्रति दूतीवाक्यमाह—सखीति । कुसुमेषुणा कामेन अभितप्ता पीड़िता सा नायिका, हे सखि ! दयितं मुनिम् इह आनय इति मां प्रहितवती भवदन्तिकं प्रेषितवती । किन्तु अविमृष्य कारित्वमित्याह—हृदयमिति । अहृदया अमनस्का-तस्याः तदङ्गत्वादिति भावः । अतएव सा पूर्वं प्रागेव भवदुपकण्ठं त्वत्समीपम् उपागतं हृदयं मनः न विवेद । नाम सम्भावनायाम् । अतो मत्प्रेषणं व्यर्थं तस्य अन्तरङ्गत्वाद् बहिरङ्गस्य दुर्बलत्वादिति भावः । एतेन मनःसङ्ग उक्तः । चक्षुःप्रीतिस्तु प्रागेव सर्वासाम् उक्ता इति न पृथक् उच्यते ॥ ४७ ॥

"दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इति । तत्राद्यम् अवस्थाद्वयम् अभ्यधायि । सम्प्रति काचित् क्रमनैरपेक्ष्येण सूचयते—चिरमिति । चिरं कलितानि अपि सन्देशार्थबुद्ध्या योजितानि अपि वचनानीति शेषः । परिशुष्यता मुखेनेति जागरोक्तिः । परिगदितुम् अपारयन्त्या अशक्नुवत्या तया । हे गतघृण ! अद्यापि तां न अनुकम्पसे इति भावः । मत्सखीनां मनांसि नयनयुगैः समम् आर्द्रतां गमितानि उपचयं गमितानीत्यर्थः । शोकबाष्पाभ्यामिति

भृशमरतिमवाप्य तत्र चास्या-
स्तव सुखशीतमुपैतुमङ्कमिच्छा ॥ ४९ ॥
तदनघ तनुरस्तु सा सकामा
व्रजति पुरा हि परासुतां त्वदर्थे ।
पुनरपि सुलभं तपोऽनुरागी
युवतिजनः खलु नाप्यतेऽनुरूपः ॥ ५० ॥
जहिहि कठिनतां प्रयच्छ वाचं
ननु करुणामृदु मानसं मुनीनाम् ।

भावः। अत्र सखीशोकोक्त्या मूर्च्छावस्था सूच्यते। अत्र शोकवाष्परूप-कारणभेदात् प्रतियोगिभेदाच्च आर्द्रत्वभेदेऽपि अभेदाध्यवसायः। तन्मूला च इयं नयनयुगैः सममिति सहोक्तिरलङ्कारः ॥ ४८ ॥

अचकमतेति। किं वाचंय चेत्याह—सा स्त्री मृद्वी सुरभिश्च या तां मृदुसुरभिं पुष्पशय्यां विरहय्य विहाय सपल्लवां धरित्रीम् अचकमत ऐच्छत्। तस्याः ततोऽपि शीतलत्वादिति भावः। कमेर्णिङन्तात् लुङ्। "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति द्विर्भाव इति केचित्। तत्र अचीकमत इति प्रसङ्गात्। अतो णिङभावपक्षे "कमेश्च्लेश्चङ् वक्तव्यः" इति वक्तव्यात् चङि रूपमेतत्। अस्या नायिकायास्तत्र धरित्र्यामपि भृशम् अरतिं दुःखम् अवाप्य सुखयति इति सुखः शीतः शीतलश्च तं सुख-शीतलं तव अङ्कम् उत्सङ्गम् उपैतुम् इच्छा, वर्त्तत इति शेषः। अस्याश्च शैत्-सुक्यं कथितम्, अत्र अरतिजागरौ सुव्यक्तौ इति अस्या नायिकायाः क्रमेण पुष्पशय्याद्यनेकाधारसम्बन्धकथनात् प्रथमः पर्य्यायालङ्कारः। तदुक्तम्—क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि। एकस्मिन्नथवानेकं पर्य्याया-लङ्कृतद्द्विधा॥" इति लक्षणात् ॥ ४९ ॥

तदिति। तत् तस्मात् कारणात् तस्याः दुःखस्थत्वात् हेतोः। हे अनघ! निष्पाप! तनुः कृशा इति कार्श्यावस्थाकथनम्। सा नायिका सकामा सफलमनोरथा अस्तु। हि यस्मात् त्वमेव अर्थः प्रयोजनं वस्तु वा तस्मिन् त्वदर्थे निमित्ते, सतीति शेषः। त्वाम् उद्दिश्य इत्यर्थः। परासुतां निष्प्राणत्वं पुरा व्रजति व्रजिष्यति, मरिष्यतीत्यर्थः। तथाच ते अनिमित्त-हत्यया अनघत्वव्याघातः स्यादितिभावः। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। इदञ्च दशमावस्थाप्रदर्शनम्। न च तपोनिष्ठत्वात्

उपगतमवधीरयन्त्यभव्याः
स निपुणमेत्य कयाचिदेवमूचे ॥ ५१ ॥
सललितचलितत्रिकाभिरामाः
शिरसिजसंयमनाकुलैकपाणिः ।
सुरपतितनयेऽपरा निरासे
मनसिजजैत्रशरं विलोचनार्द्धम् ॥ ५२ ॥
कुसुमितमवलम्ब्य चूतमुच्चै-

भेतव्यमित्याह—पुनरिति। पुनरपि पश्चादपि। "पुनरप्रथमे भेदे" इति विश्वः। तपः सुलभम् अनुरागी अनुरूपः योग्यश्च युवतिजनस्तु न प्राप्यते न लभ्यते खलु ॥ ५० ॥

एवं प्रलोभितस्यापि मुनेर्मौनं न भग्नमित्याह—जहिहीति। कठिनतां निःस्पृहतां जहिहि त्यज इत्यर्थः। जहातेः "आ च हौ" इतीकारः। वाचं प्रयच्छ सम्भाषस्व इत्यर्थः। मुनीनां मानसं मनः करुणामृदु ननु दयार्द्रं खलु। "स्वान्तं हृन्मानसं मनः" इत्यमरः। किञ्च अभव्या निर्भाग्या उपगतं प्राप्तं विषयमिति शेषः। अवधीरयन्ति अवमन्यन्ते। एवमुक्तप्रकारेण सः अर्जुनः कयाचित् एत्य समीपम् आगत्य निपुणं चतुरं यथा स्यात् तथा ऊचे उक्तः। नायिकया दूतीं प्रति वचनम् उक्तं तया दूत्या च मुनिं प्रत्युक्तं कथितमित्यर्थः। अत्र पञ्चश्लोक्यां विप्रलम्भशृङ्गारस्य औत्सुक्यनाम्नो व्यभिचारिभावस्य च अपुनरुक्तिः। अनौचित्येन नायिकायाः प्रवृत्तेराभासत्वमनुसन्धेयम्। तदुक्तम्—"एकत्र चेन्नानुरागस्तिर्यङ्म्लेच्छगतोऽपि वा। योषितां बहुसक्तिश्च रसाभासस्त्रिधा मतः॥" इति तन्निबन्धनात् ऊर्जस्वलमलङ्कारः। तथाच सूत्रम्—"रसभेदतदाभासतत्प्रशमानां निबन्धनेन रसवत्प्रायम् ऊर्जस्वलम्" इति। समाहितातिरसबन्धो रसवदलङ्कारः। भावनिबन्धे प्रेयोऽलङ्कारः। रसभावनिबन्धे तूर्जस्वलालङ्कारः। तत्र प्रशमनिबन्धने समाहितालङ्कार इति सूत्रार्थः ॥ ५१ ॥

सललितेति। सललितं सविलासं यथा तथा चलितेन विवर्त्तितेन त्रिकेण कटिभागेन। "पृष्ठवंशाधरे त्रिकम्" इत्यमरः। अभिरामाः शिरसि जाताः शिरसिजाः। सप्तम्यां जनेर्डः। "अमूर्धमस्तकात् स्वाङ्गादकामे" इति अलुक्। "उपपदमतिङ्" इति समासः। एतेन मनसिजो व्याख्यातः। तेषां संयमने बन्धने आकुलः व्यग्रः एकः पाणिः यस्याः सा. परा स्त्री सुरपतितनये अर्जुने जेता इव जैत्रः। जेतृशब्दात् तृजन्तात्

स्तनुरिभकुम्भपृथुस्तनानताङ्गी ।
तदभिमुखमनङ्गचापयष्टि-
र्विसृतगुणेव समुन्ननाम काचित् ॥ ५३ ॥
सरभसमवलम्ब्य नीलमन्या
विगलितनीवि विलोलमन्तरीयम् ।
अभिपतितुमनाः ससाध्वसेव
च्युतरशनागुणसन्दितावतस्थे ॥ ५४ ॥
यदि मनसि शमः किमङ्ग चापं
शठ विषयास्तव वल्लभा न मुक्तिः ।
भवतु दिशति नान्यकामिनीभ्य-
स्तवहृदये हृदयेश्वरावकाशम् ॥ ५५ ॥

"प्रज्ञादिभ्यश्च" इति अण्प्रत्ययः । मनसिजस्य जैत्रः शरः तथाभूतं विलोचनस्य अर्द्धम् एकदेशं कटाक्षमित्यर्थः । निरासे विससर्ज ॥ ५२ ॥

कुसुमितेति । इभकुम्भवत् पृथुभ्यां स्तनाभ्याम् आनतम् अङ्गं यस्याः सा । "अङ्गगात्रकण्ठेभ्यश्च" इति ङीष् । काचित् तनुः तन्वी । "वोतो गुणवचनात्" इति विकल्पात् न ङीष् । कुसुमितम् उच्चैरुन्नतं चूतम् अवलम्ब्य । अतएव चूतलतायोगाद् विसृतौ गुणौ यस्याः सा । "विसृतं विस्तृतं ततम्" । "मौर्वी ज्या शिञ्जिनी गुणः" इति चामरः । अनङ्गचापयष्टिरिव आकृष्टमुक्ता इति भावः । तदभिमुखं समुन्ननाम समुज्जृम्भे अङ्गभङ्गं चकार इत्यर्थः ॥ ५३ ॥

सरभसमिति । अन्या अपरा विगलितनीवि स्रस्तबन्धनम् अतएव विलोलं स्थानचलितं नील्या रक्तं नीलम् । "नील्या अन् वक्तव्यः" इति अन्प्रत्ययः । अन्तरीयं परिधानम् अवलम्ब्य हस्तेन गृहीत्वा सरभसं सत्वरम् अभिपतितुं मनो यस्याः सा । अपगन्तुम् उद्युक्ता इत्यर्थः । तथापि ससाध्वसा इव न तु वस्तुतः ससाध्वसा किन्तु च्युतेन गलितेन रशनागुणेन सन्दिता बद्धा सती अवतस्थे स्थिता । 'बद्धे सन्दानितं मूतमुदितं सन्दितं सितम्' इत्यमरः । कर्मणि क्तः । "द्यतिस्यतिमास्थाम्" इत्याकारः ॥ ५४ ॥

काचिद् युग्मेनाह—यदीत्यादि । तव मनसि शमः शान्तिः यदि अस्तीति शेषः । अङ्ग ! भो ! चापं किं किमर्थमित्यर्थः । किन्तु हे शठ हे । वञ्चक ! तव विषयाः शब्दादयः वल्लभाः प्रियाः, न तु मुक्तिः ।

इति विषमितचक्षुषाभिधाय
स्फुरदधरोष्ठमसूयया कयाचित् ।
अगणितगुरुमानलज्जयासौ
स्वयमुरसि श्रवणोत्पलेन जघ्ने ॥ ५६ ॥

सविनयमपराभिसृत्य साचि
स्मितसुभगैकलसत्कपोललक्ष्मीः ।
श्रवणनियमितेन तं निदध्यौ
सकलमिवासकलेन लोचनेन ॥ ५७ ॥

करुणमभिहितं त्रपा निरस्ता
तदभिमुखञ्च विमुक्तमश्रु ताभिः ।

तदेव द्रढयितुमाह—भवतु को दोष इति शेषः। यद्यहं रागी तर्हि किमिति भवतीः न गणयामि इति शङ्कां निवारयति। तव हृदये मनसि हृदयेश्वरा काचित् तव प्रेयसी अन्यकामिनीभ्यः स्त्र्यन्तरेभ्यः अवकाशं न दिशति न प्रयच्छति। स्त्र्यन्तरासक्तत्या न अस्मान् गणयसि न तु वैराग्यात् तदर्थमेव अयं ते सकलः प्रयासोऽपीत्यर्थः ॥ ५५ ॥

इतीति। इति इत्थम् असूयया मत्सरेण स्फुरन् अधरोष्ठो यस्मिन् कर्मणि तथा अभिधाय उक्त्वा विसमितचक्षुषा कुटिलीकृतदृष्ट्या अगणिताः गुरवः आचार्य्यादयः मानः अभिमानः लज्जा च यया तया कयाचिदसौ मुनिरुरसि स्वयं स्वहस्तेनैव श्रवणोत्पलेन जघ्ने हतः ॥ ५६ ॥

सविनयमिति। अपरा सविनयम् अनौद्धत्येन साचि तिर्य्यगभिसृत्य समीपं गत्वा स्मितेन मन्दहासेन सुभगैकस्य लसतः कपोलस्य लक्ष्मी यस्याः सा इति। बहुवचनपदोत्तरी बहुव्रीहिः। अन्यथा कप्रत्ययः स्यादित्युक्तं प्राक्। श्रवणनियमितेन कर्णान्तप्रापितेन रुद्धप्रसारणं तावदायतेनेत्यर्थः। असकलेन असम्पूर्णेन कटाक्षेणेति यावत्, लोचनेन तं मुनिं धनञ्जयम्। सकलमिव समग्रप्रायं यथा तथा निदध्यौ पश्यति स्म। कटाक्षेणैव गाढम् अद्राक्षीदित्यर्थः। एषु श्लोकेषु भावाभासनिबन्धनत्वात् ऊर्जस्वलालङ्कारः। औत्सुक्यमत्र भावः। आभासत्वञ्च अस्य विरक्तमुनौ अनौचित्यादित्युक्तं प्रागेवेति ॥ ५७ ॥

अथ तासां मुनिविलोभनमुपसंहरति करुणमिति। ताभिः स्त्रीभिः तदभिमुखं मुनिसमक्षं करुणं दीनम् अभिहितम् उक्तम्। त्रपा निरस्ता-

प्रकुपितमभिसारणेऽनुनेतुं
प्रियमियती ह्यबलाजनस्य भूमिः ॥५८॥
असकलनयनेक्षितानि लज्जा
गतमलसं परिपाण्डुता विषादः ।
इति विविधमियाय तासु भूषां
प्रभवति मण्डयितुं वधूरनङ्गः ॥ ५९ ॥
अलसपदमनोरमं प्रकृत्या
जितकलहंसवधूगति प्रयातम् ।
स्थितमुरुजघनस्थलातिभारा-
दुदितपरिश्रमजिह्मितेक्षणं वा ॥ ६० ॥

लज्जा त्यक्ता किं बहुना अश्रु च विसृष्टम् । ततः परं न किञ्चिद् विधेयमासीदिति भावः । कुतः ? हि यस्मात् अबलाजनस्य अभिसारणे समागमविषये प्रकुपितम् अननुकूलं प्रियम् अनुनेतुम् अनुकूलयितुम् इयती भूमिरिति एतावती सीमा साधनानां परमावधिरिति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ५८ ॥

अथासामनुरागदार्ढ्यं निगमयति—असकलेति । असकलनयनेक्षितानि नयनार्द्धविलोकितानि लज्जालसं गतं मन्दगमनं परिपाण्डुता पाण्डुवर्णत्वं विषादः इष्टानवाप्तिनिमित्तश्चेतोभङ्गः इत्येवंप्रकारं विविधं नानाविचेष्टितम् । "नपुंसकमनपुंसकम्" इत्यादिना नपुंसकैकशेषत्वम् । तासु भूषाम् इयायेति भावप्रधान्येन योज्यम् । तथाहि—अनङ्गो मदनः वधूः मण्डयितुं प्रभवति सर्वावस्थासु इति शेषः । अतः तासाम् अनङ्गभूषितानाम् अखिलं भूषणमेवेति भावः ॥ ५९ ॥

इदानीम् एतासां त्रिभिर्मनोविलोभने प्रयासवैफल्यमाह—अलसेति । वधूनां सम्बन्धि प्रकृत्या अलसैः पदैः मनोरमं मनोज्ञम् अतएव जिता कलहंसवधूनां गतिर्येन तत् प्रयातं गमनम् । भावे क्तः । तथा उरुणः अतिविपुलस्य जघनस्थलस्य अतिभारादतिगौरवात् उदितपरिश्रमेण उद्गतश्रमेण जिह्मिते घूर्णिते ईक्षणे यस्मिन् तत् स्थितं वा स्थितिश्च । सर्वत्र वाशब्दः समुच्चये । "वा समुच्चये एवार्थे उपमानविकल्पयोः" इति हैमः ॥ ६० ॥

भृशेति । तथा भृशेन गाढ़ेन कुसुमशरस्य कामस्य इषोर्निपातेन या मोह मूर्च्छा तस्मात् हेतोः अनवसितार्थैः अस्फुटोच्चारणात् अनवधारिताभि-

शृङ्गकुसुमशरेषु पातमोहा-
द्रुतवसिताधिपदाकुलोऽभिलापः।
अधिकविततलोचनं वधूना-
मयुगपदुन्नमितभ्रु वीक्षितञ्च ॥ ६१ ॥
रुचिकरमपि नार्थवद्बभूव
स्तिमितसमाधिशुचौ पृथातनूजे।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ॥ ६२ ॥
विशेषकम्।

स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते।

धैर्यैः पदैः सुप्तिङन्तादिभिः क्षुभितशब्दैः आकुलः सङ्कीर्णः अभिलापः वाक्यप्रयोगश्च अधिकं वितते विस्तृते लोचने यस्मिन् तत् अयुगपत् पर्यायेण उन्नमिते भ्रुवौ यस्मिन् तत् तथोक्तम्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः। वीक्षितं वीक्षणञ्च ॥ ६१ ॥

रुचिकरमिति। पूर्वोक्तं रुचिकरं स्पृहाजनकमपि। "रुचिः कान्तऽभिषोर्भासि स्त्रियां शोभास्पृहार्थयोः" इति वैजयन्ती। स्तिमितेन स्थिरेण समाधिना तपोयोगेन शुचौ शुद्धे निर्विकारे चेतसीत्यर्थः। पृथातनुजे अर्जुने विषये अर्थवत् सप्रयोजनं न बभूव। तथाहि महतां धीराणां मनांसि अमर्षे क्रोधे ज्वलयति सति सुखाभिलाषः अवसरम् अवकाशं न लभते रौद्रस्य शृङ्गारविरोधित्वादिति भावः। अत्र विशेषके अर्थान्तरन्यासोऽलङ्कारः ॥ ६२ ।

मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिता स्वं प्रति ययुः ॥ ६३ ॥
इति अर्जुनविलोभनप्रत्याख्यानो नाम दशमः सर्गः ॥१०॥

स्वयमिति। एवं हरिसुते अर्जुने स्वयम् अखण्डेन अविलुप्तेन तपसा शतमखम् इन्द्रं संराध्य प्रीणयित्वा परोच्छित्त्या शत्रुवधेन लभ्यां साध्यां

लक्ष्मीं राजलक्ष्मीमभिलषति सति सोद्वेगैः कार्य्यसिद्ध्यभावात् सनिर्वेदैर्मनोभिः उपलक्षिताः । किञ्च, प्रणयविहत्या प्रार्थनाभङ्गेन ध्वस्तरुचयो नष्टकान्तयः सगन्धर्वाः गन्धर्वसहिताः त्रिदशवनिताः स्वं धाम स्वस्थानं प्रतिययुः । शिखरिणीवृत्तमेतत् । "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात् ॥ ६२ ॥

इति महामहोपाध्यायमल्लिनाथसूरिविरचितायां घण्टापथसमाख्यायां किरातार्ज्जुनीयमहाकाव्यस्य दशमसर्गव्याख्या समाप्ता ॥ १० ॥

---

# एकादशः सर्गः ।

अथामर्षान्निसर्गाच्च जितेन्द्रियतया तया ।
आजगामाश्रमं जिष्णोः प्रतीतः पाकशासनः ॥१॥
मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः ।
द्राघीयसा वयोऽतीतः परिक्लान्तः किलाध्वना ॥२॥

अन्वयः ।—अथ पाकशासनः तया (श्रुतया) अमर्षात् निसर्गात् च जितेन्द्रियतया प्रतीतः (सन्) जिष्णोः (अर्ज्जुनस्य) आश्रमम् आजगाम। वाच्य—पाकशासनेन···प्रतीतेन (सता) आश्रमः आजग्मे ॥१॥

अन्वयः ।—अनुरूपेण सूनुना वयः अतीतः मुनिरूपः सः द्राघीयसा अध्वना परिक्लान्तः किल पुरः ददृशे। वाच्य—अनुरूपः सूनुः वयोऽतीतम् अध्वना परिक्लान्तं मुनिरूपं तं ददर्श ॥२॥

अथेति । अथाप्सरसां प्रतिप्रयाणानन्तरम् । पाको नाम कश्चिद्राक्षसस्तस्य शासनः इन्द्रः । नन्द्यादित्वाल्लुप्रत्ययः । तथाप्सरोमुखाच्छ्रुतयामर्षाद्विद्वेषान्निसर्गाच्च या जितेन्द्रियता तयागन्तुकानागन्तुकोभयविधहेतुकया प्रतीतो हृष्टः सन् । 'ख्याते हृष्टे प्रतीतः' इत्यमरः । 'जिष्णोरर्जुनस्य 'जिष्णुः शक्रे धनञ्जये' इत्यमरः । आश्रममाजगाम । अत्रामर्षनिसर्गयोर्जितेन्द्रियताहेतुकं काव्यलिङ्गं स्फुटमवगम्यते ॥१॥

किमिन्द्रो निजरूपेणैवागतो नेत्याह—मुनिरूप इति । मुनेः रूपमिव रूपं यस्य स मुनिरूपः, मुनिवेशधारीत्यर्थः । स इन्द्रोऽनुरूपेण दर्शनप्रदानयोग्येनेत्यर्थः । सूनुना पुत्रेणार्जुनेन पुरोऽग्रे ददृशे दृष्टः ।

১। অনন্তর পাকশাসন ইন্দ্র, অপ্সরাগণের মুখে শত্রুগণের প্রতি বিদ্বেষপ্রযুক্ত ও স্বভাবত উৎপন্ন অর্জ্জুনের জিতেন্দ্রিয়তার বিষয় শ্রবণে হৃষ্ট হইয়া তাঁহার আশ্রমে আগমন করিলেন।

१। इसके उपरान्त पाकशासन (अर्थात् पाकनामक दैत्योंका शत्रु) इन्द्र, अप्सराओंके मुंहसे शत्रुओंकी ओर विरोध होने और अर्जुनके स्वाभाविक इन्द्रियदमनकी समाचार सुनने पर प्रसन्न हो अर्जुनके आश्रम पर आये।

जटानां कीर्णया केशैः संहत्या परितः सितैः।
पृक्तयेन्दुकरैरह्नः पर्य्यन्त इव सन्ध्यया ॥३॥
विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः।
प्रालेयावततिम्लानपलाशाब्ज इव ह्रदः ॥ ४ ॥

अन्वयः।—परितः (सः) सितैः केशैः कीर्णया जटानां संहत्या (अतएव) इन्दुकरैः पृक्तया सन्ध्यया अह्नः पर्य्यन्तः इव (स्थितः)। वाच्य संहत्या (उपलक्षितेन) सन्ध्यया (उपलक्षितेन) अह्नः पर्य्यन्तेन इव (स्थितम्) ॥३॥

अन्वयः।—विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः (सः) प्रालेयावततिम्लानपलाशाब्जः ह्रदः इव (स्थितः)। वाच्य—विशदभ्रू...लोचनेन (तेन) प्रालेया...पलाशाब्जेन ह्रदेन इव (स्थितम्) ॥४॥

कथम्भूतः? वयो यौवनादिकमतीतो वृद्धः। 'द्वितीयाश्रित—' इत्यादिना द्वितीयासमासः। द्राघीयसातिदीर्घेण 'प्रियस्थिर—' इत्यादिना दीर्घशब्दस्य द्राघादेशः। अध्वना, अध्वगमनेनेत्यर्थः। परिक्लान्तः परिश्रान्तः। किलेत्यलीके। वृद्ध इव दूराध्वश्रान्त इव स्थित इत्यर्थः। 'इव' इति पाठे स्पष्टार्थः ॥२॥

अथ चतुर्भिरिन्द्रं विशिनष्टि—जटानामिति। परितः सितैः केशैः कीर्णया व्याप्तया जटानां संहत्या समूहेनोपलक्षितः अतएवेन्दुकिरणैः पृक्तया युक्तया संध्ययोपलक्षितोऽह्नः पर्य्यन्तो दिनान्त इव स्थितः। तस्यापि परिणतरूपत्वाद्वृद्धोपमानत्वम्। जटानां संहत्येत्युक्तत्वात् सन्ध्यासाम्यम् ॥३॥

विशदेति। पुनश्च, विशदेन पलितपाण्डुरेण भ्रूयुगेन छन्ने वलितापाङ्गे वलितप्रान्ते लोचने यस्य स तथोक्तः। "अपाङ्गौ नेत्रयो-

२। তাঁহার দর্শনপ্রদানযোগ্য পুত্র অর্জ্জুন দেখিলেন, এক মুনিবেশধারী বৃদ্ধ, সুদীর্ঘ পথপর্য্যটনে পরিশ্রান্ত হইয়া সম্মুখে উপস্থিত হইয়াছেন।

৩। তাঁহার জটাজালের চতুর্দ্দিক শ্বেতবর্ণ কেশ দ্বারা পরিব্যাপ্ত। সেই হেতু ইন্দুকিরণযুক্ত সন্ধ্যাসমাগত দিবাশেষের ন্যায় তিনি অবস্থান করিতেছেন।

२। उनके देखनेयोग्य पुत्र अर्जुनने देखा कि मुनिका वेशधारण किये एक वृद्ध मनुष्य, बहुत लम्बी यात्रा करनेसे थक कर सामने खड़ा है।

३। अपना जटाओंके आसपास उजले २ केशोंसे भरे थे। वल्कि सन्ध्यायकी समय चन्द्रमा की किरणोंसे युक्त सूर्य्यकी तरह विराज रहे थे।

आसन्नभरनीकाशैरङ्गैः परिकृशैरपि ।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः ॥५॥

अन्वयः ।—परिकृशैः अपि आसन्नभरनीकाशैः अङ्गैः ( अतएव ) आद्यूनः सद्गृहिण्या इव प्रायः यष्ट्या अवलम्बितः । वाच्य—अङ्गैः··( उपलक्षितेन ) यष्ट्या अवलम्बितेन ( स्थितम् ) ॥५॥

न्तौ' इत्यमरः । पामादित्वाल्लोमादिसूत्रेण वलच्प्रत्ययः । प्रालेयावतत्या हिमसंहत्या म्लानपलाशानि म्लानदलान्यब्जानि यस्मिन् स ह्रद इव स्थितः ॥४॥

आसन्नेति । पुनश्च परिकृशैः परिक्षीणैरप्यासन्नभरनीकाशैर्भाराक्रान्तसदृशैः सभारवद्गुरुभवद्भिरित्यर्थः । 'इकः काशे' इति दीर्घः । अङ्गैरुपलक्षितः । कार्श्याल्लघून्यपि स्वाङ्गानि स्वयं वोढुमसमर्थ इत्यर्थः । अत एवाद्यूनः औदरिकः 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते' इत्यमरः । आङ्पूर्वाद्दीव्यतेः क्तः । 'च्छ्वोः शूडनुनासिके च' इत्यूठादेशः । 'दिवोऽविजिगीषायाम्' इति निष्ठानत्वम् । सद्गृहिण्यानुकूलकलत्रेणेव प्रायः प्राचुर्येण यष्ट्यावलम्बनदण्डेनावलम्बितो धारितः । न तु स्वगत्येति भावः ॥५॥

४। पक्कताप्रयुक्त তাঁহার পাণ্ডুরবর্ণ ভ্রূযুগলে শ্লথচর্ম্মবিশিষ্ট অপাঙ্গহেতু নেত্রদ্বয় সমাচ্ছন্ন শিশিরসম্পাতে মলিনদলবিশিষ্ট পদ্ম দ্বারা সুশোভিত হ্রদের ন্যায় তিনি অবস্থান করিতেছিলেন।

৫। অতিশয় কৃশদেহ হইলেও তাঁহাকে ভারাক্রান্তের ন্যায় দেখা যাইতেছিল, ( অর্থাৎ তিনি যেন নিজের কৃশশরীর বহন করিতে পারিতেছিলেন না ) অত্যধিক উদরপরায়ণ ব্যক্তি যেমন সাধ্বীপত্নীকে অবলম্বন করিয়া চলিতে থাকে, তিনিও তদ্রূপ যষ্টির উপর ভর করিয়াছিলেন।

४। रोए' पक्क जाने कारण उजो भौ'ओंखें' और उनकी कौने घिरे थे। बल्कि अत्यन्त औस पड़नेके कारण निस्तेज कमलके दलों ( पंखरियों ) परिपूर्ण जलाशय की तरह दीख पड़ते खड़े थे।

५। अत्यन्त पतली भी शरीरको भारसे झुकेकी तरह धारण किये दीख पड़ते थे अर्थात् जान पड़ता था कि वे अपना भी शरीर नहीं ढो सकते थे। जिस प्रकार अत्यन्त अपने हो परे भरनेमें व्यग्र पुरुष अपनी साध्वी ( दयालु और पतिव्रता ) स्त्रीकी सहायतासे निवाह करता है उसी प्रकार वे छड़ी पर भार दिये खड़े थे।

गूढ़ोऽपि वपुषा राजन् धाम्ना लोकाभिभाविना।
अंशुमानिव तन्वभ्रपटलच्छन्नविग्रहः ॥६॥
जरतीमपि बिभ्राणस्तनुमप्राकृताकृतिः।
चकाराक्रान्तलक्ष्मीकःससाध्वसमिवाश्रमम् ॥७॥

अन्वयः।—(हे) राजन्, वपुषा गूढ़ः अपि तन्वभ्रपटलच्छन्नविग्रहः अंशुमान् इव लोकाभिभाविना धाम्ना (दीप्यमानः ददृशे)। वाच्य—गूढ़म् अपि तन्वभ्र... विग्रहम् अंशुमन्तम् इव (ददर्श) ॥६॥

अन्वयः।—जरतीं तनुं बिभ्राणः अपि अप्राकृताकृतिः आक्रान्तलक्ष्मीकः (सन्) आश्रमं ससाध्वसम् इव चकार। वाच्य—बिभ्राणेन अपि अप्राकृताकृतिना आक्रान्तलक्ष्मीकेण आश्रमः ससाध्वसः इव चक्रे ॥७॥

गूढ़ इति। वपुषा गूढ़ोऽपि प्रच्छन्नरूपोऽपीत्यर्थः। प्रकृत्यादिभ्य उपसंख्यानात्तृतीया। तन्वभ्रपटलच्छन्नविग्रहः स्तोकाभ्रवृन्दान्तरितमूर्त्तिरंशुमानिव लोकाभिभाविना लोकव्यापिना धाम्ना तेजसा। राजन् दीप्यमानो ददृश इति पूर्वेण सम्बन्धः ॥६॥

जरतीमिति। जरतीं जीर्णाम्, 'जीनो जीर्णो जरन्नपि' इत्यमरः। जीर्य्यतेरतीतार्थे शतृप्रत्ययः। 'उगितश्च' इति ङीप्। तनुं शरीरं बिभ्राणो दधदप्यप्राकृताऽलोकसामान्याकृतिर्मूर्त्तिर्यस्य स इन्द्र आक्रान्ताभिभूता लक्ष्मीराश्रमशोभा येन स आक्रान्तलक्ष्मीकः; अत्र 'उरःप्रभृतिभ्यः कप्' इति नित्यकवाश्रयणम्। एकवचनोत्तरपदस्यैव लक्ष्मीशब्दस्योरःप्रभृतिषु पाठात्। 'शेषाद्विभाषा' इति विकल्पाश्रयणे तु बहुवचनोत्तरपद इति विवेकः। आश्रमं ससाध्वसमिव चकार। तेजस्विदर्शनाद्भयं भवति। तत्तु न दुःखजनकं तस्यामानुषत्वादिति सूचयितुमिव शब्दः ॥७॥

৬। তিনি প্রচ্ছন্নরূপধারী হইলেও, অল্প মেঘখণ্ডে সমাবৃতদেহ সূর্য্যের ন্যায় লোকব্যাপী তেজ দ্বারা দীপ্তি পাইতেছিলেন।

६। छिपे रूपको धारण किये रहने पर भी कुछ बादलके टुकड़ेसे घिरे सूर्य्यकी तरह सर्वव्यापी तेजसे चमक रहे थे।

अभितस्तं पृथासूनुः स्नेहेन परितस्तरे ।
अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मनः ॥८॥
आतिथेयीमथासाद्य सुतादपचितिं हरिः ।
विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥९॥

अन्वयः ।—पृथासूनुः तम् ( इन्द्रम् ) अभितः स्नेहेन परितस्तरे ; हि बन्धौ अविज्ञाते अपि बलात् ( एव ) मनः प्रह्लादते । वाच्य—पृथासूनुना स ( इन्द्रः ) परितस्तरे मनसा प्रह्लाद्यते ॥८॥

अन्वयः ।—अथ हरिः ( इन्द्रः ) सुतात् आतिथेयीम् अपचितिम् आसाद्य विष्टरे विश्रम्य नाम इति ( वक्ष्यमाणरूपां ) भारतीं व्याजहार । वाच्य—हरिणा... इति भारती व्याजह्रे ॥९॥

अभित इति । पृथासूनुरर्ज्जुनस्तमिन्द्रमभितस्तं प्रति स्नेहेन परितस्तरे । तद्ब्राचरेण प्रेम्णा पर्य्याप्तः । स्तृणातेः कर्म्मणि लिट् । 'ऋतश्च संयोगादेर्गुणः' इति गुणः । नन्वज्ञातसम्बन्धविशेषस्य तस्य इन्द्रे कथं स्नेहोदय इत्यत आह—अविज्ञात इति । बन्धौ सुहृद्यविज्ञातेऽपि बन्धुरयमित्यज्ञातेऽपि बलाद्वा न्धवसत्तावशादेव मनः प्रह्लादते हि, स्निह्यतीत्यर्थः ॥८॥

आतिथेयीमिति । अथ हरिरिन्द्रः सुतादर्ज्जुनादातिथेयीमतिथिषु साध्वीम् । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' अपचितिं पूजामासाद्य प्राप्य

৭। অলৌকিকরূপধারী তিনি (ইন্দ্র) বৃদ্ধের ন্যায় দেহধারণ করিলেও, আশ্রমস্থলীর শোভাকে ম্লান করিয়া আশ্রমকে যেন ভীত করিয়া তুলিলেন।

৮। পৃথাপুত্র অর্জ্জুন, সেই ইন্দ্রের প্রতি স্নেহার্দ্রিত হইলেন। বন্ধুজন অপরিজ্ঞাত হইলেও বান্ধবতা বশেই মন স্নেহার্দ্রিত হয়।

७। वृद्धका शरीर धारण किये रहने पर भी अलौकिक मूर्त्ति धारण करने हुए उन्होंने आश्रमकी शोभा सुरक्षा कर आश्रमको डारा सा दिया ।

८। पृथाकी पुत्र अर्ज्जुन इस बार इन्द्रको देख कर प्रेमसे भर गये। आत्मीय परिवार छिपे रहने पर भी अपना परिवार होनेके कारण हृदयको प्रेमरससे पूर्ण कर देता है।

त्वया साधु समारम्भि नवे वयसि यत्तपः ।
ह्रियते विषयैः प्रायो वर्षीयानपि मादृशः ॥१०॥
श्रेयसीं तव सम्प्राप्ता गुणसम्पदमाकृतिः ।
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ॥११॥

अन्वयः—त्वया साधु समारम्भि ; यत् नवे वयसि तपः ( चर्य्यते ) मादृशः वर्षीयान् अपि प्रायः विषयैः ह्रियते । वाच्य—त्वं साधु समारब्धाः ( तपश्चरसि ) मादृशं वर्षीयांसम् अपि प्रायः विषयाः हरन्ति ॥१०॥

'पूजा नमस्यापचितिः' इत्यमरः । विष्टरे आसने । 'ऋदोरप्' इति स्तृणातेरप्प्रत्ययः । 'वृक्षासनयोर्विष्टरः' इति षत्वम् । विश्रम्य किल, श्रममपनीयेत्यर्थः । इति वक्ष्यमाणप्रकारां भारतीं व्याजहार उक्तवान् 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥९॥

अथ तावन्मुनिवृत्तिं सुमुक्षुं ज्ञात्वाह—त्वयेति । त्वया साधु समारम्भि सम्यगुपक्रान्तम् । रभेः कर्म्मणि लुङ् । कुतः ? यद्यस्मान्नवे वयसि यौवने तपः चर्य्यत इति शेषः । तथाहि—अहमिव दृश्यतेऽसौ मादृशो वर्षीयानतिवृद्धोऽपि । 'प्रियस्थिर-' इत्यादिना वृद्धशब्दस्य वर्षादेशः । प्रायो विषयैर्ह्रियते आकृष्यते । किमु भवादृशो यवीयानिति भावः ॥१०॥

अथैवमनारम्भो तव स्वाकारलाभोऽपि विफलः स्यादित्याशयेनाह—

৯। তদনন্তর ইন্দ্র, পুত্র অর্জ্জুনের নিকটে অতিথিযোগ্য সৎকার লাভ করিয়া, আসনে উপবেশন পূর্ব্বক বিশ্রাম করিয়া বক্ষ্যমাণ প্রকার বাক্য বলিতে লাগিলেন।

১০। তুমি উত্তম অনুষ্ঠান আরম্ভ করিয়াছ ; যেহেতু যৌবন বয়সেই তপস্যা আরম্ভ করিয়াছ, কিন্তু আমার ন্যায় বৃদ্ধ ব্যক্তিও প্রায়ই বিষয়ে আকৃষ্ট হইয়া থাকে। অতএব তোমার উদ্যম প্রশংসনীয়।

९। इसके उपरान्त इन्द्र, अपने पुत्र अर्जुनसे अतिथियोग्य सत्कार पाकर आसन पर सुखपूर्वक बैठने पीछे कुछ विश्राम करानेवाली बातें बोलने लगे।

१०। तुम बहुत अच्छा काम कर रहे हो क्योंकि नयी अवस्थामें ही तपस्या आरम्भ की है। बल्कि मेरे ऐसे बुड्ढे लोग भी प्रायः विषयोंसे खींच ( अर्थात् फंस ) जाते हैं। इस लिये तुम्हारा उद्यम प्रशंसा करने योग्य है।

शरदम्बुधरच्छायागत्वर्य्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्य्यन्तपरितापिनः ॥१२॥

अन्वयः।—तव आकृतिः श्रेयसीं गुणसम्पदं सम्प्राप्ता ; लोके रम्यता सुलभा, हि गुणार्ज्जनं दुर्लभम् (भवति)। वाच्य—आकृत्या श्रेयसी गुणसम्पत् सम्प्राप्ता ; रम्यतया सुलभया (भूयते) गुणार्ज्जनेन दुर्लभेन (भूयते) ॥११॥

अन्वयः। -यौवनश्रियः (तावत्) शरदम्बुधरच्छायागत्वर्य्यः, विषयाः आपातरम्याः पर्य्यन्तपरितापिनः (भवन्ति)। वाच्य—यौवनश्रीभिः···च्छायागत्वरीभिः (भूयते) विषयैः···रम्यैः···तापिभिः (भूयते) ॥१२॥

श्रेयसीमिति। तवाकृतिर्मूर्त्तिः रम्येति शेषः। श्रेयसीं श्रेष्ठां गुणसम्पदं तपःसमारम्भरूपां संप्राप्ता। अतो न निष्फलेति भावः। ननु स्वाकारा गुणाढ्याश्च कियन्तो न सन्तीति वाच्यमित्याह—लोक इति। लोके रम्यता रम्याकारता सुलभा हि गुणार्ज्जनं गुणसम्पादनं दुर्लभम्, त्वयि तूभयं सम्पद्यत इति अस्माकं परमामोद इति भावः ॥११॥

यदुक्तम् 'त्वया साधु समारम्भि' इति, तदेवं साधुत्वं संसारनिःसारताख्यापनाय युग्मेनोपपादयति—शरदिति। यौवनश्रियस्तावच्छरदम्बुधरच्छाया इव गत्वर्य्यस्वच्छन्नाः। 'गत्वरश्च' इति क्वरवन्तो निपातः। 'टिड्ढाणञ्' इत्यादिना ङीप्। विषयाः शब्दादयस्त्वापातरम्यास्तत्कालरमणीयाः 'तदात्वे पात आपातः' इति वैजयन्ती। पर्य्यन्तेऽवसाने परितापयन्ति दुःखं कुर्व्वन्तीति तथोक्ताः ॥१२॥

১১। তোমার আকৃতি শ্রেষ্ঠগুণসম্পদের ভাজন হইয়াছে। লোকে রমণীয়তা সুলভ কিন্তু গুণার্জ্জন দুর্লভ।

১২। যৌবনের শ্রী শারদীয় মেঘমালার ন্যায় বিচঞ্চল, বিষয়সমূহ আপাত রমণীয় কিন্তু পরিণাম দুঃখকর।

११। तुम्हारा आकार सर्वाङ्गसम्पन्न गुणोंका पात्र हो गया है। लोकमें सुन्दर आकार धारण करना सुलभ है, पर गुण उपार्ज्जन करना अत्यन्त दुर्लभ है।

१२। यौवनश्री (नौजवानीकी शोभा) शरत्कालके बादलोंकी तरह चञ्चल (अर्थात् थोड़े समयमें नष्ट हो जाता) है। विषय तत्काल (मिलनेके समय) तो रमणीय मालूम पड़ते पर अन्तमें जीको जलाने रहते हैं।

अन्तकः पर्य्यवस्थाता जन्मिनः सन्ततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥१३॥

चित्तवानसि कल्याणी यत्त्वां मतिरुपस्थिता ।
विरुद्धः केवलं वेषः सन्देहयति मे मनः ॥१४॥

अन्वयः ।—सन्ततापदः जन्मिनः अन्तकः पर्य्यवस्थाता, इति त्याज्ये भवे भव्यः जनः मुक्तौ उत्तिष्ठते । वाच्य—अन्तकेन पर्य्यवस्थात्रा (भूयते) भव्येन जनेन उत्थीयते ॥१३॥

अन्वयः—(त्वम्) चित्तवान् असि, यत् त्वां कल्याणी मतिः उपस्थिता ; (किन्तु) केवलं विरुद्धः वेषः मे मनः सन्देहयति । वाच्य—(त्वया) चित्तवता भूयते ; कल्याण्या मत्या (त्वम्) विरुद्धेन वेषेण मनः सन्दिह्यते ॥१४॥

अन्तक इति । किञ्च—सन्तता अनवच्छिन्नाः आपदः क्लेशा यस्य तस्य जन्मिनः प्राणिनः । 'प्राणी तु चेतनो जन्मी' इत्यमरः । ब्रीह्यादित्वादिनिः । अन्तको मृत्युः पर्य्यवस्थाता प्रतिरोद्धा । प्रथमं तावज्जन्मिनो जन्मदुःखमेव दुस्तरम्, ततो जातस्य जीवनमपि सततं दुःखसम्भिन्नतया विषयुक्तान्नप्रायम्, तदपि मृत्युग्रस्तमिति सोऽयम् 'काकमांसं शुनोच्छिष्टं [दुर्गन्धं क्रिमिसङ्कुलम् । म्लेच्छपक्वं सुरासिक्तं] स्वल्पं तदपि दुर्लभम् ।' इति न्यायादिति भावः । इत्युक्तहेतोस्त्याज्ये भवे संसारे भवतीति भव्यो योग्यो जनः भवादृश इति शेषः 'भव्यं सुखे शुभे चापि मेयवद्योग्यभाविनोः' इति विश्वः । 'भव्यगेय—' इत्यादिना कर्त्तरि निपातः । मुक्तौ मोक्षे उत्तिष्ठते उद्युक्तो भवति । 'उदोऽनूर्द्धकर्मणि' इत्यात्मनेपदम् ॥१३॥

सम्प्रति प्रशंसापूर्वकं स्वाभिसन्धिं दर्शयति—चित्तवानिति । चित्तवान् प्रशस्तचित्तोऽसि । प्रशंसायां मतुप् । कुतः ? यतस्त्वां कल्याणी

১৩। অনবচ্ছিন্নক্লেশভোগী প্রাণিগণের মৃত্যুই প্রতিরোধকর্ত্তা, এইহেতু, ত্যাগযোগ্য সংসারে যোগ্যব্যক্তি (তোমার ন্যায় সজ্জন) মুক্তি বিষয়েই উদ্যম করিয়া থাকেন।

१३। निरन्तर क्लेशभोगनेवाले प्राणियोंको मृत्यु (अनृद्धे) रोके रहती है। (इसलिये त्याग करने योग्य संसारमें अच्छे लोग मुक्तिके लिये उद्यम करते हैं।

युयुत्सुनेव कवचं किमामुक्तमिदं त्वया।
तपस्विनो हि वसते केवलाजिनवल्कले ॥१५॥
प्रपित्सोः किन्नु ते मुक्तिं निःस्पृहस्य कलेवरे।
महेषुधी धनुर्भीमं भूतानामनभिद्रुहः ॥१६॥

अन्वयः—युयुत्सुना इव त्वया किम् इदं कवचम् आमुक्तम् (क्रियते); हि तपस्विनः केवलाजिनवल्कले वसते। वाच्य—युयुत्सुः इव त्वं आमुक्तवान् तपस्विभिः...वल्कले वस्येते ॥१५॥

साध्वी। 'वह्वादिभ्यश्च' इति ङीप्। मतिरुपस्थिता सङ्गता। किन्तु केवलमेकं यथा तथा विरुद्धो वेषो मे मनः सन्देहयति संशययुक्तं करोति। यद्वा—वेषः केवलं वेष एवेत्यर्थः। 'केवलः कृत्स्न एके च' 'केवलं चावधारिते' इत्युभयत्रापि शाश्वतः ॥१४॥

वेषविरोधमेवाह—युयुत्सुनेति। युयुत्सुनेव योद्धुमिच्छुनेव त्वया युधेः सन्नन्तादुप्रत्ययः। किमिदं कवचं चर्मामुक्तमर्पितम्। तत्र को विरोध इत्यत्राह—हि यस्मात्तपस्विनः केवले एके कवचाद्यसहचरिते इति यावत्, ते च ते अजिनवल्कले च 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः। वसते आच्छादयन्ति। अतस्तपस्विनस्ते कवचधारणं विरुद्धमित्यर्थः ॥१५॥

১৪। তোমার প্রশস্তচিত্ত, যেহেতু তোমাতে কল্যাণদায়িনী বুদ্ধির জন্ম হইয়াছে। কিন্তু বিরুদ্ধ বেশই আমার মনে সন্দেহ উৎপাদন করিতেছে।

১৫। যুদ্ধাকাঙ্ক্ষী ব্যক্তির ন্যায় তুমি গাত্রে এই কবচ ধারণ করিয়াছ কেন? দেখ, তপস্বীরা কিন্তু কেবল মৃগচর্ম্ম আর বল্কলই ধারণ করিয়া থাকেন।

१४। तुम्हारा चित्त प्रशंसा करनेयोग्य है क्योंकि तुममें कल्याण (मुक्ति) देनेवाली बुद्धि उत्पन्न हो गयी है, पर तुम्हारा विरुद्ध वेश मेरे हृदयमें सन्देह उत्पन्न कर रहा है।

१५। युद्ध करने चाहनेवालोंकी तरह तुमने अङ्गपर यह कवच क्यों धारण किया है? देखो, तपस्वी लोग केवल मृगचर्म और वृक्षों की छाल धारण किये रहते हैं।

भयङ्करः प्राणभृतां मृत्योर्भुज इवापरः ।
असिस्तव तपस्थस्य न समर्थयते शमम् ॥१७॥
(युग्मम्)

अन्वयः—किञ्च मुक्तिं प्रपित्सोः कलेवरे निःस्पृहस्य भूतानाम् अनभिद्रुहः ते महेषुधी भीमं धनुश्च तथा मृत्योः अपरः भुजः इव प्राणभृतां भयङ्करः असिः तपस्थस्य तव समं न समर्थयते। वाच्य—महेषुधीभ्यां भीमेन तथा भयङ्करेण असिना शमः न समर्थ्यते ॥ १६-१७ ॥

प्रपित्सोरिति। किञ्च मुक्तिं प्रपित्सोः प्राप्तुमिच्छोः। 'सनि मीमा—' इत्यादिना इसादेशः। अत्र 'लोपोऽभ्यासस्य' इत्यभ्यासलोपः। अतो मुमुक्षुत्वादेव कलेवरे शरीरे निस्पृहस्य गतस्पृहस्य अतो नात्मरक्षार्थं धनुर्धारणं युक्तमित्यर्थः। नापि परहिंसार्थमित्याह—भूतानां जन्तूनाम् 'क्ष्मादौ जन्तौ च भूतानि' इति वैजयन्ती। 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मसंज्ञायाम् 'कर्तृकर्मणोः कृति' इति कर्त्तरि षष्ठी। अनभिद्रुहोऽहिंसकस्य 'सत्सूद्विष—' इत्यादिना क्विप्। ते तव महेषुधी महानिषङ्गौ भीमं त्रासजनकं धनुश्च न समर्थयते शममित्युत्तरेणान्वयः। समर्थयते इति वचनविपरिणामः कार्य्यः ॥१६॥

भयङ्कर इति। तथा मृत्योरपरो भुज इव प्राणभृतां प्राणिनां भयं करोतीति भयङ्करः। 'मेघर्त्तिभयेषु कृञः' इति खच्प्रत्ययः। 'अरुर्द्विष—' इत्यादिना मुमागमः। असिः खड्गः तपसि तिष्ठतीति तपस्थः। तपश्चरन्नित्यर्थः। 'सुपि स्थः' इति कप्रत्ययः। तस्य तव शमं शान्तिं न समर्थयते न सम्भावयति। किं शान्तस्य शस्त्रेणेति भावः ॥१७॥

১৬।১৭। অপর এক কথা—তুমি মোক্ষকামী, সুতরাং শরীরের প্রতি তোমার আকাঙ্ক্ষা থাকিতে পারে না। তথাপি তুমি যে দুইটী মহাস্ত্র অর্থাৎ লোকভয়ঙ্কর ধনু ও যমের দ্বিতীয় হস্তের ন্যায়—প্রাণিগণের ত্রাসজনক খড়্গ ধারণ করিয়াছ, তাহা তপস্যায় নিরত তোমার শান্তির সমর্থন করিতেছে না।

१६-१७। और भी एक बात है कि—तुम मुक्ति चाहते हो शरीरके लिये तुम्हें किसी वस्तुकी लालच हो नहीं, प्राणियोंको मारने की भी इच्छा नहीं हो सकती। तोभी तुमने जो दो बड़े अस्त्र अर्थात् लोगोंको डरानेवाला धनुष और यमराजकी दूसरी भुजाकी तरह प्राणियोंको डरानेवाली तलवार धारण की है—वे सब तपस्यामें लगे हुये तुम्हारी शान्तिका समर्थ नहीं हैं।

जयमत्रभवान्नूनमरातिष्वभिलाषुकः।
क्रोधलक्ष्म क्षमावन्तः क्वायुधं क्व तपोधनाः ॥१८॥
यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥१९॥

अन्वयः। अत्रभवान् अरातिषु जयम् अभिलाषुकः नूनं क्रोधलक्ष्म आयुधं क्व (भवति) क्षमावन्तः तपोधनाः क्व (भवन्ति)। वाच्य—अत्रभवता अरातिषु जयम् अभिलाषुकेण (भूयते) क्रोधलक्ष्मणा आयुधेन (भूयते) क्षमावद्भिः तपोधनैः (भूयते) ॥ १८ ॥

अन्वयः। यः निःश्रेयसकरीः क्रियाः वधोदर्काः करोति, मूढः सः ग्लानिदोषच्छिदः स्वच्छाः अपः पङ्कयति। वाच्य—येन निःश्रेयसकर्य्यः क्रियाः वधोदर्काः क्रियन्ते, मूढेन तेन आपः पङ्क्यन्ते ॥१९॥

नन्वशान्तस्य किं तपसेत्याशङ्क्य जयार्थमित्याह—जयमिति। अत्रभवान् पूज्य इत्यर्थः। 'इतराभ्योऽपि दृश्यन्ते' इति प्रथमार्थे प्राग्दिशीयस्त्रल्प्रत्ययः। सुप्सुपेति समासः। 'त्रिषु तत्रभवान् पूज्य स्तथैवात्र भवानपि' इति यादवः। अरातिषु शत्रुषु विजये जयमभिलाषुका जयमिच्छुः 'लषपत—' इत्यादिनोकञ्प्रत्ययः। 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः। नूनमिति निश्चये 'नूनं तर्केऽपि निश्चये' इत्यमरः क्रोधस्य लक्ष्म कोपस्य लिङ्गमायुधं क्व क्षमावन्तः शान्तास्तपोधनाः क्व। क्रोधशान्त्योर्विरोधात्तत्कार्य्ययाः शस्त्रतपसारप्येकत्रासंगतेश्च शस्त्रिणस्ते तपो जयार्थं न तु मोक्षार्थमिति निश्चय इत्यर्थः ॥१८॥

১৮। অবশ্যই তুমি শত্রুর জয় বিষয়ে অভিলাষী। তাহা না হইলে, কোথায় ক্রোধের লক্ষণ অস্ত্রশস্ত্র, আর কোথায় বা ক্ষমাশীল তপস্বিগণ! বস্তুতঃ ক্রোধ ও শান্তি পরস্পর বিরোধী। তুমি যে অস্ত্র ধারণ করিয়া তপস্যা করিতে আসিয়াছ, তোমার এ তপস্যা নিশ্চিতই মোক্ষের জন্য নহে—শত্রুজয়ের জন্য।

१८। अवश्य तुम शत्रुओंपर विजय पानेकी इच्छा कर रहे हो. नहीं तो क्रोधका चिह्न अस्त्र शस्त्र कहां और क्षमाशील तपस्वी लोग कहां? वास्तवमें क्रोध और शान्ति एक दूसरेके विरोधी हैं। तुम जो अस्त्र धारण कर तपस्या कर रहे हो, तुम्हारा भी मोक्षके लिये है हो नहीं अवश्य शत्रुको जितनेके लिये।

मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः ।
तौ हि तत्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥२०॥

अन्वयः—(त्वम्) हिंसादेः दोषस्य मूलम्, अर्थकामौ मा स्म पुषः; हि तौ तत्त्वावबोधस्य दुरुच्छेदौ उपप्लवौ (भवतः)। वाच्य—(त्वया) अर्थकामौ मा स्म पुष्याताम्, ताभ्यां दुरुच्छेदाभ्याम् उपप्लवाभ्याम् (भूयते) ॥२०॥

तपसो जयार्थत्वे दोषमाह—य इति। यः पुमान्निश्चितं श्रेयो निःश्रेयसं मुक्तिः 'अचतुर—' इत्यादिना समासान्तो निपातः। 'मुक्तिः कैवल्यनिर्व्वाणश्रेयो निःश्रेयसामृतम्' इत्यमरः। निःश्रेयसं कुर्व्वन्तीति निःश्रेयसकरीः निःश्रेयसहेतूनित्यर्थः। 'कृञो हेतुताच्छील्यानुलोम्येषु' इति हेत्वर्थे टप्रत्ययः, टित्वान् ङीप्। क्रियास्तपोदानादिकर्म्माणि वधोदर्का हिंसाफलकाः करोति। 'उदर्कः फलमुत्तरम्' इत्यमरः। अत एव मूढ़ः स पुमान् ग्लानिरेव दोषस्तं छिन्दन्तीति ग्लानिदोषच्छिदः पिपासाहारिणीः, क्विप्। स्वच्छा निर्म्मला अपः पङ्कयति पङ्कवतीः करोति। 'णाविष्ठवद्भावे विन्मतोर्लुक्' इति मतुपो लुक्। महाफलसाधनस्य तपसः क्षुद्रफलेविनियोगः स्वच्छाम्बुनः पङ्कसङ्करवत्प्रेक्षावद्भिर्गर्हित इत्यर्थः। अत्र 'यत्तपसो वधोदर्कीकरणं तन्निर्म्मलस्य पयसः पङ्कसङ्करीकरणम्' इति वाक्यार्थे वाक्यार्थान्तरमारोप्य प्रतिबिम्बकरणाक्षेपादसम्भववस्तुसम्बन्धात् वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥१९॥

नन्वर्थकामयोरपि मोक्षवत्पुरुषार्थत्वात्तपसस्तदर्थत्वे को दोषस्तत्राह—मूलमिति। हिंसादेरिति तद्गुणसंविज्ञानो बहुव्रीहिः। आदिशब्दादनृतस्तेयादीनां संग्रहः। दोषस्यावगुणस्य मूलं कारणभूतौ। 'स्त्रीकामा

১৯। যে ব্যক্তি মুক্তিদায়ক কার্য্যকে হিংসাজনিত ফলের উৎপাদিকা করিয়া তোলে—সেই মূঢ় ব্যক্তি পিপাসাক্লেশনাশক নির্ম্মলজলরাশিকে কর্দ্দমিত করে। বস্তুতঃ মহাফলদায়ক তপস্যাকে শত্রুবিজয়রূপ সামান্য ফলোৎপাদক ব্যাপারে নিয়োগ করা আর নির্ম্মল জল ঘোলা করা উভয়ই দৃষ্টিকটু।

१९। जो मुक्ति देनेवाले व्यापारको हिंसा फलका साधन बना डालता है, वह प्यास और परिश्रमको नष्ट करनेवाले जलाशयको गदला कर देता है। वास्तवमें उत्तम फल देनेवाली तपस्याको शत्रुओं पर विजय पाने रूप साधारण फलमें लगाना और निर्म्मल जलको गदला (मैला करना बराबर है।

अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः ।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥२१॥
या गम्याः सत्सहायानां यासु खेदो भयं यतः ।
तासां किं यन्न दुःखाय विपदामिव सम्पदाम् ॥२२॥

अन्वयः—भूतानाम् अभिद्रोहेण गत्वरीः श्रियः अर्ज्जयन् (जनः); उदन्वान् सिन्धूनाम् इव आपदाम् पात्रताम् एति। वाच्य-गत्वर्य्यः श्रियः अर्ज्जयता (जनेन) उदन्वता सिन्धूनाम् इव पात्रता ईयते ॥२१॥

अन्वयः-याः सत्सहायानां गम्याः, यासु खेदः, यतः भयम् (एति) विपदाम् इव तासां सम्पदां न किम् (अस्ति) यत् न दुःखाय (भवति)। वाच्य—येन दुःखाय न (भूयते) ॥२२॥

धनकामाश्च किं न कुर्व्वन्ति पातकम्' इति भावः! अर्थकामौ मा स्म पुषः नोपचिनुष्व। 'स्मोत्तरे लङ् च' इति लुङ्। 'पुषादि—' इत्यादिना च्लेरङादेशः। हि यस्मादर्थकामौ तत्त्वावबोधस्य तत्त्वज्ञानस्य मोक्षसाधनस्येति शेषः। दुरुच्छेदौ दुर्वारावुपप्लवौ हिंसादिप्रवर्त्तकत्वादन्तकौ अतः पुरुषार्थपरिपन्थिनावेतौ न पुरुषार्थावित्यर्थः ॥२०॥

मुक्तिप्रतिबन्धकत्वादपुरुषार्थावर्थकामावित्युक्तम्। तत्रार्थस्य दुःखैकनिदानत्वादप्यपुरुषार्थत्वमिति पञ्चभिः प्रपञ्चयति—अभिद्रोहेणेत्यादि। भूतानामभिद्रोहेण हिंसया गत्वरीरस्थिराः श्रियः सम्पदोऽर्जयन् जनः, उदकमस्तीत्युदन्वानुदधिः। 'उदन्वानुदधौ च' इति निपातनात् साधुः। सिन्धूनां नदीनामिवापदां विपदां पात्रतां मूलत्वमेति ॥ २१ ॥

২০। তুমি, হিংসাদিদোষের মূলস্বরূপ অর্থ এবং কামকে পোষণ করিও না। কেন না ঐ দুইটী তত্ত্বজ্ঞানের অতিশয় প্রতিরোধকারী।

২১। প্রাণিহিংসা দ্বারা অস্থির সম্পদ্ অর্জ্জন করিয়া লোক, সমুদ্র যেমন নদীগণের আশ্রয় স্থান হয়, তেমনি আপদসমূহের স্থল হইয়া থাকে।

२०। तुम, हिंसा आदिक दोषोंका मूल अर्थ और कामको पुष्ट न होने दो, क्योंकि वे दोनो तत्त्वज्ञानके प्रबल बाधक हैं।

२१। प्राणियोंको मार कर स्थिर न रहनेवाली सम्पत्ति उपार्ज्जन करनेवाला नदियोंके आश्रय समुद्रकी तरह विपत्तियोंका आश्रय हो जाता हैं।

दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।
भोगान् भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥२३॥

अन्वयः—दुरासदान् विश्वासजन्मनः धृतेः उग्रान् अरीन् भोगान् आहेयान् भोगान् इव अध्यास्य आपत् न दुर्लभा (भवति)। वाच्य—आपदा सुदुर्लभया न (भूयते) ॥२३॥

आपत्पात्रतामेव व्यनक्ति—या इति। याः सम्पदः सत्सहायानां विद्यमानसाधनानामेव पुंसां गम्याः साध्याः विपदोऽपि सत्सहायनामेव गम्याः निस्तीर्य्या इत्यर्थः। 'कृत्यानां कर्त्तरि वा' इति षष्ठी। यासु सतीषु खेदो रक्षणादिक्लेशः। विपत्सु स्वत एवेति विशेषः। यतो याभ्यः सम्भवो भयम् अनेकानर्थमूलत्वादिति भावः। विपद्भयस्तु स्वरूपत एवेति भावः। किं बहुना—विपदामिव तासां सम्पदां सम्बन्धि न किम्? अस्तीति शेषः। यद्दुःखाय न भवति सर्व्वं दुःखावहमेवेति भावः। यदाहुः—"अर्थानामर्ज्जने दुःखमर्ज्जितानां च रक्षणे। नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम्।" इति, अतो हेया इति भावः। अत्र यन्न दुःखायेत्युत्तरवाक्यस्य यच्छब्दसामर्थ्यात्तासां किमिति पूर्व्ववाक्ये तच्छब्दोपादानं नापेक्षते, तदेतत् काव्यप्रकाशे स्पष्टम् ॥ २२ ॥

दुरासदानिति। किञ्च दुरासदान् दुःप्रापान् विश्वासाज्जन्म यस्यास्तस्याः जन्मोत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिः। धृतेः सन्तोषस्योग्रान् अरीन् धनिकस्य सर्व्वत्रानाश्वाससम्भवाद्विस्रम्भसुखभञ्जकानित्यर्थः। भुज्यन्त इति भोगान्धनान्याहेयानहिषु भवान्। 'दृतिकुक्षिकलशिवस्त्य-

२२। যে সম্পদ্ কর্ম্মী পুরুষগণের পক্ষেই প্রাপ্য, যে সকল থাকিলে রক্ষাদির জন্য ক্লেশ উপস্থিত হয়, যাহা হইতে বহুল অনর্থের মূল বলিয়া ভয় জন্মে, বিপদরাশির ন্যায় সেই সম্পদরাশির কি না আছে, যাহা দুঃখের কারণ নহে? বস্তুত উহার সমস্তই (অর্থাৎ উপার্জ্জন, রক্ষণ, ব্যয় নাশ প্রভৃতি সমুদয়ই) দুঃকর।

२२। जो सम्पत्ति या व्यापारमें लगे हुए पुरुषोंको ही मिल सकती बनी रहने पर भी जिनकी रक्षाके लिये क्लेश उठाना पड़ता है, बड़े २ अनर्थोंकी जड़ होनेके कारण जिनसे भय उत्पन्न होता हैं, तो क्या विपत्तियोंकी तुल्य सम्पतियां दुःख कारण नहीं हैं? असलमें उनकी सभी अर्थात् उत्पत्ति-रक्षा व्यय (खर्च) और नाश आदिक सभी दुःख देते हैं।

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढ़ा वामशीला हि जन्तवः ॥२४॥

अन्वयः—श्रियः जातु अन्तरज्ञाः न ( अतः ) आसां प्रियैः न भूयते । तासु मूढ़ाः अमी आसक्ताः जन्तवः वामशीला हि ( भवन्ति )। वाच्य श्रीभिः अन्तरज्ञाभिः न ( भूयते ) प्रियः न भवन्ति, अमीभिः मूढ़ैः आसक्तम्, जन्तुभिः वामशीलैः ( भूयते ) ॥२४॥

स्यहेर्दंश्' भोगान् फणानिव 'भोगः सुखे धने चाहेः शरीरफणयोरपि' इत्युभयत्रापि विग्रहः। अध्यास्याधिष्ठायापद्विपन्न दुर्लभा। आशीविषभुजङ्गमिव नेच्छन्तमेव भोगिनं पुमांसं बलादापदोऽनुसन्दधतीत्यर्थः ॥२३॥

इतोऽपि श्रियो हेया इत्याह—नेति। श्रियः सम्पदो जातु कदाचिदन्तरज्ञा नीचानीचविशेषाभिज्ञा न भवन्ति। अतएवासां श्रियां प्रियैर्न भूयते न ताः क्वाप्यनुरज्यन्तीत्यर्थः। नन्वयं श्रीदोषो न पुरुषदोष इति चेत्तत्राह—मूढ़ा अमी जनास्तास्वननुरक्तास्वपि श्रीष्वासक्ताः स्त्रीष्विव श्रीष्वननुरक्तास्वनुरागः पुंसामेवायं दोष इत्यर्थः। किमर्थं तर्हि तास्वेव सर्वेषामासक्तिरित्यर्थान्तरं न्यस्यति—वामेति। जन्तवो वामशीला वक्रस्वभावा हि। स्वभावस्य दुर्वारत्वादिति भावः ॥२४॥

२३। যাহা দুষ্প্রাপ্য বিশ্বাসজাত সন্তোষের শত্রু ( অর্থাৎ অনাশ্বাস জনিত বিশ্রম্ভ-সুখের বিনাশকারী ) সর্পের ফণার ন্যায় সেই ধনভোগ করিলে বিপদ দুর্লভ হয় না।

২৪। সম্পদ্ কখনও উচ্চনীচ বিচার করে না। এই হেতুই কেহ সম্পদের (লক্ষ্মীর) প্রিয় হয় না। মূঢ় লোকসকল তথাপি সেই আসক্তিহীনা সম্পদেই আসক্ত হয়। কেননা লোকসকল বক্রস্বভাব।

२३। जो दुःखसे पाने योग्य, और विश्वाससे उत्पन्न सन्तोषका शत्रु है अर्थात् बराबर सन्देह बनाते रहते कारण निश्चिन्त होनेका सुख नहीं होने देता, सांपकी फणाकी तरह उस धनका भोग प्राप्त होने पर विपत्ति दुर्लभ नहीं होती।

२४। सम्पत्ति कभी अन्तरज्ञ नहीं होती अर्थात् ऊंच नीचका विचार नहीं करती, इसीसे सम्पत्तिका कोई प्यारा नहीं है। ये मूर्ख लोग तो भी रूखे हृदयकी सम्पत्ति पर बिलकुल आसक्त रहते हैं। क्योंकि लोग टेंढ़े स्वभावके होते हैं।

कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ॥२५॥
कृतवानन्यदेहेषु कर्त्ता च विधुरं मनः ।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥२६॥

अन्वयः – यत् सम्पदः अशीलेषु चञ्चलाः ( अतः ) स्तुतिपदे कः अपवादः, ( किन्तु ) क्षुद्राः साधुवृत्तान् अपि विक्षिपन्ति । वाच्य—सम्पद्भिः चञ्चलाभिः ( भूयते ) क्षुद्राभिः साधुवृत्ताः अपि विक्षिप्यन्ते ॥२५॥

अन्वयः --अप्रियैः संयोगः इव प्रियैः सह विप्रयोगः, अन्यदेहेषु मनः विधुरं कृतवान् कर्त्ता च । वाच्य—संयोगेन विप्रयोगेन मनः विधुरं कृतं कर्त्तव्यञ्च ॥२६॥

यदुक्तम् 'नान्तरज्ञाः श्रियः' इति, तदेव भङ्ग्यन्तरेणाह—क इति। यत् सम्पदोऽशीलेषु दुःशीलेषु विषये न चञ्चला अस्थिराः । तद्विरुद्धमुच्यते यच्चञ्चला इति । अतः स्तुतिपदे स्तुतिविषये तत्र कोऽपवादः का निन्दा। किन्तु क्षुद्राः सम्पदः साधुवृत्तानपि विक्षिपन्त्येव जहत्येव तदेव तासां निन्दास्पदमित्यर्थः । तस्मादर्थो न पुरुषार्थ इति सन्दर्भार्थः ॥२५॥

ननु नार्थमहमर्थये । किन्तु वीरधर्ममनुपालयन् वैरनिर्य्यातनमिच्छामीत्याशङ्क्य तदपि परपीड़ात्मकत्वादयुक्तमिति श्लोकचतुष्टयेनाचष्टे—कृतवानिति । तत्रात्मदृष्टान्तेनैव परपीड़ातो निवर्त्तितव्यमित्याशयेनाह—अप्रियैरनिष्टवस्तुभिः संयोग इव प्रियैरिष्टवस्तुभिः सह विप्रयोगो विरहोऽन्यदेहेषु स्वस्यैव देहान्तरेषु अतीतानागतेष्विति शेषः । मनो विधुरं दुःखितं कृतवान् कर्त्ता करिष्यति च । भविष्ये लुट् । तद्वर्त्तमाने चानुभूयत इति शेषः । इष्टनाशो दुःखहेतुरिति सर्व्वत्रापि त्रैकालिकसिद्धमिति श्लोकार्थः ॥२६॥

२৫। সম্পদ্ দুঃশীলজনে চঞ্চল হইয়া থাকে, অতএব প্রশংসার বিষয়ে তাহার নিন্দার বিষয় কি ? কিন্তু ক্ষুদ্র সম্পদ্ যে সাধুস্বভাব লোকদিগকেও পরিত্যাগ করে, ইহাই তাহার নিন্দার কথা ।

२५। सम्पत्ति बुरे स्वभावोंके पास स्थिर नहीं रहती इस लिये वह प्रशंसाका पात्र है निन्दाका पात्र क्यों ? परन्तु सम्पत्ति जो अच्छे स्वभाववालोंको छोड़ देती है यही उनकी निन्दाका विषय है ।

शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥२७॥
तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥२८॥

अन्वयः - प्रियसमागमे सति शून्यम् आकीर्णताम् एति व्यसनम् उत्सवैः तुल्यम्, विप्रलम्भः अपि लाभाय (भवति)। वाच्य—शून्येन आकीर्णता ईयते,... व्यसनेन तुल्येन, विप्रलम्भेन (भूयते) ॥ २७ ॥

अन्वयः—यदा इष्टेन रहितः तदा रम्याणि (अपि) अरम्याणि, प्रियाः असवः (अपि) शल्यम्; सबन्धुः सन् (अपि) एकाकी। वाच्य :—इष्टेन रहितेन (भूयते) रम्यैः अपि अरम्यैः (भूयते) सबन्धुना (अपि) एकाकिना (भूयते) ॥ २८ ॥

सम्प्रतीष्टसमागमस्य सुखहेतुत्वमाह—शून्यमिति। प्रियसमागमे इष्टजनसंयोगे सति शून्यं रिक्तमप्याकीर्णतां संपूर्णतामेति सम्पूर्णमिव प्रतीयते इत्यर्थः। व्यसनं विपदप्युत्सवैस्तुल्यम् 'व्यसनं विपदि भ्रंशे' इत्यमरः। विप्रलम्भो वञ्चना, प्रतारणमिति यावत्। सोऽपि लाभाय किं बहुना प्रियसङ्गतस्य सर्व्वावस्थास्वपि सुखमेवेत्यर्थः ॥२९॥

पुनः प्रकारान्तरेण प्रियवियोगस्य दुःखहेतुत्वमाह—तदेति। तदा रम्याणि अपि अरम्याणि अमनोहराणि भवन्ति। किंबहुना प्रिया असवः

२৬। অপ্রিয় বস্তুর সমাগমের ন্যায় প্রিয়বস্তুর বিচ্ছেদ নিজের দেহান্তরেও মনকে দুঃখিত করে—ভবিষ্যতেও দুঃখিত করিবে।

২৭। ইষ্টজনের সমাগমে শূন্য ও পরিপূর্ণতা প্রাপ্ত হয়, বিপদ্ উৎসবের তুল্য হয় এবং বঞ্চনাও লাভের কারণ হইয়া থাকে।

२६। अप्रिय वस्तुके समागमकी तरह प्रिय वस्तुका बियोग (बिछुड़ना यो खो जाना) भी शरीरके भीतर मनको दुःख देता है और भविष्यत्में (आनन्दे) भी दुःख देगा।

२७। प्रिय व्यक्तिके मिलने पर शून्य स्थान भी पूर्ण सा विपत्ति उत्सव सो और धोखा खाना भी लाभका कारण सा हो जाता है।

कि—३

युक्तः प्रमाद्यसि हितादपेतः परितप्यसे ।
यदि नेष्टात्मनः पीड़ा मा सञ्जि भवता जने ॥२९॥

अन्वयः—युक्तः ( सन् ) प्रमाद्यसि, हितात् अपेतः परितप्यसे, आत्मनः पीड़ा न इष्टा यदि ( तर्हि ) भवता जने मा सञ्जि । वाच्य —युक्तेन प्रमाद्यते, अपेतेन परितप्यते, भवान् तां पीड़ां मा ससञ्जत् ॥ २९ ॥

प्राणा अपि शल्यम् । शल्यवदसह्या भवन्तीत्यर्थः । किं च—तदा सबन्धुः सन् अपि एकाकी असहाय एव । 'एकादाकिनिच्चासहाये' इत्याकिनिच्प्रत्ययः । कदा इत्याकाङ्क्षायामाह—यदेष्टेन रहितः भवति तदा सर्व्वमसह्यमिति ॥२८॥

युक्त इति । किञ्च—युक्तः, हितेनेति शेषः । हितेन इष्टेन युक्तः सन् प्रमाद्यसि प्रकर्षेण माद्यसि हृष्यसि । हितादपेतः परितप्यसे परितप्तो भवसि । तपेर्दैवादिकात् कर्त्तरि लट् । सत्यमेवं ततः किमत आह—यदीति । पीडात्मनः स्वस्य च नेष्टा यदि तर्हि भवता जने परस्मिन्नपि मा सञ्जि न सज्यताम् । सञ्जतेर्ण्यन्तात् कर्म्मणि लुङ् । आत्मदृष्टान्तेन परपीड़ातो निवर्त्तितव्यमित्यर्थः पीड़ायाः परात्मनोः समत्वात् ॥२९॥

२८। ইষ্টজনের সহিত বিরহ ঘটিলে রমণীয় পদার্থও অরমণীয়, প্রিয় প্রাণও শল্যের ন্যায় অসহ্য এবং বন্ধুযুক্ত থাকিলেও অসহায়বৎ মনে হইয়া থাকে।

২৯। প্রিয়জনের সহিত মিলিত হইলে তুমি অতিশয় আনন্দিত হও. তাঁহাদের সঙ্গে বিরহিত হইলে অনুতপ্ত হও। অতএব ক্লেশ যদি তোমার নিজের মনোমত না হয়, তাহা হইলে তুমি পরের প্রতিও তাহা প্রয়োগ করিও না।

२८। और प्रिय व्यक्तिसे वियोग होने पर सुन्दर वस्तु भी कुरूप मालूम पड़ती, प्यारा प्राण भी शल्य ( कांटा ) सा और परिवारोंसे घिरे रहने पर भी अपने को निस्सहाय समझता है।

२९। प्रिय व्यक्तिके साथ इकट्टे होने पर तुम अत्यन्त आनन्दित होते और प्रिय व्यक्तिसे अलग हो जाने पर जलते हो। इस लिये ने जब क्लेश तुम्हें को सज्जन अच्छा नहीं लगता तो दूसरे को क्लेश मत दो।

जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम्।
भवान् मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥३०॥
विजहीहि रणोत्साहं मा तपः साधु नीनशः।
उच्छेदं जन्मनः कर्त्तुमेधि शान्तस्तपोधन ॥३१॥

अन्वयः—अस्य जन्मिनः स्थितिं लक्ष्मीम् इव चलाचलां विद्वान् भवान् न्याय्यं मा स्म वधीत्, हि साधवः न्यायाधाराः (भवन्ति)। वाच्य—स्थितिं लक्ष्मीम् इव चलाचलां विदुषा भवता न्याय्यं मा घानि, साधुभिः न्यायाधारैः (भूयते)॥ ३०॥

अन्वयः (हे) तपोधन, (त्वं) रणोत्साहं विजहीहि, साधु तपः मा नीनशः; जन्मनः उच्छेदं कर्त्तुं शान्तः एधि। वाच्य—त्वया रणोत्साहं हीयताम्, साधु तपः मा नाशि···शान्तेन भूयताम् ॥३१॥

अथ देहास्थैर्यश्रद्धया च परपीड़ा न कार्य्येत्याह—जन्मिन इति। अस्य जन्मिन उत्पत्तिधर्म्मिकस्य शरीरिणः। व्रीह्यादित्वादिनिः। स्थितिं लक्ष्मीमिव चलाचलां चञ्चलां जन्मिधर्म्मत्वादेव चञ्चलाम् अनित्यामित्यर्थः। चलतेः पचाद्यच्। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' इति द्विर्भावः। अभ्यासस्यागागमश्च। विद्वान् जानन्नित्यर्थः। 'विदेः शतुर्वसुः' इति वैकल्पिको वस्वादेशः। भवान् न्यायादनपेतं न्याय्यम् 'धर्म्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। मा स्म वधीत्, मा नाशयेत्यर्थः। 'स्मोत्तरे लङ् च' इति लुङ्। 'लुङि च' इति हनो वधादेशः। 'शेषे प्रथमः' इति प्रथमपुरुषः। हि यस्मात् साधवो न्यायाधारा न्यायावलम्बाः। बहुव्रीहिस्तत्पुरुषो वा। न्यायत्यागे साधुत्वमेव न स्यादिति भावः। 'न्यायाचाराः' इति पाठे न्यायमाचरन्तीति तथोक्ताः, कर्म्मण्यण् ॥३०॥

৩০। এই জন্মজরামরণশীল প্রাণিগণের স্থিতি, লক্ষ্মীর ন্যায় চঞ্চল জানিয়া ন্যায়পথ অতিক্রম করিও না, কেন না সাধুরা ন্যায়াবলম্বী।

३०। बराबर जनमने, बुड्ढे होने और मरनेवाले इन प्राणियों का बने रहना लक्ष्मीकी तरह चञ्चल समझ कर तुम न्यायके रास्तेसे आगे मत बढ़ो, क्योंकि पुरुष न्याय पर ही उठे रहते हैं।

जीयन्तां दुर्ज्जया देहे रिपवश्चक्षुरादयः।
जितेषु ननु लोकोऽयं तेषु कृत्स्नस्त्वया जितः॥३२॥

अन्वयः—(त्वया) दुर्ज्जयाः चक्षुरादयः देहे (विद्यमानाः) रिपवः जीयन्तां, तेषु जितेषु (सत्सु) अयं कृत्स्नः लोकः जितः। वाच्य—(त्वम्) दुर्ज्जयान् चक्षुरादीन् रिपून् जय। अनेन कृत्स्नेन लोकेन जितेन (भूयते)॥३२॥

तर्हि किं मे कर्त्तव्यं तत्राह—विजहीहीति। हे तपोधन, रणोत्साहं रणोद्योगम्। लोकोत्तरेषु कार्य्येषु श्रेयान् प्रयत्न उत्साहस्तं विजहीहि त्यज, 'आ च हौ' इतीकारः। साधु समीचीनम्। निःश्रेयस्करत्वादिति भावः। तपो मा नीनशो न नाशय। नश्यतेर्ण्यन्तान्माङ्योगादाशिषि लुङ्। अड़ागमनिषेधश्च। किन्तु जन्मन उच्छेदं कर्त्तुं मोक्षं साधयितुमित्यर्थः। शान्त एधि। विजिगीषानिवृत्तो भवेत्यर्थः। 'हुझल्भ्यो हेर्धिः' इति धिः। 'ध्वसोरेद्धावभ्यासलोपश्च' इत्येकार इति॥३१॥

अथ सर्व्वथा मे विजयकण्डूतिर्न निवर्त्तते इत्याशङ्क्य तर्ह्यन्तःशत्रुविजयेन विधीयतां तदपनोद इत्याह—जीयन्तामिति। दुर्ज्जया अजय्याश्चक्षुरादयो देहे वर्त्तमाना रिपवः जीयन्तां यस्मात्तेष्वन्तःशत्रुषु जितेषु सत्सु त्वयायं कृत्स्नो लोको जितः, ननु किमुतान्ये शत्रवस्तदन्तर्गता इत्यर्थः। जितेन्द्रियस्येन्द्रियार्थनिःस्पृहस्य निर्भरवैरानुदयाद्विजयव्यपदेशः॥३२॥

৩১। হে তপোধন, তুমি রণোদ্যোগ পরিত্যাগ কর, এই নিঃশ্রেয়স্কর তপস্যা বিনষ্ট করিও না। কিন্তু জন্মান্তরে ধ্বংসের (অর্থাৎ মোক্ষলাভের) জন্য এই শত্রুজয়াকাঙ্ক্ষায় বিমুখ হও।

৩২। যদি তুমি জয়াভিলাষ ত্যাগ করিতে নাই পার, তবে চক্ষু কর্ণাদি যে সকল দুর্জ্জয় রিপু দেহে অবস্থান করিতেছে। তাহাদিগকে জয় কর। তাহারা বিজিত হইলে, তোমার পক্ষে এই সমগ্র জগৎ জয় করা হইবে।

३१। हे तपोधन, (तपस्याका ही धनी) तुम युद्धका उत्साह त्याग दो। मुक्ति देनेवाली तपस्याको नष्ट मत करो। बल्कि दूसरे जन्मका नाश करने अर्थात् मुक्ति पानेके लिये इस शत्रुविजय की इच्छा से मुंह फेर दो।

३२। जब तुम जयकी लालच नहीं छोड़ सकते तो आंख कान आदिक इन्द्रियरूपी प्रबल शत्रु जो देहपर अधिकार कर चुके हैं उन्हींको जीत लो।

परवानर्थसंसिद्धौ नीचवृत्तिरपत्रपः ।
अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम् ॥३३॥

स्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी ।
इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम् ॥३४॥

अन्वयः—अर्थसंसिद्धौ परवान् नीचवृत्तिः अपत्रपः अविधेयेन्द्रियः (पुमान्) गौः इव पुंसां विधेयताम् एति। वाच्य—परवता नीचवृत्तिना अपत्रपेण अविधेयेन्द्रियेण (पुंसा) गवा इव विधेयता ईयते ॥ ३३ ॥

अन्वयः—अधुनातनी सुखसंवित्तिः श्वः त्वया स्मरणीया इति कामान् स्वप्नोपमान् मत्वा तदङ्गतां मा गाः। वाच्य—सुखसंवित्तिं त्वं स्मरिष्यसि तदङ्गता मा गायि ॥३४॥

अजितेन्द्रियस्यानिष्टमाचष्टे—परवानिति। अर्थसंसिद्धौ अव्यवहारादिस्वार्थसाधने परवान् पराधीनः 'परतन्त्रः पराधीनः परवान्' इत्यमरः। नीचवृत्तिः कर्षणवहनादिनिकृष्टकर्मा अपत्रपः निर्लज्जोऽविधेयेन्द्रियोऽजितेन्द्रियः पुमान् गौर्बलीवर्द इव पुंसां विधेयतां यथोक्तकारिताम्, प्रेष्यतामिति यावत्। 'विधेयोविनयग्राह्यो वचनेस्थित आस्रवः' इत्यमरः। एति प्राप्नोति। उपमालङ्कारोऽयम्—'प्रकृताप्रकृतयोरर्थसाधर्म्याच्छ्लेषे तु शब्दमात्रसाधर्म्यम्':इति ॥३३॥

न केवलं हिंसादिदोषमूलत्वाद्विषयाणां हेयत्वम्। किंत्वपारमार्थिकत्वादपीत्याह—श्व इति। अधुना भवा अधुनातनी इदानीन्तनी। 'सायं चिरं—'इत्यादिना ट्यु प्रत्ययः। सुखसंवित्तिः सुखानुभवः श्वः परेऽहनि त्वया स्मरणीया न त्वनुभवनीया इति हेतोः, काम्यन्ते इति कामा विषयास्तान् स्वप्नोपमान् स्वप्नतुल्यान् मत्वा अतात्त्विकान्निश्चित्य तदङ्गतां

৩৩। যে ব্যক্তি স্বার্থসাধনে পরাধীন, নীচবৃত্তি, লজ্জাহীন, ইন্দ্রিয় জয়ে অসমর্থ, তাহাকে বলীবর্দ্দের ন্যায় সকল পুরুষের অধীন হইতে হয়।

३३। स्वार्थ साधनके लिये व्यग्र, नीच वृत्ति ( निन्दितजीविका करनेवाला ) निर्लज्ज और इन्द्रियोंको जितने मैं असमर्थ पुरुष बैलको तरह सभो के वशमें आनाते हैं।

श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥३५॥

अन्वयः श्रद्धेयाः (तथा) विप्रलब्धारः (तथा) प्रियाः (अपि) विप्रियकारिणः त्यजन्तः अपि सुदुस्त्यजाः कामाः कष्टाः शत्रवः हि। वाच्य—श्रद्धेयैः विप्रलब्धृभिः प्रियैः विप्रियकारिभिः त्यजद्भिः सुदुस्त्यजैः कामैः कष्टैः शत्रुभिः (भूयते) ॥३५॥

तच्छेषत्वं कामपरतन्त्रतां मा गा न गच्छ। 'इणो गा लुङि' इति गादेशः ॥३४॥

इतोऽपि हेयाः कामा इत्याह—श्रद्धेया इति। श्रद्धातुमर्हाः श्रद्धेया विश्वसनीयास्तथा विप्रलब्धारः प्रतारकाः, विश्वासघातका इत्यर्थः। तथा प्रीणयन्तीति प्रियाः प्रीतिजनकाः। 'इगुपध—' इत्यादिना कप्रत्ययः। तथापि विप्रियकारिणो दुःखजननशीलाः। किञ्च—त्यजन्तोऽपि पुरुषं विहाय गच्छन्तोऽपि सुदुस्त्यजाः स्वयं तेन त्यक्तुमशक्याः कामा विषयाः कष्टाः कुत्सिताः शत्रवो हि प्रसिद्धशत्रुवैधर्म्यादिति भावः। अत्र श्रद्धेयत्वादीनां विप्रलम्भकत्वादीनां चैकत्र विरोधो विषयस्वाभाव्येन समाधीयते इति विरोधाभासोऽलङ्कारः। तेन च कामानां प्रसिद्धशत्रुवैधर्म्यव्यतिरेकेण व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥३५॥

৩৪। এক্ষণে তুমি যে সুখ অনুভব করিতেছ, কল্য তাহা তুমি মনে করিতে পারিবে মাত্র - আর অনুভব করিতে পারিবে না। এইজন্য বিষয়সকলকে স্বপ্নদৃষ্ট বস্তুর ন্যায় মনে করিয়া তুমি তাহাতে ভোগাসক্ত হইও না।

৩৫। ভোগ্য পদার্থ সকল বিশ্বাসের ভাজন অথচ প্রতারক, প্রীতিকর হইলেও দুঃখজনক; উহারা মানুষকে ত্যাগ করিলেও মানুষেরা অতিকষ্টেও উহাদিগকে ত্যাগ করিতে পারে না। ঈদৃশ বিষয়সমূহকে অতিশয় কুৎসিৎ শত্রু বলিয়াই গণ্য করিবে।

३४। इस समय तुम जो सुख भोग रहे हो, कल उसी केवल याद (स्मरण) कर सकोगे फिर अनुभव (ज्ञानपूर्व्वक भोग, नहीं कर सकते। विषयोंको स्वप्नमें देखी वस्तुओंकी तरह विचार कर तुम उन्हें भोगने में न फंसे रहो।

३५। सभी भोग्य पदार्थ विश्वास दिलाते और लगते हैं, प्रीतिकारक होने पर भी दुःख देते हैं; वे मनुष्योंको छोड़ते रहने पर भी अत्यन्त कष्टसे भी नहीं छोड़ेना सकते। ऐसे विषयोंको बहुत बुरे शत्रु समझने चाहिये॥

विविक्तेऽस्मिन्नगे भूयः प्लाविते जह्नुकन्यया ।
प्रत्यासीदति मुक्तिस्त्वां पुरा मा भूरुदायुधः ॥३६॥
व्याहृत्य मरुतां पत्याविति वाचमवस्थिते ।
वचः प्रश्रयगम्भीरमथोवाच कपिध्वजः ॥३७॥

अन्वयः—विविक्ते जह्नुकन्यया भूयः प्लाविते अस्मिन् नगे त्वां मुक्तिः पुरा प्रत्यासीदति, उदायुधः मा भूः। वाच्य—मुक्त्या प्रत्यासीद्यते, उदायुधेन (त्वया) मा भावि ॥३६॥

अन्वयः—मरुतां पत्यौ इति वाचं व्याहृत्य अवस्थिते अथ कपिध्वजः प्रश्रयगम्भीरं वचः उवाच। वाच्य—कपिध्वजेन ऊचे ॥३७॥

तर्हि किं कर्त्तव्यमित्याशङ्कयोपसंहरन्नाह—विविक्त इति। विविक्ते विजने 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः' इत्यमरः। जह्नुकन्यया गङ्गया भूयो भूयिष्ठं पुनःपुनर्वा। 'भूयः पुनः पुनः ख्यातं भूतार्थे पुनरव्ययम्' इति विश्वः। प्लाविते सिक्ते 'पाविते' इति पाठे पवित्रीकृते इत्यर्थः। अस्मिन्नगे इन्द्रकीले त्वां मुक्तिः पुरा निकटे प्रत्यासीदति सन्निकृष्टा भविष्यतीत्यर्थः। 'पुरा पुराणे निकटप्रबन्धातीतभाविषु' इति विश्वः। उदायुधो गृहीतशस्त्रो मा भूः शस्त्रं विमुञ्चेत्यर्थः ॥३६॥

व्याहृत्येति। मरुतां पत्यौ देवेन्द्रे इति वाचं व्याहृत्य उक्त्वावस्थिते सति तूष्णीं स्थिते सति। अथ कपिध्वजोऽर्ज्जुनः प्रश्रयगम्भीरं विनयमधुरम् 'विनयप्रश्रयौ समौ' इति यादवः। वच उवाच उक्तवान् ॥३७॥

৩৬। হে তপোধন, অত্যধিক স্বর্গ গঙ্গাজলপ্লাবিত এই নির্জন ইন্দ্রকীল পর্ব্বতে শীঘ্রই মুক্তি তোমার নিকটবর্ত্তিনী হইবে। তুমি আর আয়ুধধারণ করিও না।

৩৭। মরুৎপতি ইন্দ্র এইরূপ বাক্য বলিয়া অবস্থান করিলে পর কপিধ্বজ অর্জ্জুন বিনয়মধুর বাক্য বলিতে লাগিলেন।

३६। वारबार स्वर्ग गङ्गाजलसे धुले हुए इस इन्द्रकील पर्व्वत पर तुरन्त ही मुक्ति तुम्हारे पास आ खड़ी होगी। अब तुम अस्त्र शस्त्र धारण न करो।

३७। इस प्रकारकी बातें कह कर मरुत् (देवताओं) के स्वामी इन्द्र ठहर गये तब कपिध्वज (अर्जुन) नम्रताके साथ मधुर वचन बोलने लगे ॥३७॥

प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।
साकाङ्क्षमनुपस्कारं विष्वग्गतिनिराकुलम् ॥३८॥

न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥३९॥

अन्वयः। प्रसादरम्यम् ओजस्वि गरीयः लाघवान्वितं साकाङ्क्षम् अनुपस्कारं विष्वग्गतिनिराकुलं. न्यायनिर्णीतसारत्वात् आगमे निरपेक्षम् इव अन्येषाम् अप्र-

किमुवाचेत्यपेक्षायामादौ चतुर्भिरिन्द्रवाक्यमुपश्लोकयन्नाह—प्रसादेति। प्रसादोऽत्र प्रसिद्धार्थपदत्वं तेन रम्यम् 'प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते' इति लक्षणात्। ओजस्वि समासभूयिष्ठम्। 'ओजः समासभूयस्त्वम्' इति शासनात्। गरीयोऽर्थभूयस्त्वपरिगतम्। न तु शब्दाडम्बरमात्रमित्यर्थः। लाघवान्वितं विस्तरदोषरहितम्। साकाङ्क्षमाकाङ्क्षावत्पदकदम्बात्मकम्, न तु दशदाड़िमादिवाक्यवदनाकाङ्क्षितमित्यर्थः। अनुपस्कारमध्याहारदोषरहितम्। विष्वग्गतिकृत्स्नार्थप्रतिपादकम्। न तु सावशेषार्थमत एव निराकुलमसङ्कीर्णार्थम् ॥३८॥

न्यायेति। पुनर्न्यायेन युक्त्या निर्णीतसारत्वान्निश्चितार्थत्वाद्धेतोरागमे शास्त्रे विषये निरपेक्षं स्वतन्त्रमिव। युक्तिदार्ढ्यादेवं प्रतीयते। वस्तुतस्तु शास्त्रसिद्धार्थमिवेतीवशब्दार्थः। किञ्च—अन्येषां प्रतिवादिनामप्रकम्प्यतयानुमानादिभिरबाध्यत्वादप्रत्याख्येयतयाम्नायवचनोपमम्। देववाक्यतुल्यमित्यर्थः ॥ ३९ ॥

৩৮। আপনার বাক্য প্রসিদ্ধ অর্থ ও পদ দ্বারা মনোহর, ওজস্বি (সম্পদ বহুল), অর্থ-গৌরবপূর্ণ, বিস্তৃতিদোষবিরহিত, আকাঙ্ক্ষাযুক্ত পদসমূহে পূর্ণ, অসম্পূর্ণতা দোষহীন, সম্পূর্ণ অর্থ-প্রকাশক, অসঙ্কীর্ণ অর্থযুক্ত।

३८। आपके वाक्य, प्रसिद्ध अर्थों और पदोंसे रमणीय, ओजस्वी (सुनने पर मनको उत्तेजित करनेवाले), अर्थके गौरवसे भरे, केवल आवश्यक शब्दोंसे युक्त, आकाङ्क्षित (आपसमें सम्बन्ध रखनेवाले) पदों से भरे, अध्युर्णापन (अर्थात् अध्याहार) दोषसे रहित, सम्पूर्ण अर्थ को प्रकाशित करनेवाले और अलग अलग हैं।

अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्य्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ॥४०॥

इदमीदृग् गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्य्यात् कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥४१॥

कस्मात्तथा आम्नायवचनोपमम्, अन्यैः जनैः अलङ्घ्यत्वात् क्षुभितोदन्वदूर्ज्जितम्, औदार्य्यात् अर्थसम्पत्तेः ऋषेः चित्तम् इव शान्तम्, इदम्, ईदृग् गुणोपेतं लब्धावसरसाधनं प्रियं वाक्यं कः व्याकुर्य्यात् यः वक्ता ईदृगाशयः न। वाच्य—···वाक्यं येन व्याक्रियेत ॥ ३८—४१ ॥

अलङ्घ्यत्वादिति। अन्यैर्जनैरलङ्घ्यत्वादनुल्लङ्घनीयत्वात् क्षुभितोदन्वदूर्ज्जितमुद्वेलाम्भोधिगम्भीरम्। औदार्य्यादुक्तिविशेषत्वात्। श्लाघ्यविशेषणत्वाद्वा। तदुक्तं दण्डिना—'उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते। तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः। श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते॥' इति। 'अग्राम्यार्थत्वात्' इति केचित्। अन्यत्र त्यागित्वादित्यर्थः। अर्थसम्पत्तेः प्रयोजनसम्पतेः, अन्यत्राणिमादिसमृद्धेः। ऋषेर्मुनेश्चित्तमिव शान्तं सौम्यम् ॥४०॥

৩৯। যুক্তি দ্বারা অর্থ নিশ্চিত হওয়াতে উহা শাস্ত্র বিষয়ে সম্পূর্ণ স্বাধীন বলিয়া প্রতীত হয়, আরও কোন প্রতিবাদী অনুমানাদি দ্বারা খণ্ডিত করিতে পারে না বলিয়া উহা বেদবাক্য তুল্য।

৪০। অন্যের অলঙ্ঘনীয়হেতু উদ্বেলসাগরসদৃশ গম্ভীর, ঔদার্য্য হেতু ও অর্থসম্পদে ঋষির চিত্তের ন্যায় শান্ত।

३९। युक्तियोंसे हो अर्थ निश्चित होनेके कारण वे (आपके वाक्य) शास्त्रोंसे पूरे निरपेक्ष जान पड़ते हैं और किसी प्रतिवादीकी युक्तिसे खण्डित न हो सकनेके कारण वेदवाक्यके तुल्य हैं।

४०। दूसरोंसे लङ्घन करनेयोग्य न हो सकनेके कारण उच्छार मारते (ऊंचे तरङ्ग फेंकते) समुद्रकी तरह गम्भीर (अर्थात् भयानक) और उदारता तथा अर्थोंको परिपूर्णतासे एक ऋषिकी चित्तकी तरह शान्त हैं।

न ज्ञातं तात यत्नस्य पौर्वापर्य्यममुष्य ते ।
शासितुं येन मां धर्म्मं मुनिभिस्तुल्यमिच्छसि ॥४२॥

अन्वयः—हे तात, अमुष्य यत्नस्य पौर्वापर्य्यं ते न ज्ञातम्, येन मां मुनिभिः तुल्यं धर्म्मं शासितुम् इच्छसि । वाच्यः—पौर्व्वापर्य्यं त्वं न ज्ञातवान् । त्वया दृश्यते ॥ ४२॥

इदमिति । इदमीदृग्गुणोपेतं यथोक्तगुणयुक्तम् । इदमुपपदाद्दृशेः क्विप् । 'इदं किमोरीश्की' इतीशादेशः । लब्धे प्राप्तेऽवसरसाधने कालोपायौ येन तत्प्रियं प्रीतिकरं वाक्यं को वक्ता व्याकुर्य्यादुव्याहरेत् । यो वक्ता न ईदृगाशाय ईदृग्विवक्षावान्न भवति । अबुद्धिरित्यर्थः । तस्यार्थस्य वक्तुमशक्यत्वादिति भावः ॥४१॥

एवमिन्द्रवाक्यमुपश्लोक्य नाहमस्योपदेशस्याधिकारीति परिहरति—नेति । हे तात, अमुष्य यत्नस्य तपोरूपस्यास्य मदीयोद्योगस्य पूर्व्वं च अपरञ्च पूर्व्वापरे । त एव पौर्व्वापर्य्यं कारणं फलञ्च । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः । ते तव न ज्ञातम्, त्वया न ज्ञायते इत्यर्थः । 'मतिबुद्धि—' इत्यादिना वर्त्तमाने क्तः । तद्योगादेव षष्ठी, कुतः ? येन कारणेन मां मुनिभिस्तुल्यं सदृशं धर्म्मं मोक्षधर्म्मं शासितुमुपदेष्टुमिच्छसि शासिरयं दुहादित्वाद्द्विकर्म्मको ज्ञेयः ॥४२॥

৪১। যথোক্ত গুণসম্পন্ন, যুক্তিযুক্ত, উপযুক্ত সময়ে কথিত ও উপায়প্রাপ্ত প্রীতিকর বাক্য কোন্ বক্তা বলিতে পারেন, যিনি তাদৃশ গুণসম্পন্ন নহেন ?

৪২। হে তাত, আপনি আমার এই তপস্যারূপ প্রযত্নের পূর্ব্বাপর জ্ঞাত নহেন, সেই হেতুই আমার প্রতি মুনিজনোচিত মোক্ষধর্ম্মের উপদেশ দিতে ইচ্ছা করিয়াছেন।

४१। ऊपर कहे गुणोंकी पूर्त्ति, युक्ति और उपायसे युक्त तथा उचित समय पर कहेजानेसे प्रेम बढ़ानेवाले ऐसे वचन कौन बोल सकता है ? जो इस प्रकारके गुणो रहित है ।

४२! हे तात ! आप मेरे इस तपस्यारूप उद्योगका पूर्वापर ( आगे पीछेका हाल ) नहीं जानते हैं इसीसे मुझे मुनियोंके योग्य मोक्ष धर्मका उपदेश करने चाहते हैं ।

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥४३॥
श्रेयसोऽप्यस्य ते तात वचसो नास्मि भाजनम् ।
नभसः स्फुटतारस्य रात्रेरिव विपर्य्ययः ॥४४॥

अन्वयः—अविज्ञातप्रबन्धस्य वाचस्पतेः अपि वचः नयद्रुहः ईहितम् इव अफलतां व्रजति । वाच्यः—...वचसा ईहितेन इव अफलता व्रज्यते ॥४३॥

अन्वयः—हे तात, श्रेयसः अपि अस्य ते वचसः रात्रेः विपर्य्ययः स्फुटतारस्य नभसः इव भाजनं न अस्मि । वाच्यः—...मया विपर्य्ययेण इव भाजनेन न भूयते ॥४४॥

अथ पौर्व्वापर्य्यमज्ञात्वाप्युपदेशे दोषमाह—अविज्ञातेति । अविज्ञातः प्रबन्धः पूर्व्वापरसङ्गतिर्येन तस्य वाचस्पतेर्बृहस्पतेरपि । कस्कादित्वात् सः । अथवा 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' इति सकारः । एतस्मादेव ज्ञापकादलुगिति केचित् । वच उपदेशो नयद्रुहो नीतिविरुद्धकारिणः पुरुषस्येहितमुद्योग इवाफलतां निष्फलत्वं व्रजत्येव गच्छत्येव ॥४३॥

ननु सदुपदेशस्य कुतो वैफल्यमित्याशङ्क्य सोऽप्यस्थाने प्रयुक्तश्चेदूषरक्षेत्रे शालिबीजवद्विफल एवेत्याशयेनाह—श्रेयस इति । हे तात, 'पुत्रे पितरि पूज्ये च तातशब्दः प्रवर्त्तते' इति श्रेयसोऽपि हितार्थयोगात् प्रशस्ततरस्याप्यस्य ते तव वचसो हितोपदेशरूपस्य रात्रेर्विपर्य्ययो दिवसः स्फुटतारस्य व्यक्ततारकस्य नभस इव भाजनं पात्रं नास्मि । अनधिकारित्वादिति भावः । अत्राङ्गो नभोमात्रसम्बन्धसम्भवेऽपि तारासम्बन्धासम्भवात्तद्विशिष्टनभःसम्बन्धविरोधाद्युक्तं तारकितस्य नभसो न पात्रमहरिति ॥४४॥

৪৩। কার্য্যের পৌর্ব্বাপর্য্যসঙ্গতি জানা না থাকিলে, বৃহস্পতির বাক্যও নীতিবিরোধী পুরুষের চেষ্টার ন্যায় বিফল হইয়া থাকে।

४३। आगे पीछेका हाल पूरा.पूरा न जाननेसे वृहस्पतिका भी वचन नीति विरोधी पुरुषकी चेष्टा की तरह व्यर्थ हो जाता है।

क्षत्त्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः ।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥४५॥

अन्वयः—अहं क्षत्रियः पाण्डोः तनयः पार्थः धनञ्जयः दायादैः प्रास्तस्य ज्येष्ठस्य भ्रातुः शासने स्थितः । वाच्यः—मया···धनञ्जयेन स्थितम् ॥४५॥

कुतस्ते मोक्षोपदेशानधिकारित्वम् ? किञ्च ते तपसः पौर्व्वापर्य्यमित्यपेक्षायां तत्सर्व्वं स्वजात्यादिकथनपूर्व्वकं निरूपयति—क्षत्रिय इति। अहं क्षत्रियः क्षत्त्रियकुले जातः । तत्रापि महाकुले प्रसूतः, वीरसन्तानश्चेत्याह—पाण्डोस्तनय इति । तत्रापि कौन्तेयोऽस्मि, न माद्रेय इत्याह—पार्थ इति । पृथा कुन्ती तत्सुतः पार्थः 'तस्यापत्यम्' इत्यण् । अर्ज्जुनोऽहं महावीरश्चेत्याह—धनञ्जय इति । उत्तरकुरून् विजित्य धनाहरणात् धनञ्जयोऽस्मीत्यर्थः । 'खचि मुमागमः' इत्युक्तं प्राक् । धनञ्जय इत्युक्ते शरीरस्थो वायुः सर्पविशेषो वा स्यात्तदर्थं पार्थः, गन्धर्वोऽपि कश्चित् पृथासुतोऽस्ति तदर्थं पाण्डोः सुतः नैमिषारण्ये पाण्डुर्विप्रस्तत्पत्नी पृथा नाम काचिद्ब्राह्मणी तत्पुत्रोऽपि स्यात्तदर्थं क्षत्त्रिय इति । अथ एवं चेत् किमर्थं तर्हि तपस्यसि मोक्षार्थं वा किं न तपस्यसि ? तत्राह स्थित इति । दायं पैतृकं धनमाददते इति दायादा ज्ञातयः । 'दायादौ ज्ञातिपुत्रयोः' इति, 'विभक्तपितृद्रव्यञ्च दायमाहुर्मनीषिणः' इति च विश्वः । स्वामीश्वरादिसूत्रेण सोपसर्गादपि दायादेति कप्रत्ययान्तो निपातनात् साधुः । तैः प्रास्तस्य राज्यान्निरस्तस्य वैरिनिर्य्यातनार्थिनः इत्यर्थः । ज्येष्ठस्य भ्रातुर्युधिष्ठिरस्य । वृद्धशब्दादिष्ठन् प्रत्ययः, वृद्धस्य च ज्यादेशः । शासने निदेशे स्थितः, तदाज्ञया तपस्यामीत्यर्थः । अन्यथा मानहानिः सौभ्रात्रभङ्गः पूज्यपूजाव्यतिक्रमदोषश्च स्फुरतीति भावः । अत एव हिंसैकरसस्य रागद्वेषकषायितचेतसः कुतो मे मोक्षाधिकार इति तात्पर्य्यम् । स्वार्थविशेषणत्वात् परिकरालङ्कारः ॥४५॥

৪৪। হে তাত, আপনার এই বাক্য প্রশস্ত ও হিতকর হইলেও রাত্রির বিপর্য্যয় ( অর্থাৎ দিবাভাগ ) যেমন তারকাস্তবকপূর্ণ নভোমণ্ডলের স্থল হইতে পারে না, আমিও সেইরূপ আপনার উপদেশ বাক্যের পাত্র হইতে পারিতেছি না ।

৪৪। हे तात ! आपके ये वाक्य उत्तम और हित कारक हैं तो भी रात्रिके विपरीत अर्थात् दिन जिस प्रकार ताराओंसे शोभा पारहे आकाशका पात्र नहीं हो सकता, उसी प्रकार मैं भी आपके इन उत्तम वाक्योंका पात्र नहीं हूं ।

कृष्णद्वैपायनादेशाद्बिभर्मि व्रतमीदृशम् ।
भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः ॥४६॥
दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥४७॥

अन्वयः—(अहम्) कृष्णद्वैपायनादेशात् ईदृशं व्रतं बिभर्मि, स्वाराध्यस्य मरुत्वतः भृशम् आराधने यत्तः। वाच्यः—(मया) व्रतं भ्रियते...यत्तम् ॥४६॥

अन्वयः—दूरक्षान् दीव्यता राज्ञा (युधिष्ठिरेण) राज्यम् आत्मा वयं वधूः पणतां नीतानि, भवितव्यता ईदृशी नूनम्। वाच्य—दुरक्षान् दीव्यन् राजा राज्यम् आत्मानं वधूम् अस्मान् पणतां नीतवान् ॥४७॥

यदुक्तम् 'विरुद्धः केवलं वेषः' इति तत्रोत्तरमाह—कृष्णेति। द्वीपोऽयनं जन्मभूमिर्यस्य स द्वीपायनः, स एव द्वैपायनो व्यासः। प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः। स एव कृष्णवर्णत्वात् कृष्णद्वैपायनश्च। तस्यादेशादुपदेशादीदृशम्, विरुद्धवेषमित्यर्थः। व्रतं तपोनियमं बिभर्मि धारयामि, न तु स्वेच्छयेति भावः। अथोपास्यां देवतामाह—भृशमिति। स्वाराध्यस्य सुखमाराध्यस्य, प्रादिसमासः। 'स्वाराधस्य' इति पाठे उपसृष्टात् खल्प्रत्ययः। मरुत्वतः इन्द्रस्य। भृशं सम्यगाराधने यत्तः, प्रयत्नवानित्यर्थः। तस्य क्षत्रियदैवतत्वादिति भावः ॥४६॥

৪৫। আমি ক্ষত্রিয়, পাণ্ডুর তনয়, পৃথার পুত্র ধনঞ্জয়। জ্ঞাতিদিগের কর্তৃক বৈরনির্যাতনাশায় রাজ্য হইতে দূরীভূত জ্যেষ্ঠভ্রাতা যুধিষ্ঠিরের আদেশানুসারে তপস্যায় নিযুক্ত হইয়াছি।

৪৬। আমি কৃষ্ণদ্বৈপায়নের আদেশে এইরূপ ব্রত ধারণ করিয়াছি। সুখসমারাধ্য ইন্দ্রের সম্যক্ আরাধনায় যত্নবান হইয়াছি।

४५। मैं क्षत्रिय पाण्डु और पृथाका पुत्र धनञ्जय हूं। और अपने जातिवालोंसे किये वैटे (अपमान पूर्वकशत्रुता) का बदला लेनेको आशासे राज्यसे हटाये गये बड़े भाई राजा युधिष्ठिरके आज्ञानुसार तपस्यामें लगा हूं।

४६। मैं कृष्ण द्वैपायन (वेदव्यास) के आज्ञानुसार इस प्रकारका (अस्त्र शस्त्रधारण किये) व्रत धारण कर रहा हूं और सुखपूर्वक आराधन करने योग्य इन्द्रको अच्छीतरह प्रसन्न करने यत्न कर रहा हूं।

**तेनानुजसहायेन द्रौपद्या च मया विना ।**
**भृशमायामियामासु यामिनीष्वभितप्यते ॥४८॥**

अन्वयः—अनुजसहायेन तेन द्रौपद्या च मया विना आयामियामासु यामिनीषु भृशम् अभितप्यते। वाच्य—अनुजसहायः सः द्रौपदी अभितप्यते ॥ ४८ ॥

ननु भवादृशभ्रातृसहायस्य महावीरस्य युधिष्ठिरस्य कथमपरिभव-प्राप्तिरित्यत आह—दुरक्षानिति। दुरक्षान् कपटपाशकैरित्यर्थः। 'दिवः कर्म्म च' इति करणे कर्म्मसंज्ञा। दीव्यता क्रीड़ता। 'आहूतो न निवर्त्तेत द्यूतादपि रणादपि' इति शास्त्रात्। न तु व्यसनितयेति भावः। राज्ञा युधिष्ठिरेण राज्यं राष्ट्रमात्मा स्वयं वयं चत्वारोऽनुजा वधूर्ज्जाया द्रौपदी च पणतां ग्लहत्वम्। 'पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः। नीतानि सर्व्वं द्यूते राज्ञा हारितमित्यर्थः। नीतानीति नपुंसकैकशेषः। नयतेर्द्विकर्म्मकत्वात् प्रधाने कर्म्मणि क्तः। ननु सर्व्वज्ञस्य राज्ञः कथमियमविमृश्यकारिता तत्राह—भवितव्यतानर्थाना-मवश्यम्भावितेदृशी नूनं निश्चितम्। नात्र संशय इत्यर्थः। बुद्धिरपि भवितव्यानुसारिण्येव न स्वतन्त्रेत्यर्थः ॥४७॥

ननु तथापि तवैव तेष्वासङ्गो न तेषां त्वयि तत्राह—तेनेति। अनुजाः सहजाताः सहायाः यस्य तेन अनुजयुक्तेनेत्यर्थः तुल्ययोगः सहायार्थः। तेन युधिष्ठिरेण द्रौपद्या च मया विना मद्विरहादित्यर्थः। आयामिनो दीर्घा यामाः प्रहरा यासां तास्तासु। दुःखितस्य तथाभावादिति भावः। यामिनीष्वभितप्यते। भावे लट्। तेषु मद्वत्तेषां मय्यप्यासङ्गान्न वैराग्या-वकाश इत्यर्थः ॥४८॥

৪৭। কপট পাশা খেলায় রত রাজা যুধিষ্ঠির—রাজ্য, নিজকে, আমাদিগকে এবং জায়া দ্রৌপদীকে পণ রাখিয়া খেলায় হারিয়াছিলেন, ভবিতব্যতা এইরূপই ছিল।

৪৮। অনুজগণের সহিত সেই রাজা যুধিষ্ঠির এবং পত্নী দ্রৌপদী আমার বিরহে সুদীর্ঘ প্রহরযুক্ত রাত্রিসমূহে অতিশয় পরিতাপ পাইতেছেন।

৪৭। कपटके पाशाके खेलमें हारे राजा युधिष्ठिरने राज्य अपने हम सब और अपनी स्त्री द्रौपदीको दावपर रख दिया और अन्तमें हार गये। होनेवाली बात ऐसी ही थी।

हृतोत्तरीयान् प्रसभं सभायामागतह्रियः ।
मर्म्मच्छिदा नो वचसा निरतक्षन्नरातयः ॥४८॥
उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ ।
भावमानयने सत्याः सत्यङ्कारमिवान्तकः ॥५०॥

अन्वयः—अरातयः सभायां प्रसभं हृतोत्तरीयान् ( अतः ) आगतह्रियः नः मर्म्मच्छिदा वचसा निरतक्षन्। वाच्य—अरातिभिः हृतोत्तरीया आगतह्रियः वयं निरतक्ष्यामहि ॥ ४९॥

अन्वयः—अन्तकः गुरुसन्निधौ सत्याः कृष्णायाः आनयने भावं सत्यङ्कारम् इव सपत्नेषु उपाधत्त। वाच्य—अन्तकेन भावः सत्यङ्कार इव उपाधीयत ॥५०॥

अथ वैरनिर्य्यातनस्यावश्यम्भावद्योतनाय चतुर्भिः परापकृतिं दर्शयन् परनिकारान् वर्णयति—हृतेत्यादि। अरातयः शत्रवः सभायां प्रसभं बलात्कारेण हृतोत्तरीयान् अत एवागतह्रियः सम्प्राप्तलज्जानास्मान् मर्म्मच्छिदा मर्म्मच्छेदिना वचसा निरतक्षन् अघातयन्। वस्त्राद्यपहारवाक्पारुष्याभ्यां तथा व्यथयामासुरित्यर्थः। तत्क्षणशब्दसामर्थ्याद्वचसां वास्यौपम्यं गम्यते इति वस्तुनालङ्कारध्वनिः ॥४८॥

अथातिदुःसहनिकारान्तरमाह—उपाधत्तेति। अन्तको मृत्युर्गुरुसन्निधौ भीष्मद्रोणादिसमक्षमेव सत्याः पतिव्रतायाः कृष्णाया द्रौपद्या आनयने केशाम्बरादिकर्षणे भावं चित्ताभिप्रायमितः परमनेन पाण्डवाभि-

४९। শত্রুগণ প্রথমে সভামধ্যে বলপূর্ব্বক আমাদের উত্তরীয় বস্ত্র সকল গ্রহণ করায় আমরা লজ্জিত হইয়াছিলাম। পরে মর্ম্মভেদী কথায় আমাদিগকে ব্যথিত করিয়াছিল।

৪৮। छोटे भाइयोंके साथ वे राजा युधिष्ठिर और मेरी स्त्री द्रौपदी मेरे विरहसे बड़े लम्बे ( अर्थात् चिन्ताके अन्तको न समाप्त होनेवाले पहरों चौघड़ियों ) से युक्त रात रातपर अत्यन्त क्लेश पा रहे हैं।

४९। शत्रुओंने पहले सभामें बलपूर्वक ( जबरदस्ती ) हम सबके चादर आदिके कपड़े खींच लिये तब हम सब अत्यन्त लज्जित हो गये। अन्तमें मर्मभेदी ( हृदयमें चुभने वाले ) वचनोंसे हम सबको बहुत दुःखी किया।

तामैक्षन्त क्षणं सभ्या दुःशासनपुरःसराम् ।
अभिसायार्कमावृत्तां छायामिव महातरोः ॥५१॥

अन्वयः—दुःशासनपुरःसरां तां सभ्याः अभिसायार्कं (स्थितस्य) महातरोः आवृत्तां छायाम् इव क्षणम् ऐक्षन्त । वाच्य—सा सभ्यैः ऐक्ष्यत ॥५१॥

भवेनैतान् स्वनगरं नेष्यामीतिरवभूतं सत्यङ्कारमिव । क्रियतेऽनेनेति कारः । करणे घञ् । सत्यस्य कारः सत्यङ्कारः सत्यापनम् । चिकीर्षितस्य कार्यस्यावश्यं क्रियास्थापनार्थं परहस्ते यद्दीयते स सत्यङ्कारः । क्रियादौ सत्यदार्ढ्याय प्राग्दीयमानो मूल्यैकदेशश्च । 'क्लीवे सत्यङ्कारः सत्याकृतिः स्त्रियाम्' इत्यमरः । 'कारे सत्यागदस्य' इति मुमागमः । तमिव सपत्नेषूपाधत्त निहितवान् । तेषां विनाशकाले विपरीतबुद्धिमुत्पादितवान् इत्यर्थः ॥५०॥

केनेयमाकृष्टा सभ्यैर्वा किं कृतं तत्राह—तामिति । दुःशासनः पुरःसरो यस्यास्तां तथोक्ताम् । दुःशासनेन सभां प्रत्याकृष्यमाणामित्यर्थः । 'अनुपसर्ज्जनात्' इति न ङीप् । तां कृष्णाम् । सभायां साधवः सभ्याः । 'सभाया यः' इति यप्रत्ययः । अभिसायार्कं दिनान्तसूर्य्याभिमुखम् स्थितस्येति शेषः । 'सायो नाशादिनान्तयोः' इति विश्वः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । महातरोः सम्बन्धिनीमावृत्तां छायामिव तां कृष्णां क्षणमैक्षन्त । न चिरं जुगुप्सितत्वात् । नापि किञ्चिद्व्याप्रियन्त माध्यस्थ्यभङ्गभयात् । ते त्वर्कवदेव साक्षित्वमात्रमास्थिता इत्यर्थः । अत्राकृष्यमाणायाः कृष्णाया आकृष्टारं प्रति पराङ्मुखत्वाद्वाहावृत्तच्छायौपम्यम् तथापि तां न मुञ्चतीति दुःशासनस्य तरुसाम्यम् ॥५१॥

৫০। পতিপরায়ণা দ্রৌপদীকে গুরুজনগণের নিকটে আনয়ন করিলে মৃত্যু যেন "পাণ্ডবগণের এই পরাভব হেতু অতঃপর ইহাদিগকে যমালয়ে লইয়া আসিব" এইরূপ সঙ্কল্প করিয়াছিলেন।

५०। पतिव्रता द्रौपदीको बड़े लोगोंके सामने खींच लाया गया जान पड़ा मृत्युने 'पाण्डवोंके इस अपमान कारण पीछे उन सब (शत्रुओं) को यम पुरीमें ले जाऊंगी"—इस प्रकारका निश्चय कर लिया है ।

अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः।
अरुध्येतामितीवास्या नयने बाष्पवारिणा ॥५२॥
सोढ़वान्नो दशामन्त्यां ज्यायानेव गुणप्रियः।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥५३॥

अन्वयः—अयथार्थक्रियारम्भैः पतिभिः ईक्षितैः तव किम्, इति इव बाष्पवारिणा अस्याः नयने अरुध्येताम्। वाच्य—बाष्पवारि नयने अरुणत् ॥५२॥

अन्वयः—गुणप्रियः ज्यायान् (युधिष्ठिरः) एव नः अन्त्यां दशां सोढ़वान् द्विषां भङ्गः सुलभः सत्सु अवाच्यता दुर्लभा हि। वाच्य—गुणप्रियेण ज्यायसा (युधिष्ठिरेण) अन्त्या दशा सोढ़ा ॥ ५३ ॥

अथास्यास्तादात्विकमयाथार्थ्यं वर्णयति—अयथार्थेति। अयथार्था मिथ्याभूताः क्रियारम्भाः पतिशब्दप्रवृत्तिनिमित्तभूतकर्मोद्योगा येषां तैः। तामरक्षद्भिरित्यर्थः, तव सम्बन्धिभिः। पान्ति रक्षन्तीति पतयो भर्त्तारः 'पातेर्डतिः' इत्यौणादिको डतिप्रत्ययः। तैरीक्षितैरवेक्षितैः किम्? न किञ्चित् फलमस्तीत्यर्थः। इतीवेत्थं विचार्य्येवेत्युत्प्रेक्षा। बाष्पवारिणा अस्याः कृष्णाया नयने अरुध्येताम् आवृते रुधेः कर्म्मणि लङ्। अश्ररणा इरोदेत्यर्थः ॥ ५२ ॥

ननु भवद्भिः किमर्थम् असमर्थैः इवो उपेक्षितं तत्राह—सोढ़वानिति। गुणाः प्रिया यस्य स गुणप्रियः। 'वा प्रियस्य' इति परनिपातः।

৫১। সভ্যগণ দুঃশাসন কর্ত্তৃক সভার অভিমুখে আকৃষ্টা দ্রৌপদীকে দিনাবসানে শৰ্য্যাভিমুখস্থিত মহাতরুর আবর্ত্তিত ছায়ার ন্যায় ক্ষণকাল অবলোকন করিয়াছিলেন।

৫২। বৃথা পতিনামধারী পতিদিগকে দর্শন করিয়া তোমার কি হইবে? ইহা আলোচনা করিয়াই যেন অশ্রুজল দ্রৌপদীর নয়নদ্বয় আবৃত করিয়াছিল।

५१। सभामें बैठे भले आदमियोंने सभामें दुःशासनसे खींच लायी गयी द्रौपदीको दिनके अन्तमें बड़े वृक्षकी छाया की तरह क्षणभर देखा था (अर्थात् लाजके साथ देर तक न देख सके)।

५२। व्यर्थ पति कहलानेवाले इन (हम सब) को देखने पर तेरा क्या लाभ है? जान पड़ता है कि इसी विचारसे द्रौपदी की आंखें आंसूसे भर गयी थी।

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥५४॥

अन्वयः—तोयराशीनां तोयानि मनस्विनां मनांसि च स्थित्यतिक्रान्तिभीरूणि आकुलितानि अपि स्वच्छानि (भवन्ति)। वाच्य···तोयैः...मनोभिः च—भीरुभिः आकुलितैः स्वच्छैः (भूयते) ॥ ५४ ॥

ज्यायानग्रजो युधिष्ठिर एव, वृद्धशब्दादीयसुनि 'ज्यादादीयसः' इत्याकारादेशः। नोऽस्माकमन्ते भवामन्त्यां निकृष्टां दशामवस्थां सोढ़वान् न तु वयम्। किन्तु तदवरुद्धा इति भावः। ननु शत्रूपेक्षा महात्यनर्थकारिणीत्याशङ्क्याह—सुलभ इति। द्विषां विद्विषां भङ्गः सुलभः। कालान्तरेऽपीति शेषः। सत्सु सज्जनेषु अवाच्यता निन्द्यता दुर्लभा न तु शत्रूपेक्षा। हि प्रसिद्धौ। शत्रूपेक्षातो लोकापवाद एव बलवान्। तस्योत्पन्नस्य पुनरप्रतिविधेयत्वात् स च समयोल्लङ्घने स्यादेवेति भावः ॥ ५३ ॥

ननु शत्रुवधे राज्ञां को नामापवादः प्रत्युत कीर्त्तिरेवेत्याशङ्क्य सत्यं स एव समयोल्लङ्घनकलङ्कितकीर्त्यां महानिन्दानिदानमित्याशयेनाह—स्थितीति। तोयराशीनां समुद्राणां तोयानि मनस्विनां मनांसि च समानि भवन्ति। उभयं विशिनष्टि स्थित्यतिक्रान्तेर्मर्यादोल्लङ्घनाद्धेतोर्भीरूणि अत एवाकुलितानि संक्षोभितान्यपि स्वच्छानि अकलुषाणि न त्यजन्ते इत्यर्थः। मनस्वी अयं युधिष्ठिर इति भावः। अत्र तोयानां सामान्यतो मनस्विनां चाप्यकृतानामेव गुणतौल्यादौपम्यस्य गम्यतया तुल्ययोगितालङ्कारः। गुणश्चात्र भीरुत्वं स्वच्छता च ॥५४॥

৫৩। গুণপ্রিয় জ্যেষ্ঠ যুধিষ্ঠিরই আমাদের এই দুরবস্থা সহ্য করিয়াছিলেন। (আমরা কেবল যুধিষ্ঠির কর্তৃক নিবারিত হইয়াই—উহা সহিয়াছি) কারণ শত্রুজয় করা সহজ; কিন্তু সাধুসমাজে নিন্দাহীনতা অর্থাৎ প্রতিষ্ঠা লাভ বড়ই দুর্লভ।

५३। गुणको प्रिय मानवाले बड़े भाई युधिष्ठिरने ही हम सब की इस दुर्दशा को सह लिया। (हमलोगोंने तो युधिष्ठिरके निवारण करने पर सही)। क्योंकि शत्रुओंको जीत लेना तो दूसरे प्रकार) कूटनीति वा युद्ध नीति) के द्वारा भी सहज है परन्तु सज्जनोंके समाजमें निन्दित न होना अर्थात् प्रतिष्ठा पाना बहुत दुर्लभ है।

धार्त्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत ।
असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥५५॥
अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥५६॥

अन्वयः—धार्त्तराष्ट्रैः सह प्रीतिः अस्मासु वैरम् असूयत हि (यतः) असन्मैत्री कूलच्छाया इव सेविता दोषाय (भवति)। वाच्य—प्रीत्या वैरम् असूयत, असन्मैत्र्या सेवितया (भूयते) ॥ ५५॥

अन्वयः—अपवादात् अभीतस्य गुणदोषयोः समस्य असद्वृत्तेः वृत्तम् विधेः वृत्तम् इव दुर्विभावं (भवति)। वाच्य—वृत्तेन दुर्विभावेन (भूयते) ॥५६॥

नन्वजातशत्रोः स्वजनवैरे किं कारणमित्याशङ्क्यास्मत् सौहार्द्दमेवेत्याह—धार्त्तराष्ट्रैरिति। धार्त्तराष्ट्रैर्धृतराष्ट्रपुत्रैः सह प्रीतिः सौहार्दमेवास्मासु विषये वैरम् असूयत सूतवती। सूयतेर्दैवादिकात् कर्त्तरि लङ्। ननु सौहार्द्दं वैरजनकं चेद्धिप्रतिषिद्धं तत्राह—असदिति। हि यस्मादसन् मैत्री दुर्ज्जनेन सङ्गतिः कूलस्यासन्नपातस्य नदीतटस्य छायेव सेविता श्रिता सती दोषाय अनर्थाय भवति न खलु दुर्ज्जनः सुजनवत् मित्रद्रोहपातकं पश्यतीति भावः। उपमाणुप्राणितोऽयमर्थान्तरन्यासालङ्कारः ॥ ५५ ॥

৫৪। সাগরের জলরাশি এবং মনস্বীদিগের মন, এতদুভয়ই কূলাতিক্রমে (সীমালঙ্ঘনে) ভীরু। সুতরাং সংক্ষুব্ধ হইলেও উহা স্বচ্ছই থাকে।

৫৫। ধৃতরাষ্ট্র পুত্রগণের সহিত সৌহৃদ্যই আমাদের প্রতি শত্রুতা উৎপাদন করিয়াছে। যেহেতু পতনোন্মুখ নদীতটের ছায়ায় আশ্রয় লইলে যেমন বিপদ উপস্থিত হয়, দুর্জ্জনের-সঙ্গগ্রহণও তেমনি দোষের হেতু হইয়া থাকে।

५४। समुद्रका अगाध जल और मनस्वी (अर्थात् मानीया ऊंचे विचारवालोंके) मनमें दोनों मर्य्यादा उल्लङ्घन करनेसे डरते और व्यग्र होने पर भी विमल ही रहते हैं।

५५। धृतराष्ट्रके पुत्रोंके साथ हमलोगोंकी सौजन्य (भले मानने सो) ने ही शत्रुता उत्पन्न कर दिया। क्योंकि जिस प्रकार नदीकिनारे की छायामें आराम करने विपत्ति आजाती है, उसी प्रकार दुष्टोंका संसर्ग भी दोषों (अर्थों) कारण हो जता है।

ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः ।
यद्यमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् ॥५७॥

अन्वयः—परैः परिभूतस्य मे हृदयं सद्यः ध्वंसेत, यदि अमर्षः प्रतीकारं भुजालम्बं न लम्भयेत्। वाच्य—हृदयेन ध्वस्येत, अमर्षेण प्रतीकारः भुजालम्बः लम्भ्येत ॥५७॥

ननु आदावेव तेषां वृत्तमविज्ञाय कथं मैत्री कृतेत्याशङ्क्य किं कुर्मः दुर्ज्जनवृत्तं दुर्विज्ञेयमित्याह—अपवादादिति। अपवादाज्जनाक्रोशादभीतस्य अजुगुप्समानस्येत्यर्थः। गुणदोषयोः समस्य तुल्यबुद्धेः, निग्रहानुग्रहौ गुणदोषयोरननुरुन्धत इत्यर्थः। विधावप्येतद्विशेषणं योज्यम्। असद्वृत्तेर्दुराचारस्य धूर्त्तस्य वृत्तम् ईहितं विधेर्दैवस्य वृत्तमिव दुर्विभावं विभावयितुमशक्यम्। किन्तु कार्य्यैकसमधिगम्यमित्यर्थः। भवतेर्ण्यन्तात् कृच्छ्रार्थे खल् प्रत्ययः ॥५६॥

नन्वेवं मानी कथं परिभूतो जीवसि तत्राह—ध्वंसेतेति। परैः शत्रुभिः परिभूतस्य मे हृदयं सद्यो ध्वंसेत भ्रश्येदित्यर्थः। अमर्षः कर्त्ता प्रतीकारं प्रतिक्रियारूपं भुजालम्बं हस्तावलम्बनं न लम्भयेन्न ग्राहयेद् यदि हृदयेनेति शेषः। सत्यं जीवामि प्रतिविधित्सया न तु निर्लज्जतयेति भावः ॥५७॥

৫৬। দৈবঘটনা যেইরূপ অভাবনীয়, লোকাপবাদে ভয় নাই, দোষগুণে তুল্যবুদ্ধি তাদৃশ ধূর্ত্তের কার্য্যও তেমনই ভাবনার অগোচর।

৫৭। শত্রুগণকর্ত্তৃক পরিভূত আমার হৃদয় সদ্যই ধ্বংস হইয়া যাইত—যদি ক্রোধ আমাকে প্রতিশোধ-গ্রহণরূপ আশ্রয় অবলম্বন না করাইত।

५६। जिस प्रकार दैवकी लीला विचार कर सकने योग्य नहीं, लोकनिन्दासे निःशङ्क और दोष और गुणको तुल्य समझती है ; उसी प्रकार दुराचारी धूर्त्तोंके भी व्यापार होते हैं।

५७। शत्रुओंसे दुर्दशा पाकर मेरा हृदय उसी समय (फट कर) गिर पड़ता जब कि क्रोध बदला चकान रूप अवलम्बन (सहारा) न देता।

अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम्।
अन्योन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम् ॥५८॥
शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥५९॥

अन्वयः - अरिभिः अवधूय हरिणैः तुल्यवृत्तितां नीताः (वयम्) अन्योन्यस्य अपि जिह्रीमः सहवासिनां किं पुनः। वाच्य—तुल्यवृत्तितां नीतैः (अस्माभिः) ह्रीयते ॥ ५८ ॥

अन्वयः—शक्तिवैकल्यनम्रस्य निःसारत्वात् लघीयसः मानहीनस्य जन्मिनः तृणस्य च गतिः समा (भवति)। वाच्य - समया गत्या (भूयते) ॥५९॥

ननु तवैव कोऽयमभिमानस्तत्राह—अवधूयेति। अरिभिरवधूय परिभूय हरिणैर्मृगैस्तुल्यवृत्तितां तुल्यजीवनत्वं वन्याहारतामित्यर्थः। नीताः प्रापिता वयम्, पश्चापीति शेषः। अन्योन्यस्यापि जिह्रीमो लज्जामहे। सहवासिनां सहचारिणां किं पुनः? प्रागेव जिह्रीम इति किमु वक्तव्यमित्यर्थः। क्रियायोगे सम्बन्धसामान्ये षष्ठी। तत्र वयं पश्चापि तुल्याभिमाना एव इदं तु मदेकसाध्यं कर्मेति मुनिशासनात् मयानुष्ठीयत इति भावः ॥५८॥

ननु तर्हि दुःखैकनिदानमन्तःशत्रुर्मान एव त्यज्यतामित्याशङ्क्य तत्त्यागे दोषमाह—शक्तेति। शक्तिवैकल्ये नोत्साहादिशक्तिवैधुर्येण अवष्टम्भसामर्थ्यविरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च निःसारत्वाद् दुर्बलत्वात् स्थिरांशरहितत्वाच्च। 'सारो बले स्थिरांशे च' इत्यमरः। लघीयसो गौरवहीनस्य नीरसस्येत्यर्थः। मानहीनस्य जन्मिनः जन्तोः। व्रीह्यादि-

৫৮। শত্রুগণ কর্তৃক আমরা পরিভূত হইয়া মৃগের ন্যায় বন্যবৃত্তি অবলম্বন করিতে বাধ্য হইয়াছি। ইহাতে আমরা পরস্পরই লজ্জাবোধ করিতেছি—সহধর্মীদিগের নিকট যে লজ্জিত হইব, তাহাতে আর কথা কি?

५८। शत्रुओंसे हार खा कर मृगोंकी तरह हमलोगोंको वनमें रहनेके लिये वाध्य (लाचार) होना पड़ा। इस लिये आपसमें ही लगाते हैं तो साथियों के सामने लगाना कौनसी बड़ी बात है।

—

अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम्।
प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥६०॥
तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥६१॥

अन्वयः—महीभृतां यत् यत् उच्चैः तत् तत् अलङ्घ्यम् उद्वीक्ष्य महतां तुङ्गता ज्यायसीं प्रियतां केन मा गात्। वाच्य तुङ्गतया ज्यायसी प्रियता मा गायि ॥६०॥

अन्वयः। तावत् एव लक्ष्म्या आश्रीयते, तावत् अस्य यशः स्थिरं (भवति) तावत् एव असौ पुरुषः यावत् मानात् न हीयते। वाच्य लक्ष्मीः आश्रयति, यशसा स्थिरेण (भूयते) असुना पुरुषेण (भूयते) ॥६१॥

त्वादिनिः। तृणस्य च गतिः अवस्था समेति मानहीनस्य तृणादपिनिकृष्टत्वान्न त्याज्यो मान इति भावः। श्लेषालङ्कारोऽयं तदनुप्राणितेयमुपमेत्यनेकार्थदीपिकेति व्यज्यते ॥५९॥

मानत्यागे दोषमुक्त्वा तत् सद्भावे षड्भिर्गुणमाह—अलङ्घ्यमिति। महीभृतां पर्व्वतानां सम्बन्धि यद्यच्छृङ्गादिकमुच्चैरुन्नतं तत्तदलङ्घ्य मुद्वीक्ष्योत्प्रेक्ष्य तर्कयित्वेति यावत्। महतां महात्मनां तुङ्गतामानोन्नत्यं ज्यायसीं प्रियतां प्रियत्वं केन हेतुना मागात् न केनापि ? प्रियत्वं गच्छत्येवेत्यर्थः। किन्तु तुङ्गत्वेनेत्यर्थः। आशिषि माङि लुङ्। अटोऽपवादः दैवादनिच्छतोऽपीच्छामुत्पादयत्येव औषधवदित्यर्थः। आशंसनार्थमाशीःप्रयोगः। उद्वीक्ष्येत्यसमानकर्तृकत्वनिर्देशः क्वचित् प्रयोगदर्शनात् सोढ़व्यः। केचित् 'उद्वीक्ष्यम्' इति पठन्ति। तत्र यद्यदुच्चैस्तत्तदलङ्घ्यम् उद्वीक्ष्यमवलोकनीयं न चोल्लङ्घनीयमिति। अतो महतामित्यादि योजयन्ति ॥६०॥

৫৯। যে মানহানী পুরুষ উৎসাহাদি শক্তির অভাব হেতু নম্র, দুর্ব্বলতা হেতু গৌরবহীন, মানহীন প্রাণীর অবস্থা তৃণের তুল্য।

৬০। পর্ব্বতসমূহের শৃঙ্গাদি যাহা উচ্চ, তৎসমুদয়ই লঙ্ঘন করিবার অযোগ্য। তাহা বুঝিয়া মহাত্মাদিগের মানোন্নত্য অতিশয় প্রিয় হইবে না কেন ?

५९। उत्साह आदिक शक्ति न रहने कारण नम्र और दुर्बलताके कारण मानहीन प्राणियोंकी दशा तृण (घास,) की तरह होती है।

६०। पर्व्वतोंमें जो जो ऊंचे हैं वे सभी नहीं लांघे जा सकते यह समझ कर ऊंचे विचारवाले महात्मा लोगोंको मानकी उन्नति अत्यन्त प्रिय मालूम पड़ती है।

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति संख्ययामुद्यताङ्गुलिः ॥६२॥
दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥६३॥

अन्वयः—सः पुमान् अर्थवज्जन्मा, यस्य नाम्नि पुरःस्थिते (सति) संख्यायाम् उद्यता अङ्गुलिः अन्याम् अङ्गुलिं न अभ्येति। वाच्य :- तेन पुंसा अर्थवज्जन्मना (भूयते) उद्यतया अङ्गुल्या अन्या अङ्गुलिः न अभीयते ॥६२॥

अन्वयः- दुरासदवनज्यायान् तुङ्गः अपि भूधरः गम्यः, महौजस्कं मानप्रांशुम् (पुरुषम्) अलङ्घ्यता न जहाति। वाच्य—ज्यायसा तुङ्गेन भूधरेण गम्येन (भूयते) महौजस्कः मानप्रांशुः अलङ्घ्यतया न हीयते ॥६३॥

तावदिति। किञ्च तावदेवासौ लक्ष्म्या आश्रीयते। तावदस्य पुंसो यशः स्थिरञ्च। तावदेवासौ पुरुषः। पुरुषत्वेन गण्यत इत्यर्थः। यावत् मानादभिमानान्न हीयते न भ्रश्यति। मानहीनस्य न किञ्चित्शुभमस्तीत्यर्थः ॥ ६१ ॥

स इति। स पुमानर्थवज्जन्मा सार्थकजन्मा यस्य पुंसो नाम्नि पुरोऽग्रे स्थिते सति संख्यायां पुरुषगणनाप्रस्तावे उद्यता गुणमधिकृत्योन्नमिताङ्गुलिरन्यां द्वितीयामङ्गुलिम् उद्यतामिति शेषः। नाभ्येति न प्राप्नोति। अद्वितीयत्वादस्येत्यर्थः। एतन्मानरहितस्य न सम्भवतीति भावः ॥६२॥

৬১। লক্ষ্মী ততকালই পুরুষকে আশ্রয় করিয়া থাকেন, তত কালই পুরুষের যশঃ স্থির থাকে, ততকালই লোক পুরুষ বলিয়া গণ্য হয়—যতকাল তাঁহার মানহীন না হয়।

৬২। যাহার নাম অগ্রে থাকিলে পুরুষগণনায় সমুদ্যত অঙ্গুলি দ্বিতীয় অঙ্গুলিকে প্রাপ্ত না হয় সেই পুরুষই সার্থকজন্মা।

६१। तभी तक लक्ष्मी पुरुषके पास बनी रहती, तभी तक पुरुषका यश स्थिर रहता और तभी तक पुरुष समझा जाता है, जब अपने मानसे हीन नहीं होता।

६२। उसी पुरुषका जन्म सार्थक (अर्थात् सफल) है जिसका नाम आगे रहने पर पुरुषोंको गिननेके लिये उठी अङ्गुली दूसरी अङ्गुलीके पास न जाय। अर्थात् जिसका नाम पहले लिया गये वही धन्य पुरुष है।

गुरून् कुर्व्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम्॥६४॥

अन्वयः—ते (नराः) वंश्यान् गुरून् कुर्व्वन्ति, तैः वसुन्धरा अन्वर्था (भवति), येषां शुभ्रानि यशांसि इन्दुमण्डलं ह्रेपयन्ति। वाच्य—तैः नरैः वंश्याः गुरवः क्रियन्ते, वसुन्धरया अन्वर्थया (भूयते), शुभ्रैः यशोभिः इन्दुमण्डलं ह्रेप्यते॥६४॥

दुरासदेति। दुरासदैर्वनैः ज्यायान् प्रवृद्धस्तथापि तुङ्गोऽपि भूधरो गम्यो गन्तुं शक्य एव। प्रसिद्धं चैतदिति भावः। महौजस्कं प्रताप-सम्पन्नं मानप्रांशुं मानोन्नतम् पुरुषमिति शेषः। अलङ्घता न जहाति। कदाचिन्मानी लङ्घयितुं शक्यते इत्यर्थः। गिरेरपि गरीयान् मानाधिक इति भावः। अत्रोपमानाद् भूधरादुपमेयस्य मानिनो धर्म्मान्तरसाम्येऽप्य-लङ्घत्वेनाधिक्यकथनाद् व्यतिरेकालङ्कारः॥६३॥

गुरूनिति। ते नरा वंश्यान् अन्वये भवान् गुरून् कुर्व्वन्ति प्रथयन्ति। स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवदित्यर्थः। तैर्नरैः वसूनि धनानि धरतीति वसुन्धरा। संज्ञायां 'भृतृवृजि'—इत्यादिना खच्प्रत्यये 'खचि ह्रस्वः' इति ह्रस्वान्मुमागमश्च। अन्वर्थानुगतार्था तेषां वसुभूतानां धारणादिति भावः। येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्ज-यन्ति। यशसो निष्कलङ्कत्वादिति भावः। ईदृशं हि यशो मानमहत एव सम्भवतीति तात्पर्य्यार्थः। ह्रीधातोर्ण्यन्ताल्लट्। 'अर्त्तिह्री—' इत्यादिना पुगागमः। अत्र ह्रेपणस्य सादृश्यपर्य्यवसानादुपमालङ्कारः॥६४॥

৬৩। দুর্গম বনরাজি দ্বারা পূর্ণ ও উন্নতশৈল হইলেও মনুষ্যের গমন-যোগ্য হয়। কিন্তু যে প্রতাপশালী মানোন্নত পুরুষ তাহাকে অলঙ্ঘ্যতা কখনও ত্যাগ করে না। অর্থাৎ মানীকে কেহই লঙ্ঘন করিতে পারে না।

৬৪। যাঁহাদের ধবল যশোরাশি চন্দ্রমণ্ডলকেও লজ্জিত করে, সেই সকল মনুষ্যই স্বীয় বংশীয়দিগকে গৌরবযুক্ত করিয়া তুলে, আর তাহাদের দ্বারাই বসুন্ধরার নাম সার্থক হয়।

६३। दुर्गम जङ्गलों से घिरे और ऊंचे रहने पर भी पर्व्वत मनुष्यके जानेयोग्य हैं। अर्थात् मनुष्य ऐसे भी पर्व्वत पर पहुंच सकता है। पर प्रतापी और अभिमानी पुरुषको अलङ्घनीयता कभी नहीं त्याग करती। अर्थात् मानी पुरुषको कोइ कभी नहीं लङ्घन (अनादर) कर सकता।

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम्।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥६५॥
न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ॥६६॥

अन्वयः—यैः अमर्षः शुष्के अशनिः इव अरातिषु पात्यते मनस्विनां प्रथमे ते आशीःषु, उदाहरणम्। वाच्यः—ये अमर्षम् अशनिम् इव पातयन्ति प्रथमैः तैः उदाहरणेन ( भूयते ) ॥६५॥

अन्वयः—उदन्वद्वीचिचञ्चलं सुखं न प्रार्थयते, अर्थञ्च न प्रार्थये, ( किञ्च ) अनित्यताशनेः त्रस्यन् विविक्तं ब्रह्मणः पदं न प्रार्थये। वाच्यः—मया...सुखं न प्रार्थ्यते, अर्थश्च न प्रार्थ्यते, त्रस्यता विविक्तं पदं न प्रार्थ्यते ॥६६।

उदाहरणमिति। यैरमर्षः क्रोधः शुष्के नीरसेऽशनिरिवारातिषु विषये पात्यते प्रक्षिप्यते मनस्विनां मानिनां प्रथमेऽग्रेसरास्ते आशीःषु पुरुषैरेवं भवितव्यमेवंरूपासूदाहरणं निदर्शनं भवतीति शेषः। रामादिवदुपमानं भवतीत्यर्थः। अतो न त्याज्यो मान इति सन्दर्भार्थः ॥६५॥

यदुक्तम् 'अभिद्रोहेण भूतानाम्' इत्यादि, तत्र युग्मेनोत्तरमाह—नेत्यादि। उदन्वद्वीचिरिव चञ्चलं समुद्रतरङ्गवदस्थिरं सुखं कामं न प्रार्थये नेच्छामि। तथा चञ्चलमर्थञ्च न प्रार्थये। किञ्च अनित्यता विनाशिता सैवाशनिस्तस्मात् त्रस्यन् बिभ्यत् 'वा भ्राश—' इत्यादिना श्यन्-

৬৫। যাহারা নীরস পদার্থে ( প্রস্তরাদিতে ) বজ্রপাতের ন্যায় শত্রুর প্রতি ক্রোধ ক্ষেপণ করে, তাহারাই মনস্বীদিগের প্রধান এবং পুরুষকার বর্ণনার উদাহরণ।

६४। जिनके अत्यन्त निर्म्मल यश चन्द्रमाके मण्डलको भी लज्जित किये रहते हैं, वेही मनुष्य अपनेवालोको गौरवयुक्त और वसुन्धरा ( रत्नको धारण करनेवाली अर्थात् पृथ्वी ) का नाम सार्थक करते हैं।

६५। नीरस पदार्थ ( पाथरीयुक्त पर्वत आदि ) पर बज्रकी तरह शत्रुओंपर क्रोध छोड़ते हैं वे ही अभिमानियोंमें श्रेष्ठ और पुरुषार्थ वर्णन करनेमें दृष्टान्त हो जाते हैं।

प्रमार्ष्टुमयशःपङ्कमिच्छेयं छद्मना कृतम्।
वैधव्यतापितारातिवनितालोचनाम्बुभिः ॥६७॥

अपहस्येऽथवा सद्भिः प्रमादो वास्तु मे धियः।
अस्थानविहितायासः कामं जिह्रेतु वा भवान् ॥६८॥

अन्वयः—छद्मना कृतम् अयशःपङ्कं वैधव्यतापितारातिवनितालोचनाम्बुभिः प्रमार्ष्टुम् इच्छेयम्। वाच्यः......मया इष्येत ॥ ६७॥

अन्वयः—अथवा सद्भिः (अहम्) अपहस्ये, मे धियः प्रमादः वा अस्तु, भवान् अपि अस्थानविहितायासः (सन्) कामं जिह्रेतु। वाच्यः—सन्तः (माम्) अपहसन्ति, प्रमादेन भूयतां भवता विहितायासेन ह्रीयताम् ॥६८॥

प्रत्ययः। विविक्तं निर्बाधं ब्रह्मणो वेधसः आत्मनः पश्यति इति पदं स्थानमैक्यलक्षणं मुक्तिञ्च न प्रार्थये। एतेन यदुक्तम् 'उच्छेदं जन्मतः कर्त्तुम्' इत्यादिना, तत्समाहितम् ॥ ६६ ॥

प्रमार्ष्टुमिति। किन्तु छद्मना कपटेन कृतं शत्रुभिरिति शेषः। अयश एव पङ्कमिति रूपकालङ्कारः। वैधव्येन तापितानां दुःखीकृतानामरातिवनितानां लोचनाम्बुभिः प्रमार्ष्टुं क्षालयितुमिच्छेयमभिलषेयम्। इषिधातोर्लिङि रूपम्। वैरिनिर्य्यातनातिरिक्तं न किञ्चिदिच्छामीत्यर्थः ॥६७॥

৬৬। আমি সাগর-তরঙ্গতুল্য চঞ্চল সুখ প্রার্থনা করি না। অর্থও চাহি না। অধিক কি ধ্বংসশীলতারূপ বজ্র হইতে ভীত হইয়া অবাধ ব্রহ্মপদও প্রার্থনা করি না।

৬৭। শত্রুগণ কপট পাশা খেলা দ্বারা আমাদিগের প্রতি যে অযশস্ক বাক্য প্রয়োগ করিয়াছে—বৈধব্য দুঃখিতা শত্রুপত্নীদিগের নয়নজল দ্বারা আমি সেই পঙ্ক প্রক্ষালন করিতে ইচ্ছা করি।

६६। मैं समुद्रके तरङ्ग के तरह चञ्चली सुख नहीं चाहता और अर्थ नहीं (धन) ही चाहता यहांतक कि मैं बराबर नाश होते रहने (अर्थात् अनित्यता) रूप वज्रसे डरकर बाधा रहित ब्रह्म पदको भी चाहता नहीं।

६७। शत्रुओंने कपटी पाशेके खेलसे जो हमलोगोंपर अयश रूप कीचड़ लगाया है उसे मैं पति मरनेके दुःखसे सन्तप्त शत्रुओंकी स्त्रियों आंसूसे धोने चाहता हूं।

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥६९॥
अजन्मा पुरुषस्तावद् गतासुस्तृणमेव वा ।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥७०॥

अन्वयः—अहं विद्विषां समुच्छेदेन वंशलक्ष्मीम् अनुद्धृत्य निर्वाणम् अपि जयश्रियः अन्तरायं मन्ये । वाच्यः—मया * * * निर्वाणम् अपि अन्तरायः मन्यते ॥६९॥

अन्वयः—पुरुषः यावत् अरिभिः विलुप्तं यशः इषुभिः न आदत्ते, तावत् अजन्मा, गतासुः तृणम् एव वा । वाच्यः—पुरुषेण ..आदीयते, अजन्मना, गतासुना तृणेन वा ( भूयते ) ॥७०॥

एवं तर्हि 'यः करोति वधोदर्का' इत्याद्युक्तदोषः स्यादित्याशङ्कामङ्गीकृत्य ग्लानिर्न दोषायेति न्यायमाश्रित्य युग्मेनोत्तरमाह—अपहस्य इत्यादि । अथवा सद्भिः पण्डितैरपहस्ये अपहसिष्ये इत्यर्थः । 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति हसतेर्ण्यन्तात् कर्म्मणि लट् । ण्यन्तस्तु भ्रान्तपाठः । मे धियः प्रमादोऽनवधानत्वं वाऽस्तु । भवानप्यस्थानेऽयोग्यविषये विहितः आयासो हितोपदेशप्रयासो येन स तथोक्तः विफलप्रयत्नः सन्नित्यर्थः । कामं जिह्रेतु लज्जताम् ॥ ६८ ॥

वंशेति । अहं तु विद्विषां शत्रूणां समुच्छेदेन विनाशेन करणेन वंशलक्ष्मीमनुद्धृत्य अपुनरावर्त्तत्र निर्वाणं मोक्षमपि जयश्रियोऽन्तरायं विघ्नं मन्ये । न तु पुरुषार्थमित्यर्थः । किमुतान्योत्सवादिकमिति भावः ॥६९॥

৬৮। আমি সাধুগণ দ্বারা উপহসিতই হই, অথবা আমার বুদ্ধিবিপর্যয়ই হউক, কিংবা আপনিই অযোগ্য বিষয়ে হিতোপদেশ প্রদান করিতে প্রয়াস পাইয়া লজ্জিত হউন।

৬৯। আমি শত্রুগণের বিনাশান্তে বংশলক্ষ্মীর উদ্ধার সাধন না করিয়া নির্ব্বাণকেও বিজয়লক্ষ্মীর বিঘ্ন বলিয়া মনে করি।

६८। भले आदमी मेरी हंसी उड़ायें या मेरी बुद्धि फिर बिगड़ गयी अथवा अयोग्य विषयमें ( अर्थात् दुराग्रही शिष्यको ) उपदेश देकर परिश्रमसे आप लज्जित भले ही हो जायें ।

६९। शत्रुओंको मारनेपर वंशकी लक्ष्मीका उद्धार किया ( अर्थात् दैनिक सम्पत्ति पाये ) विना निर्वाण (मुक्ति) को भी मैं विजय लक्ष्मीका विघ्न समझता हूं ।

अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति ।
पुरुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन ॥७१॥
कृतं पुरुषशब्देन जातिमात्रावलम्बिना ।
योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥७२॥

अन्वयः—यस्य अमर्षः द्विषताम् अनिर्ज्जयेन प्रशाम्यति, तस्मिन् पुरुषोक्तिः कथम्, (हे) तपोधन, त्वं हि ब्रूहि। वाच्यः—अमर्षेण प्रशम्यते, पुरुषोक्त्या (भूयते) त्वया उच्यताम् ॥७१॥

अन्वयः—जातिमात्रावलम्बिना पुरुषशब्देन कृतम्, अङ्गीकृतगुणैः यः श्लाघ्यः (सन्) सविस्मयम् उदाहृतः (भवति)। वाच्यः—श्लाघ्येन उदाहृतेन (भूयते) ॥७२॥

नन्वयं ते दुराग्रह इत्यत आह—अजन्मेति। पुरुषः यावदरिभिर्विलुप्तं संहृतं यशः इषुभिर्नादत्ते। अरिवधेन न प्रत्याहरतीत्यर्थः। तावदजन्मा अजातप्राय इत्यर्थः। नन्वजातोऽपि जननानन्तरमुपयुज्यत एवेत्यरुच्या पक्षान्तरमाह—गतासुर्मृतः मृततुल्य इत्यर्थः। मृतोऽपि प्रागुपयुक्तवानित्यरुच्याह—तृणमेवेति। तृणतुल्य इत्यर्थः। अकिञ्चित्करस्तु त्रैकाल्यानुपयोगाज्जीवन्मृत इत्यर्थः। अतो नाहमाग्रहाद्ब्रवीमि। किन्तु वीरधर्म्ममनुपालयामीति भावः ॥ ७० ॥

सर्वथा वैरनिर्य्यातनं कर्त्तव्यमित्युक्तम्, तदकरणे पुरुषगुणानां हानिदोषमाह—अनिर्जयेनेति। यस्य अमर्षः क्रोधो द्विषतां शत्रूणामनिर्जयेन निर्जयं विनैव प्रशाम्यति। उपलक्षणे तृतीया। तस्मिन् पुरुषः इत्युक्तिः पुरुषशब्दः कथम्? न कथञ्चिदित्यर्थः। प्रवर्त्तत इति शेषः। प्रवृत्तिनिमित्तस्य पुरुषकारस्याभावादिति भावः। हे तपोधन, त्वं हि त्वमेव ब्रूहि कथय। न च ते किञ्चिदविदितमस्तीति भावः। 'हि हेतावधारणे' इत्यमरः ॥७१॥

१०। পুরুষ যে পর্য্যন্ত না শত্রু কর্ত্তৃক বিলুপ্ত যশঃ অস্ত্র দ্বারা অর্থাৎ শত্রুবধপূর্ব্বক প্রত্যাবর্ত্তিত না করেন, সেই পর্য্যন্ত তাহাকে অজাতপ্রায়, মৃত অথবা তৃণবৎ মনে করি।

৭১। হে তপোধন! আপনিই বলুন, যাহার ক্রোধ শত্রুদিগকে পরাজিত না করিয়াই থাকিয়া যায়, তাহাকে কিরূপে পুরুষ বলা যায়?

७०। जबतक पुरुष शत्रुओंसे लूटे गये यशको अस्त्र द्वारा अर्थात् शत्रुओंको मारकर नहीं लौटाता तबतक उसे प्रायः नहीं जनमा, मरा या तृण समझता हूं।

७१। हे तपोधन! आप ही कहें, जिसका क्रोध शत्रुओंको न जीतकर आप ही आप शान्त हो जाता है तो उसे पुरुष कैसे कह सकता हूं!

ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥७३

( युग्मकम् )

अन्वयः — सदसा गौरवे रितम् ( सत् ) ओजांसि ग्रसमानम् इव (स्थितम्) यस्य पुनः नाम द्विषः अपि अभिनन्दन्ति सः पुमान् पुमान् । वाच्यः—नाम द्विषद्भिः अभिनन्द्यते, तेन पुंसा पुंसा ( भूयते ) ॥ ७३ ॥

ननु पुरुषत्वजात्यैव पुरुषोक्तिप्रवृत्तेः किं पुरुषकारेण तत्राह— कृतमित्यादिद्वयेन । कृतमिति । जातिमात्रावलम्बिना जातिमात्राभिधायिना पुरुषशब्देन कृतमलम्, न तेन किञ्चित्साध्यत इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीयेत्युक्तं प्राक् । कृतमिति निषेधार्थमव्ययं चादिषु पठ्यते । सत्यं जातिमात्रेऽपि पुरुषशब्दः प्रवर्त्तते, परन्तु नासौ पुंसामाशास्यः । पश्वादिसाधारणादिति तात्पर्य्यार्थः । तर्हि कीदृक् श्लाघ्य इत्याशङ्क्याह—य इत्यादिनार्थद्वयेन । अङ्गीकृतगुणैर्गुणपक्षपातिभिर्यः पुमान् श्लाघ्यः स्तुत्यः सन् सविस्मयं ससंभ्रममुदाहृतः कथितः । पुंसा ईदृशेन भवितव्यमिति निदर्शितः ॥७२॥

ग्रसमानमिति । किञ्च—सदसा सभया गौरवेणेरितं कथाप्रसङ्गेषु गौरवपूर्व्वकमुच्चारितं सत् ओजांसि शृण्वतां तेजांसि ग्रसमानं गिलदिव स्थितं यस्य पुंसो नाम द्विषोऽप्यभिनन्दन्त्यनुमोदन्ते । किमुत सुहृद इति भावः । स पुमान् पुमान् पुरुषत्वेन गण्यते इत्यर्थः । प्रथमः पुंशब्दो जातिवचनो द्वितीयो गुणवचनः स एव श्लाघ्यः । अत्र पुमान् पुमानिति तात्पर्य्यमात्रभेदभिन्नशब्दार्थपौनरुक्त्यलक्षणो लाटानुप्रासोऽलङ्कारः । तथा च सूत्रम्—'तात्पर्य्यभेदयुक्तो लाटानुप्रासः' इति ॥७३॥

৭২। জাতি মাত্রের বিকাশী 'পুরুষশব্দ প্রয়োগ বৃথা। গুণিগণ কর্ত্তৃক যে পুরুষ প্রশংসা প্রাপ্ত হইয়া সম্ভ্রমের সহিত অভিহিত হন, তিনিই প্রকৃত পুরুষ।

৭৩। সেই পুরুষই প্রকৃত পুরুষ—যাহার নাম সভ্যজন কর্ত্তৃক গৌরবের সহিত কথিত হইয়া শ্রোতাদিগের তেজোরাশি গ্রাস করিয়া থাকে, আর যাহার সুনাম শত্রুরাও অনুমোদন করিয়া থাকে।

७२।—केवल जाति बोधक पुरुष शब्द व्यर्थ है। गुणियोंसे प्रशंसा पाये हुए जिनको नाम आश्चर्य के साथ लिये जाते हैं, वास्तवमें वे ही पुरुष हैं।

यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलिः ॥७४॥

स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्त्तुराज्ञया ॥७५॥

अन्वयः—नृपतिः यथाप्रतिज्ञं युधि द्विषतां प्रतिचिकीर्षया तृष्यन् जलाञ्जलीः एव मम इव अध्येति। वाच्य…नृपतिना तृष्यता अहम् एव अधीये ॥ ७४ ॥

अन्वयः—सः अवदातस्य वंशस्य शशाङ्कस्य इव लाञ्छनं यत्र कृच्छ्रेषु भर्त्तुः आज्ञया व्यर्थता भूयते। वाच्यः—आज्ञा व्यर्था भवति ॥ ७५ ॥

ननु सत्सु भीमादिषु तवैवायं कोऽभिनिवेश इत्यत्राह—यथेति। नृपतिर्युधिष्ठिरो यथाप्रतीज्ञं युधि द्विषतां प्रतिचिकीर्षया द्विषतः प्रतिकर्तुमिच्छया प्रतिज्ञानुसारेणैव जिघांसयेत्यर्थः। तृष्यन् पिपासुर्जलाञ्जलेरिव ममैवाध्येतीच्छति कार्य्यसिद्धेर्मदायत्तत्वान्मामेव स्मरति। अतोऽयं ममाभिनिवेश इत्यर्थः। 'अधीगर्थ'—इत्यादिना कर्म्मणि षष्ठी ॥७४॥

ननु युधिष्ठिरः स्वार्थं साधयति, त्वया च स्वार्थमात्रमनुसन्धीयतामित्यत आह—स इति। स नरोऽवदातस्य स्वच्छस्य वंशस्य शशाङ्कस्येव लाञ्छनं कलङ्कः। यत्र यस्मिन् पुरुषे कृच्छ्रेषु व्यसनेषु भर्त्तुः स्वामिनः आज्ञया व्यर्थया भूयते। भावे लट्। आपदि स्वार्थसाधकः कुलघातकः तत्कथं स्वार्थनिष्ठकार्यता युक्तेत्यर्थः ॥७५॥

৭৪। তৃষ্ণাতুর জন যেমন জলগণ্ডুষ পাইতে অভিলাষ করে, রাজা যুধিষ্ঠিরও সেইরূপ প্রতীজ্ঞা অনুসারে যুদ্ধে শত্রু সংহার করিবার আশায় আমাকেই কেবল স্মরণ করিতেছেন।

৭৩। वही पुरुष वास्तवमें पुरुष है, जिसका नाम सभ्यलोगोंसे गौरवके साथ लिये जानेपर सुननेवालोंके भेज निगल जाता है (अर्थात् दवा डालता है) और जिसका नाम शत्रुलोग भी पसन्द करते हैं।

७४। प्यासा मनुष्य जिसप्रकार पानीका चुल्लू चाहता (अर्थात् उसपर दृष्टि दिये रहना) है उसीप्रकार राजा युधिष्ठिर भी प्रतीज्ञाके अनुसार शत्रुओंको मारनेकी आशासे केवल मुझे स्मरण कर रहे हैं।

कथं वादीयतामर्वाङ्मुनिता धर्म्मरोधिनी।
आश्रमानुक्रमः पूर्व्वैः स्मर्य्यते न व्यतिक्रमः ॥७६॥

अन्वयः—धर्म्मरोधिनी अर्व्वाक् मुनिता कथं वा आदीयताम् पूर्व्वैः आश्रमानु क्रमः स्मर्य्यते न व्यतिक्रमः (स्मर्य्यते)। वाच्यः—रोधिनीं मुनितां आददे, पूर्व्वे आश्रमानुक्रमं स्मरन्ति ॥७६॥

यदुक्तम् 'विजह्योहि रणोत्साहम्' इत्यादि, तत्रोत्तरमाह—कथमिति। धर्म्मरोधिनी धर्म्मविरोधिनी अर्वाग्गार्हस्थ्यात्प्रागेव मुनिता वानप्रस्थत्वं चतुर्थाश्रमता वा—वर्णप्रक्रमेण तस्य विधानात् 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनाच्च क्षत्रियस्यापि कैश्चिदिष्टत्वात्। तदेतत्सम्यग्विवेचितमस्माभिः रघुवंशसञ्जीवन्याम्—'स किलाश्रममन्त्य-माश्रितः' इत्यत्र। कथं वादीयतां मया कथं वाङ्गीक्रियताम्। संप्रश्ने लोट्। तथाहि—पूर्वैर्मन्वादिभिराश्रमानुक्रमः स्मर्य्यते न तु व्यति-क्रमः। 'ब्रह्मचारी भूत्वा गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्' इति श्रुत्यनुसारादित्यर्थः। एतदपि 'चत्वार आश्रमाः' इत्येतत्पक्षमाश्रित्योक्तम्। 'यदि चेद् वैराग्यं तदा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वनाद्वा' इति व्युत्क्रमपक्षस्यापि श्रवणात्। सामान्येन विशेषसम-र्थनरूपोऽर्थान्तरन्यासः ॥ ७६ ॥

৭৫। যে ব্যক্তি বিপৎকালে প্রভুর নিদেশ পালনে বিমুখ হয়, শশাঙ্কের কলঙ্কের ন্যায় সেই ব্যক্তি বিমল বংশের কলঙ্ক স্বরূপ।

৭৬। আমি গৃহস্থাশ্রমের পূর্ব্বে ধর্ম্ম বিরোধী বাণপ্রস্থরূপ চতুর্থাশ্রম কিরূপে অবলম্বন করিতে পারি? প্রাচীন মন্বাদি শাস্ত্রকর্ত্তারা আশ্রমের অনুক্রমই ব্যবস্থা করিয়া থাকেন, আশ্রম ব্যতিক্রমের নহে।

७५। जो व्यक्ति विपत्तिके समयमें स्वामीके आज्ञापालन करनेसे मुहफेर लेता है, वह निर्मल चन्द्रमाके कलङ्कसी तरह अपने वंशका कलङ्क है।

७६। गृहस्थाश्रमके पहले धर्म्मसे विरुद्ध वानप्रस्थरूप चौथा आश्रमको मैं क्यों मैं धारण कर सकता, मनु आदि शास्त्र कर्त्ताओंने क्रमानुसार आप धर्म पालने कहा है क्रम विरुद्ध नहीं ।

आसक्ता धूरियं रूढ़ा जननी दूरगा च मे ।
तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान्नृप: ॥७७॥
स्वधर्म्ममनुरुन्धन्ते नातिक्रममरातिभि: ।
पलायन्ते कृतध्वंसा नाहवान्मानशालिन: ॥७८॥

अन्वय: । आसक्ता रूढ़ा इयं धू: दूरगा जननी च तथा नृप: अपि आचारवान् मे स्वातन्त्र्यं तिरस्करोति। वाच्य—अनया धूरा दूरगया जनन्या नृपेण आचारवता ज्यायसा स्वातन्त्र्यं तिरस्क्रियते ॥ ७८ ॥

अन्वय: । मानशालिन: स्वधर्म्मम् अनुरुन्धन्ते, अतिक्रमं न, ( अनुरुन्धन्ते ) अरातिभि: कृतध्वंसा: ( सन्त: ) आहवात् न पलायन्ते । वाच्य—मानशालिभि: स्वधर्म्म: अनुरुध्यते, कृतध्वंसै: न पलाय्यते ॥ ७७ ॥

ननु भवान् गृहस्थ एव तत्कथमर्वाङ्मुनित्वविरोध इत्याशङ्क्य सत्यं गृहस्थोऽस्मि, तथापि कृतनिखिलगृहस्थकर्त्तव्यस्यैव वानप्रस्थाधिकारो न गृहस्थमात्रस्य। न चाहमद्यापि कृतकृत्य इत्युत्तरमाह—आसक्तेति। आसक्ता लग्ना अवश्यं कर्त्तव्या इत्यर्थ:। रूढ़ा प्रसिद्धा महतीत्यर्थ:। इयं पूर्वोक्ता धू: वैर निर्यातनरूपा। दूरगा दूरवर्त्तिनी जननी च मातापि। तथा नृपोऽप्याचारवान् तपोधिक इत्यर्थ:। तत्रापि ज्यायान् ज्येष्ठ: नृपो युधिष्ठिरश्च मे मम स्वातन्त्र्यं स्वाच्छन्द्यं तिरस्करोति दूरीकरोति। आश्रमान्तरं प्रतिबध्नातीत्यर्थ:। तिरस्करोतीति प्रत्येकमभिसम्बध्यते। अन्यथा बहुवचनप्रसङ्गात् ॥७७॥

उक्तमर्थमुपसंहरति—स्वधर्म्ममिति। मानशालिन: स्वधर्म्मं क्षात्रधर्म्मम् अनुरुन्धन्तेऽनुवर्तन्ते अतिक्रमं स्वधर्म्मातिक्रमं न अनुरुन्धन्ते। तत:

৭৭। এই অবশ্যকর্ত্তব্য শত্রুসংহারের গুরুভার আমি গ্রহণ করিয়াছি মাত্র। আমার দূরে স্থিতা মাতা ও আচারনিষ্ঠ ভ্রাতা যুধিষ্ঠির আমার স্বেচ্ছাচার দূরীভূত করিয়াছেন।

७७। इस अवश्य करने योग्य शत्रु संहार करनेका भार मैंने अच्छी तरह स्वीकार कर लिया है। मेरी स्वतन्त्रताको दूर रहनेवाली माता और सदाचारी बड़े भाई युधिष्ठिरने छुड़ा दिया।

विच्छिन्नाबभ्रविलायं वा विलीये नगमूर्धनि।
आराध्य वा सहस्राक्षमयशः शल्यमुद्धरे ॥७९॥
इत्युक्तवन्तं परिरभ्य दोर्भ्यां तनूजमाविष्कृतदिव्यमूर्त्तिः।
अघोपघातं मघवा विभूत्यै भवोद्भवाराधनमादिदेश ॥८०॥

अन्वयः। (अहम्) विच्छिन्नाभ्रविलायं नगमूर्द्धनि विलीये वा, वा सहस्राक्षम् आराध्य अयशः शल्यम् उद्धरे। वाच्य...मया अयशः शल्यम् उद्धियते ॥ ७९ ॥

किमत आह—अरातिभिरिति। अरातिभिः कृतध्वंसाः कृतापकाराः सन्तः आहवात् न पलायन्ते। अयमेव स्वधर्म्मानुरोध इत्यर्थः। 'उपसर्गस्यायतौ' इति रेफस्य लत्वम्। अत्र मनुः—'न निवर्त्तेत सङ्ग्रामात् चात्रधर्म्ममनुस्मरन्' इति। अत्रोत्तरवाक्यार्थं प्रति पूर्व्ववाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥७८॥

किम्बहुना ममायं निश्चयः श्रूयतामित्याह—विच्छिन्नेति। विच्छिन्नं वाताहतं यदभ्रं तदीव विलियेति विच्छिन्नाभ्रविलायं यथा तथा। 'उपमाने कर्म्मणि च' इति कर्त्तर्युपपदे णमुल्। नगमूर्द्धनि अस्मिन् गिरिशृङ्गे विलीये विशीर्यें वा। कषादिषु यथाविध्यनुप्रयोगः। यद्वा सहस्राक्षमिन्द्रमाराध्य अयशः एव शल्यं तदुद्धरे उद्धरिष्यामि। न तु गत्यन्तरमङ्क्त्यर्थः। वाशब्दोविकल्पे ॥ ७९

৭৮। মানশালী ক্ষত্রিয়গণ স্বধর্ম্মের অনুবর্ত্তন করেন কিন্তু অতিক্রম করেন না। তাহারা শত্রুকর্ত্তৃক পরাজিত হইলেও সমর হইতে পলায়ন করেন না।

৭৯। হয় আমি বায়ুবিতাড়িত মেঘখণ্ডের ন্যায় এই পর্ব্বতশিখরে বিলয় যাইব, নতুবা সহস্রাক্ষ ইন্দ্রকে আরাধনা করিয়া অরাতিরূপ শল্য উদ্ধার করিব।

७८। मान धारण करनेवाले क्षत्रियलोग अपने धर्म्मकके अनुसार व्यवहार करते हैं उसको उल्लङ्घन नहीं करते। वे शत्रुओंसे हार खाने पर भी लड़ाई नहीं भगते।

७९। यही निश्चय किया है कि वायुसे छिट फुट हुए बादलाके टुकड़ेको तरह इसी पर्व्वतकी चोटी विला (जब) जाऊंगा नहीं तो हजार नेत्रवाले इन्द्रको आराधना कर पराजय रूप शल्य (शस्त्रादिकोंकी नोक) निकाल फेंकूंगा।

प्रीते पिनाकिनि मया सह लोकपालै-
र्लोकत्रयेऽपि विहिताप्रतिवार्य्यवीर्य्यः ।
लक्ष्मीं समुत्सुकयितासि भृशं परेषा-
मुच्चार्य्य वाचमिति तेन तिरोबभूवे ॥८१॥

इति भारविकृतौ महाकाव्ये किरातार्ज्जुनीये
एकादशः सर्गः ।

---

अन्वयः । मघवा इत्युक्तवन्तं तनूजम् आविष्कृतदिव्यमूर्त्तिः ( सन् ) दोर्भ्यां परिरभ्य विभूत्यै अघोपघातं भवोद्भवाराधनम् आदिदेश । वाच्य...मघोना आविष्कृतदिव्यमूर्त्तिना—भवोद्भवाराधनम् आदिदिशे ॥ ८० ॥

अन्वयः । पिनाकिनि प्रीते लोकपालैः सह मया लोकत्रये अपि विहिताप्रतिवार्य्यवीर्य्यः ( सन् ) परेषां लक्ष्मीं भृशं समुत्सुकयिता असि, इति वाचम् उच्चार्य्य तेन तिरोबभूवे । वाच्य—विहिताप्रतिवार्य्यवीर्य्येण ( त्वया ) लक्ष्मीः समुत्सुकयितासे, स तिरोबभूव ॥ ८१ ॥

इतीति । मघवा इन्द्रः इत्युक्तवन्तं तनूजं पुत्रमर्ज्जुनम् आविष्कृता प्रकटिता दिव्यमूर्त्तिर्निजरूपं येन स तथोक्तः सन् दोर्भ्यां बाहुभ्यां परिरभ्य विभूत्यै श्रेयसे । उपहन्यतेऽनेनेत्युपघातम् । करणे घञ्प्रत्ययः, अघानां दुःखानामुपघातम् अघोपघातं भवः संसारस्तस्योद्भवः कारणमिति भवोद्भवः शिवस्तस्याराधनमुपासनमादिदेश । शिवमुद्दिश्य तपश्चरेत्याज्ञापयामासेत्यर्थः ॥८०॥

৮০। অর্জ্জুন এই কথা বলিলে, ইন্দ্র স্বীয় দিব্যমূর্ত্তিতে প্রকাশিত হইয়া, বাহুযুগল বিস্তারপূর্ব্বক তাহাকে আলিঙ্গন করিলেন এবং শ্রেয়োলাভের নিমিত্ত দুঃখহারী জগৎকারণ মহাদেবের আরাধনার্থ তাহাকে আদেশ করিলেন।

८०। उनके पुत्र अर्जुनने ये सब बातें कहीं तब इन्द्र अपनी दिव्य मुर्त्ति प्रगट कर फैलाही दोनों भुजाओंसे उन्हें छातीमें लगा लिया और कल्याण पानेके लिये दुःखहरण करनेवाले और संसारको आदि कारण शिवजीकी आराधनाका उपदेश दिया।

# द्वादशः सर्गः ।

—(*)—

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं
विधिवत् तपांसि विदधे धनञ्जयः ॥१॥

अन्वयः । अथ रुचिरवदनः धनञ्जयः वासवस्य वचनेन त्रिलोचनं क्लान्तिरहितं यथा तथा अभिराधयितुं तपांसि विधिवत् विदधे । वाच्य—रुचिरवदनेन धनञ्जयेन तपांसि विदधिरे । १ ।

प्रीत इति । पिनाकिनि शिवे प्रीते सति लोकपालैः सह मया लोकत्रयेऽपि विहितं दत्तमप्रतिवार्य्यमनिवार्य्यं वीर्य्यं यस्य स तथोक्तः सन् परेषां शत्रूणां लक्ष्मीं भृशं समुत्सुकयितासि समुत्सुकां त्वयि अनुरक्तां कर्त्तासि । पुनराहरिष्यसीत्यर्थः । वीरभोग्याः सम्पद इति भावः । उत्सुकशब्दात् 'तत्करोति' इति ण्यन्तात् कर्त्तरि लुट् । इति वाचमुच्चार्य्य तेनेन्द्रेण तिरोबभूवेऽन्तर्दधे । भावे लिट् ॥ ८१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्याया-
मेकादशः सर्गः समाप्तः ॥

———

৮১। মহাদেব প্রীত হইলে লোকপালগণের সহিত আমি তোমার এমন অনিবার্য্য বীর্য্য বিধান করিব যাহা ত্রিভুবনের কোথায়ও প্রতিহত হইবে না। তুমি তদবস্থায় শত্রুলক্ষ্মীকে নিজের প্রতি অতিশয় অনুরাগিণী করিতে পারিবে। অর্থাৎ শত্রু পরাজয় করিতে সমর্থ হইবে।

८१। महादेवजीके प्रसन्न हो जाने पर लोकपालोंके साथ मैं तुम्हें ऐसा अनिवार्य्य पराक्रम दूंगा जो तीनों लोकमें कहीं नहीं रुक सकता। उस समय तुम शत्रुओंकी लक्ष्मीको अपनी ओर अत्यन्त उत्कण्ठित कर ( ललचा ) ये सकोगे अर्थात् शत्रुओंको हटानेमें समर्थ हो जाओगे इतनी बातें कह कर अन्तर्धान हो गये।

अभिरश्मिमालि विमलस्य
धृतजयधृतेरनाशुषः।
तस्य भुवि बहुतिथास्तिथयः
प्रतिजग्मुरेकचरणं निषीदतः॥ २॥

अन्वयः। अभिरश्मिमालि भुवि एकचरणं निषीदतः विमलस्य धृतजयधृतेः अनाशुषः तस्य बहुतिथाः तिथयः जग्मुः। वाच्य—बहुतिथाभिः तिथिभिः प्रतिजग्मे॥ २॥

अथेति। अथेन्द्रतिरोधानानन्तरं रुचिरवदनः इन्द्रसाक्षात्कारसन्तोषात् प्रसन्नमुखः धनञ्जयोऽर्ज्जुनः वासवस्य वचनेन उपदेशेन त्रिलोचनं शिवं क्लान्तिरहितं यथा तथाभिराधयितुं प्रसादयितुं तपांसि विधिवत् विध्यर्हं यथाशास्त्रमित्यर्थः। 'तदर्हम्' इति वतिप्रत्ययः। विदधे चक्रे। अस्मिन् सर्गे उद्गतावृत्तम्—'सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता। त्र्यङ्घ्रिगतभनजला गयुताः सजसाजगौ चरणमेकतः पठेत्॥' इति लक्षणात्॥ १॥

अभिरश्मीति। अभिरश्मिमालि अभिसूर्य्यं सूर्य्याभिमुखं भुवि एकचरणं निषीदतः एकचरणेन तिष्ठतः विमलस्य बाह्यान्तरशुद्धिमतः। धृता जयधृतिर्जयेच्छा येन तस्य अनाशुषोऽनश्नतः 'उपेयिवाननाश्वाननूचानश्च' इति निपातः। तस्यार्ज्जुनस्य बहूनां पूरणाः बहुतिथाः बहुसंख्यका इत्यर्थः। 'तस्य पूरणे डट्'। 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमः। तिथयः दिनानि प्रतिजग्मुः। अत्र तिथिशब्दः पुंलिङ्गः। 'तदाद्यास्तिथयो द्वयोः' इत्यभिधानात्। अन्यथा बहुतिथा इत्यत्र टित्वात् ङीप् स्यात्॥ २॥

১। অনন্তর ইন্দ্রদর্শনে উৎফুল্লবদন অর্জ্জুন ইন্দ্রের বচন অনুসারে অক্লান্তভাবে ত্রিলোচনের প্রসাদলাভ করিবার জন্য তপস্যা করিতে লাগিলেন।

২। অর্জ্জুন সূর্য্যাভিমুখে ভূমিতে একপদে দণ্ডায়মান হইয়া অবস্থান করিতে লাগিলেন। তাহার বাহ্যাভ্যন্তর নির্ম্মল হইল, তিনি জয়ের আশায় অনাহারে অবস্থান করিলেন। এইভাবে তাহার বহুদিন অতীত হইয়া গেল।

१। इसके पीछे इन्द्रके दर्शनसे मुंह अत्यन्त प्रसन्न किये अर्जुन इन्द्रके कहे अनुसार त्रिलोचन का प्रसाद पानेके लिये ग्लानिसे रहित हो अर्थात् उत्साहके साथ तपस्या करने लगे।

वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्य्यमविभाव्यवैभवम् ॥३॥

न पपात सन्निहितपक्ति-
सुरभिषु फलेषु मानसम्।
तस्य शुचिनि शिशिरे च पय-
स्यमृतायते हि सुतपः सुकर्म्मणाम् ॥४॥

अन्वयः। पाण्डवः सततं वपुषः इन्द्रियाणाञ्च उपतपनेषु असुखेषु नगपतिः इव स्थिरतां व्याप, तथा हि महतां धैर्य्यम् अभिभाव्यवैभवम्। वाच्य—पाण्डवेन नगपतिना इव स्थिरता व्याप्यं, धैर्य्येण अभिभाव्यवैभवेन (भूयते) ॥ ३ ॥

अन्वयः। तस्य मानसं सन्निहितपक्तिसुरभिषु फलेषु तथा शुचिनि शिशिरे च पयसि न पपात, तथाहि सुकर्म्मणां सुतपः अमृतायते। वाच्य—मानसेन न पेते, सुतपसा अमृताय्यते। ४ ॥

वपुरिति। पाण्डवोऽर्जुनः सततं वपुषः इन्द्रियाणां च उपतपनेषु सन्तापकरेषु करणे ल्युट्। असुखेषु अनशनादिदुःखेष्वपि नगपतिर्गिरीन्द्र इव स्थिरतां दार्ढ्यं व्याप प्राप। तथाहि—महतां धैर्य्यमविभाव्यं दुर्बोधं वैभवं सामर्थ्यं यस्य तत्तथोक्तम्। धीराणामकिञ्चित्करं दुःखमिति भावः ॥३॥

नेति। तस्यार्जुनस्य मानसं मनः सन्निहितानि समीपस्थानि यानि पक्तिसुरभीणि पाकसुगन्धीनि तेषु फलेषु। तथा शुचिनि स्वच्छे शिशिरे

৩। অর্জ্জুন ইন্দ্রিয়নিরোধে ও দুঃখসহনে হিমালয়ের ন্যায় দৃঢ়তা অবলম্বন করিলেন। বস্তুতঃ মহৎ ব্যক্তিগণের ধৈর্য্য অভাবনীয়।

२। अर्ज्जुन सूर्य्यके सामने पृथ्वीपर एक पैरसे दण्डेकी तरह खड़े रहने लगे। उनके बाहर (शरीर) और भीतर (मन) निर्म्मल हो गये। वे विजयकी आशासे भोजन त्याग दिया। इसी प्रकार उनके बहुत दिन बीत गये।

३। अर्ज्जुन इन्द्रियोंको रोक रखने और दुःख सहनेमें हिमालयकी तरह दृढ़ हो गये। वास्तवमें बड़े लोगोंका धैर्य्य (साधारण लोगोंको) समझमें आने योग्य नहीं होता।

न विसिस्मिये न विषसाद
मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी
न हतः स्म तस्य हतशक्तिपेलवे ॥५॥

अन्वयः । सः न विसिस्मिये, न विषसाद, मुहुः अलसतां न च आददे, हतशक्तिपेलवे रजस्तमसी तस्य उरुधृति सत्त्वं न हतः स्म । वाच्य—तेन न विसिस्मिये. विषेदे, आददे ; हतशक्तिपेलवाभ्यां रजस्तमोभ्यां सत्त्वं न हन्यते । ५ ।

शीतले पयसि च न पपात । न किञ्चिदाचकाङ्क्षेति भावः । प्राणधारणं तु तस्य तप एवेत्याह—तथाहि—सुकर्म्मणां सुकृतिनां शोभनं तपः सुतप एवामृतायतेऽमृतवदाचरति । किं तपस्तृप्तानां तर्पणान्तरैरिति भावः । 'लोहितादिडाज्भ्यः क्यष्' । 'वा क्यषः' इत्यात्मनेपदम् । लोहितादिराकृतिगणः ॥ ४ ॥

नेति । सोऽर्ज्जुनो न विसिस्मिये अहो महत्तपस्तप्यामि इति न विस्मयं जगाम । 'तपः क्षरति विस्मयात्' इति स्मृतेरिति भावः । न विषसाद फलविलम्बाद्गतोत्साहो न बभूव । 'विषादश्चेतसो भङ्गः' इति लक्षणात् । 'सदिरप्रतेः' इति षत्वम् । मुहुरलसतां तपसि मन्दोद्यमलञ्च नागमत् । किञ्च—हतशक्तिनी हतसारे अतएव पेलवे भङ्गुरे ते हतशक्तिपेलवे रजस्तमसी गुणौ उरुधृति महासारं तस्यार्ज्जुनस्य सत्त्वं सत्त्वगुणं न हतः स्म न हतवती । हन्तेः 'लट् स्मे' इति भूतार्थे लट् ॥५॥

४ । अर्ज्जुनের অন্তঃকরণ নিকটস্থ পক্ক সুরভি ফলে নির্ম্মল শীতল জলে আকৃষ্ট হইত না । বস্তুতঃ সুকৃতিদিগের সুতপস্যাই অমৃতবৎ ফলদায়ক হয় ।

৫ । মহৎ তপস্যা করিতেছি এই মনে করিয়া অর্জ্জুনের চিত্ত কখনও বিস্ময়ে বিক্ষুব্ধ হয় নাই ; ফললাভে বিলম্ব ঘটিতেছে বলিয়া বিষণ্ণও হয় নাই, এবং উৎসাহের শিথিলতাও ঘটে নাই । দুর্ব্বল হেতু ভঙ্গুর রজঃ ও তমোগুণ তাহার প্রবল সত্ত্বগুণকে বিনষ্ট করিতে পারে নাই ।

४ । अर्ज्जुनका मन, पक्क सुगन्धवाले फलों या और शीतल जलकी ओर न झुका । वास्तवमें पुण्यकरनेवालोंकी अच्छी तपस्या ही अमृतकी तरह फल देनेवाली है ।

तपसा कृशं वपुरुवाह
स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां
किमिवास्ति यन्न सुकरं मनस्विभिः ॥६॥
ज्वलतोऽनलादनुनिशीथ-
मधिकरुचिरम्भसां निधेः ।

अन्वयः । सः तपसा कृशं (तथापि) विजितजगत्त्रयोदयं तत्त्वविदाम् अपि त्रासजननं वपुः उवाह, यत् मनस्विभिः न सुकरं तत् किम् इव न अस्ति । वाच्य—तेन...वपुः ऊहे, येन सुकरेण (भूयते) तेन केन भूयते । ६ ॥

तपसेति । सोऽर्ज्जुनस्तपसा कृशं तथापि विजितो जगत्त्रयस्य भुवनत्रयस्य उदय उत्कर्षः येन तत्तथोक्तम् । किञ्च तत्त्वविदामपि लोकहितार्थं तत्त्वं जानतामपि त्रासजननं भयङ्करं वपुरुवाह वहति स्म । न चैतच्चित्रमित्याह—किमिति । यत् मनस्विभिर्न सुकरं तत् किमिवास्ति ? न किमपीत्यर्थः । इवशब्दो वाक्यालङ्कारे । 'मनस्विनाम्' इति पाठे शेषे षष्ठी स्यादेव, कृद्योगलक्षणायाः 'न लोक—' इत्यादिना निषेधात् ॥ ६ ॥

৬। অর্জ্জুনের তপস্যাহেতু শরীর কৃশ হইয়াছিল তথাপি সেই শরীর যেন ত্রিজগতের উৎকর্ষ জয় করিয়াছিল এবং তত্ত্ববিদ্‌গণেরও ভয়জনক হইয়াছিল। মনস্বীদিগের পক্ষে সুগম নহে এমন কি আছে ?

५। बड़ी कठिन तपस्या कर रहा हूं यह विचार कर अर्ज्जुनका मन आस्चर्यमें न पड़ा और फल पानेमें विलम्ब हो रहनेसे खिन्न भी न हुआ। उत्साह में शिथिलता भी न आयी। दुर्व्वल वल्कि टूटे हुए रजोगुण और तमोगुण अर्जुन के प्रवल सत्त्वगुणको नष्ट न कर सके।

६। वे अर्जुन तपस्याके कारण अत्यन्त पतला हो गये। तो भी वह शरीर मालूम पड़ता था कि तीनो लोककी महिमा जीत रहा और तत्त्वज्ञानियोंको भी डरा रहा है। ऐसो कौन वस्तु है जो मनस्वीलोगोंके लिये सुलभ न हो।

धैर्य्यगुणमवजयन् विजयी
ददृशे समुन्नततरः स शैलतः ॥ ७ ॥

जपतः सदा जपमुपांशु
वदनमभितो विसारिभिः ।
तस्य दशनकिरणैः शुशुभे
परिवेषभीषणमिवार्कमण्डलम् ॥८॥

अन्वयः । विजयी सः अनुनिशीथं ज्वलतः अनलात् अधिकरुचिः तथा अम्भसां निधिः धैर्य्यगुणम् अवजयन् शैलतः समुन्नततरः ददृशे (लोकैः) । वाच्य—विजयिनं तम् अधिकरुचिं—अवजयन्तं समुन्नततरं ददृशुः (लोकाः) । ७॥

अन्वयः । सदा उपांशु जपं जपतः तस्य वदनम् अभितः विसारिभिः दशनकिरणैः परिवेषभीषणम् अर्कमण्डलम् इव शुशुभे । वाच्य—वदनेन—भीषणेन अर्कमण्डलेन इव शुशुभे । ८॥

ज्वलत इति । विजयो सोऽर्ज्जुनोऽनुनिशीथमर्द्धरात्रे, विभक्त्यर्थे अव्ययीभावः । 'अर्द्धरात्रनिशीथौ द्वौ' इत्यमरः । ज्वलतो दीप्यमानात् अनलादग्नेरधिकरुचिः दीप्यमानस्तथा अम्भसां निधेर्धैर्य्यं गाम्भीर्य्यं तदेव गुणस्तमवजयन् । किञ्च—शैलतः शैलादपि समुन्नततरो ददृशे दृष्टः । अत्र रुच्यादिभिरनलाद्याधिक्यासम्बन्धे सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः ।७।

जपत इति । सदा उपांशु रहः गूढ़मित्यर्थः । 'रहश्चोपांशु चालिङ्गे' इत्यमरः । 'करणवदनशब्दमनुप्रयोग उपांशु' इति कौमारलक्षणम् । जप्यते इति जपस्तं जपम् मन्त्रमित्यर्थः । जपतः पठतस्तस्यार्ज्जुनस्य वदनं कर्त्तृ अभितो विसारिभिः प्रसरणशीलैर्दशनकिरणैर्हेतुभिः परिवेषभीषणमर्कमण्डलमिव शुशुभे । 'परिवेषस्तु परिधिरुपसूर्य्यकमण्डले' इत्यमरः ॥ ८ ॥

৭। সেই বিজয়ী অর্জ্জুন, অর্দ্ধরাত্রি সময়ে প্রজ্বলিত অগ্নিশিখা হইতেও যেন অধিকতর দীপ্তি ধারণ করিয়াছেন এবং সাগরের গাম্ভীর্য্য জয় করিয়াছেন—পর্ব্বত হইতেও অধিকতর উচ্চতা লাভ করিয়াছেন ।

७। वे बराबर विजय पानेवाले अर्जुन, जान पड़ते थे कि आधी रातमें जलती अग्निकी शिखा लू से भी बहुत अधिक दीप्ति धारण कर ली, समुद्रकी गम्भीरता जीत ली और पर्वतसे भी अधिक ऊंचे हो गये ।

कवचं स बिभ्रदुपवीतपदनिहितसज्यकार्मुकः।
शैलपतिरिव महेन्द्रधनुःपरिवीतभीमगहनो विदिद्युते ॥९॥

प्रविवेश गामिव कृशस्य
नियमसवनाय गच्छतः।
तस्य पदविनमितो हिमवान्
गुरुतां नयन्ति हि गुणा न संहतिः ॥१०॥

अन्वयः। कवचं बिभ्रत् उपवीतपदनिहितसज्यकार्मुकः सः महेन्द्रधनुःपरिवीतभीमगहनः शैलपतिः इव विदिद्युते। वाच्य—बिभ्रता—सज्यकार्मुकेण तेन—गहनेन शैलपतिना इव विदिद्युते ॥ ९ ॥

अन्वयः। नियमसवनाय गच्छतः कृशस्य तस्य पदविनमितः हिमवान् गां प्रविवेश इव, गुणाः हि गुरुतां नयन्ति, संहति न ( नयति )। वाच्य—नमितेन हिमवता गौः प्रविविशे, गुणैः गुरुता नीयते, संहत्या न ॥१०॥

कवचमिति। कवचं वर्म बिभ्रदुपवीतपदे यज्ञोपवीतस्थाने निहितमारोपितं सज्यं कार्मुकं येन स तथोक्तः। सोऽर्जुनो महेन्द्रधनुषा परिवीतं परिवेष्टितं भीमं गहनं वनं यस्य स शैलपतिरिव हिमवानिव विदिद्युते शुशुभे ॥८॥

৮। অর্জ্জুন সর্ব্বদা উপাংশু ( গূঢ় ) মন্ত্র জপ করিতেন, জপকালে তাঁহার মুখমণ্ডলের চারিদিকে দন্তপংক্তির কিরণজাল বিকীর্ণ হওয়াতে পরিধিপরিবেষ্টিত ভীষণ সূর্য্যমণ্ডলের ন্যায় শোভিত হইত।

৯। বর্ম্মধারী অর্জ্জুনের যজ্ঞোপবীতস্থানে জ্যাযুক্ত ধনুক স্থাপিত ছিল। সুতরাং তাঁহাকে ইন্দ্রধনুপরিবেষ্টিত ভীষণগহনবনশোভিত হিমালয়ের ন্যায় দেখাইত।

८। अर्जुन हमेशा उपांशु ( गुप्त अर्थात् कुछ मुंह खोलि ) जप किया करते थे उस समय उनके मुखमण्डलको चारों ओर दांतोंकी धारी ( पंक्ति ) से निकलती किरणोंके चमकनेसे वह ( भयानक मुखमण्डल ) परिधि ( मण्डल ) से घिरे सूर्य्यकी तरह शोभता था।

९। कवचधारण किये अर्जुनके यज्ञोपवीतके स्थान ( बांये कंधे ) पर ज्यायुक्त धनुष लटकी रहा था। बल्कि उनको इन्द्रधनुषसे युक्त और भयङ्कर तथा घने वनसे घिरे हिमालयकी तरह दिखला अर्थात् शोभित कर रहा था।

परिकीर्णमुद्यतभुजस्य
भुवनविवरे दुरासदम् ।
ज्योतिरुपरि शिरसो विततं
जगृहे निजान् मुनिदिवौकसां पथः ॥११॥

अन्वयः । उद्यतभुजस्य (तस्य) शिरसः उपरि विततं भुवनविवरे परिकीर्णं दुरासदं ज्योतिः मुनिदिवौकसां निजान् पथः जगृहे । वाच्य—विततेन परिकीर्णेन दुरासदेन ज्योतिषा निजाः पन्थानः जगृहिरे ॥ ११ ॥

प्रविवेशेति । नियमसवनाय नियमस्नानाय कृशस्य तपःकर्षितस्य तथा, 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति विश्वः । गच्छत-स्तस्यार्जुनस्य पदैः पादन्यासैर्विनमितो हिमवान् गां भुवं प्रविवेशेवेत्युत्-प्रेक्षा । ननु कृशस्य कथमियद्गौरवम् ? तत्राह—गुणाः सारादयो गुरुतां नयन्ति प्रापयन्ति हि । संहतिः सङ्घातः मूर्त्तिरिति यावत्, न नयति । अन्तःसारात् हि गौरवं भवति, न तु बाह्यात् स्थौल्यात् । तत्र च हेमपिण्डतूलपिण्डाविव निदर्शनमिति भावः ॥ १० ॥

परिकीर्णमिति । उद्यतभुजस्योर्द्ध्वबाहोस्तस्य शिरस उपरि । 'षष्ठ्यत-सर्थप्रत्ययेन' इति षष्ठी । विततं विस्तृतं भुवनयोर्विवरे द्यावापृथिव्यो-रन्तराले परिकीर्णं व्याप्तं दुरासदं दुर्द्धर्षं ज्योतिस्तेजो मुनीनां दिवौकसां निजान् नियतान् पथो मार्गान् जगृहे जग्राह प्रतिबबन्धेत्यर्थः ॥११॥

১০। তপস্যাকৃশদেহ অর্জ্জুন ব্রতবিহিত স্নানে গমন করিতে আরম্ভ করিলে তাহার পাদক্ষেপের চাপে হিমালয় অবনত হইয়া যেন ভূতলে প্রবেশ করিত। বাস্তবিক, গুণরাশিই গুরুত্ব জন্মায়, আকৃতি গুরুত্বের জনক নহে।

১১। উর্দ্ধবাহু অর্জ্জুনের মস্তকোপরি (তখন) এরূপ একটা প্রচণ্ড জ্যোতিঃ বিকীর্ণ হইল যে, তাহা স্বর্গ ও মর্ত্ত্যের মধ্যস্থলে পরিব্যাপ্ত হইয়া দেবতা ও মুনিগণের নিয়মিত পথ রুদ্ধ করিল।

१०। तपस्यासे पतला शरीर धारण किये अर्ज्जुन, नियमानुसार स्नान करने जाते थे तो उनके पैरके दबावसे हिमालय दब कर जान पड़ता था कि पृथ्वीके भीतर जा रहा है। वास्तवमें गुणोंका समूह ही गौरव बढ़ाता है आकार नहीं।

११। उस वक्त भुजा ऊपर भुजा उठाये अर्ज्जुनके सिर परसे जो एक प्रचण्ड ज्योति छिट रही थी, उसने स्वर्ग और मर्त्यलोकमें फैली रहकर देवताओं और मुनियोंको नियमित मार्गों (रास्ते) को रोक रखा था।

रजनीषु राजतनयस्य
बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे
शशिरश्मिसङ्गमयुजा नभः श्रिया ॥१२॥

महता मयूखनिचयेन
शमितरुचि जिष्णुजन्मना ।
ह्रीतमिव नभसि वीतमले
न विराजते स्म वपुरंशुमालिनः ॥१३॥

अन्वयः । बहुलसमये अपि रजनीषु राजतनयस्य धामभिः भिन्नतिमिरनिकरं नभः शशिरश्मिसङ्गमयुजा श्रिया न जहे । वाच्य—सङ्गमयुक् श्रीः नभः न जहौ । १२ ॥

अन्वयः । जिष्णुजन्मना महता मयूखनिचयेन शमितरुचि अंशुमालिनः वपुः ह्रीतम् इव नभसि न विराजते स्म ॥ वाच्य—शमितरुचिना वपुषा ह्रीतेन इव न विराज्यते स्म । १३ ॥

रजनीष्विति । बहुलसमये कृष्णपक्षेऽपि रजनीषु रात्रिषु राजतनयस्यार्ज्जुनस्य धामभिस्तेजोभिर्भिन्नस्तिमिरनिकरो यस्य तन्नभः शशिरश्मीनां सङ्गमेन हेतुना युजा सङ्गतया श्रिया तच्छ्रीतुल्यया श्रियेत्यर्थः । अत एव निदर्शनालङ्कारः । न जहे न त्यक्तम् । जहातेः कर्म्मणि लिट् । ज्योत्स्नातुल्यं ज्योतिर्जातमित्यर्थः ॥ १२ ॥

महतेति । जिष्णोरर्ज्जुनात् जन्म यस्य तेन । जन्मोत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिः । महता मयूखनिचयेन बहुकिरणसमूहेन शमितरुचि हतप्रभम् अंशुमालिनो वपुरर्कबिम्बं ह्रीतं जितत्वाल्लज्जितमिवेत्युत्-

১২। কৃষ্ণপক্ষীয় রজনীতেও রাজনন্দন অর্জ্জুনের মস্তক হইতে নির্গত তেজোরাশি দ্বারা নভোমণ্ডলের অন্ধকার দূরীভূত হওয়াতে গগনতল জ্যোৎস্নাযুক্ত শোভা দ্বারা পরিত্যক্ত হয় নাই। অর্থাৎ তখনও আকাশে জ্যোৎস্নাতুল্য জ্যোতিঃ থাকিত।

१२। कृष्णपक्षकी रातमें भी, राजकुमार अर्ज्जुनके शिरसे निकल रही किरणोंसे आकाशके अन्धकार दूर हो जाने पर आकाशमण्डल चांदनीकी शोभासे रहित नहीं हुआ। अर्थात् उस वक्त भी आकाशमें चांदनीकी तरह ज्योति छिटक रही थी।

तमुदीरितारुणजटांशु-
मधिगुणशरासनं जनाः ।
रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः ॥१४॥

अन्वयः। उदीरितारुणजटांशुम् अधिगुणशरासनं तं जनाः आसुरीः पुरीः मिमन्थिषुम् अनुदितललाटदृशं रुद्रम् इव ददृशुः ॥ वाच्य—जटांशुः अधिगुणशरासनः सः जनैः मिमन्थिषुः...ललाटदृक् रुद्र इव ददृशे ॥ १४ ॥

प्रेक्षा। वीतमले विमले मेघनीहाराद्यावरणरहितेऽपीत्यर्थः। नभसि न विराजते स्म ॥ १३ ॥

तमिति। उदीरिताः उद्गताः अरुणाः जटानाम् अंशवो यस्य तमधिगुणमधिज्यं शरासनं यस्य तमर्ज्जुनं जनाः सिद्धगणा आसुरीरसुरसम्बन्धिनीः पुरीर्मिमन्थिषुं मन्थितुमिच्छुम्। मथेः सन्नन्तादुप्रत्ययः। तथानुदिता उत्पन्ना ललाटे दृक् यस्य तं साक्षात्त्रिपुरविजयोद्यतमभालाक्षं रुद्रमिव ददृशुः। अत्र अभालाक्षस्य रुद्रास्यासम्भवात् स्वतःसिद्धोपमानासिद्धेर्नेयमुपमा, किन्तूत्प्रेक्षा। सा च अभालाक्षमित्युपमानादुपमेयस्य न्यूनत्वकथनार्थेऽन्वयव्यतिरेकिणोर्जीवितेत्यनयोरङ्गाङ्गिभावेन सङ्करः। उपमा तु व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ १४ ॥

১৩। অর্জ্জুনের দেহসমুৎপন্ন বিপুল তেজোরাশি দ্বারা প্রভাহীন সূর্য্য লজ্জিত হইয়াই যেন আর আকাশে রহিলেন না।

১৪। অর্জ্জুনের জটাজাল হইতে অরুণবর্ণ জ্যোতিঃ উদ্গত হইয়াছে, তিনি শরাসনে জ্যা যোজনা করিয়া আছেন দেখিয়া, সিদ্ধগণ তাঁহাকে ললাটনেত্রহীন অসুরপুরীধ্বংসাভিলাষী রুদ্রের ন্যায় দর্শন করিতে লাগিলেন।

१३। अर्जुनकी देहसे उत्पन्न अत्यन्त निर्मल सूर्य्यकी फैली हुई ज्योतिसे हार खा कर (इस लिये) जान पड़ता था कि लज्जित हो फिर आकाशमें रह न सकी।

१४। अर्जुनकी जटाओंसे लाल ज्योति निकल रही थी और वे धनुष पर प्रत्यंचा (तांत) चढ़ाये हुये थे, (उन्हें) देख कर सिद्ध लोग तीसरे नेत्रसे रहित और दैत्योंकी पुरी जलाने चाहनेवाले शिवजीकी तरह देखते थे।

मरुतां पतिः स्विदहिमांशु-
रुत पृथुशिखः शिखी तपः ।
तपुमसुकरमुपक्रमते
न जनोऽयमित्यवयये स तापसैः ॥१५॥
न ददाह भूरुहवनानि
हरितनयधाम दूरगम् ।
न स्म नयति परिशोषमपः
सुसहं बभूव न च सिद्धतापसैः ॥१६॥

अन्वयः । मरुतां पतिः स्वित्, अहिमांशुः उत, पृथुशिखः शिखी वा, असुकरं तपः तम् उप-क्रमते, अयं जनः न इति सः तापसैः अवययो । वाच्य—मरुतां पत्या अहिमांशुना, पृथुशिखिना उपक्रम्यते, तं तापसाः अवययुः ॥१५॥

अन्वयः । दूरगं हरितनयधाम भूरुहवनानि न ददाह, ( तथा ) अपः परिशोषं न नयति स्म, ( तथापि ) सिद्धतापसैः सुसहं न च बभूव । वाच्य—दूरगेण धाम्ना—वनानि न देहिरे, आपः परिशोषं न नीयन्ते स्म, सुसहेन न बभूवे ॥ १६।

मरुतामिति । मरुतां पतिः स्वित् देवेन्द्रो वा, अहिमांशुः उत सूर्य्यो वा, पृथुशिखः महाज्वालः शिखी पावको वा, असुकरं दुष्करं तपस्तम् सुपक्रमते । अयं जनः पुरुषः कश्चित् प्राकृतो नेति सोऽर्ज्जुनस्तापसैस्तपस्विभिः, 'अण् च' इति मत्वर्थीयोऽण्प्रत्ययः । अवययेऽवगतः । यातेरवपूर्वात् कर्म्मणि लिट् । अत्रेन्द्रत्वादिकमारोप्य जनत्वापवादात् साम्यमारोप्यापह्नवालङ्कारः । सामान्यलक्षणं तु—'निषिद्धविषये साम्यारोपो ह्यपह्नवः' इति ॥ १५ ॥

न ददाहेति । दूरगं व्यापकमित्यर्थः । हरितनयस्य इन्द्रसुतस्यार्ज्जुनस्य धाम तेजो भूरुहवनानि वृक्षखण्डान् न ददाह, अग्नि-

१८। ইনি কি মরুৎপতি ইন্দ্র ? কিংবা তীক্ষ্ণতেজা সূর্য্য ? অথবা মহান্ জ্বালাময় বহ্নি, দুষ্কর তপশ্চর্য্যায় যত্নবান্ হইয়াছেন ? তাপসেরা বুঝিলেন, ইনি মানুষ নহেন।

१५। ये क्या मरुताओंके स्वामी इन्द्र है ? या तीक्ष्ण ज्योति धारण किये सूर्य्य हैं अथवा अत्यन्त बड़ी ज्वालाओंसे युक्त अग्नि देवता धनुष धारण कर कठिन तप कर रहे हैं।

विनयं गुणा इव विवेक-
मपनयभिदं नया इव ।
न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः ॥१७॥

अन्वयः । अथो अशरणाः महर्षयः विनयं गुणाः इव, अपनयभिदं विवेकं नयाः इव, न्यायम् अवधयः इव शिवं शरणं ययुः । वाच्य—अशरणैः महर्षिभिः विनयः गुणैः इव, अपनयभित् विवेकः नयैः इव शिवः शरणं यये ॥ १७ ॥

वदिति भावः । तथा अपो जलानि परिशोषं न नयति स्म ; अर्कवदिति भावः, तथापीति शेषः । सिद्धाश्च तापसाश्च तैः सुसहं न बभूव । अतोऽस्यालौकिकं तेज इति भावः । अतएव दुःसहत्वदाहाद्यजनकत्वयोर्विरोधाद्विरोधाभासोऽलङ्कारः—'आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता' इति लक्षणात् ॥ १६ ॥

विनयमिति । अथो अनन्तरमशरणाः महर्षयो मुनयो विनयं शिक्षां गुणा औदार्य्यादय इव, अशिक्षितस्य तदभावादिति भावः । अपनयभिदं दुर्नीतिवारकं विवेकं सदसज्ज्ञानं नया नीतय इव । अविवेकिनो नीत्यभावादिति भावः । नीतिः षाड़्गुण्यप्रयोगः । नीयतेऽनेनेति न्यायो नियामकं प्रमाणं तम् अवधयः समया इव । अप्रामाणिकस्य समयोल्लङ्घनादिति भावः । शिवं त्रिनयनं शरणं रक्षितारम् 'शरणं गृहरक्षित्रोः' इत्यमरः । ययुर्जग्मुः शरणत्वेन प्रापुरित्यर्थः । अशरणाः शरणमिति च उपमास्वपि यथायोग्यं योज्यम् । उपमालङ्कारः ॥ १७ ॥

১৬। অর্জ্জুনের দূরব্যাপী তেজঃ বহ্নির ন্যায় বৃক্ষলতাদি দগ্ধ করে নাই, অথবা জলরাশি শুষ্ক করে নাই, তথাপি সেই তেজঃ সিদ্ধ তাপসগণের পক্ষে সহনীয় হয় নাই।

১৭। অনন্তর নিরাশ্রয় মহর্ষিগণ, গুণ যেমন বিনয়কে, নীতি যেমন দুর্নীতিবারক বিবেককে এবং অবধি যেমন ন্যায়কে আশ্রয় করে সেইরূপ শিবের শরণাপন্ন হইলেন।

१६। इन्द्रके पुत्र अर्जुनका बहुत दूर तक फैला हुआ तेज, आगकी तरह पेड़ों और लताओंको न जलाता था और जलाशयको न सोखता था, तो भी वह तेज तपस्वियोंके लिये असह्य हो गया।

परिवीतमंशुभिरुदस्त-
दिनकरमयूखमण्डलैः ।
शम्भुमुपहतदृशः सहसा
न च ते निचायितुमभिप्रसेहिरे ॥१८॥
अथ भूतभव्यभवदीश-
मभिमुखयितुं कृतस्तवाः ।
तत्र महसि ददृशुः पुरुषं
कमनीयविग्रहमयुग्मलोचनम् ॥१९॥

अन्वयः । उदस्तदिनकरमयूखमण्डलैः अंशुभिः परिवीतं शम्भुम् उपहतदृशः ते (महर्षयः) सहसा निचायितुं न अभिप्रसेहिरे । वाच्य—उपहतदृग्भिः तैः (महर्षिभिः) न सेहे ॥ १८ ॥

अन्वयः । अथ भूतभव्यभवदीशम् अभिमुखयितुं कृतस्तवाः (सन्तः) तत्र महसि कमनीयविग्रहम् अयुग्मलोचनं पुरुषं ददृशुः । वाच्य—कृतस्तवैः (सद्भिः) कमनीयविग्रहः अयुग्मलोचनः पुरुषः ददृशे ॥१९॥

परिवीतमिति । उदस्तं निरस्तं छादितं दिनकरमयूखमण्डलं यैस्तैः सूर्यतेजोविजयिभिरित्यर्थः । अंशुभिस्तेजोभिः परिवीतं व्याप्तं शम्भुं शिवमुपहतदृशः प्रतिहतदृष्टयस्ते महर्षयः सहसा झटिति निचायितुं निशामयितुम् द्रष्टुमित्यर्थः । 'चायृ पूजानिशामनयोः' इति धातोः 'शकधृष—' इत्यादिना तुमुन् । न अभिप्रसेहिरे न शेकुः ॥ १८ ॥

अथेति । अथ दृगुपघातानन्तरं भूतभव्यभवतां भूतभविष्यद्वर्त्तमानानामीशं देवमभिमुखयितुमभिमुखीकर्त्तुं कृतस्तवाः कृतस्तोत्राः सन्तः

১৮। সূর্য্যতেজোবিজয়ী জ্যোতিঃপরিব্যাপ্ত শিবকে, জ্যোতিঃপ্রতিহতদৃষ্টি সেই মহর্ষিগণ সহসা নেত্রগোচর করিতে সমর্থ হইলেন না।

१७। इसके उपरान्त निराश्रय महर्षिलोग, विनयकी पास गुणों की तरह, अनीति निवारण करनेवाले विवेक नीतिकी तरह और जिस प्रकार अवधि न्यायके पास आ जाती है ; उसी प्रकार शिवजीकी शरणमें आये।

१८। सूर्य्यके तेज जीतनेवाले तेजोंसे युक्त शिवजीकी ज्योतिसे दृष्टि रुक जानेके कारण आंखोंसे न देख सकी।

ककुदे वृषस्य कृतबाहु-
मकृशपरिणाहशालिनि ।
स्पर्शसुखमनुभवन्तमुमा-
कुचयुग्ममण्डल इवार्द्रचन्दने ॥२०॥

अन्वयः । अकृशपरिणाहशालिनि वृषस्य ककुदे आर्द्रचन्दने उमाकुचयुग्ममण्डले इव कृतबाहुं (अतः) स्पर्शसुखम् अनुभवन्तम् उन्नते तुहिनशैलशिरसि स्थितम् (तथापि) भुवनातिवर्त्तिना ओजसा साद्रिजलधिजलवाहपथम् विश्वम् अभ्यवानम्, अनुजानुमध्यम् अवसक्तविततवपुषा महाहिना अधिवेष्टितं (अतः) रवितेजसाम् अविधिना भूमिभृता अधिवेष्टितम् अखिलं लोकम् इव स्थितम्, तुहिनराशिविशदम् उपवीतसूत्रतां नीतम् उरगम् अनुरञ्जयता परिणाहिना विलसन्मरीचिना शितिना गलेन उपलक्षितं, मालतीसितकपालकुमुदम् अवरुद्धमूर्द्धजं (अतः) सुरसरित्पयसां शेषम् इव (स्थितम्) विसारि शशिधाम विभ्रतम् (पुरुषं ददृशुः)। वाच्य—कृतबाहुः अनुभवन् (स्थितः) अभ्यवानः अधिवेष्टितः अखिललोकः इव स्थितः...कपालकुमुदः अवरुद्धमूर्द्धजः शेषः इव (स्थितः) विभ्रत् (पुरुषः ददृशे) ॥ २०—२४ ॥

न त्वन्यथेति भावः । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । तत्र पूर्व्वोक्ते महसि तेजसि कमनीयविग्रहं रम्यमूर्त्तिमयुग्मानि त्रीणि लोचनानि यस्य तं पुरुषं ददृशुः ॥ १९ ॥

अथ पञ्चभिः पुरुषं विशिनष्टि—ककुद इत्यादिना । कीदृशं पुरुषम् ? अकृशेन महता परिणाहेन विशालतया शालत इति तथोक्तो । 'परिणाहो विशालता' इत्यमरः । वृषस्य वृषभस्य ककुदे अंसकूटे आश्रयोन्नते इति शेषः । आर्द्रचन्दने उमायाः कुचयुग्ममण्डले इव कृतबाहुं न्यस्तहस्तमतएव स्पर्शसुखमनुभवन्तम्, ककुदस्य तथाविधस्पर्शसुखकरत्वादिति भावः । उपमालङ्कारः ॥२०॥

১৯। অনন্তর ভূতভবিষ্যৎ ও বর্ত্তমানের অধীশ্বর মহাদেবের অনুকূলতা লাভের জন্য মহর্ষিগণ তাঁহার স্তব করিতে করিতে সেই তেজোরাশির মধ্যে কমনীয়-মূর্ত্তি ত্রিনয়ন পুরুষ দেখা গেল।

২০। সেই পুরুষ বিশালপীনোন্নত পার্ব্বতীর চন্দন-চর্চ্চিত স্তনমণ্ডলের ন্যায় বৃষ-ককুদে হস্তার্পণ করিয়া স্পর্শসুখ অনুভব করিতেছেন।

१९। इसके उपरान्त, भूत, भविष्यत् और वर्त्तमानके स्वामी शिवजीको अनुकूल करनेके लिये महर्षिलोग उनकी स्तुति करने लगे। उस समय उस प्रभापुञ्जमें सुन्दर शोभा धारण किये तीन आंखवाले पुरुषको दे । ।

स्थितमुन्नते तुहिनशैल-
शिरसि भुवनातिवर्त्तिना ।
साद्रिजलधिजलवाहपथं
सदिगश्नुवानमिव विश्वमोजसा ॥२१॥

अनुजानुमध्यमवसक्त-
विततवपुषा महाहिना ।
लोकमखिलमिव भूमिभृता
रवितेजसामवधिनाधिवेष्टितम् ॥२२॥

स्थितमिति । उन्नते तुहिनशैलशिरसि हिमवतः शिखरे स्थितम्, क्वचित् कोणे स्थितमित्यर्थः । तथापि भुवनातिवर्त्तिना सर्व्वलोकातिशायिनौजसा तेजसा अद्रिभिः पर्व्वतैर्जलधिभिः समुद्रैर्जलवाहपथेन आकाशेन च सह वर्त्तत इति तथोक्तम् । दिग्भिः सह वर्त्तत इति सदिक् । उभयत्रापि 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । विश्वमश्नुवानं व्याप्नुवन्तमिव स्थितमित्युत्प्रेक्षा । 'अशूङ् व्याप्तौ' इति धातोः शानच् ॥ २१ ॥

अनुजान्विति । जानुनोर्मध्येऽनुजानुमध्यम् । विभक्त्यर्थेऽव्ययीभावः । अवसक्तं लग्नं विततमायतं च वपुर्यस्य तेन महाहिना । अवसक्तिकाबन्धभूतेनेत्यर्थः । अधिवेष्टितमतएव रवितेजसामवधिना पर्य्यन्तभूतेन भूमि-

২১। তিনি অত্যুচ্চ হিমালয়শিখরে অবস্থিত, তথাপি যেন সর্ব্বলোকাতিশায়ী তেজঃপুঞ্জে পর্ব্বত, সাগর ও আকাশপথ সহ সমগ্র বিশ্ব ব্যাপিয়া অবস্থান করিতেছেন ।

२०। वे पुरुष, विशाल, मोटे और ऊंचे, बैलके ककुद ( कन्धेके ऊपर ओर ) पर हाथ रखे हुए थे। जान पड़ता था कि पार्व्वतीके चन्दनसे चित्रित स्तनमण्डल पर हाथ रखनेका सुख अनुभव कर रहे थे।

२१। वे ( केवल ) हिमालयकी पूड़ी चोटी पर खड़े थे। तो भी जान पड़ती थे कि सब लोगोंको दबानेवाले अपने तेजोंसे पर्व्वत, समुद्र और आकाशसे सारे संसारमें व्याप्त हो रहे हैं।

परिणाहिना तुहिनराशि-
विशदमुपवीतसूत्रताम् ।
नीतमुरगमनुरञ्जयता
शितिना गलेन विलसन्मरीचिना ॥२३॥

म्रुतमालतीसितकपाल-
कुमुदमुपरुद्धमूर्द्धजम् ।

स्थिता लोकालोकाचलेनाभिवेष्टितमखिलं लोकमिव स्थितमित्युपमा। 'अस्पूर्य्यम्पश्यापरभागो लोकालोकाचलः' इत्यागमः ॥ २२

परिणाहिनेति । पुनश्च—तुहिनराशिवद्विशदं शुभ्रमुपवीतसूत्रतां यज्ञोपवीतत्वं नीतं प्रापितमुरगं शेषाहिमनुरञ्जयता स्वगुणोपरक्तं कुर्वता श्यामीकुर्वतेत्यर्थः। परिणाहिना विशालेन विलसन्मरीचिना प्रसृतकिरणेन शितिना नीलेन गलेन कण्ठेनोपलक्षितम् । 'कण्ठो गलोऽथ ग्रीवायाम्' इत्यमरः। अत्रोरगस्य स्वधवलिमत्यागेनात्यजन्यनीलिमग्रहणात् तद्गुणालङ्कारः—'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः' इति लक्षणात् ॥ २३

२२। তিনি জানুদ্বয়ের মধ্যস্থিত বিশালদেহ মহাসর্প দ্বারা পরিবেষ্টিত, সুতরাং রবিরশ্মির পর্য্যন্তস্থিত লোকালোকবেষ্টিত অখিল লোকের ন্যায় অবস্থান করিতেছেন।

২৩। তাঁহার বিশাল কণ্ঠের নীলবর্ণ হইতে কিরণরাশি প্রসৃত হইতেছে। তদ্দ্বারা তদীয় যজ্ঞোপবীত সদৃশ তুষারবৎ ধবল সর্পরাজ অনুরঞ্জিত হইতেছে।

२२। वे दोनों जानुओं (घुटनों) तक लटकते एक बड़े सांप घिरे (इसीसे) सूर्य्यकी किरणोंसे चारों ओर चमकते लोकालोक पर्वतसे घिरे एक समग्र लोककी तरह विराज रहे थे।

२३। महादेवजीका कण्ठ नीले रंगका था, उससे दूर तक किरणें छिटक रहीं थी, उन (किरणोंसे), उनकी शरीरपर यज्ञोपवीतसे लटके और बर्फकी तरह उजला कोई बड़े सर्प परिपूर्ण थे।

शेषमिव सुरसरित्पयसां
शिरसा विसारि शशिधाम बिभ्रतम् ॥२४॥
॥कुलकम्॥
मुनयस्ततोऽभिमुखमेत्य
नयनविनिमेषनोदिताः ।
पाण्डुतनयतपसा जनितं
जगतामशर्म भृशमाचचक्षिरे ॥२५॥

अन्वयः । ततः मुनयः अभिमुखम् एत्य नयनविनिमेषनोदिताः ( सन्तः ) पाण्डुतनयतपसा जनितं जगताम् अशर्म भृशम् आचचक्षिरे । वाच्य—मुनिभिः...नोदितैः आचचक्षे । २५ ॥

सुतेति । सुनस्व—मालती जातीकुसुमम् । 'सुमना मालती जातिः' इति 'पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीह्यः फले' इति चामरः । तद्वत् सितं यत्कपालमेव कुमुदं तत्प्लुतमाप्लुतं येन तत्तथोक्तम् । अवरुद्ध-मूर्द्धजं व्याप्तशिरोरुहम् । अतएव सुरसरित् पयसां शेषमिव निर्य्याता-वशिष्टं गाङ्गम् अम्भः इव स्थितमित्यर्थः । उत्प्रेक्षालङ्कारः । विसारि विस्त्वरं शशिधाम चन्द्रतेजः शिरसा बिभ्रतम् पुरुषं ददृशुरिति पूर्व्वेण सम्बन्धः ॥ २४ ॥

२४ । তিনি মস্তকে উজ্জ্বলকিরণ শশিরশ্মি ধারণ করিতেছেন, তাহাতে জ্যোৎস্না-জালে তদীয় জাতীপুষ্প সদৃশ শ্বেতবর্ণ কপালকুমুদ প্লাবিত এবং কেশকলাপ পরিব্যাপ্ত হইতেছে। তাহা দেখিলে মনে হয় যেন, গঙ্গাগর্ভে সামান্য জলধারা প্রবাহিত হইতেছে।

२४ । महादेवजीके माथेके ऊपर उज्ज्वल किरणोंसे युक्त चन्द्रमाको ज्योति विराजती थी । उस चांदनीके प्रकाशसे उनके चमेलीके फुलको तरह ब्रह्मकपाल रूप कमल भरा हुआ था और केश भी परिपूर्ण थे । उसे देखने पर मालूम पड़ता था कि गङ्गामें एक साधारण जलकी धारा वह रही है ।

---

२४-२५ एतत् संख्यकश्लोकयोर्मध्ये एवमेधं पद्यं क्वचित् पुस्तके दृश्यते—

बहुभिश्च बाहुभिरहीनभुजगवलयैर्व्विराजितम् ।
चन्दनतरुभिरिवालघुभिः प्रबलायतैर्मलयमेदिनीधृतम् ॥

बहुभिरिति । अहीनां सर्पाणां मध्ये ये इनाः श्रेष्ठाः भुजगास्त एव वलयानि येषां तैः सर्पाभरणै-रित्यर्थः । बहुभिरनेकैर्बाहुभिः सहस्रभुजत्वात्तस्येति भावः । विराजितं शोभितं चन्दनतरुभिरनेकैः मलयमेदिनीधृतमिव स्थितम् । चन्दनतरवोऽप्यहीना महान्तो भुजगास्तेषां वलयो वेष्टनं येषां तैरिति । अलघुभिर्महद्भिः प्रबलाय ते आयताय तैरुभयविशेषणं प्रबलैर्दीर्घैरित्यर्थः । अथवा अमलाय-तैरमला निर्म्मला आयताय ते तथोक्तैः, उपमालङ्कारः ।

तरसैव कोऽपि भुवनैकपुरुष: पुरुषस्तपस्यति ।
ज्योतिरमलवपुषोऽपि रवेरभिभूय वृत्र इव भीमविग्रह: ॥२६॥

स धनुर्महेषुधि बिभर्त्ति
कवचमसिमुत्तमं जटा: ।
वल्कमजिनमिति चित्रमिदं
मुनिताविरोधि न च नास्य राजते ॥२७॥

अन्वय: । हे भुवनैकपुरुष, वृत्र: इव भीमविग्रह: क: अपि पुरुष: तरसा अमलवपुष: रवे: अपि ज्योति: अभिभूय तपस्यति । वाच्य—वृत्रेण इव भीमविग्रहेण केन पुरुषेण तपस्यते ॥ २६ ॥

अन्वय । स: महेषुधि धनु: कवचम् उत्तमम् असिं जटा: वल्कलम् अजिनं बिभर्त्ति ; इति इदं मुनिताविरोधि अस्य न राजते ( इति ) न चित्रम् । वाच्य—तेन...उत्तम: असि:...ध्रियन्ते । अनेन मुनिताविरोधिना न राज्यते ॥ २७ ॥

मुनय इति । ततो दर्शनानन्तरं मुनयोऽभिमुखमेत्य शिवस्येति शेष: । नयनविनिमेषेण नेत्रसंज्ञया नोदिता: प्रेरिता: सन्त: पाण्डुतनयस्यार्ज्जुनस्य तपसा जनितं तत् पूर्व्वोक्तं जगताम् अशर्म्म असुखम्, दु:खमित्यर्थ: । 'शर्म्मशातसुखानि च' इत्यमर: । अशं सम्यगाचचक्षिरे कथितवन्त: ॥२५॥

तरसेति । हे भुवनैकपुरुष, पुरुषोत्तम, वृत्र: वृत्रासुर: इव भीमविग्रह: कोऽपि अविज्ञात इत्यर्थ: । पुरुषस्तरसा बलात्कारेणैव । 'तरसी बलरंहसी' इति विश्व: । अमलवपुष: उज्ज्वलमूर्त्ते: रवेरपि ज्योतिरभिभूय तपस्यति तपश्चरति । 'कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरो:' इति क्यङ् ॥२६॥

२৫। অতঃপর মুনিগণ শিবের অভিমুখে গমনপূর্ব্বক তদীয় নেত্রসঙ্কেত দ্বারা অভিপ্রায় প্রকাশে আদিষ্ট হইয়া পাণ্ডুপুত্র অর্জ্জুনের তপস্যা দ্বারা জাগতিক দুঃখ সম্যক্‌রূপ বর্ণন করিতে লাগিলেন।

২৬। হে পুরুষোত্তম! বৃত্রাসুরের ন্যায় ভীষণদেহধারী কোন এক পুরুষ বল-পূর্ব্বক যেন সূর্য্যতেজোরাশি অভিভূত করিয়া তপস্যাচরণ করিতেছে।

२५। इसके पीछे मुनिलोग शिवजीके सामने जाकर उनकी आंखोंके सङ्केत (इशारे किया) अभिप्राय प्रगट करनेकी आज्ञा पाने पर, पाण्डुके पुत्र अर्ज्जुनकी तपस्यासे संसारमें जो दु:ख हो रहा था उसे अच्छी तरह वर्णन करने लगे ।

२६। हे पुरुषोत्तम! वृत्रासुरकी तरह भयानक शरीर धारण किये कोई एक जान पड़ता है कि बलपूर्वक ( जबरदस्ती ) सूर्य्यकी किरणोंको दबाकर तपस्या रहा है ।

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम्।
स्तम्भमनुभवति शान्तमरुद्-
ग्रहतारकागणयुतं नभस्तलम् ॥२८॥

अन्वयः। तस्य चलने अवनिः चलति, तथा करणनियमे (सति) शान्तमरुद्ग्रहतारकागणयुतं नभस्तलं सदिङ्मुखं स्तम्भम् अनुभवति। वाच्य—अवन्या चल्यते—युतेन नभस्तलेन सदिङ्मुखः स्तम्भः अनुभूयते ॥ २८ ॥

स इति। किञ्च—स पुरुषः महान्तौ इषुधी यस्य तत्महेषुधि धनुः कवचं वर्म उत्तममसिं खड्गं जटा वल्कं चीरम् अजिनं चर्म्म च बिभर्त्ति इत्येवंरूपमिदं विरुद्धवेशधारणं मुनिताविरोधि मुनित्वप्रतिबन्धकं तथाप्यस्य न राजते इति न। किन्तु राजते एवेत्यर्थः। चित्रमाश्चर्य्यम्। 'सम्भाव्य-निषेधनिवर्त्तने द्वौ प्रतिषेधौ' इति वामनः ॥ २७॥

चलन इति। किञ्च—तस्य पुंसश्चलनेऽवनिः पृथिवी चलति। तथा करणनियमे समाधिना इन्द्रियसंयमे सति। 'करणं साधकतमं क्षेत्रगात्रे-न्द्रियेष्वपि' इत्यमरः। सदिङ्मुखं दिक्सहितं शान्तैः स्तिमितैर्मरुतां वायूनां ग्रहाणां सूर्य्यादीनां तारकाणां नक्षत्रादीनां च गणैर्युतं नभस्तलं व्योम स्तम्भं निश्चलतामनुभवतीत्यर्थः। अतः विश्वातिशायिनो तस्य शक्तिरुपलभ्यत इति भावः ॥२८॥

२१। সেই পুরুষ সুবৃহৎ ধনুকদ্বয়, বর্ম্ম উত্তম অসি, জটা, বাকল এবং মৃগচর্ম্ম ধারণ করিতেছে। এ সকল মুনিতাবিরোধী হইলেও যে তাহার দেহে অশোভন হইতেছে তাহা নহে। বস্তুতঃ উহা দ্বারা তাহাকে সুশ্রীই দেখা যাইতেছে, ইহাই আশ্চর্য্য।

২৮। সেই পুরুষের দেহসঞ্চালনে ধরণী কম্পিতা হয়, তাহার ইন্দ্রিয় নিরোধের দ্বারা দিক্‌সকলের সহিত চন্দ্রসূর্য্যনক্ষত্রযুক্ত নভস্থল স্তম্ভিত হইয়া থাকে।

२७। वह पुरुष बहुत बड़ा धनुष, कवच, तलवार, जटा, छाल और मृग-चर्म्म धारण करता है, ये सब मुनियों धर्म्मके विरुद्ध होने पर भी ऐसी बात नहीं है कि वे शोभा न पाते हों। वास्तवमें उनसे देहकी शोभा अच्छी दिखाई पड़ती थी, यही आश्चर्य्यका विषय है।

२८। उस पुरुषका देह इधर उधर डोलता है तो पृथ्वी कांप उठती है; इन्द्रियोंको रोक रहने (अर्थात् समाधि योगसे) पर दिशाओंके साथ ही साथ सूर्य्य-चन्द्रमा और नक्षत्रोंसे युक्त आखण्डल निस्तब्ध हो (जकड़) जाता है।

स तदोजसा विजितसार-
ममरदितिजोपसंहितम्।
विश्वमिदमपिदधाति पुरा
किमिवास्ति यन्न तपसामदुष्करम्* ॥२९॥

विजिगीषते यदि जगन्ति
युगपदथ सञ्जिहीर्षति।
प्राप्तुमभवमभिवाञ्छति वा
वयमस्य नो विषहितुं क्षमा रुचः ॥३०॥

अन्वयः। सः ओजसा विजितसारम् अमरदितिजोपसंहितं तत् इदं विश्वं पुरा अपिदधाति यत् खलु तेन न सुकरं तत् किम् इव अस्ति। वाच्य—तेन...विश्वम् अपिधीयते। तेन केन इव भूयते। २९।

अन्वयः। सः जगन्ति युगपत् विजिगीषते यदि, अथ युगपत् सञ्जिहीर्षति, अभवं प्राप्तुम् अभिवाञ्छति वा ; ( न विघ्नः ) किन्तु वयम् अपि अस्य रुचः विषहितुं क्षमाः नो ( भवामः )। वाच्य—तेन जगन्ति विजिगीष्यन्ते, सञ्जिहीर्ष्यन्ते, अभिवाञ्छ्यते, अस्माभिः क्षमैः न ( भूयते )। ३०॥

न चैतदुपेक्ष्यमित्याशयेनाह—स इति। स पुमान् ओजसा विजितसारं निरस्तसत्त्वम्। अमरदितिजोपसंहितं सुरासुरसहितं तदिदं विश्वं पुरापिदधाति अपिधास्यतीत्यर्थः। शीघ्रमेव हरिष्यतीति भावः। 'निकटागामिके पुरा' इत्यमरः। 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। तथाहि—तथा यत् कर्म्म तपसामदुष्करं तत्किमिवास्ति न किञ्चित् तेन दुष्करमस्तीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥२९॥

২৯। সেই পুরুষ, স্বীয় তেজে অভিভূত করিয়া সুরাসুরগণের সহিত এই বিশ্বকে অবিলম্বেই হরণ করিবে। বাস্তবিক, তপস্যার অসাধ্য কার্য্যই বা কি আছে?

२९। वह पुरुष, अपने तेजोंसे हराकर देवताओं और दैत्योंके साथ सारे संसारका संहार शीघ्र ( जल्द ) ही कर डालेगा। वास्तवमें तपस्या द्वारा क्या कोई कार्य्य असाध्य है।

* "सुकरं खलु तेन" इति वा पाठः।

किमुपेक्षसे कथय नाथ
न तव विदितं न किञ्चन ।
त्रातुमलमभयदार्हसि न-
स्त्वयि मा स्म शासति भवत् पराभवः ॥३१॥

अन्वयः । हे नाथ, किम् उपेक्षसे कथय (त्वम्) किञ्चन तव न विदितं न । हे अभयद, नः अलं त्रातुम् अर्हसि । त्वयि शासति (सति) पराभवः मास्म भवत् । वाच्य—किम् उपेक्ष्यते, कथ्यतां त्वया वयम् त्रातुम् अर्ह्यामहे ; पराभवेन मास्म भूयत । ३१ ।

न चैतदन्यफलकं तप इत्याह—विजिगीषते इति । स पुरुषो जगन्ति भुवनानि युगपद् विजिगीषते यदि विजेतुमिच्छति वा । 'पूर्व्ववत् सनः' इत्यात्मनेपदम् । अथ युगपत् संजिहीर्षति संहर्त्तुमिच्छति वा । अभवमपवर्गं प्राप्तुमभिवाञ्छति वा न विद्मो वयमिति शेषः । किन्तु वयमप्यस्य रुचस्तेजांसि विषहितुं सोढुम् । 'तीषसहलुभरुषरिषः' इति विकल्पादिडागमः । नो क्षमा न शक्ताः । केचित् 'रुचः कामितानि विषहितुमवधारयितुम्' इति व्याचक्षते । तत्र सहेरवधारणार्थत्वं विचार्य्यम् ॥ ३० ॥

किमिति । हे नाथ, किं किमर्थमुपेक्षसे कथय त्वमिति शेषः । तव न विदितं त्वयाज्ञायमानमित्यर्थः । 'क्तस्य च वर्त्तमाने' इति षष्ठी । न किञ्चन किमपि न । हे अभयद, नोऽस्मान् अलं त्रातुमर्हसि । त्वयि शासति सति पराभवो मास्म भवत् मा भूत् । 'स्मोत्तरे लङ् च' इति लङ् ॥ ३१ ॥

৩০। সে যদি ভূমণ্ডল সহসা জয় করিতে ইচ্ছুক হইয়া থাকে, অথবা সহসা সংহার করিতে অভিলাষী হইয়াছে কিংবা মোক্ষ লাভ করিতে অভিলাষ করিয়া থাকে—ইহার কিছুই বুঝিতেছি না, কিন্তু উহার তেজঃ আমরা সহ্য করিতে সমর্থ হইতেছি না।

৩১। হে নাথ! আপনি উপেক্ষা করিতেছেন কেন বলুন? আপনার অবিদিত কিছুই নাই? হে অভয়দাতঃ! আমাদিগকে রক্ষা করা আপনার একান্ত কর্ত্তব্য। আপনি শাসনকর্ত্তা থাকিতে আমাদের পরাভব যেন না ঘটে।

३०। वह पुरुष सारे संसारको जीतनेकी इच्छा कर रहा है या झटपट संहार करने चाहता हैं अथवा मुक्ति पानी चाहता है—ये बातें हम सब तं समझ सके। पर हम अब भी उसकी तेज नहीं सकते।

इति गां विधाय विरतेषु
मुनिषु वचनं समाददे ।
भिन्नजलधिजलनादगुरु
ध्वनयन् दिशां विवरमन्धकान्तकः ॥३२॥

बदरीतपोवननिवास-
निरतमवगात मान्यथा ।
धातुरुदयनिधने जगतां
नरमंशमादिपुरुषस्य गां गतम् ॥३३॥

अन्वयः । इति गां विधाय मुनिषु विरतेषु अन्धकान्तकः भिन्नजलधिजलनादगुरु (यथा तथा) दिशां विवरं ध्वनयन् वचनं समाददे । वाच्य—अन्धकान्तकेन विवरं ध्वनयता वचनं समाददे । ३२।

अन्वयः । वदरीतपोवननिवासनिरतं गां गतं जगताम् उदयनिधने धातुः आदिपुरुषस्य अंशं नरम् अन्यथा मा अवगात । वाच्य—निवासनिरतः गां गतः अंशः नरः मा अवगाधि ।३३॥

इतीति । इति इत्थं गां वाचं विधाय अभिधायेत्यर्थः । सामान्यस्य विशेषपर्य्यवसानात् । मुनिषु विरतेषु तूष्णीम्भूतेषु सत्सु अन्धकान्तकः शिवो भिन्नस्य उद्वेलस्य जलधेर्जलस्य नादमिव गुरु गम्भीरं यथा तथा दिशां विवरमन्तरालं ध्वनयन् वचनं समाददे स्वीचकार उवाचेत्यर्थः ॥३२॥

৩২। মুনিগণ এই প্রকার বলিয়া নিবৃত্ত হইলে, অন্ধকশত্রু (মহাদেব) উদ্বেলিত সাগরসলিলকল্লোলবৎ গুরুগম্ভীর নাদে দিগন্তরাল প্রতিধ্বনিত করিয়া বলিতে লাগিলেন।

३१। हे नाथ! आप क्यों उपेक्षा (ला परवा हो) कर रहे है कहिये। आपसे तो कोई बात छिपी है नहीं, हे अभय देनेवाले! हम सबकी रक्षा करना आपका प्रधान कार्य्य है। आप शासन (अधिकार हुकुम्मत) कर रहे हैं तो हम लोगोंमें उपद्रव क्यों हो रहा है।

३२। मुनिलोग इतनी बातें कह कर निवृत्त हो गये, तब अन्धकासुरकी शत्रु (अर्थात् शिवजी) लहर मारने समुद्रके तरङ्गोंकी तरह अत्यन्त गम्भीर स्वरसे दिशोंको प्रतिध्वनित करते हुए बोले।

द्विषतः परासिसिषुरेष
सकलभुवनाभितापिनः।
क्रान्तकुलिशकरवीर्य्यबलान्
मदुपासनं विहितवान् महत्तपः ॥३४॥

अन्वयः। एषः सकलभुवनाभितापिनः क्रान्तकुलिशकरवीर्य्यबलान् द्विषतः परासिसिषुः मदुपासनं महत् तपः विहितवान्। वाच्य—एतेन—द्विषतः परासिसिषुणा विहितम्। ३४॥

बदरीति। बदरीतपोवने बदरिकाश्रमे निवासनिरतं नित्यनिवासिनं गां गतं भुवमवतीर्णं जगतामुदयनिधने सृष्टिसंहारौ धातुः तयोः कर्त्तुरित्यर्थः। 'तृन्' इति दधातेस्तृन्प्रत्ययः। अतएव 'न लोक—' इत्यादिना कर्म्मणि षष्ठीप्रतिषेधः। आदिपुरुषस्य विष्णोरंशमंशभूतं नरं नरसंज्ञकमित्यर्थः। यो नारायणसख इति भावः। अन्यथोक्तवैपरीत्येनैनं मा अवगात मनुष्यमात्रं मा जानीतेत्यर्थः। 'इणो गा लुङि' इति गादेशः ॥३३॥

अथ तस्य तपसो निमित्तमाह—द्विषत इति। एष नरः सकलभुवनान्यभितापयन्त्यभीक्ष्णमिति तथोक्तान्। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। क्रान्ते आक्रान्ते कुलिशकरस्येन्द्रस्य वीर्य्यबले शक्तिसैन्ये यैस्तान् द्विषतः शत्रून् परासिसिषुः परासितुमिच्छुः। अस्यतेः सन्नन्तादुप्रत्ययः। मदुपासनं मदाराधनम्। करणे ल्युट्। महत्तपो विहितवान्, अत्र निमित्तं शत्रुचय एवेति ॥३४॥

৩৩। ইনি জগতের উৎপত্তি বিনাশক, নিত্য বদরিকাশ্রমবাসী, পৃথিবীতে অবতীর্ণ, আদিপুরুষ বিষ্ণুর নর-নামক অংশ, ইহাকে আপনারা অন্য কেহ বলিয়া মনে করিবেন না।

৩৪। এই ব্যক্তি নিখিলভুবনতাপকারী, ইন্দ্রের বলবীর্য্যহারক শত্রুদিগকে পরাজিত করিবার ইচ্ছায় আমার উপাসনারূপ মহাতপ আরম্ভ করিয়াছেন।

३३। उसे आपलोग कोई दूसरा पुरुष न समझें। वे, बदरिकाश्रममें रहनेवाले, जगत्‌के उत्पत्ति पालन और संहार करनेवाले विष्णुके अंश नरनारायणने पृथ्वीपर अवतार लिया है।

अयमच्युतश्च वचनेन
सरसिरुहजन्मनः प्रजाः।
पातुमसुरनिधनेन विभू
भुवमभ्युपेत्य मनुजेषु तिष्ठतः ॥३५॥
सुरकृत्यमेतदवगस्य
निपुणमिति मूकदानवः।
हन्तुमभिपतति पाण्डुसुतं
त्वरया तदत्र सह गम्यतां मया ॥३६॥

अन्वयः। विभू अयम् अच्युतः च सरसिरुहजन्मनः वचनेन असुरनिधनेन प्रजाः पातुं भुवम् अभ्युपेत्य मनुजेषु तिष्ठतः। वाच्य—विभुभ्याम् अनेन अच्युतेन च स्थीयते ॥ ३५ ।

अन्वयः। मूकदानवः एतत् सुरकृत्यम् इति निपुणम् अवगम्य पाण्डुसुतं हन्तुम् अभिपतति तत् अगम्य मया सह त्वरया गम्यताम्। वाच्य—मूकदानवेन अभिपत्यते ( यूयं ) गच्छध्वम्। ३६।

अथास्य मानुषावतारे कारणमाह—अयमिति। विभू प्रभू अयं नरोऽच्युतः कृष्णश्च सरसिरुहजन्मनो ब्रह्मणो वचनेन प्रार्थनया असुराणां निधनेन मारणेन करणेन प्रजाः पातुं रक्षितुं भुवमभ्युपेत्य मनुजेषु तिष्ठतः। वस्तुतस्तु साक्षान्नरनारायणावेतौ कृष्णार्ज्जुनावित्यर्थः॥ ३५॥

अथास्य सत्त्वसम्पदं प्रकाशयितुमाह—सुरेति। मूकदानवो मूकाख्यः कश्चिदसुर एतत् पाण्डवकृत्यं सुरकृत्यमिति निपुणमवगम्य साधु निश्चित्य पाण्डुसुतमर्ज्जुनं हन्तुमभिपतति, तत्तस्मात् कारणादत्रार्ज्जुनाश्रमे विषये आश्रमं प्रतीत्यर्थः। मया सह त्वरया गम्यताम्। द्रष्टुमिति शेषः ॥३६॥

৩৫। এই প্রভুদ্বয় ইনি এবং অচ্যুত ( শ্রীকৃষ্ণ ), পদ্মযোনী ( ব্রহ্মার ) প্রার্থনায় অসুর বিনাশ পূর্ব্বক প্রজাদিগকে রক্ষা করিবার নিমিত্ত পৃথিবীতে আসিয়া মনুষ্যবংশে জন্মগ্রহণ করিয়াছেন।

३४। ये महापुरुष सारे भुवनको सन्तप्त करने इन्द्रकी तुल्य बलवीर्य्य और पराक्रम धारण करनेवाले हैं। शत्रुओंको जीतनेकी लालचसे मेरी उपासनारूप बड़ी भारी तपस्या आरम्भ की है।

विवरेऽपि नैनमनिगूढ़-
मभिभवितुमेष पारयन् ।
पापनिरतिरविशङ्कितया
विजयं व्यवस्यति वराहमायया ॥३७॥

अन्वयः । पापनिरतिः एषः विवरे अपि एनम् अनिगूढ़म् अभिभवितुं न पारयन् अविशङ्कितया वराहमायया विजयं व्यवस्यति । वाच्य—पापनिरतिना एतेन न पारयता विजयः व्यवसीयते ॥३७।

विवरे इति । पापे निरतिरतिप्रीतिर्यस्य स एष दानवो विवरे रन्ध्रेऽपि एकान्तेऽपीत्यर्थः । एनं पाण्डवमनिगूढं प्रकाशं स्पष्टं यथा तथाभिभवितुं न पारयन्न शक्नुवन् । विभाषायाम् 'नञ्' इति नञ्समासः, अविशङ्कितया स्वरूपगूहनात् निःशङ्कितया वराहमायया वराहभूमिकया विजयं व्यवस्यति । विजयं प्रत्युद्युक्त इत्यर्थः ॥ ३८॥

৩৬। মূকনামক দানব, পাণ্ডবের কার্য্যই দেবতাদিগের কার্য্য নিশ্চয় করিয়া অর্জ্জুনকে হত্যা করিবার জন্য ধাবিত হইয়াছে। অতএব আপনারা আমার সহিত সত্বর অর্জ্জুনের আশ্রমে চলুন।

৩৭। এই পাপিষ্ঠ দানব নির্জ্জন স্থানেই স্বীয় মূর্ত্তিতে অর্জ্জুনকে পরাভূত করিতে পারিবে না মনে করিয়া, নিজমূর্ত্তি গোপন পূর্ব্বক নিঃশঙ্কচিত্তে বরাহরূপ ধারণ করিয়া জয়লাভের চেষ্টা করিতেছে।

३५। प्रभु ( अर्थात् प्रभावसम्पन्न दो व्यक्ति ) इन्द्र और अर्ज्जुन श्रीकृष्णने, कमलसे उत्पन्न हुए ब्रह्माकी प्रार्थनासे असुरों को मार प्रजाओंकी रक्षा करनेके लिये पृथ्वीमें आकर मनुष्यवंशमें जन्म लिया है।

३६। 'मूक' नामक दैत्य, अर्ज्जुनको इस तपस्याको देवताओंका कार्य्य समझ कर, अर्जुनकी हत्या करनेके लिये चाड़ा आ रहा है ; इस लिये आपलोग झटपट मेरे साथ अर्जुनके आश्रमपर चलें।

३७। यह पापिष्ठ 'मूक' दानव निर्ज्जन स्थानमें भी अपनी मूर्त्ति द्वारा अर्ज्जुनको न जीत सकनेके विचारसे अपनी मूर्त्ति छिपाकर निःशङ्कचित्तसे वराहकी मूर्त्ति धारण कर जीतनेकी चेष्टा करता है।

निहते विड़म्बितकिरात-
नृपतिवपुषा रिपौ मया ।
मुक्तनिशितविशिखः प्रसभं
मृगयाविवादमयमाचरिष्यति ॥३८॥

तपसा निपीड़ितकृशस्य
विरहितसहायसम्पदः ।
सत्त्वविहितमतुलं भुजयो-
र्बलमस्य पश्यत मृधेऽधिकुप्यतः ॥३९॥

अन्वयः । विड़म्बितकिरातनृपतिवपुषा मया रिपौ निहते मुक्तनिशितविशिखः (सन्) अयं प्रसभं मृगयाविवादम् आचरिष्यति ॥ वाच्य—मुक्तनिशितविशिखेन अनेन मृगयाविवादः आचरिष्यते ॥ ३८ ॥

अन्वयः । तपसा निपीड़ितकृशस्य (तथा) विरहितसहायसम्पदः मृधे अधिकुप्यतः अस्य सत्त्वविहितम् अतुलं भुजयोः बलं पश्यत ॥ वाच्य—बलं दृश्यताम् ॥ ३९ ।

ततः किं भविष्यतीत्यत आह—निहते इति । विड़म्बितमनुकृतं किरातनृपतिवपुर्येन तेन तद्रूपधारिणेत्यर्थः । मया निहते रिपौ वराहे मुक्तनिशितविशिखः सन् अयं पाण्डवः प्रसभं प्रसह्य मृगयाविवादं मृगयाप्रहारकलहमाचरिष्यति करिष्यति । मत्प्रहतमेव मृगं प्रहृत्य स्वयमहमेव प्रहर्त्तेति कलहिष्यते इत्यर्थः ॥ ३८ ॥

ततोऽपि किं भावीत्यत्राह—तपसेति । तपसा नितरां पीड़ितोऽतएव कृशस्तस्य निपीड़ितकृशस्य । 'पूर्व्वकाल—' इत्यादिना समासः । तथा विरहिता सहायसम्पद्यस्य तस्यैकाकिनो मृधे रणे । 'मृधमास्कन्दनं

৩৮। আমি কিরাতপতির রূপ ধারণ করিয়া এই বরাহরূপধারী শত্রুকে নিহত করিলে, অর্জ্জুন নিহত বরাহগাত্রে তীক্ষ্ণশর বর্ষণ পূর্ব্বক আমার সহিত সহসা মৃগয়া-কলহ আরম্ভ করিবে।

३८। मैं किरातोंके राजाका रूप धारण कर इस वराह असुरको मारूंगा तो अर्जुन इस वराहकी शरीर पर तीक्ष्ण बाण वर्षा कर मेरे साथ मृगयाकलह करेंगे

इति तानुदारमनुनीय विषमहरिचन्दनालिना।
घर्मजनितपुलकेन लसद्गजमौक्तिकावलिगुणेन वचसा ॥४०

अन्वयः। इति तान् उदारम् अनुनीय विषमहरिचन्दनालिना घर्मजनितपुलकेन लसत् गजमौक्तिकावलिगुणेन वचसा पुष्पितलतान्तनियमितविलम्बिमौलिना शिखिपिच्छलाञ्छितकपोलभित्तिना

संख्यम्' इत्यमरः। अधिकुप्यतोऽधिकं कुप्यतोऽस्य पाण्डवस्य सत्त्वविहितं स्वभावकृतम् स्वाभाविकमित्यर्थः। 'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे। आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः। प्राणे बलेऽन्तः-करणे' इति वैजयन्ती। अतुलं निरुपमं भुजयोर्बाह्वोर्बलं शक्तिं पश्यत। 'बलं शक्तिर्बलं सैन्यम्' इति शाश्वतः॥ ३९॥

अथ त्रिभिरस्य किरातभावं वर्णयति—इतीत्यादि। शिव इतीत्थं तान् मुनीन् उदारं युक्तियुक्तं यथा तथानुनीय शिचयित्वा उक्त्वेति यावत्। रुचिरः किरातपृतनापतिः संववृते इत्युत्तरेणान्वयः। किरात-सेनापतिवेषधारी बभूवेत्यर्थः। कथम्भूतः? विषमा विकृतविन्यासा हरिचन्दनस्यालयो रेखा यस्मिन् तेन। घर्मेण स्वेदेन जनिताः पुलका रोमाञ्चा यस्मिन् तेन। 'पुलकः पुनः। रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम्' इति हेमचन्द्रः। 'घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसो-रपि' इति विश्वः। लसन्तः शोभमाना गजमौक्तिकानां करिकुम्भोद्भव-मौक्तिकानामावलय एव गुणाः सूत्राणि यस्मिन् तेन वचसा वचःस्थलेनोप-लक्षितः। करिणां मुक्तायोनित्वे प्रमाणमाह अगस्त्यः—'जीमूतकरिमत्-स्याहिवंशशङ्खवराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः॥' इति॥ ४०॥

३९। अर्জ্জুন তপস্তায় নিতান্ত ক্লিষ্ট এবং কৃশ হইয়াছে, ইহার সহায়সম্পদ্ নাই। এই রণে কুপিত হইয়া যে স্বভাবসিদ্ধ অতুলনীয় বাহুবল প্রকাশ করিবে, আপনারা তাহা অবলোকন করুন।

৪০-২। শিব মুনিদিগকে এইরূপ যুক্তিযুক্ত উপদেশ দিয়া, মেঘনিচয়ের স্থায় অবস্থিত হইয়া এক মনোহর কিরাত সেনাপতির বেশ ধারণ করিলেন। তখন তাঁহার বক্ষে

३९। तपस्याके कारण कष्ट पाये, पतले और भोजन सामग्रीसे रहित ये अर्ज्जुन, कोप होने पर जो अपने स्वभावके अनुसार अतुलनीय बाहुबल दिखलायेंगे उसे आपलोग देखें।

वदनेन पुष्पितलतान्त-
नियमितविलम्बिमौलिना ।
बिभ्रदरुणनयनेन रुचं
शिखिपिच्छलाञ्छितकपोलभित्तिना ॥ ४१ ॥

बृहदुद्वहन् जलदनादि
धनुरुपहितैकमार्गणम् ।
मेघनिचय इव संववृते
रुचिरः किरातपृतनापतिः शिवः ॥ ४२ ॥

॥ विशेषकम् ॥

अरुणनयनेन वदनेन रुचं बिभ्रत्, जलदनादि उपहितैकमार्गणं बृहत् धनुः उद्वहन् रुचिरः किरातपृतनापतिः शिवः संववृते । वाच्य—रुचं बिभ्रता धनुः उद्वहता रुचिरेण किरातपृतनापतिना शिवेन—संववृते ॥ ४०—४२ ॥

वदनेनेति । पुष्पितैर्लतान्तैर्विकसितलताग्रैर्नियमिताः संयता विलम्बिनस्ते मौलयः संयतकेशा यस्य तेन । 'चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । शिखिपिच्छलाञ्छिते बर्हिबर्हाङ्किते कपोलभित्ती यस्य तेनारुणनयनेनारक्तनेत्रेण वदनेन रुचं शोभां बिभ्रत् ॥ ४१ ॥

बृहदिति । पुनश्च—जलद इव नदतीति जलदनादि । 'कर्त्तर्युपमाने' इति णिनिः । उपहितैकमार्गणं संहितैकबाणं धनुरुद्वहन् अत एव मेघनिचय इव स्थित इत्युपमा । अत्र विशेषके स्वभावोक्तिरलङ्कारः । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति लक्षणात् ॥ ४२ ॥

বিকৃতভাবে হরিচন্দনের রেখা অঙ্কিত হইল, দেহে ঘর্ম্মজনিত রোমাঞ্চ উদ্গত হইল, উজ্জ্বল গজমুক্তার মালা বিরাজিত হইতে লাগিল। পুষ্পিত লতাগ্রভাগ দ্বারা আবদ্ধ কেশকলাপ দুলিতে লাগিল, গণ্ডদ্বয় ময়ূরপুচ্ছের দ্বারা শোভিত হইল, রক্তাভনেত্রে মুখমণ্ডল পরম শোভা ধারণ করিল। তিনি বাণযোজিত এক বৃহৎ মেঘগম্ভীরনাদী ধনুর্গ্রহণ করিলেন।

४०-४२। शिवजीने इस प्रकार मुनियोंको युक्तिके साथ उपदेश देकर एक अत्यन्त सुन्दर किरातोंके राजाका वेश धारण किया। उस समय उनकी छाती में विकृत रूपसे (जंगली मनुष्यों अनुसार) उजले चन्दनकी चित्रकारी थी।

अनुकूलमस्य च विचिन्त्य गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतैर्महती वनेचरचमूर्विनिर्ममे ॥४३॥

विरचय्य काननविभाग-
मनुगिरमथेश्वराज्ञया ।
भीमनिनदपिहितोरुभुवः
परितोऽपदिश्य मृगयां प्रतस्थिरे ॥४४॥

अन्वयः । अस्य अनुकूलं विचिन्त्य आत्तविग्रहैः शूलपरशुशरचापभृतैः गणपतिभिः महती वनेचरचमूः विनिर्ममे ॥ वाच्य—आत्तविग्रहाः—भृता: गणपतयः महतीं वनेचरचमूं विनिर्ममीरे ॥४३॥

अन्वयः । अथ ईश्वराज्ञया अनुगिरं काननविभागं विरचय्य भीमनिनदपिहितोरुभुवः ( सन्तः ) मृगयाम् अपदिश्य परितः प्रतस्थिरे ॥ वाच्य—पिहितोरुभूभिः प्रतस्थे ॥ ४४ ॥

अनुकूलमिति । अस्य शिवस्यानुकूलं विचिन्त्य प्रियमिति निश्चित्यात्तविग्रहैर्गृहीतकिरातदेहैः । तथा शूलानि परशवः कुठाराः शराश्चापानि च तानि भृतानि यैस्तैः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति निष्ठायाः परनिपातः । गणपतिभिः प्रमथमुख्यैर्महती वनेचरचमूः सेना विनिर्ममे निर्मिता । 'माङ्माने' कर्मणि लिट् 'हृस्वः' इत्याभ्यासस्य ह्रस्वत्वम् ॥४३॥

विरचय्येति । अथेश्वराज्ञया अनुगिरं गिरौ विभक्त्यर्थेऽव्ययीभावः । 'गिरेश्च सेनकस्य' इति समासान्तः । काननविभागं वनविभागं विरचय्य अस्यायमिति देशविभागं कृत्वेत्यर्थः । भीमैः निनादैः कलकलैः पिहिताः उरवो भुवो यैस्ते तथोक्ताः सन्तः । मृगयामपदिश्य व्याजीकृत्य परितः प्रतस्थिरे प्रस्थिताः ॥ ४४ ॥

४७ । শিবের প্রিয় মনে করিয়া প্রমথগণ কিরাতবেশ ধারণ এবং শূল, পরশু, শর ও ধনুর্দ্ধারণপূর্ব্বক এক মহতী কিরাতবাহিনীর সৃষ্টি করিলেন ।

देहमें पसीनेसे रोमाञ्च हो आया, विशाल ( चौड़ी ) छातीपर उजली गजमुक्ताओंकी माला विराजने लगी । खिले फूलोंसे युक्त कोमल कोमल लताओंसे वन्धे केश कुछ ऊपर फहराने लगी ; दोनों गाल मोरकी पूछ से शोभ रहे थे. लाल लाल आंखोंसे मुखमण्डल अधिक शोभने लगा, उन्हों एक वाण लगाकर, मेघके समान गम्भीर ध्वनि करनेवाला बहुत बड़ा धनुष धारण किया ।

४३ । महादेवजीका अभिप्राय समझकर प्रमथगणने किरातका वेश धारण कर एक बड़ी भारी किरातोंकी सेना बना डाली ।

क्षुभिताभिनिःसृतविभिन्न-
शकुनिमृगयूथनिःस्वनैः ।
पूर्णपृथुवनगुहाविवरः
सहसा भयादिव ररास भूधरः ॥४५॥

न विरोधिनी रुषमियाय
पथि मृगविहङ्गसंहतिः ।
घ्नन्ति सहजमपि भूरिभियः
सममागताः सपदि वैरमापदः ॥४६॥

अन्वयः । क्षुभिताभिनिःसृतविभिन्नशकुनिमृगयूथनिःस्वनैः पूर्णपृथुवनगुहाविवरः भूधरः सहसा भयात् इव ररास ॥ वाच्य—विवरेण भूधरेण ररसे ॥ ४५ ॥

अन्वयः । पथि विरोधिनी मृगविहङ्गसंहतिः रुषं न इयाय ( तथाहि ) भूरिभियः समम् आगता आपदः सहजम् अपि वैरं सपदि घ्नन्ति ॥ वाच्य—संहत्या रुट् न इये, भूरिभीभिः समम् आगताभिः आपद्भिः सहजम् अपि वैरं हन्यते ॥ ४६ ॥

क्षुभितेति । क्षुभितास्त्रस्ता अभिनिःसृताः स्वस्थानान्निर्गता विभिन्ना मुक्तसङ्घाश्च ये शकुनयः पक्षिणो मृगाश्च तेषां यूथानि तानि तेषां निःस्वनैः पूर्णानि पृथूनि वनानि गुहाविवराणि च यस्य सः भूधरः सहसा भयादिवेत्युत्प्रेक्षा । ररास चुक्रोश 'रस आक्रोशे' लिट् ॥ ४५ ॥

৪৪। অনন্তর শিবের আদেশে প্রমথগণ পার্ব্বত্য অরণ্যভাগ বিভাগ করিয়া ভীষণ কলকলনাদে বহুস্থান ব্যাপ্ত করিয়া মৃগয়ার ব্যপদেশে চারিদিকে প্রস্থান করিল।

৪৫। তখন ত্রস্ত স্বস্থান ও দল হইতে ভ্রষ্ট পক্ষী এবং মৃগকুলের কোলাহলে সেই বিপুল অরণ্য ও গুহাবিবরসঙ্কুল গিরি ভয়ে যেন হঠাৎ চীৎকার করিয়া উঠিল।

४४। अनन्तर महादेवजीकी आज्ञासे पर्वतपर जङ्गलमें अपना अपना स्थान बांट कर भयङ्कर कोलाहलसे कई स्थानों को परिपूर्ण करते हुए प्रमथगणने शिकार खेलनेके लिये चारो धार चल पड़े।

४५। उस समय डरे और अपने स्थानसे निकले, अपन झुण्डसे बिछुड़े हुए पक्षियों और जङ्गली पशुओंके कोलाहलसे वह जङ्गलका वड़ विभाग और कन्दराएं पूर्ण हो गयी इससे जान पड़ता था कि पर्वत चिल्लार रहा है।

चमरीगणैर्गणबलस्य *
बलवति भयेऽप्युपस्थिते।
वंशविततिषु विषक्तपृथु-
प्रियवालवालधिभिराददे धृतिः ॥४७॥

अन्वयः। वंशविततिषु विषक्तपृथुप्रियवालवालधिभिः चमरीगणैः गणबलस्य बलवति भये उपस्थिते (सति) अपि धृतिः आददे। वाच्य—प्रियवाल—बालधयः चमरीगणाः धृतिम् आददिरे॥ ४७॥

नेति। पथि पलायनमार्गे विरोधिनो जातिवैरिणो मृगानां सिंह-व्याघ्रादीनां विहङ्गानां काकोलूकानाञ्च संहतिः सङ्घः रुषं परस्परक्रोधं न इयाय न प्राप। किन्तु सहैव चचारेत्यर्थः। तथाहि—भूरि प्रभूता भीः यासु ताः समं साधारण्येनागता आपदो विपत्तयः सहजं स्वाभाविकमपि वैरं सपदि घ्नन्ति। नहि सङ्घातव्यसनेषु प्रजायते वैरानुबन्ध इति भावः॥ ४६

चमरीति। वंशविततिषु वेणुगुल्मेषु विषक्ताः लग्नाः पृथवो भृशं प्रियबालाः प्रियरोमाणो वालधयः पुच्छानि येषां तैः। 'पुच्छोऽस्त्री लूमलाङ्गूले बालहस्तश्च बालधिः', इत्यमरः। चमरीगणैर्मृगविशेषैर्गण-बलस्य शिवबलस्य सम्बन्धिनि तद्धेतुक इत्यर्थः। सम्बन्धमात्रविवक्षायां षष्ठी। अन्यथा 'भीत्रार्थानां भयहेतुः' इति पञ्चमी स्यात्। बलवति प्रबले भये उपस्थिते प्राप्तेऽपि धृतिर्धैर्य्यमाददे स्वीकृता। बालच्छेदभयात् प्राणहानिमप्यवगणय्य स्थितमित्यर्थः॥ ४७॥

४৬। জাতিগত বিরোধ থাকিলেও পলায়নের পথে পশুপক্ষিকুল, পরস্পরের প্রতি ক্রোধপরবশ হইল না। বস্তুতঃ ভয়ঙ্কর বিপদরাশি এক সময়ে উপস্থিত হইলে প্রাণিগণের জাতি ও জন্মগত শত্রুতা বিনাশ পাইয়া থাকে।

৪৭। বাঁশের শাখায় চমরীগণের প্রিয় পুচ্ছ সংলগ্ন হওয়ায় তাহারা শিব সৈন্যগণ কর্তৃক প্রবল ভয় উপস্থিত হইলেও ধৈর্য্যাবলম্বন করিল।

४६। जातिगत शत्रुतां रहने पर भी भगनेके रास्तेमें पशुओं पक्षिओंके दलने आपसमें क्रोध प्रगट न किया। वास्तवमें भयङ्कर विपत्तियां सब एक साथ आ जाती हैं तर प्राणियोंकी जाति और जन्मसे चला आये वह भाव बिलकुल नष्ट हो जाता है।

---

* शिवबलस्येति वा पाठः।

हरसैनिकाः प्रतिभयेऽपि
गजमदसुगन्धिकेसरैः ।
स्वस्थमभिददृशिरे सहसा
प्रतिबोधजृम्भितमुखैर्मृगाधिपैः ॥४८॥

विभराम्बभूवुरपवृत्त-
जठरशफरीकुलाकुलाः ।
पङ्कविषमिततटाः सरितः
करिरुग्णचन्दनरसारुणं पयः ॥४९॥

अन्वयः । प्रतिभये अपि गजमदसुगन्धिकेसरैः प्रतिबोधजृम्भितमुखैः मृगाधिपैः स्वस्थं हरसैनिकाः अभिददृशिरे । वाच्य—केशराः—मुखाः मृगाधिपाः हरसैनिकान् अभिददृशुः । ४८ ।

अन्वयः । अपवृत्तजठरशफरीकुलाकुलाः पङ्कविषमिततटाः सरितः करिरुग्णचन्दनरसारुणं पयः विभराम्बभूवुः । वाच्य—कुलाभिः...तटाभिः सरिद्भिः—रसारुणं पयः विभराम्बभूवे ॥ ४९ ॥

हरेति । प्रतिभये भयहेतौ । 'भयङ्करं प्रतिभयम्' इत्यमरः । प्राप्तेऽपीति शेषः । गजमदैः सुगन्धयः सुरभयः केसराः सटा येषां तैः हतानेकगजैरित्यर्थः । सहसा सेनाकलकलश्रवणानन्तरमेव प्रतिबोधेन निद्रापगमेन जृम्भितानि व्यात्तानि मुखानि येषां तैर्मृगाधिपैः सिंहैः स्वस्थं निःशङ्कमेव यथा तथा हरसैनिका अभिददृशिरे ईक्षिताः । न तु किञ्चित् क्षुभितमित्यर्थः । युक्तञ्चैतद्राजनामधारिणां केसरिणामिति भावः ॥ ४८ ॥

৪৮। ভয়ের কারণ উপস্থিত হইলেও, নিহত হস্তীর মদে সুগন্ধি কেশর, সিংহ শিবসৈন্যগণের কোলাহলশব্দে জাগরিত হইয়া হাই তুলিতে তুলিতে নির্ভয়ে তাহাদিগকে দেখিতে লাগিল।

४७। बांसोंकी शाखाओंमें चमरियों की प्यारी पूंछें बन्ध गयीं उस समय शिवजीकी सेनाओंसे प्रबल भय उत्पन्न होने पर भी चमरीगण धैरज धारण किये खड़े थे।

४८। भयके कारण उपस्थित होने पर भी, मारे गये हाथियोंके मदसे सुगन्धित केशर वाले सिंह, शिवजीकी सेनाओंके कोलाहलसे जगकर जंभाई करते करते शिवजीके गणोंको देखने लगे।

महिषक्षतागुरुतमाल-
नलदसुरभि: सदागति: ।
व्यस्तशुकनिभशिलाकुसुम:
प्रणुदन् ववौ वनसदां परिश्रमम् ॥५०॥

अन्वय: । महिषक्षतागुरुतमालनलदसुरभि: व्यस्तशुकनिभशिलाकुसुम: सदागति: वनसदां परिश्रमम प्रणुदन् ( सन् ) ववौ । वाच्य—सुरभिणा—कुसुमेन सदागतिना—प्रणुदता (सता) ववे ॥५०।

विभरामिति । अपवृत्तजठरैस्तत्कालक्षोभाल्लुठितोदरै: शफरीकुलैराकुला व्याप्ता: पङ्कैर्विषमितानि दुर्गमीकृतानि तटानि कूलानि यासां ता: सरित: करिभि: पलायमानैरिति शेष: । रुग्णानां मार्गरोधितया भग्नानाम् । 'ओदितश्च' इति निष्ठानत्वम् । चन्दनानां रसैररुणं करिरुग्णचन्दनरसारुणं पयो विभराम्बभूवु: । भृधातो: 'भीह्रीभृहुवां श्लुवच्च' इत्याम्प्रत्यय:, श्लुवद्भावश्च । 'कृञ्चानुप्रयुज्यते लिटि' इति भुवोऽनुप्रयोग: ॥ ४८ ॥

महिषेति । महिषै: लुलापै: क्षतानि विदलितानि तैरगुरुभिस्तमालैर्नलदैरुशीरैश्च सुरभि: सुगन्धि: । व्यस्तानि विक्षिप्तानि शुकनिभानि शुकसवर्णानि शिलाकुसुमानि शैलेयाख्या ओषधिविशेषा येन स: । अत: शीतल इति भाव: । 'कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु । शैलेयम्' इत्यमर: । शुकनिभेति स्वरूपकथनम् । सदागतिर्वायुर्वनसदां वनेचराणां परिश्रमं प्रणुदन् । अतो मन्द इति भाव: । 'मातरिश्वा सदागति:' इत्यमर: । ववौ वातिस्म ॥ ५० ॥

৪৯। নদীসকল তৎকালোৎপন্ন লুঠিতোদর শফরী কুলে আকুল হইয়া উঠিল, পলায়মান হস্তীসকল দ্বারা কর্দ্দমাক্ত হওয়ায় নদী তট গমনের অযোগ্য হইল, পথরোধী চন্দনবৃক্ষসকল ভগ্ন এবং তাহাদের রসে নদীর জল অরুণবর্ণ ধারণ করিল।

৫০। মহিষবিদলিত অগুরুতমাল ও উশীর দ্বারা সুরভিত শুকসদৃশ বর্ণ শৈলেয়-কুসুমরাশি বিক্ষেপ করিয়া সুগন্ধ বায়ু, বনচরদিগের পরিশ্রম দূর করত প্রবাহিত হইতেছে।

४९। सभी नदियां लोटती हुई शफरियों से व्याप्त हो गयी; भगने हुए हाथियोंसे कीचड़युक्त हो जानेसे नदियांके किनारे चलनेयोग्य न रहे, राह रोकने वाले चन्दनके पेड़ टगये और उनके रससे नदियां लाल हो गयीं।

मथिताम्भसो रयविकीर्ण-
मृदितकदलीगवेधुकाः ।
क्लान्तजलरुहलताः सरसी-
र्विदधे निदाघ इव सत्त्वसंप्लवः ॥५१॥

इति चालयन्नचलसानु-
वनगहनजानुमापतिः ।
प्राप मुदितहरिणीदशन-
क्षतवीरुधं वसतिमैन्द्रसूनवीम् ॥५२॥

अन्वयः । सत्त्वसंप्लवः निदाघः इव सरसीः मथिताम्भसः रयविकीर्णमृदितकदलीगवेधुकाः क्लान्तजलरुहलताः (अपि) विदधे । वाच्य—सत्त्वसंप्लवेन निदाघेन इव सरस्यः मथिताम्भसः...गवेधुकाः—लताः विदधिरे ॥ ५१ ॥

अन्वयः । इति उमापतिः अचलसानुवनगहनजान् चालयन् मुदितहरिणीदशनक्षतविरुधम् ऐन्द्रसूनवीं वसतिं प्राप । वाच्य—इति उमापतिना—चालयता—विरुत् ऐन्द्रसूनवी वसतिः प्रापि ॥५२॥

मथिताम्भस इति । सत्त्वसंप्लवः प्राणिसंक्षोभो निदाघो ग्रीष्म इव सरसीः सरांसि । 'कासारः सरसी सरः' इत्यमरः । मथिताम्भसः संक्षोभितोदका रयेन पलायनवेगेन विकीर्णं व्याकीर्णं यथा तथा मृदिता निष्पीड़िताः कदल्यः गवेधुकास्तृणधान्यविशेषाश्च यासां तास्तथोक्ताः । 'तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका' इत्यमरः । मृदित इति 'क्ङिति च' इति गुणप्रतिषेधः । क्लान्ता जलरुहलताः पद्मिन्यः यासु ता एवम्भूता विदधे चकार ॥ ५१ ॥

৫১। ভয়ভীত প্রাণিগণের ইতস্ততঃ পলায়নহেতু গ্রীষ্মকালের ন্যায় সরোবর-সমূহের জলরাশি সংক্ষুব্ধ কদলী ও তৃণ ধান্য সকল নিপীড়িত এবং পদ্মসকল ম্লান হইল।

५०। भैंसोंसे विदलित अगर, तमाल और उशीर सुगन्ध, और मुर्गा (तीते) की तरह हुए शिलापुष्प को उड़ानेवाली वायु, वनमें फिरनेवालोंका, परिश्रम दूर करती बह रही था।

५१। डरे प्राणिओंके इधर उधर भगनेसे, धूपकालकी तरह तालाबोंकी, जल उच्छार मारने लगी, केलि और तृणधान्य टट फट गये और कमल मुर्झा गये।

स तमाससाद घननील-
मभिमुखमुपस्थितं मुनेः ।
पौत्रनिकषणविभिन्नभुवं
दनुजं दधानमथ सौकरं वपुः ॥ ५३ ॥
कच्छान्ते सुरसरितो निधाय सेना-
मन्वीतः स कतिपयैः किरातवर्य्यैः ।

अन्वय । अथ सः घननीलं मुनेः अभिमुखम् उपस्थितम् पौत्रनिकषणविभिन्नभुवं तं सौकरं वपुः दधानं दनुजं आससाद । वाच्य—तेन घननीलः—उपस्थितः पौत्र—भूः सः—दधानः दनुजः ददृशे ॥५३॥

इतीति । इति इत्थमुमापतिरचलसानुषु वनेषु उपभोग्यवृक्षेषु गहनेषु दावेषु च जातास्तथोक्तान् सत्त्वानिति शेषः । चालयन् । मुदितानां हरिणीनां दशनैः चताः वीरुधः लताः यस्यां तामिन्द्रसूनोः इमाम् ऐन्द्रसूनवीं वसत्यस्लेति वसतिमाश्रमम् । "वहिवस्यर्त्तिभ्यश्च" इति औणादिकः वसतेरतिप्रत्ययः । प्राप ॥ ५२ ॥

स इति । अथानन्तरं सः शिवः घननीलं मेघमेचकं मुनेरर्ज्जुनस्याभिमुखमुपस्थितमागतम् । पोत्त्रस्य मुखाग्रस्य । "मुखाग्रे क्रोड़हलयोः पोत्रम्" इत्यमरः । "हलसूकरयोः पुवः" इति ष्ट्रन्प्रत्ययः । निकषणेनोल्लेखनेन विभिन्ना विदारिता भूः येन तम् । सूकरस्य इदं सौकरं वाराहं वपुः दधानं दनुजमाससाद प्राप ददर्शेति यावत् ॥५३॥

৫২। এইরূপে উমাপতি পর্ব্বতপৃষ্ঠ ও গহনবনজাত প্রাণিদিগকে চঞ্চল করিয়া আনন্দিত হরিণীগণের দন্তে খণ্ডিত লতাসমূহে পরিব্যাপ্ত অর্জ্জুনের আশ্রমে উপস্থিত হইলেন।

৫৩। অনন্তর মহাদেব, মেঘের স্থায় নীলবর্ণ, অর্জ্জুনের দিকে ধাবিত মুখাগ্র দ্বারা ভূমিবিদারণকারী, শূকরদেহধারী দানবকে দেখিতে পাইলেন।

५२। इस प्रकार महादेवजी पर्वत और जंगली प्राणियों को कम्पित कर, हरिनीयों के दांतों से कटी लताओं से पूर्ण, अर्ज्जुनके स्थानपर आ पहुंचे।

५३। अनन्तर, महादेवजीने, मेघकी समान नीले, अर्ज्जुनकी ओर दौड़ते, मुखाग्र से जमीनको फाड़ते और सूअरका रूप धारण किये 'मूक' दानवको देखा।

प्रच्छन्नस्तरुगहनैः सगुल्मजालै-
र्लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥५४॥

इति ईश्वराभिगमनो नाम द्वादशः सर्गः ॥१२॥

अन्वयः। लक्ष्मीवान् सः सुरसरितः कच्छान्ते सेनां निधाय कतिपयैः किरातवर्य्यैः अन्वीतः (सन्) सगुल्मजालैः तरुगहनैः प्रच्छन्नः (सन् च) अस्य अनुपदं सम्प्रतस्थे। वाच्य—लक्ष्मीवता तेन—अन्वीतेन (सता) प्रच्छन्नेन (सता च) अनुपदः सम्प्रतस्थे ॥ ५४ ।

कच्छान्त इति। लक्ष्मीवान् "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मतुपो मकारस्य वकारादेशः। सः शिवः सुरसरितः। कच्छान्ते अनूपप्रान्ते "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः। सेनां निधाय स्थापयित्वा इत्यर्थः। कतिपयैः किरातवर्य्यैरन्वीतः अनुगतः सन्। "ईङ् गतौ" इति धातोरनुपूर्वात् कर्म्मणि क्तः। स गुल्मजालैः लताप्रतान-सहितैः तरुगहनैः प्रच्छन्नः छादितः। "वा दान्तशान्त" इत्यादिना निपातः। अस्य वराहस्य पदमनु अनुपदं पदानुसारेणेत्यर्थः। सम्प्रतस्थे प्रस्थितः। "समवप्रविभ्यः स्थः" इति आत्मनेपदम्। प्रहर्षिणीवृत्तम् ॥५४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्ज्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
द्वादशः सर्गः ॥१२॥

---

৫৪। সেই শোভনশরীর মহাদেব সুরনদীর সৈকতে সেনাগণকে স্থাপন করিয়া কতিপয় প্রধান প্রধান কিরাতের সহিত, লতাপ্রতানযুক্ত, বৃক্ষরাজিপূর্ণ গহনবনে প্রচ্ছাদিত হইয়া শূকরের পদচিহ্ন অনুসারে প্রস্থান করিলেন।

५४। ऐसी सुन्दर शोभा धारण किये महादेवजी गङ्गाके छाड़न पर सेनाको ठहरा कर, कई एक प्रधान किरातोंके साथ,—लतायुक्त वृचों से भरे वनमें छिपे २ सूअरके पैरके चिह्नको ओर पीछे पीछे चल पड़े।

---

# त्रयोदशः सर्गः ।

वपुषा परमेण भूधराणा-
मथ सम्भाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार
स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥

स्फुटबद्धसटोन्नतिः स दूरा-
दभिधावन्नवधीरितान्यकृत्यः ।
जयमिच्छति तस्य जातशङ्के
मनसीमं मुहुराददे वितर्कम् ॥२॥

अन्वयः । अथ महेन्द्रसूनुः परमेण वपुषा भूधराणां विभेदे सम्भाव्यपराक्रमं स्थिरदंष्ट्रोग्रमुखं मृगम् आशु विलोकयाञ्चकार । वाच्य—महेन्द्रसूनुना— — मृगः विलोकयाञ्चक्रे ॥१॥

अन्वयः ! स्फुटबद्धसटोन्नतिः दूरात् अभिधावन् अवधीरितान्यकृत्यः स जयम् इच्छति ( अतः ) जातशङ्के तस्य मनसि मुहुः इमं वितर्कम् आददे । वाच्य— —सटोन्नतिना अभिधावता—कृत्येन तेन अयं वितर्कः आददे ॥२॥

वपुषेति । अथ ईश्वरप्रस्थानानन्तरं महेन्द्रसूनुरर्ज्जुनः परमेण महता वपुषा हेतुना भूधराणां विभेदे विदारणे सम्भाव्यपराक्रमं क्षमः अयमिति प्रतर्क्यपौरुषम् । स्थिराभ्यां दृढाभ्यां दंष्ट्राभ्यामुग्रमुखं यस्य तं मृगं वराहम् । आशु तदागमनानन्तरमविलम्बेनेत्यर्थः । विलोकयाञ्चकार ददर्श: । अस्मिन् सर्गे प्राक् पञ्चत्रिंशत्श्लोकादौपच्छन्दसिकं वृत्तम् ॥१॥

स्फुटेति । स्फुटा स्पष्टा बद्धा विरचिता सटानां केसराणामुन्नतिः उद्गतिः यस्य सः, क्रोधात् हर्षितलोमेत्यर्थः । "सटाजटाकेसरयोः" इत्यमरः । दूरा-

১। অনন্তর মহেন্দ্র-নন্দন. অর্জ্জুন, অবিলম্বে দেখিতে পাইলেন, বিপুলদেহধারী পর্ব্বত বিদারণে সমর্থ এইরূপ পরাক্রমশালী, সুদৃঢ়দন্ত ভয়ঙ্করমুখ এক শূকর আসিতেছে।

१। इसके पीछे, इन्द्रके पुत्र अर्ज्जुनने देखा कि,—बड़ा विशाल शरीर धारण किये, पर्व्वतको भी फाड़नेमें समर्थ ऐसा पराक्रमी और अत्यन्त दृढ़ दांतोंके कारण भयानक मुखका एक सुअर ( वराह ) आ रहा है।

घनपोत्रविदीर्णशालमूलो
निविड़स्कन्धनिकाषरुग्णवप्रः।
अयमेकचरोऽभिवर्त्तते मां
समरायेव समाजुहूषमाणः ॥३॥

अन्वयः। घनपोत्रविदीर्ण-शालमूलः निविड़स्कन्धनिकाषरुग्णवप्रः एकचरः अयं समराय समाजुहूषमाण इव माम् अभिवर्त्तते। वाच्य— —शालमूलेन रुग्णवप्रेण एकचरेण अनेन समाजुहूषमाणेन अहम् अभिवर्त्त्ये ।३॥

दभिधावन्। तथा अवधीरितान्यकृत्यः अनन्यकर्मा स वराहः जयमिच्छति जयार्थिनि अतएव जातशङ्के स्वयं जिघांसोर्द्विषामिकलच्छलत्वादिति भावः। तस्य मुनेर्म्मनसि मुहुरिमं वितर्कं वक्ष्यमाणम् ऊहम्। "अध्याहारस्तर्क ऊहः" इत्यमरः। आदधे उत्पादयामास ॥२॥

अथैकादशभिर्वितर्कमेव निरूपयति—घनपोत्रेति। घनेन कठिनेन पोत्रेण मुखाग्रेण विदीर्णानि विदलितानि शालमूलानि वृक्षब्रध्नाः येन सः। मूलं ब्रध्नोऽङ्घ्रिनामक इत्यमरः। निविड़स्य स्कन्धस्य निकाषेण निकषणेन रुग्णवप्रः भग्नसानुः अतो महासत्त्वसम्पन्न इति भावः। एकस्वामी चरश्च इत्येकचरः एकाकी यूथात् अपेत इत्यर्थः। अतोऽयं वराहः समराय समरं कर्त्तुम्। "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" इति चतुर्थी। समाजुहूषमाण इव समाह्वातुम् इच्छन् इव। इवशब्दः सम्भावनायाम्। समाह्वयतेः सन्नन्तात् शानच्प्रत्ययः। "स्पर्द्धायामाङः" "पूर्ववत् सनः" इति आत्मनेपदम्। "अभ्यस्तस्य च" इति सम्प्रसारणम्। माम् अभिवर्त्तते अभिधावति। उपसर्गवशात् सकर्म्मकत्वम्। ततः सर्वथा नाथमुपेक्ष्य इति भावः ॥ ३ ॥

২। অতিমাত্র ক্রোধ হেতু উহার গ্রীবার রোমসকল সুস্পষ্ট উন্নত হইয়াছে, সে একলক্ষ্যে দূর হইতেদৌড়িয়া আসিতেছে। বরাহের জয়ে ইচ্ছুক হইলেও শঙ্কিতচিত্ত অর্জ্জুন মনে মনে এইরূপ তর্ক বিতর্ক করিতে লাগিলেন।

२। अत्यन्त क्रोध होनेकी कारण उसके शरीरके रोंए खड़े थे, जो एक ओर लक्ष्य किये दूरसे दौड़ा आ रहा था। सूअरको जीतनेकी इच्छा किये रहने पर भी अर्ज्जुन सन्देहयुक्त मनमें तर्क करने लगे।

इह वीतभयास्तपोऽनुभावाद्-
जहति व्यालमृगाः परेषु वृत्तिम्।
मयि तां सुतरामयं विधत्ते
विकृतिः किं नु भवेदियं नु माया ॥४॥

अथवैष कृतज्ञयेव पूर्वं
भृशमासेवितया रुषा न मुक्तः।

अन्वयः। इह तपोऽनुभावात् वीतभयाः व्यालमृगाः परेषु वृत्तिं जहति, अयं मयि तां सुतरां विधत्ते (तत्) इयं विकृतिः किं नु माया नु भवेत्? वाच्य—वीतभयैः व्यालमृगैः वृत्तिः हीयते अनेन सा विधीयते। अनया विकृत्या मायया (भूयते) ॥४॥

इहेति। इह आश्रमे तपोऽनुभावात् वीतभयाः लक्षणया विगतवैराः इत्यर्थः, अतएव व्यालमृगाः क्रूरव्याघ्रादयः। "व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः। परेषु प्राण्यन्तरेषु वृत्तिं जीविकां जहति हिंसया न जीवन्ति इत्यर्थः। अयं वराहो मयि मद्विषये तां वृत्तिं सुतरां विधत्ते करोति, मां हन्तुमिच्छतीत्यर्थः। तदियं विकृतिः तपःसामर्थ्यभङ्ग-रूपा भवेत् किं नु? यद्वा माया कस्यचित् दैत्यस्य वराहभूमिका भवेत् नु? नु-किंनु शब्दौ वितर्के ॥ ४ ॥

৩। এই বরাহ একাকী কঠিন মুখাগ্র দ্বারা শালমূলসকল বিদারিত এবং গাঢ়স্কন্ধঘর্ষণে পর্ব্বতপ্রান্ত ভগ্ন করিয়া যেন যুদ্ধে আমাকে আহ্বান করিয়াই আমার নিকট ধাবিত হইতেছে।

৪। এই আশ্রমে তপস্যার প্রভাববশে হিংসাদ্বেষহীন হইয়া হিংস্রক-পশুসকল অন্য প্রাণীর প্রতি হিংসাত্যাগ করিয়াছে। অথচ এই শূকর আমার উপরেই হিংসা-বৃত্তি অবলম্বন করিতেছে। অর্থাৎ আমাকে হত্যা করিতে আসিতেছে। অতএব ইহা কি? একি কাহারও মায়া?

३। अत्यन्त दृढ़ मुखाग्र (चोंथ वा प्रोथ) से साखुवृक्षको जड़ फाड़ और कड़े शरीरके रगड़से पर्व्वतके आसपासके पत्थर नष्ट भ्रष्ट कर यह वराह अकेला जान पड़ाता है कि मुझे युद्धके लिये ललकारता हुआ मेरी ओर दौड़ा आरहा है।

४। इस आश्रमपर तपस्याके प्रभावसे हिंसा और द्वेष रहित (होनेके कारण) कट्टर पशुओंने भी दूसरे प्राणियोंको हिंसा त्याग दी है। और यह सूअर मेरी हिंसा करने चाहता है। तो यह क्या है? एक किसीकी माया है क्या?

अवधूय विरोधिनीः यदारात् *
मृगजातीरभियाति मां जवेन ॥५॥

न मृगः खलु कोऽप्ययं जिघांसुः
स्खलति ह्यत्र तथा भृशं मनो मे।
विमलं कलुषीभवच्च चेतः
कथयत्येव हितैषिणं रिपुं वा ॥६॥

अन्वयः। अथवा एषः पूर्व्वं भृशम् आसेवितया रुषा कृतघ्नया इव न मुक्तः, यत् आरात् विरोधिनीः मृगजातीः अवधूय जवेन माम् अभियाति। वाच्य—एतम् आसेविता रुक् कृतघ्ना इव न मुक्तमती (एतेन) अहम् अभियायी ॥५॥

अन्वयः। अयं मृगः न खलु, (किन्तु) कः अपि (अन्यः एव) जिघांसुः, हि अत्र मे मनः तथा भृशं स्खलति (तथाहि) विमलं तथा कलुषीभवत् चेतः एव हितैषिणं रिपुं वा कथयति। वाच्य—मनसा स्खल्यते, विमलेन कलुषीभवता चेतसा हितैषी रिपुः वा कथ्यते ॥६॥

अथवेति। अथवा इति पक्षान्तरे। एषः मृगः पूर्वं जन्मान्तरे भृशम् अत्यर्थमासेवितया अतिपरिचितया रुषा क्रुधा मद्गोचरया इति शेषः। कृतघ्नया इव पूर्वकृतं वैरानुबन्धं सम्प्रति जानाति इत्युत्प्रेक्षा। न मुक्तः न त्यक्तः, अद्यापीति शेषः। नूनमयं प्राग्भवीयवैरानुबन्धीति कश्चित्। सम्प्रति वैरबीजासम्भवादिति भावः। कुतः? यत् यतः, आरात् समीपतः। "आराद्दूरसमीपयोः" इत्यमरः। विरोधिनीः मृगजातीः अवधूय त्यक्त्वा जवेन मामभियाति अभिधावति, अन्यथा न अभियायादिति भावः ॥५॥

৫। অথবা এই বরাহ জন্মান্তরে শত্রুতাবশতঃ আমার প্রতি অতিশয় ক্রোধযুক্ত ছিল; কৃতঘ্ন জনের ন্যায় সেই ক্রোধ বরাহকে ত্যাগ করে নাই! তাই এক্ষণে নিশ্চয়ই সেই শত্রুতা সাধন করিতে আসিতেছে। কেননা—সমীপবর্ত্তী স্বভাবশত্রু অন্য পশুদিগকে পরিত্যাগ করিয়া দ্রুতবেগে আমারই অভিমুখে আসিতেছে।

५। अथवा पूर्वजन्मकी शत्रुताके कारण इस वराहने मुझ पर अत्यन्त क्रोध किया था। कृतघ्न पुरुषकी तरह उस क्रोधने वराहको अबतक नहीं त्याग किया। तभी तो इस वक्त अवश्य वैर साधन करनेके लिये आरहा है। क्योंकि—आस-पासके स्वाभाविक विरोधी पशुओंको त्याग कर तेजीसे मेरी ही सामने आरहा है।

* जिघांसुरितीति वा पाठः।

मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः।
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥७॥

अन्वयः। मुनिः अस्मि, निरागसः मे कुतः भयम् इति एषः अभिमानः भूतये न (भवति) (तथाहि) परवृद्धिषु बद्धमत्सराणां दुरात्मनां किम् इव अलङ्घ्यम् अस्ति॥ वाच्य—मुनिना भूयते, अनेन अभिमानेन न (भूयते) केन अलङ्घ्येन भूयते। ७॥

न केवलमभियानमेव। किञ्च मनोवृत्तिरप्यत्र प्रमाणमित्याह—न मृग इति। अयं मृगो न खलु, किन्तु कोऽपि कश्चिदन्य एव जिघांसुर्हन्तुमिच्छुः। हन्तेः सन्नन्तादुप्रत्ययः। 'अभ्यासाच्च' इति कुत्वम्। 'अज्झनगमां सनि' इति दीर्घः। कुतः? हि यस्मात् अत्रास्मिन् मृगविषये मे मनस्तथा भृशं स्खलति क्षुभ्यति, यथा जिघांसुरयमिति बुद्धिरुत्पद्यत इत्यर्थः। तथाहि—विमलं प्रसन्नं तथा कलुषीभवत्क्षुभ्यच्च चेत एव हितैषिणं रिपुं वा मित्रममित्रञ्च कथयति। यत्र यत्र मनः प्रसीदति तदेव मित्रम्। यत्र क्षुभ्यति सोऽमित्र इति निश्चितमित्यर्थः। अतोऽयं वध्य इति भावः॥६॥

ननु मुनेः किमनया दुःशङ्कया। तत्राह—मुनिरिति। मुनिरस्मि, अतो निरागसो निरपराधस्य मे कुतो भयमित्येषोऽभिमानोऽहङ्कारः।

৬। এ নিশ্চয়ই পশু নহে—কিন্তু অন্য কোনও এক জিঘাংসুই হইবে কেননা, এই পশুর বিষয়ে আমার মন সেইরূপেই অতিশয় ক্ষুব্ধ হইতেছে অর্থাৎ ইহাকে জিঘাংসুজীব বলিয়া ধারণা হইতেছে। বস্তুতঃ প্রসন্ন ও ক্ষুব্ধ হৃদয়, মিত্র ও অমিত্রের পরিচয় বলিয়া থাকে। অর্থাৎ যাহাকে দেখিলে হৃদয় প্রসন্ন হয় সেই মিত্র, আর যাহাকে দেখিলে মন ক্ষুব্ধ হয় সেই অমিত্র।

६। वास्तवमें यह पशु नहीं है, मारनेकी इच्छा करनेवाला यह कोई दूसरा है, क्योंकि इस पशुके ऊपर इसी विचारसे मेरा मन अत्यन्त चञ्चल हो रहा है। अर्थात् इसको मैंने मारने चाहनेवाला प्राणी समझ लिया है। वास्तवमें प्रसन्न मन मित्रता, और क्रोधयुक्त मन शत्रुताका परिचय कराता है। अर्थात् जिसे देखनेपर प्रसन्न हो वह सो मित्र, और जिसके देखनेपर मनमें क्रोध हो सो शत्रु है।

दनुजः स्विदयं क्षपाचरो वा
वनजे नेति बलं बतास्ति सत्त्वे ।
अभिभूय तथाहि मेघनीलः
सकलं कम्पयतीव शैलराजम् ॥८॥

अन्वयः। अयं दनुजः स्वित् क्षपाचरः वा, वनजे सत्त्वे इति बलं न अस्ति बत, तथा हि मेघनीलः (अयं) सकलं शैलराजम् अभिभूय कम्पयति इव। वाच्य—बलेन न भूयते, मेघनीलेन (अनेन) सकलः शैलराजः अभिभूय कम्प्यते ॥ ८ ॥

"गर्व्वोऽभिमानोऽहङ्कार" इत्यमरः। अनपकारिणं मां कोऽपि किं करिष्यतीति बुद्धिर्भूतये श्रेयसे न भवति। तथा हि। परवृद्धिषु विषये बद्धमत्सराणां दुरात्मनामलङ्घ्यं किमिवास्ति न किञ्चिदकार्य्यमस्तीत्यर्थः। इवशब्दो व्याख्यालङ्कारे ॥ ७ ॥

अस्तु जिघांसुरपि तुच्छः किं करिष्यतीत्यत्राह—दनुजः इति। अयं दनुजः स्विद्दानवो वा क्षपाचरो राक्षसो वा, न तु मृग एवेत्यर्थः कुतः? वनजे सत्त्वे वन्यप्राणिनीदृशं बलं नास्ति। बतेत्याश्चर्य्ये। बलमेव समर्थयते, तथाहि—मेघनीलोऽयं वराह सकलं शैलराजमभिभूयाक्रम्य कम्पयतीव पदविष्टम्भभरात्तथा प्रतीयत इत्यर्थः। अत्र कम्पयतीवेत्युत्प्रेक्षागर्भोऽयं शैलकम्पनरूपकार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः।

৭। আমি তাপস, আমার কোনই অপরাধ নাই; সুতরাং আমার কিসের ভয়? এইরূপ অভিমান মঙ্গলের কারণ হয় না। বাস্তবিক—অপরের উন্নতির ব্যাপারে মৎসরতাশালী দুরাত্মাদিগের কিই বা অকরণীয় আছে?

৮। এই জীব নিশ্চিতই কোন দানব হইবে, অথবা রাক্ষস হইবে। কেননা বন্যপ্রাণিদিগের শরীরে এমত বল থাকে না। বাস্তবিক—মেঘের ন্যায় নীলবর্ণ এই শূকর, সমস্ত হিমালয়কে আক্রমণ করিয়া কম্পিত করিতেছে।

७। मैं तपस्वी हूं, मेरा कोई अपराध नहीं बल्कि मुझे किसीसे भय भी नहीं है, इस प्रकारके अभिमान करने पर भलाई न होगी। वास्तवमें दूसरेकी उन्नतिके ऊपर ईर्षा करनेवाले दुरात्माओंके लिये अकार्य्य कुछ भी नहीं है (अर्थात् डाहके कारण वे सभी भले बुरे काम कर सकते हैं)।

८। यह जीव अवश्य कोई दानव होगा, या राक्षस होगा, क्योंकि वनजन्तुओंमें ऐसा बल नहीं रह सकता। वास्तवमें—मेघके समान यह नीले रंगका सूअर आक्रमण (चनरहा) कर सारे हिमालयको कंपा रहा है।

अयमेव मृगव्यसत्रकामः
प्रहरिष्यन् मयि मायया शमस्थे ।
पृथुभिर्ध्वजिनीरवैरकार्षीत्
चकितोद्भ्रान्तमृगाणि काननानि ॥८॥

अन्वयः । अयम् एव शमस्थे मयि मायया प्रहरिष्यन् मृगव्यसत्र कामः (सन्) पृथुभिः ध्वजिनी-रवैः काननानि चकितोद्भ्रान्तमृगाणि अकार्षीत् । वाच्य—अनेन प्रहरिष्यता मृगव्यसत्रकामेन (सता) काननानि अक्रियिषत ॥ ८ ॥

किञ्च । योऽयं शैले मृगयाकलकलरवं श्रूयते सोऽप्येतन्मायापरिकल्पित एवेत्याह—अयमिति । अयमेव शमस्थे शान्तिनिविष्टे इति रन्ध्रोक्तिः, मयि अधिकरणविवक्षायां सप्तमी । मायया प्रहरिष्यन् प्रहर्त्तुमिच्छन्नित्यर्थः । 'लृट् शेषे च' इति चकारात् क्रियार्थायां क्रियायां लृट् । 'लृटः सद्वा' इति शत्रादेशः । मृगव्यं मृगया तस्य सत्रं वनम् तदर्थं वनमित्यर्थः । तत्कामयत इति मृगव्यसत्रकामः मृगयाभूमि-परिग्रहार्थी सन्नित्यर्थः । 'कर्मण्यण्' । 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इति, 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इति चामरः । पृथुभिः बृहद्भिर्ध्वजिनीरवैः सेनाकलकलैः स्वमायया कल्पितै रेवेत्यर्थः । काननानि चकितोद्भ्रान्ताः त्रस्तपलायिता मृगा येषु तानि अकार्षीच्चकार । अयमेव रन्ध्रान्वेषी मत्प्रहारार्थं स्वयमेव मृगयुर्भूत्वा वनावरोधाय सेनाघोषं कल्पयामास । स मृगरूपेणागच्छतीत्यर्थः ॥ ८ ॥

৮। আমি শমতা অবলম্বন করিয়া আছি, এই পশুই মায়াবলম্বনে আমাকে প্রহার করিতে ইচ্ছুক হইয়া মৃগয়ার ছলে এখানে আসিয়াছে এবং মায়াসৃজিত বিপুল সেনার কোলাহল স্বরে বনভূমিকে এমনই পূর্ণ করিয়া তুলিয়াছে, যাহাতে বনবাসী পশুপক্ষিগণ ভীত ত্রস্ত হইয়া পলাইতেছে।

८। मैंने शान्ति धारण की है, यह पशु मायाके बलसे मुझे मारनेकी इच्छा कर, मृगया (शिकार खेलने) के कपटसे यहां पर आया और मायासे बनी बड़ी सेनाके कोलाहलसे बनभूमीको इस प्रकार कम्पित कर रहा कि बनजन्तु मारे डरके भगे जा रहे हैं।

बहुशः कृतसत्कृतेर्विधातुं
प्रियमिच्छन्नथवा सुयोधनस्य।
क्षुभितं वनगोचराभियोगाद्
गणमाशिश्रियदाकुलं तिरश्चाम् ॥१०॥

अवलीढसनाभिरश्वसेनः
प्रसभं खाण्डवजातवेदसा वा।
प्रतिकर्त्तुमुपागतः समन्युः
कृतमन्युर्यदि वा वृकोदरेण ॥११॥ *

अन्वयः। अथवा बहुशः कृतसत्कृतेः सुयोधनस्य प्रियं विधातुम् इच्छन् (यः कश्चित्) वनगोचराभियोगात् क्षुभितं तिरश्चां गणम् आशिश्रियत्। वाच्य—इच्छता (येन केनचित्) क्षुभितः गणः आश्रायि ॥ १०॥

अन्वयः। खाण्डवजातवेदसा प्रसभम् अवलीढसनाभिः (अतः) समन्युः अश्वसेनः प्रतिकर्त्तुम् उपागतः, यदि वा वृकोदरेण कृतमन्युः (कश्चित् उपागतः)। वाच्य——सनाभिना समन्युना अश्वसेनेन—उपागतम्। कृतवैरेण वा (केनचित् उपागतम्) ॥ ११ ॥

वितर्कान्तरमाह—बहुश इति। अथवा बहुशः कृता सत्कृतिः सत्कारो येन तस्य सुयोधनस्य प्रियं मद्वधरूपं प्रतिप्रियं विधातुं कर्त्तुमिच्छन्, यः कश्चिदिति शेषः। वनं गोचरः' स्थानं येषां तेषां वनगोचराणामभियोगादवरोधात्। 'अभियोगोऽवरोधः स्यात्' इति हलायुधः। क्षुभितमुद्विग्नमाकुलं चलं, तिरश्चां मृगादिपशूनां गणमाशिश्रियद्वराहरूपेण प्राविशत्। 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' इति चङ्। 'चङि' इति द्विर्भावः ॥१०॥

वितर्कान्तरमाह—अवलीढेति। खाण्डवजातवेदसा खाण्डववनाग्निना प्रसभमवलीढसनाभिर्दग्धबन्धुः। 'सपिण्डास्तु सनाभयः। सगोत्र-

১০। অথবা সুযোধনের নিকট প্রভূত সৎকার লাভ করিয়া কোনও ব্যক্তি তাঁহার উপকার করিবার আশায়, আমাকে বধ করিতে আসিতেছে এবং বন্যজন্তুগণের অবরোধে চঞ্চল এই তির্য্যক্ দেহধারণ করিয়াছে।

१०। अथवा सुयोधनसे अत्यन्त सत्कार पाकर कोई प्राणी उस (दुर्योधन) के उपकार करनेकी आशासे मुझे मारने आया है, और जंगली जन्तुओंकी रुकावटसे चञ्चल हो तीर्य्यक् (तिर्छे चलनेवाले अर्थात् पशु) का शरीर धारण किया है।

* कृतवैरः इति पाठान्तरम्।

बलशालितया यथा तथा वा
धियमुच्छेदपरामयं दधान: ।
नियमेन मया निवर्हणीय:
परमं लाभमरातिभङ्गमाहु: ॥ १२ ॥

अन्वय: । यथा तथा वा ( अस्तु ) बलशालितया उच्छेदपरां धियं दधान: अयं नियमेन मया निवर्हणीय: ( तथाहि ) अरातिभङ्गं परमं लाभम् आहु: । वाच्य—यथा तथा वा ( भूयतां ) अर्हं दधानम् इमं निवर्हणीयम्, अरातिभङ्ग: परम: लाभ: उच्यते ॥ १२ ।

बान्धवज्ञातिबन्धुस्वस्वजना: समा: इत्यमर: । अत एव समन्युर्बद्धवैर: । तस्माज्जु नस्यापकारयितृत्वादिति भाव: । अश्वसेनस्तक्षकपुत्र: कश्चित् महासर्प: प्रतिकर्त्तुं वैरनिर्य्यातनार्थमुपागतो वा वराहमाययेति शेष: । पक्षान्तरमाह—यदि वा वृकोदरेण भीमसेनेन कृतमन्युर्जनितक्रोधो वा । कश्चिदिति शेष: । पुरा किल पाण्डव: खाण्डवदाहे पावकभयात् पलायमानांस्तक्षकपुत्रानश्वसेनस्य बन्धून् बाणैरवरुध्य दाहयामासेति भारतकथा ॥ ११ ॥

अथ द्वाभ्यामनन्तरकरणीयमध्यवस्यति—बलेत्यादिना । किं बहुना । यथा तथा वास्तु, अयं मायिक: पारमार्थिको वास्त्वित्यर्थ: । सर्व्वथापि बलशालितया बलदृप्ततयेत्यर्थ: । उच्छेदपरां धियं दधान: मां जिघांसुरित्यर्थ: । अतोऽयं मृगो नियमेनावश्यं मया निवर्हणीयो वध्य: । 'प्रमापणं निवर्हणम्' इत्यमर: । तथा हि । अरातिभङ्गं शत्रुक्षयं परमं लाभमाहु: ॥१२॥

১১। অথবা তক্ষকনাগের পুত্র অশ্বসেনের জ্ঞাতি-বান্ধবগণ খাণ্ডবদাহনে দগ্ধ হইয়াছিল বলিয়া ক্রুদ্ধ সেই অশ্বসেনই বা শত্রুতাসাধনের আকাঙ্ক্ষায় শূকররূপ ধরিয়া আসিল ? কিম্বা ভীমসেন কাহারও সহিত শত্রুতাচরণ করিয়াছেন, তাহার প্রতিশোধ গ্রহণের জন্য ক্রোধিত সেই ব্যক্তি এই বরাহরূপে আসিতেছে ।

११ । अथवा तक्षकका पुत्र 'अश्वसेन' खाण्डवदाहनके समय जाति भाइयोंके जल जानेसे क्रोधयुक्त हो गया था, क्या वही वैर साधन करनेकी इच्छासे सूअरका रूप धारण कर आया है ? या भीमसेनने किसीसे शत्रुता की है उसीका बदला लेनेके विचारसे हो यह व्यक्ति सूअरके रूपमें आया है ।

कुरु तात तपांस्यमार्गदायी
विजयायेत्यलमन्वशान् मुनिर्माम् ।
बलिनस्य वधादृतेऽस्य शक्यं
व्रतसंरक्षणमन्यथा न कर्त्तुम् ॥१३॥
इति तेन विचिन्त्य चापनाम
प्रथमं पौरुषचिह्नमाललम्बे

अन्वयः ।—हे तात, अमार्गदायी विजयाय तपांसि कुरु इति मुनिः माम् अलम् अन्वशात् । अस्य बलिनः वधात् ऋते अन्यथा व्रतसंरक्षणं कर्त्तुं न शक्यम् । वाच्य—अमार्गदायिना तपांसि क्रियन्तां अहम् अन्वशिष्ये । १३ ॥

ननु तपोविरोधिनी हिंसेत्याशङ्क्याह—कुर्व्विति । हे तात वत्स, मार्गदायी न भवतीत्यमार्गदायी, रन्ध्रान्वेषिणां प्रवेशमयच्छन्नित्यर्थः । कुतः ? जयार्थित्वादित्याह—विजयाय तपांसि कुर्व्विति मुनिर्व्यासो मामलं भृशमन्वशादनुशिष्टवान् । अनुशासेर्लङ् । ननु मुनिर्वा कथमधर्म्ममन्वशात्तत्राह—बलिन इति । अस्य मृगस्य बलिनः प्रबलस्य वधादृते वधं विना । 'अन्यारादितरर्त्ते—' इत्यादिना पञ्चमी । अन्यथोपायान्तरेण व्रतसंरक्षणं तपोरक्षणं कर्त्तुं न शक्यम् । हिंसापि दुष्टनिग्रहात्मिका नाधर्म्म इत्यर्थः ॥१३॥

১২। যাউক বেশি আর কি, এ যেই কেন না হউক, বলদৃপ্ত বলিয়া যখন আমাকে নিহত করিবার অভিলাষ করিয়াছে—তখন আমি নিশ্চয়ই ইহাকে বধ করিব। পণ্ডিতগণ বলেন যে, শত্রুসংহার পরম লাভ।

१२। जो हो, और क्या, यह जो कोई क्योन हो जब मुझे मारनेका किया है तो मैं हो इसको अवश्य मारूंगा, पण्डितोंने शत्रु बधको उत्तम लाभ कहा है।

१३। वत्स, तुम रन्ध्रान्वेषी (धान करनेयोग्य अवसर पर ध्यान लगाये) लोगोंको अपने रन्ध्रमार्ग (अर्थात् प्रमादके अवसर) में प्रवेश करने न देते हुए अवमानेके लिये तपस्या करते रहोगे। यही उपदेश व्यासदेवजीने मुझे वार वार दिया है। इसीसे इस बलवान् शत्रुको मारनेके अतिरिक्त किसी दूसरे उपायसे मैं अपने व्रतको रक्षा नहीं कर सकता।

उपलब्धगुण: परस्य भेदे
सचिव: शुद्ध इवाददे च बाण: ॥१४॥
अनुभाववता गुरु स्थिरत्वा-
दविसंवादि धनुर्धनञ्जयेन।

अन्वय:। तेन इति विचिन्त्य चापनाम प्रथमं पौरुषचिह्नं आललम्बे,। परस्य भेदे उपलब्धगुण: शुद्ध: बाण: च सचिव: इव आददे। वाच्य—स: पौरुषचिह्नं आललम्बे, उपलब्धगुणं शुद्धं बाणं च सचिवं इव आददे ॥१४॥

इतीति। तेनार्ज्जुनेनेतीत्थं विचिन्त्य वितर्क्य चापनाम चापाख्यं प्रथमं पौरुषचिह्नम्, तस्य मुख्यायुधत्वादिति भाव:। आललम्बे गृहीतम्। कर्म्मणि लिट्। अथ परस्य शत्रोर्भेदे विदारणे उपजाये चोपलब्धगुणो ज्ञातशक्ति:। बाणस्तु प्राप्तमौर्व्वीकस्येति शेष:। शुद्धो ऋजुर्दिग्धत्वादिदोषरहितो धा। 'नकर्णिभेदैर्नोदिग्धैर्नाग्निज्वलित-तेजसै:' इति निषेधात्। अन्यत्रोपधाविशुद्ध: निर्म्मलचित्त इति यावत्। बाणश्च सचिव इवाददे जगृहे। अत्र बाणसचिवयो: शब्दमात्रसाधर्म्म्यात् श्लेषालङ्कार:। प्रकृताप्रकृतविषय इति सर्व्वस्वकार:। उपमैवेति केचित् ॥१४॥

১৩। "বৎস! তুমি রন্ধ্রান্বেষীদিগকে তোমার রন্ধ্রপথে প্রবেশ করিতে না দিয়া জয়লাভের জন্য তপস্যা করিতে থাক।" ব্যাসদেব বারংবার আমাকে এই আদেশ করিয়াছিলেন। অতএব এই বলবান্ পশুর সংহার ব্যতীত অপর কোনও উপায়ে আমি ব্রত রক্ষা করিতে পারিব না।

১। অর্জ্জুন এইরূপ বিতর্ক করিয়া চাপনামক প্রথম পৌরুষ চিহ্ন হাতে লইলেন। তারপর শত্রুসংহারে যাহার শক্তি জানা গিয়াছে, এমন একটী সরল বাণও সচিবের ন্যায় গ্রহণ করিলেন।

१४। अर्ज्जुनने इस प्रकार सोच विचार धनुष नामक अपने पहले पुरुषार्थको ग्रहण किया (अर्थात् सबसे पहला या प्रधान पुरुषार्थ, उनसे धनुर्युद्ध था और उसमें भी गाण्डीव) इसके बाद, शत्रुओंको संहार करनेमें जिसकी शक्ति मालूम हो चुकी थी ऐसा एक सीधा बाण भी मन्त्री की तरह ग्रहण किया।

स्वबलव्यसनेऽपि पीड्यमानं
गुणवन्मित्रमिवानतिं प्रपेदे ॥१५॥
प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीड़ितस्तदानीम् ।
अधिरोहति गाण्डीवं महेषौ
सकलः संशयमारुरोह शैलः ॥१६॥

अन्वयः। अनुभाववता धनञ्जयेन गुरु स्थिरत्वात् अविसंवादि गुणवत् स्वबलव्यसने ऽपि पीड्यमानं धनुः मित्रं इव आनतिं प्रपेदे। वाच्य—गुरुणा अविसंवादिना गुणवता धनुषा मित्रेण इव पीड्यमानेन आनतिः प्रपेदे ॥१५॥

अन्वयः। तदानीं महेषौ गाण्डिवम् अधिरोहति (सति) प्रविकर्षनिनादभिन्नरन्ध्रः पदविष्टम्भनिपीड़ितः सकलः शैलः संशयम् आरुरोह। वाच्य—भिन्नरन्ध्रेण...निपीड़ितेन सकलेन शैलेन संशयः आरुरोहे ॥ १६ ॥

अनुभावेति। गुरु महत् पूज्यञ्च, स्थिरत्वात् सारवत्वादविसंवादि अभङ्गुरम्, अन्यच्च प्रतिष्ठितत्वादसत्यरहितम्। गुणवत् सज्यम्, अन्यत्रौदार्य्यादिगुणवत्, धनुर्मित्रमिवानुभाववता निश्चयबुद्धिमता। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः। धनञ्जयेन स्वबलव्यसनेऽपि तपसा चीणबलेऽपि। अन्यत्र स्वं धनं तदेव बलं तस्य व्यसने नाशेऽपि, पीड्यमानमाकृष्यमाणमवरुध्यमानञ्च सन्मित्रमिवानतिं नम्रतामानुकूल्यञ्च प्रपेदे। अलङ्कारस्तु पूर्व्ववत् ॥ १५ ॥

১৫। প্রতিষ্ঠাহেতু অসত্যরহিত, ঔদার্য্যাদি গুণশালী মিত্র যেরূপ অর্থরূপ বলের অভাবেও (দরিদ্র হইলেও) অনুরুধ্যমান হইলে সহায়তা প্রাপ্ত হয়, সেইরূপ সারবত্তা হেতু গুরু, অভঙ্গুর ও জ্যাযুক্ত ধনু, তপঃক্লেশে ক্ষীণবল অর্জ্জুন কর্ত্তৃক আকৃষ্যমাণ হইয়া নম্র হইল।

१५। प्रतिष्ठाके कारण असत्यरहित (सच्चा) और पराक्रम आदिक गुणोंसे सम्पन्न मित्र जिस प्रकार धनरूपी बल न रहने (दरिद्र होने) पर भी प्रार्थना करने पर सहायताके लिये उपस्थित होता है, उसी प्रकार दृढ़ताके कारण भारी टूटने योग्य नहीं और प्रत्यञ्चायुक्त धनुष तपस्याके क्लेशसे कुछ दुर्ब्बल हुए अर्जुन द्वारा खींच जानेपर नम्र हो गया।

दद्दशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्त्रिसृणां पुरां विधातुं
वधमात्मेव भयानकः परेषाम् ॥१७॥

अन्वयः । अथ शिवेन स्थिरपूर्णायतचापमण्डलस्थः तिसृणां पुरां वधं विधातुं रचितः आत्मा इव परेषां भयङ्करः सविस्मयं दद्दशे । वाच्य—शिवः—मण्डलस्थं रचितम् आत्मानम् इव भयङ्करं ददर्श ॥ १७ ॥

प्रविकर्षेति । तदानीं तस्मिन् काले महेषौ बाणे गाण्डिवमर्ज्जुन-धनुरधिरोहति सति । 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ' इत्यमरः । 'गाण्डजगात् संज्ञायाम्' इति वप्रत्ययः । प्रविकर्षेण ज्या स्फालनेन यो निनादस्तेन भिन्नरन्ध्रो विदलितगह्वरः । तथा पदविष्टम्भेन पादाक्रमणेन निपीड़ितो नुन्नः सकलः समूलः ( सर्व्वः ) शैलः संशयं जीवितसन्देहमारुरोह प्रापेत्यर्थः । अत्र शैलस्य संशयासम्बन्धेऽपि सम्बन्ध-कथनादतिशयोक्तिरलङ्कारः ॥१६॥

दद्दश इति । अथ बाणसन्धानानन्तरं शिवेन स्थिरं निश्चलं पूर्णञ्च यथा तथा आयते आकृष्टे चापमण्डले तिष्ठतीति तथोक्तः, चापमण्डल-मन्तर्धाय स्थित इत्यर्थः । तिसृणाम् । 'न तिसृ चतसृ' इति दीर्घ-प्रतिषेधः । पुराम् त्रिपुरासुरस्येत्यर्थः । वधं संहारं विधातुं कर्त्तुं रचितः कल्पितः, स्थानविशेषे स्थापित इति यावत् । आत्मा स्वयमिव परेषां भयानको भयङ्करः सोऽर्ज्जुनः सविस्मयं दद्दशे दृष्टः । उपमा-लङ्कारः ॥१७॥

১৬। তখন গাণ্ডীবে মহান্ বাণ যোজিত হইলে, টঙ্কারশব্দে বিদলিত গহ্বর ও পাদক্ষেপে নিপীড়িত সমুদয় পর্ব্বতপ্রদেশ—তাহাদের জীবন বিষয়ে সন্দেহারূঢ় হইল।

১৭। অনন্তর শিব, বিস্ময়ের সহিত দেখিলেন, অর্জ্জুন, স্থির ধনু সম্পূর্ণরূপে আকর্ষণ করিয়া অবস্থান করিতেছেন, তখন তাহাকে ত্রিপুরাসুর নিধনকালে পরিকল্পিত আপনারই ন্যায় শত্রুভয়ঙ্কর বলিয়া দেখা যাইতে লাগিল।

१६। उस समय गाण्डीव धनुष पर जब बाण चढ़ा तब टंकारकी ध्वनिसे फटती कन्दराएं और पैर उठा कर रखनेसे दबे पर्व्वतके स्थान, अपनी उपर निवास करनेवालोंको जीवन सङ्कटमें डाल रहे थे।

विचकर्ष च संहितेषुरुच्चै-
श्चरणास्कन्दननामिताचलेन्द्रः ।
धनुरायतभोगवासुकिज्या-
वदनग्रन्थिविमुक्तवह्नि शम्भुः ॥१८॥

स भवस्य भवक्षयैकहेतोः
सितसप्तेश्च विधास्यतोः सहार्थम् ।
रिपुराप पराभवाय मध्यं
प्रकृतिप्रत्यययोरिवानुबन्धः ॥ १९ ॥

अन्वयः। शम्भुः च संहितेषुः (सन्) उच्चैः चरणास्कन्दननामिताचलेन्द्रः, आयतभोगवासुकिज्या वदनग्रन्थिविमुक्तवह्नि धनुः विचकर्ष। वाच्य—शम्भुना संहितेषुणा—चलेन्द्रेण धनुः विचकृषे ॥ १८ ॥

अन्वयः। सहार्थं विधास्यतोः भवक्षयैकहेतोः भवस्य, सितसप्तेः च मध्यं रिपुः प्रकृतिप्रत्यययोः मध्यम् अनुबन्धः इव पराभवाय आप। वाच्य—रिपुणा अनुबन्धेन इव आपे ॥ १९ ॥

अथ पिनाकिवृत्तान्तमाह—विचकर्षेति। अथ शम्भुश्च संहितेषुः सन्। उच्चैर्भृशं चरणास्कन्दनेन पदविष्टम्भेन नामितो अधोनीतोऽचलेन्द्रो येन स तथोक्तः। आयतभोगः आकृष्टकायो वासुकिरेव ज्या तस्य वदनमेव ग्रन्थिस्तेन विमुक्तः उत्सृष्टो वह्निर्यस्य तद्धनुर्विचकर्षेति स्वभावोक्तिः ॥ १८॥

১৮। অনন্তর মহাদেবও শরসন্ধানপূর্ব্বক ধনু আকর্ষণ করিলেন। তাহার পদভরে হিমালয় যেন নত হইল। বাসুকীর ন্যায় তদীয় ধনুর্জ্যা আকৃষ্ট হওয়াতে উহার মুখগ্রন্থি হইতে অগ্নি নির্গত হইতে লাগিল।

१७। अनन्तर शिवजीने देखा कि अर्जुन दृढ़ धनुषको अत्यन्त खींच कर खड़े हैं, उस समय उनके, त्रिपुरासुरके मारनेके समय सज्जित हुए अपने समान (अर्जुन) शत्रुओं भयभीत करनेवाले दिखाई पड़ते थे।

१८। अनन्तर शिवजीने भी बाण चढ़ाकर धनुष खींचा, उनके पैरके भारसे जान पड़ता था कि हिमालय दब गया, वासुकिकी तरह खींच हुई उनकी ज्या (प्रत्यंचा अर्थात् धनुषके तांत) के मुख (अर्थात् वासुकिके मुख) से आग निकलने लगी।

अथ दीपितवारिवाहवर्त्मा
रवविवासितवारणादवार्य्यः।
निपपात जवादिषुः पिनाकात्
महतोऽभ्रादिव वैद्युतः कृशानुः ॥ २० ॥

अन्वयः। अथ दीपितवारिवाहवर्त्मा अवार्य्यः इषुः रवविवासितवारणात् पिनाकात् महतः अभ्रात् वैद्युतः कृशानुः इव जवात् निपपात। वाच्य—...वर्त्मना अवार्य्येण इषुणा वैद्युतेन कृशानुना इव निपते ॥ २० ॥

स इति। अह सम्भूय अर्थमविवधरूपप्रयोजनं विधास्यतोः करिष्यतोः। अन्यत्र सहार्थमभिधेयमभिधास्यतोरित्यर्थः। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति वचनात्। भवच्छयैकहेतोः संसारोच्छेदनिदानस्य भवस्य शिवस्य, सितसप्तेरर्जुनस्य च मध्यं रिपुर्वराहः। यस्मात् प्रत्ययो विधीयते सा प्रकृतिर्धात्वादिः, प्रत्ययः सनादिः। तयोर्मध्यमनुबन्धः इत्संज्ञको वर्णः। "यथाभूतं भूति"रित्यादौ ककारः। स इव पराभवाय नाशाय लोपार्थमेवाप। न तु स्थित्यर्थमित्यर्थः ॥ १९ ॥

अथेति। अथ रिपोर्मध्यप्रवेशानन्तरं, दीपितं वारिवाहवर्त्माकाशं येन सः। अवार्य्यो दुर्वारः, इषुः शरो रवविवासितवारणात् स्वघोषभीषितगजात् पिनाकाज्जिष्णुधनुषः। 'पिनाकोऽजगवं धनुः' इत्यमरः। महतो

১৯। প্রকৃতি ও প্রত্যয়ের মধ্যে যেমন অনুবন্ধ (যাহা ইৎ অর্থাৎ লোপ পায়, এমন বর্ণ) আসিয়া লোপের জন্য উপস্থিত হয়, সেইরূপ, শত্রুসংহাররূপ একই প্রকার কার্য্যে উদ্যত, সংসারধ্বংসনিদান শিব ও শ্বেতাশ্ব অর্জ্জুনের মধ্যস্থলে বরাহরূপী শত্রু লোপের (আত্মবিনাশের) জন্যই উপস্থিত হইল।

২০। বরাহ উভয়ের মধ্যস্থলে উপস্থিত হইলে পর দুর্ব্বার শিব-শর নভোমণ্ডল আলোকিত করিয়া হস্তিগণের ত্রাসজনক ভীষণনাদকারী পিণাক ধনু হইতে অতিবেগে নিক্ষিপ্ত হইল। মনে হইল, ভীষণ মেঘ হইতে বিদ্যুদগ্নি পতিত হইল।

१९। प्रकृति और प्रत्ययके बीचमें जिस प्रकार वध (जो इत् संज्ञक अर्थात् लुप्त किया जाता है ऐसे प्रकार) लोप (नष्ट) होनेके लिये आकर उपस्थित होता है, उसी प्रकार उजले घोड़ों शत्रुसंहार रूप एक ही कार्य्यके लिये उद्यत, संसारके संहारकारण शिवजी और (मैं जीतनेके लिये) को रखनेवाले अर्जुनके बीचमें वराहरूपी शत्रु (अपने मरने) के लिये ही आकर उपस्थित हुआ।

व्रजतोऽस्य बृहत्पतत्रजन्मा
कृततार्क्ष्योपनिपातवेगशङ्कः ।
प्रतिनादमहान्महोरगाणां
हृदयश्रोत्रभिदुत्पपात नादः ॥ २१ ॥

नयनादिव शूलिनः प्रवृत्ते-
र्मनसोऽप्याशुतरं यतः पिषङ्गैः ।

अन्वयः । व्रजतः अस्य बृहत्पतत्रजन्मा कृततार्क्ष्योपनिपातवेगशङ्कः ( अतः ) महोरगाणां हृदयश्रोत्रभित् प्रतिनादमहान् नादः उत्पपात । वाच्य—बृहत्पतत्रजन्मना—वेगशङ्केन—श्रोत्रभिदा प्रतिनादमहता नादेन उत्पेते ॥ २१ ॥

अभ्रात् मेघात्, विद्युतोऽयं वैद्युतः कृशानुरशनिरिव जवात् वेगान्निपपात आदधाव ॥२०॥

व्रजत इति । व्रजतो धावतो अस्य बाणस्य बृहद्भ्यः पतत्रेभ्यः पक्षेभ्यो जन्म यस्य स तथोक्तः । कृता तार्क्ष्योपनिपातवेगशङ्का गरुडागमनवेगभ्रमो येन सः । अत एव महोरगाणां सर्पाणां हृदयानि श्रोत्राणि च भिनत्तीति हृदयश्रोत्रभित् । 'समुद्राभ्राद्घः' इति सूत्रे पूर्व्वनिपातव्यभिचारात् श्रोत्रशब्दस्य पूर्व्वनिपातव्यभिचारः । प्रतिनादैः प्रतिध्वनिभिर्महान् संमूर्च्छितो नादः, उत्पपात उत्थितः । अत्र नादस्योरगहृदयभेदकत्वा-सम्बन्धेऽपि सम्बन्धाभिधानादतिशयोक्तिः । सा च तार्क्ष्यवेगभ्रमो-त्यापितेति तयोरङ्गाङ्गिभावेन सङ्करः ॥ २१ ॥

২১। বাণ, সবেগে ধাবিত হইলে তাহার সুবৃহৎ পক্ষ হইতে অতি মহান্ প্রতিধ্বনির জন্ম হইল। তাহাতে মনে লইল, যেন ভীষণবেগে গরুড় আসিতেছে। আর তাহার আগমনবেগের শব্দে মহাসর্পদিগের হৃদয় ও কর্ণ বিদীর্ণ হইতে লাগিল!

२०। वराह दोनोंके बीचमें आ पड़ा तो, शत्रुओंसे किसी प्रकार नहीं वाध किये जाने योग्य शिवजीका बाण, आकाशमण्डलका उजेला कर हाथियोंको डरानेयोग्य भयानक शब्द करनेवाले पिनाक धनुषसे अत्यन्त वेगके साथ छूटा। जान पड़ता था कि मेघमण्डलसे बिजलीकी आग गिर पड़ी ॥

२१। बाण जब बड़े वेगके साथ चला तो उसके अत्यन्त विशाल पांखोंसे बहुत जोरदार प्रतिध्वनि निकली। जिससे जान पड़ा कि बड़ी तेजी गरुड़ आ रहे हैं, और उनके आनेके वेगसे बड़े २ सर्पोंके कान और हृदय फटने लगे।

विदधे विलसत्तड़िल्लताभैः
किरणैर्व्योमनि मार्गणस्य मार्गः ॥ २२ ॥
अपयन्धनुषः शिवान्तिकस्थै-
र्विवरेसद्भिरभिख्यया जिहानः ।
युगपद्ददृशे विशन् वराहं
तदुपोढैश्च नभश्चरैः पृषत्कः ॥ २३ ॥

अन्वयः । शूलिनः नयनात् प्रवृत्तैः इव पिशङ्गैः विलसत्तड़िल्लताभैः मनसः अपि आशुतरं यतः मार्गणस्य किरणैः व्योमनि मार्गः विदधे । वाच्य—प्रवृत्ताः विशङ्गाः...ल्लताभाः किरणाः मार्गं विदधुः ॥२२॥

अन्वयः । पृषत्कः धनुषः अपयन् शिवान्तिकस्थैः नभश्चरैः अभिख्यया जिहानः विवरेसद्भिः (नभश्चरैः) वराहं विशन् तदुपोढैः (नभश्चरैः) युगपत् ददृशे । वाच्य—पृषत्कम् अपयन्तं शिवान्तिकस्थाः जिहानं विवरेसदः विशन्तं तदुपोढाः नभश्चराः ददृशुः ॥२३॥

नयनादिति । शूलिनो नयनात् प्रवृत्तैर्निर्गतैरिव स्थितैरित्युत्प्रेक्षा । नेत्राग्निशिखाकल्पैरित्यर्थः । पिशङ्गैः पिङ्गलैः विलसत्तड़िल्लताभैर्विद्युद्दामतुल्यैरित्युपमा । मनसश्चित्तादप्याशुतरं शीघ्रतरम् । आशुशब्दादव्ययात्तरप् । अतः 'किमेत्तिङव्यय—इत्यादिना आम् प्रत्ययो न । 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत्' इत्यमरः । यतो गच्छतः इणः शतृप्रत्ययः । मार्गणस्य शरस्य । 'कलम्बमार्गणशराः' इत्यमरः । किरणैर्व्योमन्याकाशे मार्गः उल्कारेखाकारः पन्था विदधे विरचित इति स्वभावोक्तिरलङ्कारः ॥२२॥

अपयन्निति । पृषत्को बाणः । 'पृषत्कबाणविशिखाः' इत्यमरः । धनुषः पिनाकादपयन्नियन्निर्गच्छन्नित्यर्थः । इणः शतृप्रत्ययः । शिवान्तिकस्थैर्नभश्चरैरभिख्यया शोभया जिहानः, शोभनां गच्छन्नित्यर्थः ।

२२। শূলপাণির নয়নোৎপন্ন অগ্নিশিখার ন্যায়, পিঙ্গলবর্ণ স্ফুরিত বিদ্যুদ্দাম তুল্য মনের অপেক্ষাও অধিকতর শীঘ্রগামী শরের কিরণ আকাশে যেন উল্কারেখার ন্যায় একটা পথ রচনা করিল।

२२। शूलपाणि (शिवजी) के नेत्रसे उत्पन्न अग्निकी शिखाकी तरह, पिनाकके रंगसे चमक मारती, बिजली की रेखाकी तरह, मनसे भी अधिक तेज चलनेवाले बाणको किरणोंने, जान पड़ता था कि आकाशमें उल्काकी रेखासे एक रास्ता बना दिया।

स तमालनिभे रिपौ सुराणां
घननीहार इवाविषक्तवेगः ।
भयविप्लुतमीक्षितो नभस्थै-
र्जगतीं ग्राह इवापगां जगाहे ॥ २४ ॥

अन्वयः । सः तमालनिभे सुराणां रिपौ घननीहारे इव अविषक्तवेगः (सन्) नभस्थैः भयविप्लुतं ईक्षितः, आपगां ग्राहः इव जगतीं जगाहे । वाच्य—तेन अविषक्तवेगेन (सता) ईक्षितेन आपगा ग्राहेण जगती जगाहे ॥२४॥

'ओहाङ् गतौ' इति धातोः शानच । 'अभिख्या नामशोभयोः' इत्यमरः। विवरे सीदन्तीति विवरेसदस्तैर्विवरेसद्भिरन्तरालवर्त्तिभिर्नभश्चरैः। 'सत्सूद्विष—' इत्यादिना क्विप्। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। अथ वराहं विशन् प्रविशंस्तदुपोढ़स्तं वराहमुपोढ़ः प्रत्यासन्नः। वहेः कर्त्तरि क्तः। नभश्चरैर्युगपदृष्टश्चे दृष्ट इति बाणवेगोक्तिः। अत्र क्रमेण पिनाकनिष्क्रमणादिक्रियाविशिष्टस्य बाणस्य शिवान्तिकादिभिन्नदेशस्थनभश्चरकर्तृकदर्शनयौगपद्यासम्बन्धेऽपि तत्सम्बन्धोक्तिमूलातिशयोक्त्या लोकोत्तरवेगप्रतीतेरलङ्कारेण वस्तुध्वनिः ॥ २३ ॥

स इति । स बाणस्तमालनिभे तमालप्रभे, नीलाभे इति यावत्। सुराणां रिपौ वराहे, घननीहारे सान्द्रतुहिने इवाविषक्तवेगोऽप्रतिबद्धवेगः सन् । तथा नभस्थैः खेचरैः भयेन विप्लुतं विह्वलं यथा तथा ईक्षितः सन् । अपां सम्बन्धिवेग आपः, अपां समूहो वा आपम् आपेन गच्छतीत्यापगा नदी तां गृह्णातीति ग्राहो जलग्राहः, जलचर इति यावत् । 'जलचरे' इति वक्तव्याद्विभाषया ग्राह इति णप्रत्ययः । स इव जगतीं भूमिम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । जगाहे विवेश अन्तर्हित इत्यर्थः ॥ २४ ॥

२३। মহাদেবের নিক্ষিপ্ত শর ধনু হইতে বহির্গত হইবার সময় তৎসন্নিকটস্থ আকাশগামীগণও বিদ্যুৎপথে গমন করিবার কালে অন্তরালবর্ত্তীগণ, শূকরশরীরে বাণ প্রবিষ্ট হইলে, তাহার নিকটস্থ নভশ্চরগণ উহা এইরূপে দেখিল। বস্তুতঃ বাণের বহির্গমন, ধাবন ও শূকরদেহ প্রবেশ যেন যুগপৎ ঘটিল।

২৪। সেই তমালতরু সদৃশ শিবশর অপ্রতিহতবেগে প্রবিষ্ট হইল। নভশ্চরেরা ভয়বিহ্বলভাবে দেখিল যে উহা (বরাহদেহ ভেদ করিয়া) জলজন্তুরা যেমন নদীজলে প্রবেশ করে সেইভাবে ভূগর্ভে প্রবেশ করিল।

सपदि प्रियरूपपर्वरेखः
सितलोहाग्रनखः खमाससाद ।
कुपितान्तकतर्ज्जनाङ्गुलिश्री-
र्व्यथयन् प्राणभृतः कपिध्वजेषुः ॥२५॥

अन्वयः। सपदि प्रियरूपपर्व्वरेखः सितलोहाग्रनखः कुपितान्तकतर्ज्जनाङ्गुलिश्रीः कपिध्वजेषुः प्राणभृतः व्यथयन् खम् आससाद। वाच—पर्व्वरेखेण...नखेन कपिध्वजेषुणा व्यथयता खम् आसेदे ॥ २५ ॥

अथार्ज्जुन बाणप्रयोगमाह—सपदीति। सपदि शिवबाणप्रयोगसमय एव प्रियाः रूपमाकृतिः पर्व्वाणि ग्रन्थयो रेखाः रचनाश्च यस्य सः। अङ्गुलिपक्षे पर्व्वरेखाः प्रसिद्धाः। लोहाग्रमयःफलं तन्नखमिवेत्युपमितसमासः। सितं लोहाग्रनखं यस्य सः। कुपितस्यान्तकस्य मृत्योर्या तर्जनस्याङ्गुलिः, तर्ज्जनाङ्गुलिस्तस्याः श्रीरिव श्रीर्यस्य सः, कपिध्वजेषुरर्ज्जुनबाणः, प्राणभृतो व्यथयन् भीषयमाणः खमाकाशमाससाद प्राप। उपमालङ्कारः ॥ २५ ॥

२८। সেই একই সময়ে যাহার আকৃতি অতি সুন্দর ও পর্ব্ব রচনা অতি তীক্ষ্ণ লৌহময় নখবৎ, কুপিত যমরাজের তর্জ্জনী অঙ্গুলের ন্যায় শ্রীসম্পন্ন অর্জ্জুনবাণ, প্রাণিদিগকে ভীত ও ব্যথিত করিয়া আকাশে উত্থিত হইল।

२३। शिवजीने छोड़े बाणके धनुषसे बाहर निकलनेके समय, शिवजीके आसपास आकाशमें विहार करनेवालोंने देखा कि बिजली छूट चमकनेके समय आकाशके बीचमें आकाशगया है, बाण जब सूअरके शरीर घुस् गया तब उसके पास रहने और आकाशमें विहार करनेवालोंने देखो असलमें जान पड़ता था, कि बाणके छूटना, चलना और सूअरके शरीरमें प्रवेश करना एकही समयमें हुए।

२४। शीवजीका बाण बड़ी तेजीसे तमाल वृक्षके समान सूअरका शरीरमें घुस गया। आकाशमें विहार करनेबालोंने देखा कि वह (सूअरका शरीर छेदकर) जिस प्रकार जलजन्तु नदीके जलमें प्रवेश करते हैं उसी प्रकार (बाण) पृथ्वीके भीतर चल गया।

२५। उस एक ही समयमें, देखनेमें अत्यन्त सुडौल (सुन्दर आकारवाला) गिरह (पर्व्व) बनाट जिसकी थीं इस प्रकारका, नाखूनकी तरह लोहेका बना अत्यन्त तीक्ष्ण फलवाला, (इस लिये) कोप किये यमराजकी तर्जना अंगुलीकी तरह, अर्ज्जुनका बाण प्राणियोंको भयसे व्याकुल करता आकाशमें जा निकला।

परमास्त्रपरिग्रहोरुतेजः
स्फुरदुल्काकृति विक्षिपन् वनेषु ।
स जवेन पतन् परःशतानां
पततां व्रात इवारवं वितेने ॥२६॥

अविभावितनिष्क्रमप्रयाणः
शमितायाम इवातिरंहसा सः ।
सह पूर्वतरं नु चित्तवृत्ते-
रपतित्वा नु चकार लक्ष्यभेदम् ॥२७॥

अन्वयः। परमास्त्रपरिग्रहोरु स्फुरत् उल्काकृति तेजः वनेषु विक्षिपन् ( सन् ) जवेन पतन् सः परःशतानां पततां व्रातः इव आरवं वितेने ॥ २६ ॥

अन्वयः। अतिरंहसा अविभावितनिष्क्रमप्रयाणः शमितायामः इव सः सह नु चित्तवृत्तेः, पूर्व्वतरं नु, अपतित्वा नु, लक्ष्यभेदं चकार। वाच्य—प्रयाणेन शमितायामेन इव तेन लक्ष्यभेदः चक्रे ॥ २७ ।

परमेति। परमास्त्रपरिग्रहेण दिव्यास्त्राधिष्ठानेन उरु महत् अतएव स्फुरदुल्काकृति, उल्कावद्दीर्घायमाणमित्यर्थः। तेजो वनेषु विक्षिपन् विकिरन् सन्। जवेन पतन् धावन् स बाणः। शतात् परे परःशताः तेषाम्, शताधिकसंख्यकानामित्यर्थः। 'परःशताद्यास्ते येषां परा संख्या शतादिकात्' इत्यमरः। 'पञ्चमो—' इति योगविभागात् समासः। 'राजदन्तादिषु परम्' इत्युपसर्जनस्य शतशब्दस्य परनिपातः, पारस्करादित्वात् सुड़ागमः। पततां पतत्रिणाम्। 'पतत् पत्नरथाण्डजाः' इत्यमरः व्रातः समूह इवारवं वितेने विस्तारयामास ॥२६॥

२७। দিব্যাস্ত্রের অধিষ্ঠানহেতু মহৎ সেই অর্জ্জুননিক্ষিপ্তবাণ, উল্কার ন্যায় বনমধ্যে দীর্ঘ কিরণরেখা বিকিরণ করিতে করিতে সবেগে পতিত হইল এবং বহুশত পক্ষীর তুল্য শব্দ করিয়া উঠিল।

२६। अर्जुनका छोड़ा हुआ वह बड़ा बाण दिव्यास्त्रके अधिष्ठान ( अभिमन्त्रित होने ) के कारण उल्काओ तरह वनमें किरणोंकी एक लम्बी रेखा छिटकाते ( चकमकाते २ ) या निकला, और कई सैन पक्षियोंकी तरह शब्द कर ऊपर चला गया।

स वृषध्वजसायकावभिन्नं
जयहेतुः प्रतिकायमेषणीयम् ।
लघु साधयितुं शरः प्रसेहे
विधिनेवार्थमुदीरितंप्रयत्नः ॥२८॥

अन्वयः। जयहेतुः सः वृषध्वजसायकावभिन्नम् एषणीयम् प्रतिकायं विधिना उदीरितम् अर्थं प्रयत्न इव लघु साधयितुं प्रसेहे। वाच्य—जयहेतुना तेन प्रयत्नेन इव प्रसेहे। २८॥

अविभावितेति। अति इसातिवेगेनाविभाविते अलक्षिते निष्क्रमो गाण्डीवान्निःसरणं प्रयाणमन्तरागमनं च यस्य सः। तथा शमितायामः संक्षिप्तदैर्घ्यं इव स्थित इत्युपात्तवेगगुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा। स शरः। सह नु सह वा चित्तवृत्त्या इति शेषः। चित्तवृत्तेः पूर्व्वतरं नु प्रागेव वा। उभयत्रापि लक्ष्ये पतित्वेति शेषः। अथवा अपतित्वानुलक्ष्ये इति शेषः। लक्ष्यभेदं चकार। अत्रोपात्तवेगगुणनिमित्ताद् बाणस्य चित्तवृत्त्या सह पातपूर्व्वपतनाभावोत्प्रेक्षास्तित्वः "उत्तरोत्तरोत्कर्षेण वेगातिशयव्यञ्जिकाः" इत्यलङ्कारेण वस्तुध्वनिः ॥२७॥

स इति। जयहेतुः स शरो वृषध्वजसायकावभिन्नं शिवशरविद्धमेषणीयम् वेद्धुमिति शेषः। इषेरिच्छार्थादनीयरप्रत्ययः। प्रतिकायम् प्रतिशरीरं, प्रतिप्रक्षमिति यावत्। विधिना विधिवाक्येनोदीरितं फलसाधनतया प्रतिपादितमर्थं यागादिकं प्रयत्नः पुरुषव्यापार इव। लघूक्लेशेन यथा तथा साधयितुम्। स्वार्थणिजन्तात्तुमुन्। प्रसेहे शशाक। उपमालङ्कारः ॥२८॥

২৭। সেই অতিবেগগামী অর্জ্জুনবাণ, ধনু হইতে কখন যে নির্গত এবং ধাবিত হইল—তাহা লক্ষ্যই করা গেল না। সে অতিমাত্র খর্ব্ব হইয়া মনের সঙ্গে সঙ্গে অথবা মনের আগেই কিংবা লক্ষ্যে না পড়িয়াই যেন লক্ষ্য ভেদ করিল।

২৮। জয়ের নিমিত্ত সেই শর, মহাদেবের শরে বিদ্ধ বেধনযোগ্য শত্রুদেহ, পুরুষকার যেমন দৈবপ্রতিপাদিত অর্থ সম্পাদনে সমর্থ হয়—সেইরূপ অনায়াসে আয়ত্ত করিতে সমর্থ হইল।

२७। अत्यन्त तेज चलनेवाला अर्जुनका वह बाण धनुषसे कट निकला उड़ चलेगा यह ध्यानमें आया नहीं। वह अत्यन्त छोटा मालूम पड़ता मनके साथ २ या मनसे भी आगे अथवा लक्ष्यके ऊपर बजा, जान पड़ा कि लक्ष्यका भेदन किया।

अविवेकवृथाश्रमाविवार्थं
क्षयलोभाविव संश्रितानुरागम्।
विजिगीषुमिवानयप्रमादा-
ववसादं विशिखौ विनिन्यतुस्तम्॥२९॥

अथ दीर्घतमं तमः प्रवेक्ष्यन् *
सहसा रुग्णरयः स संभ्रमेण।

अन्वयः। अविवेकवृथाश्रमौ अर्थम् इव, चयलोभौ संश्रितानुरागम् इव, अनयप्रमादौ विजिगीषुम् इव, विशिखौ तम् अवसादम् विनिन्यतुः। वाच्य—वृथाश्रमाभ्याम् संश्रितानुरागः अनयप्रमादाभ्याम् विजिगीषुः इव, विशिखाभ्यां सः अवसादं निन्ये॥ २९॥

अविवेकेति। अविवेकोऽन्तरानभिज्ञत्वं वृथाश्रमो निष्फलप्रयासः तौ अर्थं धनमिव। अस्थानविनियोगहेतुकत्वात् अनयोः धनहानिकरत्वमिति भावः। चयः अनुपचयः, लोभः अदातृत्वं तौ संश्रितानां अनुजीविनां अनुरागमिव। अकिञ्चित्करे स्वामिन्यनुरागस्यानवस्थानादिति भावः। अनयोः दुर्नीतिः प्रमादोऽनवधानता तौ विजिगीषुमिव। रन्ध्रभूयिष्ठस्य जयासिद्धेरिति भावः। विशिखौ शिवार्ज्जुनवाणौ तं वराहमवसादं करणशैथिल्यं विनिन्यतुर्नीतवन्तौ। नयतिर्द्विकर्म्मकः। मालोपमेयम्॥२९॥

২৯। অবিবেক ও বৃথাশ্রম যেমন ধনকে, ক্ষয় ও লোভ যেমন আশ্রিত জনের অনুরাগকে, দুর্নীতি ও অনবধানতা যেমন জয়েচ্ছু জনগণকে আচ্ছন্ন করে, তেমনি শিব ও অর্জ্জুন কর্ত্তৃক নিক্ষিপ্ত শর দুইটী, সেই বরাহকে অত্যন্ত অবসন্ন করিল।

२८। जयके लिये वह वाण, शिवजीके वाणसे वेध किये ( और अपनी ) वेध करने योग्य सूअरके देह पर देवसे चिह्न किये अर्थको परिपूर्ण करनेमें जिस प्रकार पुरुषार्थ समर्थ होता है, उसी प्रकार अधिकार करनेमें समर्थ हुआ ( अर्थात् शिवजीके वाणसे किये छेदमें अनायास घुस गया।

२९। अविवेक ( अर्थात् मूर्खता ) और निष्फल यत्न जिस प्रकार मनमें चोट पहुंचाने, चय और लोभ जिस प्रकार आश्रयमें आनेवालोंके अनुराग ( आशायुक्त प्रेम ) को करने और अन्याय। तथा प्रमाद जिस प्रकार जय चाहनेवालेको ध्वस्त कर देते हैं, उसी प्रकार शिवजी और अर्ज्जुनके दोनो वाणोंने उस सूअरको ठण्डा ( अर्थात् अन्त ) कर डाला।

* दीर्घतरं इति वा पाठः।

निपतन्तमिवोष्णरश्मिमुर्व्यां
वलयीभूततरुं धराञ्च मेने ॥३०॥
स गतः क्षितिमुष्णशोणिताद्रैः
खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमिक्षितेन्द्रसूनु-
र्विहितामर्षगुरुध्वनिर्निरासे ॥३१॥

अन्वयः । अथ सः दीर्घतमं तमः प्रवेक्ष्यन् सहसा रुग्णरयः संभ्रमेण उष्णरश्मिम् उर्व्यां निपतन्तम् इव धरां च वलयीभूततरुं मेने । वाच्य—तेन प्रवेक्ष्यता रुग्णरयेण उष्णरश्मिः निपतन् इव धरा च वलयीभूततरुः मेने ॥ ३० ॥

अन्वयः । क्षितिं गतः उष्णशोणिताद्रैः खुरदंष्ट्राग्रनिपातदारिताश्मा क्षणम् ईक्षितेन्द्रसूनुः विहितामर्षगुरुध्वनिः सः असुभिः निरासे । वाच्य—शोणिताद्रँ—दारिताश्मानं—सूनुं गुरुध्वनिं तम् असवः निरासुः ॥ ३१ ॥

अथेति । अथ स वराहो दीर्घतमं तमो दीर्घनिद्रां प्रवेक्ष्यन् मरिष्यन्नित्यर्थः । सहसा झटिति रुग्णरयो भग्नवेगः, संभ्रमेण भ्रान्त्या । 'संभ्रमो भ्रान्तिहावयोः' इति विश्वः । उष्णरश्मिमुर्व्यां भूमौ निपतन्तमिव मेने । धराञ्च वलयीभूता मण्डलीभूतास्तरवो यस्यास्तां तथा मेने । तथा बभ्राम इत्यर्थः । स्वभावोक्तिरलङ्कारः ॥ ३० ॥

स इति । क्षितिं गतः क्षितौ पतितः, उष्णेन प्रत्यग्रत्वाच्छोणितेनाद्रैः प्लुतः, खुराणां दंष्ट्रयोश्चाग्राणां निपातेनाघातेन दारिताश्मा पाटितपाषाणः येन सः । किञ्च क्षणमीक्षितः इन्द्रसूनुः येन सः । स्वार्थविघातरोषादिति भावः । अतएव विहितः कृतोऽमर्षगुरुः क्रोधोद्धतो ध्वनिः क्रन्दितं

৩০। তদনন্তর সেই বরাহ চির নিদ্রায় শায়িত হইবার (অর্থাৎ মৃত্যুর) জন্য বেগরহিত হইয়া ঘুরিতে লাগিল এবং ঘুরিতে ঘুরিতে সে মনে করিল যেন রবিবিম্ব পৃথিবীতলে পতিত, আর যেন ভূমণ্ডল মণ্ডলীভূত মহীরুহরাজিতে বিরাজিত হইতেছে।

३०। इसके पीछे उस सूअरने दीर्घ निद्रा (मृत्यु) से हार जाने (अर्थात् मृत्युके अधीन होने) के कारण शिथिल हो घूमने २ मनमें समझा कि सूर्य्यका मण्डल पृथ्वीपर गिरा पड़ा है, और पृथ्वीपरके वृक्षसब चारो ओर भ्रमण कर रहे हैं।

स्फुटपौरुषमापपात पार्थः
तमथ प्राज्यशरः शरं जिघृक्षुः ।
न तथा कृतवेदिनां करिष्यन्
प्रियतामेति यथा कृतावदानः ॥३२॥

अन्वयः । अथ पार्थः प्राज्यशरः ( सन्नपि ) स्फुटपौरुषं तं शरं जिघृक्षुः आपपात, कृतवेदिनां कृतावधानः यथा प्रियताम् एति, तथा करिष्यन् न । वाच्य—पार्थेन प्राज्यशरेण जिघृक्षुणा आपेते, कृतावदानेन प्रियता ईयते, करिष्यता न ।३२॥

येन स तथोक्तः । स वराहोऽसुभिः प्राणैर्निरासे निरस्तः त्यक्त इत्यर्थः । अस्यतेः कर्म्मणि लिट् । इयञ्च स्वभावोक्तिः ॥ ३१ ॥

स्फुटेति । अथ वराहपातानन्तरं पार्थोऽर्ज्जुनः, प्राज्यशरः प्रभूतशरः सन्नपीत्यर्थः । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः । स्फुटपौरुषं व्यक्तविक्रमं वराहभेदिनं शरं जिघृक्षुर्ग्रहीतुमिच्छुः । ग्रहेः सन्नन्तादुप्रत्ययः । आपपात आधावति स्म, कृतज्ञतया शरग्रहणं न तु लोभादित्यर्थः । ननु अन्येऽप्युपकर्त्तार एव किमित्यत्रैवादरस्तस्येत्यतआह—कृतवेदिनां कृतज्ञानां कृतावदानः कृतकर्म्मा । 'अवदानं कर्म्म वृत्तम्' इत्यमरः । यथा प्रियतामेति तथा करिष्यन् उपकरिष्यन् जन इति शेषः । न प्रियतामेति । कृतकरिष्यमाणयोः कृतं बलीय इति न्यायादिति भावः ॥ ३२ ॥

৩১। সেই বরাহ ভূতলে পতিত হইয়া উষ্ণ রক্তে ব্যাপ্ত হইল, তাহার খুর ও দন্তের অগ্রভাগের আঘাতে প্রস্তর সকল বিদীর্ণ হইল, সে ক্ষণকালের জন্য ইন্দ্রতনয় অর্জ্জুনকে ক্রোধভরে দেখিয়া লইল, এবং ক্রোধে ভীষণ ধ্বনি করিতে করিতে প্রাণ পরিত্যাগ করিল।

৩২। অনন্তর অর্জ্জুন, প্রচুর বাণযুক্ত হইলে ও বরাহ নিধনের পর সেই নিধন-কার্য্যে পরিস্ফুট শক্তি সেই বাণটীকে গ্রহণ করিবার জন্য ধাবিত হইলেন। বস্তুতঃ কৃতকর্ম্মা জনগণ, কৃতজ্ঞদিগের যেইরূপ প্রিয়পাত্র হয়, ভবিষ্যতে যাহাদ্বারা উপকার হইবে সেইরূপ লোক তাদৃশ প্রিয়পাত্র হয় না।

३१। सुअर पृथ्वीपर गिर पड़ा और गर्म लोहूसे लदफद हो गया, उसकी खुरों और दोनों के चोटसे पथर विदीर्ण हो गया, उसने एकवार इन्द्रके पुत्र अर्ज्जुनको ओर देखा और क्रोधसे चित्कार करते करते प्राण त्याग कर दिया।

उपकार इवासति प्रयुक्तः
स्थितिमप्राप्य मृगे गतः प्रणाशम्।
कृतशक्तिरवाङ्मुखो गुरुत्वात् *
जनितव्रीड़ इवात्मपौरुषेण ॥३३॥
स समुद्धरता विचिन्त्य तेन
स्वरुचं कीर्त्तिमिवोत्तमां दधानः।
अनुयुक्त इव स्ववार्त्तमुच्चैः
परिरेभे नु भृशं विलोचनाभ्याम् ॥३४॥

अन्वयः। असति प्रयुक्तः उपकारः इव मृगे स्थितिम् अप्राप्य प्रणाशं गतः, तथा कृतशक्तिः गुरुत्वात् अवाङ्मुखः (अतः) आत्मपौरुषेण जनितव्रीड़ इव (स्थितः)। वाच्य—प्रयुक्तेन उपकारेण इव प्रणाशं गतेन कृतशक्तिना अवाङ्मुखेन (शरेण) जनितव्रीड़ेन (स्थितम्) ॥ ३३ ।

अन्वयः। उत्तमां स्वरुचं कीर्त्तिम् इव दधानः, विचिन्त्य समुद्धरता तेन उच्चैः स्ववार्त्तम् अनुयुक्तः इव (स्थितः) स बाणः विलोचनाभ्यां भृशं परिरेभे। वाच्य—दधानं समुद्धरन् सः अनुयुक्तम् इव (स्थितम्) तं बाणं परिरेभे ॥ ३४ ।

अथ युग्मेनाह—उपकार इति। असति नीचे प्रयुक्त उपकार इव मृगे स्थितिमप्राप्य प्रणाशमदर्शनं गतः इत्युपमा। तथा कृतशक्तिः कृतपौरुषो गुरुत्वाल्लोहभाराद्गौरवत्वाच्चावाङ्मुखो नम्रमुखः। अतएवात्मपौरुषेण जनितव्रीड़ इव स्थित इत्युत्प्रेक्षा ॥३३॥

৩৩। নীচজনে প্রযুক্ত উপকারের ন্যায় অর্জ্জুনের সেই বাণ, শূকর শরীরে স্থান না পাইয়া দৃষ্টির অগোচর হইয়াছিল, এবং নিজের পুরুষকার দেখাইয়া লজ্জান্বিত হইয়াই যেন গুরুত্ববশতঃ অধোমুখে অবস্থান করিয়া রহিয়াছিল। -

३२। अर्ज्जुनके पास असंख्य बाण रहने पर भी, सूअरकी पृथ्वीपर गिरनेके बाद, वराहके देह छेदनमें जिस बाणसे पराक्रम दिखला उसे ग्रहण करनेकी इच्छासे सामने दौड़ पड़े। वास्तवमें उपकारी लोक उपकारको प्यार करते हैं 'भविष्यत्‌में उपकार करेगा' इस विचारसे प्यार नहीं करते।

३३। नीचके ऊपर किया हुआ उपकार जिस प्रकार अदृश्य हो जाता है उसी प्रकार अर्ज्जुनका छूटा बाण सूअरके शरीर पर स्थान न पाकर पृथ्वीमें घुस गया और पुरुषार्थ दिखला कर गौरवके कारण जान पड़ा कि लाजमें मुंह नीचा कर लिया।

* अधोमुखः इति वा पाठः।

तत्र कार्मुकभृतं महाभुजः
पश्यति स्म सहसा वनेचरम् ।
सन्निकाशयितुमग्रतः स्थितं
शासनं कुसुमचापविद्विषः ॥३५॥

अन्वयः । तत्र महाभुजः, कुसुमचापविद्विषः शासनं सन्निकाशयितुम् अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा पश्यति स्म । वाच्य—महाभुजेन स्थितः, कार्मुकभृत् वनेचरः दृश्यते स्म ॥३५॥

स इति । उत्तमां स्वरुचं स्वकान्तिं कीर्त्तिमिव दधान इत्युत्प्रेक्षा । किञ्च विचिन्त्य सर्व्वथा ग्राह्योऽयमिति विमृश्य समुद्धरता तेनार्ज्जुनेनोच्चैः स्ववार्त्तं स्वपाटवम् । 'वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । अनुयुक्तः पृष्ट इव स्थित इत्युत्प्रेक्षा । आदरात्तथा प्रतीयत इत्यर्थः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । स बाणो विलोचनाभ्यां नयनाभ्यां भृशं परिरेभे नु आलिङ्गितः किमित्युत्प्रेक्षा । तेनात्यादरेण दृष्ट इत्यर्थः ॥३४॥

तत्रेति । तत्र प्रदेशे महाभुजोऽर्ज्जुनः । कुसुमचापविद्विषः स्मरारेः शिवस्य शासनं वक्ष्यमाणमादेशं सन्निकाशयितुं प्रकाशयितुम् निवेदयितुमिति यावत् । अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा झटिति पश्यति स्म । इतः प्रभृति रथोद्धतावृत्तम्—'रो नराविह रथोद्धता लगौ' इति लक्षणात् ॥३५॥

৩৪। পার্থের সেই বাণ, কীর্ত্তির তুল্য নিজের উত্তম কান্তি গ্রহণপূর্ব্বক উচ্চৈস্বরে নিজ পটুতার বিষয় জিজ্ঞাসিত হইয়াই যেন অবস্থান করিতেছিল এবং চিন্তার পর সেই বাণ গ্রহণেচ্ছু অর্জ্জুন, তাহার নেত্রদ্বয় দ্বারা সেই বাণকে যেন অত্যন্ত আলিঙ্গন করিতে লাগিল।

৩৫। মহাভুজ অর্জ্জুন দেখিলেন—মহাদেবের আদেশ বলিবার জন্য এক ধনুর্দ্ধারী কিরাত তাঁহার সম্মুখে রহিয়াছে।

३४। वह बाण कीर्त्तिकी तरह अपनी चमक धारण किये जान पड़ता था कि अपनी सामर्थ्यके विषयमें पूछा गया सा था। अर्थात् पूछे जाने लोग अपना पौरुष बतलाते हैं उसी प्रकार अपनी चमकसे जान पड़ता था कि, किसीसे पूछने पर अपना गुण वर्णन कर रहा है)। अर्ज्जुन अत्यन्त आदरके साथ बाणको देखने लगे।

स प्रयुज्य तनये महीपते-
रात्मजातिसदृशीं किलानतिम् ।
सान्त्वपूर्वमभिनीतिहेतुकं
वक्तुमित्थमुपचक्रमे वचः ॥३६॥

शान्तता विनययोगि मानसं
भूरिधाम विमलं तपः श्रुतम् ।
प्राह ते नु सदृशी दिवौकसा-
मन्ववायमवदातमाकृतिः ॥३७॥

अन्वयः। सः महीपतेः तनये आत्मजातिसदृशीं किल आनतिं प्रयुज्य सान्त्वपूर्व्वम् अभिनीतिहेतुकं वचः इत्थं वक्तुम् उपचक्रमे। वाच्य—तेन—उपचक्रमे। ३६॥

अन्वयः। शान्तता ते विनययोगि मानसं प्राह, भूरिधाम तपः विमलं श्रुतं प्राह, दिवौकसां सदृशी आकृतिः अवदातम् अन्ववायम् प्राह। वाच्य—शान्ततया भूरिधाम्ना तपसा सदृश्या आकृत्या अवदातः अन्ववायः प्रोच्यते।३७।

स इति। स वनेचरो महीपतेस्तनये राजपुत्रेऽर्ज्जुने आत्मजातिसदृशीं किरातजात्यनुरूपां किल। किलेति जातेरलीकतां दर्शयति। यतः परमार्थतः प्रमथ एव सः। आनतिं प्रणतिं प्रयुज्य सान्त्वपूर्व्वं सामपूर्व्वकम्। 'साम सान्त्वमुभे समे' इत्यमरः। अभिनीतिहेतुकं प्रिययुक्तिहेतुकं वचः। इत्थं वक्ष्यमाणप्रकारेण वक्तुमुपचक्रमे उपक्रान्तवान् ॥३६॥

৩৬। সেই কিরাত রাজপুত্র অর্জ্জুনকে স্বজাতিসমুচিত প্রণাম করিয়া বিনয়ের সহিত প্রিয় অথচ যুক্তিপূর্ণ বাক্যে বলিতে লাগিল।

३५। महाभुज (बड़ी बड़ी बाहुवाले) अर्ज्जुनने देखा कि; शिवजीको आज्ञा कह सुनानेके लिये आये और धनुष धारण किये एक किरातको वहां खड़ा देखा।

३६। वह किरात राजपुत्र अर्जुनको अपनी जातिके अनुसार उचित रीति प्रणाम कर विनय पूर्व्वक युक्तिके साथ मधुर वचन कहने लगा।

दीपितस्त्वमनुभावसम्पदा
गौरवेण लघयन् महीभृतः ।
राजसे मुनिरपीह कारयन्
आधिपत्यमिव शातमन्यवम् ॥३८॥

अन्वयः । त्वं मुनिः अपि अनुभावसम्पदा दीपितः, गौरवेण महीभृतः लघयन् इह शातमन्यवम् आधिपत्यं कारयन् इव राजसे । वाच्य—मुनिना दीपितेन लघयता त्वया कारयता राज्यते ॥३८॥

तत्र तावच्चतुर्भिः सान्त्वमाह—शान्ततेति । शान्तता बहिरनौद्धत्यं ते तव विनययोगि अनौद्धत्ययुक्तं मानसं कर्म्म प्राह नु ब्रूते खलु । तथा भूरि बहु धाम तेजो यस्मिन् तत्तपः कर्त्तृ, विमलं सम्प्रदायशुद्धं श्रु ं प्राह । किञ्च—द्यौर्दिवं वा ओको येषां तेषां दिवौकसां देवानाम् । पृषोदरादित्वात् साधुः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । सदृशी तुल्या आकृतिमूर्त्तिरवदातं शुद्धमन्ववायं वंशं प्राह । 'वंशोऽन्ववायः सन्तानः' इत्यमरः । शान्त्यादिभिर्लिङ्गैर्विनयादयोऽनुमीयन्ते । अन्यथा तदसम्भवादिति भावः ॥ ३७ ॥

दीपित इति । मुनिरपि ऐश्वर्य्यरहितोऽपीत्यर्थः । अनुभावसम्पदा प्रभावातिशयेन दीपितः प्रकाशितः । 'अनुभावः प्रभावे च' इत्यमरः । गौरवेण महत्तया महीभृतो राज्ञो लघयन् लघूकुर्व्वन् त्वमिन्द्राद्रौ शतमन्योरिदं शातमन्यवमैन्द्रम् । 'तस्येदम्' इत्यण्प्रत्ययः । 'शतमन्युर्दिवस्पतिः' इत्यमरः । अधिपतेः कर्म्म आधिपत्यं त्रैलोक्यरक्षाधिकारम् । ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । कारयन्निव इन्द्रेणेति शेषः । राजसे तस्यापि उपजीव्य इति प्रतीयसे स्वमहिम्नेत्यर्थः ॥ ३८ ॥

৩৭। শান্তভাব তোমার মনের বিনীতভাবের কথা বলিয়া দিতেছে, বহুলতেজোরূপী তপস্যা তোমার বিশুদ্ধ শাস্ত্রজ্ঞানের পরিচয় দিতেছে, এবং দেবতুল্য সুন্দর আকৃতি বলিতেছে যে, তুমি উচ্চবংশে উৎপন্ন।

३७। शान्त भाव आपने मनको विनययुक्त बत रहा है, अत्यन्त चमकता आपका तेज, आपका निर्म्मल तपस्या और शास्त्रोंमें ( निर्म्मल ) सात बता रहा है। और देवताकी तरह आपका अत्यन्त सुन्दर आकार बना रहा है कि आप किसी उत्तम कुलमें उत्पन्न हुए हैं।

तापसोऽपि विभुतामुपेयिवा-
नास्पदं त्वमसि सर्वसम्पदाम्।
दृश्यते हि भवतो विना जनै-
रन्वितस्य सचिवैरिव द्युतिः॥ ३९॥

विस्मयः क इव वा जयश्रिया
नैव मुक्तिरपि ते दवीयसी।
ईप्सितस्य न भवेदुपाश्रयः
कस्य निर्जितरजस्तमोगुणः॥ ४०॥

अन्वयः। विभुताम् उपेयिवान् तापसः अपि त्वं सर्व्वसम्पदाम् आस्पदम् असि, हि भवतः जनैः विना अपि सचिवैः अन्वितस्य इव द्युतिः दृश्यते। वाच्य—उपेयुषा तापसेन अपि त्वया आस्पदेन भूयते, द्युतिं पश्यामि। ३९॥

अन्वयः। जयश्रिया कः इव वा विस्मयः, मुक्तिः अपि ते दवीयसी न एव, निर्ज्जितरजस्तमोगुणः कस्य ईप्सितस्य उपाश्रयः न भवेत्। वाच्य—मुक्त्या दवीयस्या न भूयते,—तमोगुणेन उपाश्रयेण न भूयते। ४०।

तापस इति। विभोर्भावः विभुता तां विभुतां प्रभावमुपेयिवान् उपगतः। अतएव तापसोऽपि त्वं सर्व्वसम्पदामास्पदं स्थानमसि। 'आस्पदं प्रतिष्ठायाम्' इति निपातः। विभुतामेव समर्थयते—तथाहि भवतस्तव जनैर्विनापि एकाकिनोऽपीत्यर्थः। सचिवैरन्वितस्य एवामात्यादियुक्तस्येव द्युतिस्तेजो दृश्यते। अतः सर्व्वसम्पदामास्पदत्वं युक्तमित्यर्थः॥ ३९॥

৩৮। তুমি তপস্বী হইলেও তেজঃপ্রভাবে প্রচণ্ড, রাজাদিগকে স্বীয় গৌরবে লঘু করিয়াই যেন এই হিমালয় পর্ব্বতে ইন্দ্রের ন্যায় আধিপত্য বিস্তার করিয়া বিরাজ করিতেছ।

৩৯। তুমি বিভূতিবান্, সুতরাং তপস্বী হইয়াও সকল সম্পদের স্থান হইয়াছ; অতএব একক হইলেও তোমার তেজ মন্ত্রীগণপরিবেষ্টিতের তুল্য দেখা যাইতেছে।

३८। तपस्वी होने पर भी तेजोंके प्रभावसे आप अत्यन्त प्रतापी जान पड़ते हैं, राजाओंको अपने गौरवसे तुच्छ बनाकर हो आप हिमालय पर्व्वत पर इन्द्रकी तरह राज्याधिकार फैलाकर विराजमान मालूम पड़ते हैं।

३९। तपस्वी होनेपर विभुता (भूरता) आदिक गुणोंसे नया अधिकार धारण किते आप सारी सम्पत्तियोंका पाल हो रहे हैं।

क्लेपयन् न हिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः।
हर्त्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥४१॥

अन्वयः। त्विषा अहिमतेजसं क्लेपयन् उपपन्नपौरुषः सः त्वं वराहभेदिनम् एनम् अस्मदधिपस्य सायकम् इत्थं हर्त्तुं न अर्हसि। वाच्य—क्लेपयता उपपन्नपौरुषेण तेन त्वया अयं वराहभेदी सायकः न अर्ह्यते ॥ ४१ ॥

विस्मय इति। किञ्च जयश्रिया हेतुना प्राप्तयापीति शेषः। क इव वा विस्मयः किमाश्चर्य्यम्? न कश्चिदित्यर्थः। 'विस्मयोऽद्भुतमाश्चर्य्यं चित्रम्' इत्यमरः। अतो मुक्तिरपि ते तव दवीयसी दूरतरा दुर्लभा न भवत्येव। 'स्थूलदूर—' इत्यादिना यणादिपरलोपः पूर्व्वगुणश्च। तथाहि निर्जितौ रजस्तमसौ एव गुणौ येन स भवादृशः पुरुषः कस्येप्सितस्य वाञ्छितस्योपाश्रय आस्पदं न भवेदित्यर्थः॥ ४०॥

अथागमनप्रयोजनमुपालम्भमुखेनाह—क्लेपयन्निति। त्विषा तेजसा अहिमतेजसमुष्णतेजसं क्लेपयन् लज्जयन् उपपन्नपौरुषः सम्भावितपराक्रमः स प्रसिद्धस्त्वं वराहभेदिनं कृतोपकारमित्यर्थः। एनं त्वत्करगतमस्मदधिपस्य सायकं शरमित्थं साहसेन हर्त्तुं नार्हसि ॥४१॥

४०। এইরূপ অবস্থায় জয়শ্রী লাভ করিলেই বা বিস্ময়ের কারণ কি আছে? প্রত্যুত মুক্তিও তোমার পক্ষে দুর্লভ হইবে না। রজস্তমোজয়ী তোমার ন্যায় গুণবান্ পুরুষের পক্ষে কোন্ অভীষ্ট বস্তুই বা অলব্ধ থাকে?

৪১। স্বতেজ দ্বারা তীক্ষ্ণরশ্মি সূর্য্যকেও লজ্জিত করিয়া বিক্রম বিকাশ করিয়াছ, এইরূপ বীর তুমি, আমাদের প্রভুর এই বরাহভেদী বাণটী গ্রহণ করিও না।

४०। ऐसी अवस्थामें आप विजयलक्ष्मी पालें तो कौनसी आश्चर्य्यकी बात है बल्कि आपके लिये मुक्ति भी दुर्लभ नहीं है। वास्तवमें आपके समान, रजोगुण और तमोगुण जीतनेवाले पुरुषके लिये कौन इच्छाका विषय है जो न मिल सके?

४१। आपने तेजसे तीक्ष्ण किरण धारण किये सूर्य्यको भी लज्जित कर दी, इस लिये ऐसे वीरपुरुष आप, मेरे स्वामीको वराह भेदनेवाला बाण लेने योग्य नहीं हैं।

स्मर्य्यते तनुभृतां सनातनं
न्याय्यमाचरितमुत्तमैर्नृभिः। *
ध्वंसते यदि भवादृशस्ततः
कः प्रयातु वद तेन वर्त्मना ॥४२॥

आकुमारमुपदेष्टुमिच्छवः
सन्निवृत्तिमपथान् महापदः।
योगशक्तिजितजन्मसृत्यवः
शीलयन्ति यतयः सुशीलताम् ॥४३॥

अन्वयः। उत्तमैः नृभिः तनुभृतां सनातनं न्याय्यम् आचरणं स्मर्य्यते, भवादृशः ततः यदि ध्वंसते तदा तेन वर्त्मना कः प्रयातु वद। वाच्य—उत्तमाः नराः स्मरन्ति, भवादृशेन ध्वंसेत, केन प्रयायताम् उच्यताम् ॥ ४२ ॥

अन्वयः। योगशक्तिजितजन्मसृत्यवः यतयः आकुमारं महापदः अपथान् सन्निवृत्तिम् उपदेष्टुम् इच्छवः (सन्तः) सुशीलतां शीलयन्ति। वाच्य—जन्मसृत्युभिः यतिभिः सुशीलता शील्यते ॥४३॥

अनर्हत्वमेवाह—स्मर्य्यत इति। उत्तमैर्नृभिः सत्पुरुषैर्मन्वादिभिस्तनुभृतां शरीरिणां सनातनं नित्यं न्याय्यं न्यायादनपेतमाचरितमाचारः स्मर्य्यते, कर्त्तव्यतयेति शेषः। न त्वनाचार इत्यर्थः। अथाप्यनाचरणे दोषमाह—ध्वंसते इति। भवानिव दृश्यते भवादृशस्ततः सदाचाराद् ध्वंसते भ्रश्यते यदि तदा तेन वर्त्मना न्यायमार्गेण कः प्रयातु गच्छतु वद कथय न कोऽपीत्यर्थः। तथा च सन्मार्ग एव शीलः स्यादिति भावः ॥४२॥

৪২। সাধুদিগের পক্ষে প্রাণিগণের ন্যায়ানুগত সনাতন আচরণ স্মরণ করাই কর্ত্তব্য। তোমার ন্যায় লোক যদি সেই সনাতন সদাচার হইতে ভ্রষ্ট হয়, তবে কে সেই সৎপথের পথিক হইবে?

४२। उत्तम पुरुषोंको प्राणियोंके न्यायानुकूल सनातन आचार पर ध्यान दिये रहना चाहिये। आपके ऐसे पुरुष जब उस सनातन आचार परसे नीचे गिर पड़ते हैं तो उस रास्ते पर कौन चलेगा।

* आचरणम्, इति वा पाठः।
† मुनयः, इत्यपि पाठः।

तिष्ठतां तपसि पुण्यमासजन्
सम्पदोऽनुगुणयन् सुखैषिणाम् ।
योगिनां परिणमन् विमुक्तये
केन नास्तु विनयः सतां प्रियः ॥४४॥

अन्वयः । तपसि तिष्ठतां पुण्यम् आसजन्, सुखैषिणां सम्पदः अनुगुणयन्, योगिनां विमुक्तये परिणमन् विनयः केन सतां प्रियः न अस्तु । वाच्य—आसजता अनुगुणयता परिणमता विनयेन प्रियेण न भूयताम् ॥ ४४ ॥

आकुमारमिति । किञ्च, योगशक्त्यात्मज्ञानमहिम्ना जितौ जन्ममृत्यू यैस्ते यतयो योगिनः । आकुमारेभ्यः आकुमारम्, कुमारादारभ्येत्यर्थः । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । महत्य आपदो यस्मिन् तस्मात् महापदः महानर्थहेतोरित्यर्थः । अपथादमार्गात् । 'पथो विभाषा' इति निषेधविकल्पात् समासान्तः । 'अपथं नपुंसकम्' । सन्निवृत्तिमप-गमम् उपदेष्टुमिच्छवः सन्तः सुशीलतां सद्वृत्तताम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । शीलयन्त्यभ्यस्यन्ति । अतो न त्याज्यं शीलमित्यर्थः ॥४३॥

न केवलं सौशील्यादनर्थनिवृत्तिः, किन्त्वर्थप्राप्तिरपीत्याह—तिष्ठता-मिति । तपसि तिष्ठतां तपोनिष्ठानां धर्म्मार्थिनामित्यर्थः । पुण्यं धर्म्ममासजन् सम्पादयत् । 'स्याद्धर्म्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । सुखैषिणां सुखार्थिनां सम्पदः सुखसाधनभूतानर्थाननुगुणयन् अनुकूलयन् । अर्थकामयोरपि हेतुभूत इत्यर्थः । तथा योगिनां विमु-क्तये अपवर्गाय परिणमन् सम्पद्यमानो विनयः सौशील्यं केन हेतुना सतां प्रियो न अस्तु । सम्भावनायां लोट् । सर्व्वथा विनय एव चतुर्वर्गसाधन-मित्यर्थः । अतस्त्वया नास्मत् स्वामिशरचौर्य्यं कार्य्यमिति तात्पर्य्यम् ॥४४॥

৪৩। যোগক্ষমতায় জন্মমৃত্যুজয়শীল যতিগণ কুমার কাল হইতেই মহান্ অনর্থের হেতু অসৎপথ হইতে নিবৃত্ত হইবার উপদেশদানে অভিলাষী হইয়া সুশীলতা অভ্যাস করিয়া থাকেন।

४३। योगमें सामर्थ्य रखनेके कारण जन्म और मृत्युपर बराबर विजयपाने-वाले यति लोग, कुमार अवस्थासे ही बड़े २ अनर्थोंको उत्पन्न करनेवाले असत्पथ से निवृत्त होनेका उपदेश देनेकी इच्छासे, सुशीलताका अभ्यास कर चुके हैं।

नूनमत्रभवतः शराकृतिं
सर्वथायमनुयाति सायकः।
सोऽयमित्यनुपपन्नसंशयः
कारितस्त्वमपथे पदं यया ॥४५॥

अन्वयः। अयं सायकः अत्रभवतः शराकृतिं सर्व्वथा अनुयाति, यया त्वम् अनुपपन्नसंशयः 'सः अयम्' इति अपथे पदं कारितः। वाच्य—अनेन सायकेन शराकृतिः अनुयायते, या त्वां—संशयं पदं कारितवती ॥ ४५ ॥

अथवा किं भवादृशेषु अन्यसम्भावनया यतो भ्रान्तिरपि सम्भाव्यत इति मृदुक्तिमवलम्ब्याह—नूनमिति। अयमस्मदीयः सायकोऽत्रभवतः पूज्यस्येत्यर्थः। 'पूज्यस्तत्रभवानत्रभवान्' इति सज्जनः। 'इतराभ्योऽपि दृश्यन्ते' इति सार्वविभक्तिकस्तसिल् प्रत्ययः। सुप्सुपेति समासः। शराकृतिं सर्व्वथा रूपेण रेखादिना च सर्वप्रकारेणानुयात्यनुसरति अत्यन्तमनुकरोतीत्यर्थः। नूनमिति वितर्के। यया आकृत्या कर्त्र्या त्वमनुपपन्नसंशयोऽत्यन्तसादृश्यादनुत्पन्नस्वान्यदीयत्वसन्देहः सन् सोऽयमिति यः स्वकीयः स एवायमिति भ्रान्त्युत्पत्तेरवेति शेषः। अपथे अमार्गे शरापहरणरूपे पदं कारितः निधापित इत्यर्थः। 'हृक्रोरन्यतरस्याम्' इत्यणिकर्त्तुः कर्म्मता। 'ण्यन्ते कर्त्तुश्च कर्म्मणः' इति तत्रैवाभिहिते कर्म्मणि क्तः ॥४५॥

৪৪। তপস্যায় অবস্থিত সাধুগণের ধর্ম্মসম্পাদক, সুখাভিলাষিগণের সুখসাধক অর্থের অনুকূল এবং যোগিগণের মুক্তিসাধক বিনয়, কেন না, সাধুগণের প্রিয় হইবে?

৪৫। আমাদের এই শর মহাশয়ের শরেরই অনুরূপ, সেইজন্য আপনি নিঃসন্দেহ হইয়া ইহা আপনারই সেই শর এইরূপ ভ্রমে ইহা গ্রহণরূপ অপথে পদক্ষেপ করিতেছেন।

४४। तपस्यामें लगे रहनेवालोंको धर्म्म परिपूर्ण करनेवाला, सुख चाहनेवालोंको सुख देनेवाले अर्थका पक्षपाती (अर्थात् धन देनेवाला) और योगियोंको मुक्ति करनेवाला विनय, साधुलोगोंको क्यों नहीं प्रिय मालूम पड़े ?

४५। हम लोगोंको यह बाण, आपके बाणसे बिलकुल मिलता जुलता है, इसीसे आपने निःसन्देह होकर अपने बाणके भ्रमसे इसे ग्रहण करनेके कुमार्गमें पैर रखा है।

अन्यदीयविशिखे न केवलं
निःस्पृहस्य भवितव्यमाहृते ।
निघ्नतः परनिबर्हितं मृगं
व्रीडितव्यमपि ते सचेतसः ॥४६॥

सन्ततं निशमयन्त उत्सुका
यैः प्रयान्ति मुदमस्य सूरयः ।
कीर्तितानि हसितेऽपि तानि यं
व्रीडयन्ति चरितानि मानिनम् ॥४७॥

अन्वयः। सचेतसः ते अन्यदीयविशिखे आहृते निःस्पृहस्य केवलं न परनिबर्हितं मृगं निघ्नतः व्रीडितव्यम् अपि। वाच्य—सचेताः त्वं केवलं निःस्पृहः न भवेः, निघ्नन् व्रीडेथाः अपि ॥ ४६ ॥

पुनरपि स्तेयमेव द्रढ़यन् दोषान्तरमापादयति—अन्यदीयेति। सह चेतसा वर्त्तत इति सचेतास्तस्य मनस्विनस्तेऽन्यदीयविशिखे विषये यदा हृतमाहरणम्। भावे क्तः। तस्मिन् अन्यदीयविशिखस्याहरणे इत्यर्थः। निःस्पृहस्य केवलं निःस्पृहेणैव न भवितव्यम्। किन्तु परनिबर्हितं परेण प्रहृतं मृगं निघ्नतः प्रहरतस्ते निघ्नता त्वयेत्यर्थः। 'कृत्यानां कर्त्तरि वा' इति षष्ठी। व्रीडितव्यं लज्जितव्यमपि भावे तव्यप्रत्ययः। सम्प्रति तु त्वया परविद्धं मृगं विद्ध्वापि न व्रीड्यते प्रत्युत स्तेयमेव क्रियत इत्यहो महत् साहसमित्यर्थः। मृगमित्यत्र शेषत्वाविवक्षणात् 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इति न भवति शेषाधिकारात्। निप्रहणेत्यत्र निप्रयोः सङ्घातव्यस्तविपर्य्यस्तानां ग्रहणात् ॥४६॥

৪৬। মনস্বী তুমি, তোমার পক্ষে অপরের বাণাপহরণ ব্যাপার হইতে নিস্পৃহ রহিলেই যথেষ্ট হইল না; কিন্তু পরের বিদ্ধ মৃগ নিহত করিয়া লজ্জিত হওয়াও উচিত।

४६। आप मानी पुरुष हैं, आपको दूसरेका बाण अन्यायसे लेनेकी व्यापारसे निवृत्त हो जाना हो बल्कि दूसरेके मारे मृगको मारनेमें भी लज्जित हो जाना चाहिये।

अन्यदोषमिव स स्वकं गुणं
ख्यापयेत् कथमधृष्टताजड़ः।
उच्यते स खलु कार्य्यवत्तया
धिग्विभिन्नवुधसेतुमर्थिताम् ॥४८॥
[ युग्मकम् ]

अन्वयः। सूरयः अस्य यैः सन्ततम् उत्सुकाः (सन्तः) निश्चमयन्तः मुदं प्रयान्ति, तानि चरितानि ह्रियिते अपि कीर्त्तितानि (सन्ति) यं मानिनं ग्रीड़यन्ति अधृष्टताजड़ः सः अन्यदोषम् इव स्वकं गुणं कथं ख्यापयेत्, (तथापि) कार्य्यवत्तया सः उच्यते खलु विभिन्नवुधसेतुम् अर्थितां धिक्। वाच्य—सूरिभिः उत्सुकैः निश्चमयद्भिः मुद प्रयायते, तैः चरितैः कीर्त्तितैः यः मानी ग्रीड्यते, अधृष्टताजड़ेन तेन अन्यदोष इव स्वकः गुणः ख्याप्येत, वक्ति तम्॥ [ उपमाक्षाचलिङ्गालङ्कारैच ] ॥४७-४८

अन्येति। अधृष्टतया विकत्थनेन प्रालीनतया जड़ः स्तब्धः, अविकत्थन इत्यर्थः। सोऽस्मत्स्वाम्यन्यदोषं परावरगुणमिव स्वयं स्वकीयं गुणं कथं ख्यापयेत् प्रकटयेत्। 'आत्मप्रशंसां परगर्हामिव वर्ज्जयेत्' इति स्मरणादिति भावः। तथापि कार्य्यवत्तया कार्य्यार्थितयेत्यर्थः सः स्वगुणं उच्यते खलु। कार्य्यार्थिनः कुतो गर्व्व इति भावः। निर्विद्य इवाह—धिगिति। विभिन्नवुधसेतुमतिक्रान्तसुजनमर्य्यादामर्थितां याचनां धिक्, निन्दामीत्यर्थः। यदयमपीत्थं विकत्थयितुं प्रवृत्त इति भावः। 'धिङ् निर्भर्त्सननिन्दयोः' इत्यमरः। 'अभिसर्वतसोः कार्य्याधिगुपर्य्यादिषु त्रिषु। द्वितीयाम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते' इति द्वितीया ॥४८॥

৪৭-৪৮। বিদ্বান্‌গণ, আমাদের প্রভুর যে চরিত-কথা সমুৎসুকচিত্তে শ্রবণ করিয়া আনন্দিত হইয়া থাকে, সেই চরিত সকল পরিহাসচ্ছলে বলিলেও যে মানীদিগের হৃদয়ে লজ্জার উদয় হয়। আত্মপ্রশংসা শ্রবণে অনভিলাষী আমাদের প্রভু, অন্য দোষের ন্যায় আত্মগুণ কিরূপে প্রকাশ করিবেন? কার্য্যপ্রার্থীরাই কেবল স্বীয় গুণের কথা নিজমুখে ব্যক্ত করিয়া থাকে বটে—তাহাতে কোনই দোষ হয় না। কিন্তু সাধুজন-মর্য্যাদার অতিক্রমকারিণী সেই প্রার্থনাকে ধিক্।

४७-४८। विद्वान् लोग, हमारे स्वामीके जिस चरित्रोंको अत्यन्त आश्चर्य्यसे सुन कर प्रसन्न हो जाते हैं, उन (अपने) चरित्रोंको परिहास में भी सुन कर जिन मानी पुरुषोंके हृदयमें लज्जा उत्पन्न होती है। अपनी प्रशंसा सुननेकी इच्छा न करनेवाले, मेरे स्वामी, दूसरोंकी निन्दाकी तरह अपने गुण क्यों प्रकाशित

दुर्वचं तदथ मा स्म भून्मृगः
त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः
प्रत्यपत्स्यत शितेन पत्रिणा ॥४९॥
को न्विमं हरितुरङ्गमायुध-
स्थेयसीं दधतमङ्गसंहतिम् ।

अन्वयः। वाहिनीपतिः शितेन पत्रिणा एनम् आशु न प्रत्यपत्स्यत यदि, असौ मृगः ओजसा त्वयि यत् अकरिष्यत्, तत् दुर्वचम्—अथ तत् मा स्म भूत् । वाच्य—वाहिनीपतिना एषः प्रत्यपत्स्यत, असुना मृगेण तत् अकरिष्यत, तेन दुर्वचेन मा स्म भावि ॥४९॥

सम्प्रति स्वकृतोपकारं दर्शयति—दुर्वचमिति। वाहिनीपतिः सेनापतिरस्मत्स्वामी शितेन पत्रिणा शरेणैनं मृगमाशु न प्रत्यपत्स्यत यदि नाभियुञ्जीत चेदसौ मृग ओजसा बलेन त्वयि विषये यदकरिष्यत् यदनिष्टं कुर्य्यात्तद्दुर्वचं दुर्वाच्यममङ्गलतया वक्तुं न शक्यते। तदनिष्टमथानन्तरमपि मा स्म भूदिति सौहार्द्दकथनम्। तदुपेक्षणे स मृगस्त्वां हन्यादिति भावः। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति करोतेः पद्यतेश्च लृङ् ॥४८

৪৯। আমাদের সেনাপতি সুতীক্ষ্ণশর দ্বারা যদি আশু এই শূকরকে নিহত না করিতেন, তাহা হইলে ঐ পশু তোমার প্রতি বলপ্রকাশ করিয়া যে অনিষ্ট করিত, সেই অমঙ্গলের কথা উচ্চারণ করাই কষ্টকর। যাহা হউক, অতঃপরও তোমার যেন তেমন কোন অমঙ্গল না ঘটে।

कर सकते हैं ? अपनी काम निकालनेवाली अर्थात् कठिन आवश्यकतामें फंसी वो अपने गुण अपने ही मुंहसे कहने पड़ते हैं, इसमें उनका दोष नहीं है, पर साधु पुरुषोंकी मर्य्यादा उल्लङ्घन करनेवाली प्रार्थना ( अर्थात् कार्य्यमें विघ्न होने ) को धिक्कार है।

४९। मेरे सेनापति अत्यन्त तीक्ष्ण बाणसे जो झटपट इस सूअरको नहीं मार गिराते तो यह पशु बलपूर्वक जो आपको अनिष्ट ( अर्थात् मृत्यु ) कर देता उस कहनेमें कष्ट मालूम पड़ता है। जो हो; इसके बाद भी आपका कोई अमङ्गल न होना चाहिये।

वेगवत्तरमृते चमूपते-
र्हन्तुमर्हति शरेण दंष्ट्रिणम् ॥५०॥

मित्रमिष्टमुपकारि संशये
मेदिनीपतिरयं तथा च ते।
तं विरोध्य भवता निरासि मा
सज्जनैकवसतिः कृतज्ञता ॥५१॥

अन्वयः। हरितुरङ्गमायुधस्थेयसीम् अङ्गसंहतिं दधतं वेगवत्तरम् इमं दंष्ट्रिणं चमूपतेः ऋते कः नु हन्तुम् अर्हसि। वाच्य— केन अर्ह्यते। ५०॥

अन्वयः। तथा च अयं मेदिनीपतिः ते संशये उपकारि इष्टं मित्रं तं विरोध्य सज्जनैकवसतिः कृतज्ञता भवता मा निरासि। वाच्य—अनेन मेदिनीपतिना उपकारिणा इष्टेन मित्रेण (भूयते) भवान्...वसतिं कृतज्ञतां निरास्थन् ॥५१॥

ननु मयैव हतो मृगो न तु सेनापतिना तत्राह—क इति। हरितुरङ्गमायुधमिन्द्रायुधं तद्वत् स्थेयसीं स्थिरतरां वज्रकठिनामित्यर्थः। स्थिरशब्दादीयसुन्। 'प्रियस्थिर—' इत्यादिना स्थादेशः। अङ्गसंहतिमवयवसङ्घातं दधतं धारयन्तं वेगवत्तरं दुर्वारवेगमिमं दंष्ट्रिणं वराहं चमूपतेः किरातवाहिनीपतेः ऋते चमूपतिं विना। 'अन्यारात्—' इत्यादिना पञ्चमी। को नु को वा शरेण एकेनेति भावः। हन्तुमर्हति न कोऽपीत्यर्थः ॥५०॥

अस्तु स एव मृगस्य हन्ता? ततः किमित्यत आह—मित्रमिति। तथा च—तस्यैव मृगहन्तृत्वे सतीत्यर्थः। अयं मेदिनीपतिः किरातभूपतिस्ते तव संशये प्राणसङ्कटे उपकारि उपकारकारकमिष्टं मित्रम्। ततोऽपि किं तत्राह—तमिति। तं मित्रभूं विरोध्य सज्जनैकवसतिर्भवादृशसुजनमात्राधारा कृतज्ञता उपकारवेदित्वं मा निरासि न निराक्रियताम्

৫০। ইন্দ্রধনুতুল্য সুদৃঢ়দেহধারী, দুর্বারবেগশালী, এই বরাহকে কিরাত-সেনাপতি ব্যতীত একমাত্র শর দ্বারা আর কে বধ করিতে সমর্থ হয়?

५०। इन्द्रके (वज्र) की तरह अत्यन्त कठोर देह धारण करनेवाले और किसी प्रकार नहीं रोके जा सकनेयोग्य वेग पूर्ण इस वराहको किरातोंके स्वामीके बिना केवल बाणसे और कोई मार सकता है?

लभ्यमेकसुकृतेन दुर्लभाः
रक्षितारमसुरक्ष्यभूतयः।
स्वन्तमन्तविरसा जिगीषतां
मित्रलाभमनुलाभसम्पदः ॥५२॥

अन्वयः। जिगीषतां दुर्लभाः असुरक्ष्यभूतयः अन्तविरसाः लाभसम्पदः एकसुकृतेन लभ्यं रक्षितारं स्वन्तं मित्रलाभम् अनु। वाच्य—दुर्लभाभिः असुरक्ष्यभूतिभिः अन्तविरसाभिः लाभसम्पद्भिः भूयते ॥५२॥

भवता अन्यथा जगति कृतज्ञता अस्तमियात्, कृतघ्नता च ते भवेदित्यर्थः। अस्यतेः कर्म्मण्याशिषि माङि लुङ् ॥५१॥

ननु सर्व्वस्यार्थमूलत्वात् स एवास्तु किं मित्रेणेत्याशङ्क्य मित्रस्य सर्व्वाधिक्यं युग्मेनाह—लभ्यमिति। जिगीषतां जेतुमिच्छताम्। जयतेः सन्नन्ताच्छतृप्रत्ययः। दुर्लभाः कृच्छ्रेणापि लब्धुमशक्यास्तथाप्यसुरक्ष्यभूतयो रक्षितुमशक्यमहिमानः। तथापि नित्यं रक्षणादिक्लेशावशा एवेति भावः। अन्तविरसाः गत्वर्यं इत्यर्थः। लभ्यन्ते इति लाभा अर्थास्तेषां सम्पदः। एकसुकृतेनैकोपकारेण लभ्यं सुलभं न तु दुर्लभं रक्षितारं न तु रक्ष्यं स्वन्तं शुभावसानं न त्वन्तविरसं मित्रलाभमनुमित्रलाभाद्धीनाः निकृष्टा इत्यर्थः। 'हीने' इत्यनोः कर्म्मप्रवचनीयसंज्ञा। तद्योगे द्वितीया अत्रोपमेयस्य मित्रलाभस्य लाभान्तरं प्रत्याधिक्याभिधानाद् व्यतिरेकालङ्कारः ॥ ५२ ॥

৫১। বরাহবধ করিয়া এই কিরাত ভূপতি তোমার প্রাণসঙ্কট-সময়ে পরম উপকারী মিত্র হইয়াছেন। তুমি সেই মিত্রের সহিত বিরোধ করিয়া সাধুজনের একান্ত আধার কৃতজ্ঞতাকে দূর করিয়া দিও না।

৫২। লাভ-সম্পত্তিসকল জয়েচ্ছাকারীরও দুর্লভ। যদি বা তাহা লাভ করা যায়, তথাপি তাহার রক্ষণে প্রতিনিয়ত ক্লেশ পাইতে হয়, আবার তাহাও চিরস্থায়ী নহে। সুতরাং এক সুকৃত দ্বারা সুলভ, রক্ষাকর পরিণামশুভ মিত্র লাভ হইতে পূর্ব্বোক্ত অর্থলাভ নিকৃষ্ট।

५१। आपके प्राणसङ्कटके समय वराहको मार कर ये किरातोंको महाराज आपके अत्यन्त उपकारी मित्र हो गये। ऐसे मित्रके साथ विरोध कर केवल सज्जनोंमें रहनेवाली कृतज्ञताको आप दूर न करें।

चञ्चलं वसु नितान्तमुन्नताः
मेदिनीमपि हरन्त्यरातयः।
भूधरस्थिरमुपेयमागतं
मावमंस्त सुहृदं महीपतिम् ॥५३॥
जेतुमेव भवता तपस्यते
नायुधानि दधते मुमुक्षवः।

अन्वयः। वसु नितान्तं चञ्चलं, मेदिनीम् अपि उन्नता अरातयः हरन्ति ; भूधरस्थिरम् उपेयम् आगतं महीपतिं सुहृदं मावमंस्त। वाच्य—वसुना नितान्तेन चञ्चलेन भूयते, उन्नैः अरातिभिः मेदिनी अपि क्रियते, भवता भूधरस्थिरः उपेयः आगतः, महीपतिः सुहृत् मावमानि। ५३॥

चञ्चलमिति। किञ्च वसु धनं नितान्तं चञ्चलं मेदिनीमप्युन्नताः प्रबला अरातयो हरन्ति। मित्रं तु न तथेत्याह—भूधर इति। भूधरवत् स्थिरमुपेयमन्विष्य गन्तव्यमप्यागतं स्वतः प्राप्तमपि महीपतिं सर्व्व-धुरीणमित्यर्थः। सुहृदं मित्रं मावमंस्त मावज्ञासीत्। भवानिति शेषः। अन्यश्लोकगतो वा भवच्छब्दो विभक्तिविपरिणामेनात्र द्रष्टव्यः। अन्यथा मध्यमपुरुषः स्यात्। मन्यतेः कर्त्तरि माङि लुङ्। अलङ्कारस्तु व्यतिरेक एव। भूधरस्थिरमित्युपमासङ्कतिसङ्करः॥५३॥

৫৩। ধনসম্পদ্ নিতান্ত চঞ্চল, রাজ্যসম্পদও বলবান শত্রুগণ হরণ করিয়া লয়। কিন্তু মিত্রকে কেহ লইতে পারে না চঞ্চলও নহে। সুতরাং পর্ব্বতবৎ স্থির, স্বয়মাগত ভূপতিকে সুহৃৎ পাইয়া তুমি তাহাকে অবজ্ঞা করিও না।

५२। सम्पत्तियोंका लाभ बराबर विजयपानेवालोंके लिये भी दुर्लभ है। या जो वे मिल भी जायें तो भी उनकी रक्षा करनेमें बड़ा कष्ट होता है, वे बहुत समयतक बनी भी नहीं रहती। बल्कि केवल पुण्यसे ही सुलभ, रक्षा करनेवाले और अन्तमें हितकारी अच्छे मित्रको लाभसे सामने ऊपर कही सम्पत्तियोंका लाभ तुच्छ है।

५३। धन सम्पत्तियां अत्यन्त चञ्चल है राज्य सम्पत्तियांको भी प्रबल शत्रु हर सकते हैं। पर अच्छे मित्रको कोई नहीं हरण कर सकता और न वे चञ्चल होते, बल्कि पर्वतकी तरह निश्चल और आपही आ मिले मेरे महाराजरूपी मित्र पाकर आप उनका अनादर न करें।

प्राप्स्यते च सकलं महीभृता
सङ्गतेन तपसः फलं त्वया ॥५४॥

वाजिभूमिरिभराजकाननं
सन्ति रत्ननिचयाश्च भूरिशः ।
काञ्चनेन किमिवास्य पत्त्रिणा
केवलं न सहते विलङ्घनम् ॥५५॥

अन्वयः। भवता जेतुम् एव तपस्यते मुमुक्षवः आयुधानि न दधते, महीभृता सङ्गतेन त्वया सकलस्य तपसः फलं प्राप्स्यते। वाच्य—भवान् तपस्यति, मुमुक्षुभिः आयुधानि न धीयन्ते, सङ्गतः त्वं फलं प्राप्स्यसि ( काव्यलिङ्गालङ्कारः ] ॥५४॥

अन्वयः। [ तस्य भूपतेः ] वाजिभूमिः इभराजकाननं भूरिशः रत्ननिचयाः च सन्ति, अस्य काञ्चनेन पत्त्रिणा किम् इव, परन्तु केवलं विलङ्घनं न सहते। वाच्य—वाजिभूम्या इभराजकाननेन रत्ननिचयैः च भूयते, विलङ्घनं न सह्यते ॥५५॥

ननु मुमुक्षोः किं मित्रसंग्रहेणेत्यत्राह—जेतुमिति। जेतुं जयार्थमेव तपस्यते तपश्चर्य्यते। 'कर्म्मणो रोमन्थ—' इत्यादिना चरणे क्यङ्, ततो भावे लट्। कुतः? मुमुक्षवो मोक्षार्थिन आयुधानि न दधते न धारयन्ति। अतो मित्रसंग्रहः कार्य्य इति भावः। तथापि किं भवत्स्वामिसख्येन। तत्राह—प्राप्स्यते इति महीभृता सह सङ्गतेन त्वया सकलस्य तपसः फलं प्राप्स्यते। अतस्ते सखा अस्मत्स्वामी युक्त इत्यर्थः ॥ ५४ ॥

तन्वकिञ्चनः कुत्रोपयुज्यते। तत्राह—वाजीति। तस्य भूपतेः वाजिभूमिरश्वाकर इभराजानां काननं गजोत्पत्तिस्थानं भूरिशो रत्ननिचयाश्च सन्तीति शेषः। नन्वोद्दृगाढ्यः किमेकस्मै काञ्चनपत्रकाङ्क्षाय कलहायते? तत्राह—अस्य काञ्चनेन सौवर्णेन पत्त्रिणा शरेण किमिव

৫৪। তুমি জয়লাভেচ্ছায় তপস্যা করিতেছ—কেন না যাহারা মোক্ষলাভের অভিলাষী তাহারা কখনও অস্ত্রশস্ত্র ধারণ করে না। তুমি কিরাত মহীপতির সহিত মিলিত হইলে, তবে সকলপ্রকার তপস্যার ফলই পাইবে।

५४। आप जयकी आशासे ही तपस्या कर रहे हैं, क्योंकि जो मुक्ति पानेकी इच्छा किये रहते हैं अस्त्र शस्त्र धारण नहीं करते। जो आप किरातोंके राजाके सत्साथमिल सब प्रकार की तपस्याका फल पा जायेंगे।

सावलेपमुपलिप्सिते परै-
रभ्युपैति विकृतिं रजस्यपि।
अर्थितस्तु न महान् समीहते
जीवितं किमु धनं धनायितुम् ॥५६॥

अन्वयः। महान् (अयं) रजसि परैः सावलेपम् उपलिप्सिते (सति) विकृतिम् अभ्युपैति, तु अर्थितः जीवितं धनायितुं न उत्सहते धनं किमु। वाच्य—महता विकृतिः अभ्युपेयते, अर्थितेन न उत्सह्यते [ अत्र अर्थापत्तिरलङ्कारः ] ।५६।

न किञ्चित् प्रयोजनमस्तीत्यर्थः। परन्तु केवलं विलङ्घनं व्यतिक्रमं न सहते। नायं धनलुब्धः किंत्वधिक्षेपासहिष्णुरित्यर्थः। अत्र प्रथमार्द्धे समृद्धिमहत्त्ववर्णनादुदात्तालङ्कारः ॥५५॥

नन्वीदृग्लुब्धः किमुपकर्त्ता? तत्राह—सावलेपमिति। महानयं रजस्यपि धूलावपि परैः सावलेपं सगर्वमुपलिप्सिते उपलब्धुमिष्टे जिघृक्षिते सति विकृतिमभ्युपैति, प्रकुप्यतीत्यर्थः। अर्थितो याचितस्तु जीवितं धनायितुं धनीकर्त्तुम्। क्यजन्तात् तुमन्। न समीहते न उत्सहते, जीवितमपि आत्मनो न इच्छति, किन्तु अर्थितः प्रयच्छतीत्यर्थः, तर्हि धनं किम्? धनमात्मन एषितुं धनायितुमिति विग्रहः। अन्यथा धनमित्यनेन पौनरुक्त्यं स्यात्। सुप आत्मनः क्यच्। 'अशनायोदन्यधनाया बुभुक्षा-पिपासागर्धेषु' इति निपातनादाकारः ॥ ५६ ॥

৫৫। সেই কিরাত ভূপতির অশ্বোৎপত্তি স্থান, গজোৎপত্তি স্থান এবং বহুরত্নরাশি রহিয়াছে। তাহার একটী স্বর্ণময় শরের কোনই প্রয়োজন নাই। তথাপি যে তিনি ইহার জন্য বিরোধ করিতেছেন সে কেবল অপরকৃত ব্যতিক্রম সহিতে পারেন না বলিয়া।

৫৬। একটী ধূলীকণাও যদি অপরে সগর্ব্বে লইতে অভিলাষী হয়, তবে সেই মহাত্মা, ক্রুদ্ধ হইয়া থাকেন, কিন্তু যদি কেহ তাঁহার নিকট প্রার্থী হয়, তবে তিনি নিজের জীবনও দান করিতে পারেন—অর্থের কথা কি।

५५। उन किरातराजके अधिकारमें घोड़ोंकी उत्पत्तिके स्थान हाथियोंकी उत्पत्तिके स्थान और अनेक रत्नोंके ढेर हैं। इन महाराजको इस सोनेके बाणका प्रयोजन नहीं है। तो भी जो वे इसके लिये विरोध करते हैं—उनका कारण है कि वे दूसरेसे किये गये उल्लङ्घन को नहीं सह सकते।

तत्तदीयविशिखातिसर्ज्जनात्
अस्तु वां गुरु यदृच्छया गतम् ।
राघवप्लवगराजयोरिव
प्रेमयुक्तमितरेतराश्रयम् ॥५७॥

नाभियोक्तुमनृतं त्वमिष्यसे
कस्तपस्विविशिखेषु चादरः ।
सन्ति भूभृति शरा हि नः परे
ये पराक्रमवसूनि वज्रिणः ॥५८॥

अन्वयः । तत् तदीयविशिखातिसर्ज्जनात् वां राघवप्लवगराजयोः इव यदृच्छया आगतं गुरु युक्तम् इतरेतराश्रयं प्रेम अस्तु । वाच्य—आगतेन गुरुणा युक्तेन इतरेतराश्रयेण प्रेम्णा भूयताम् ॥५७॥

अन्वयः । त्वम् अनृतम् अभियोक्तुं न इष्यते, तपस्विविशिखेषु कः आदरः, हि नः भूभृति परे अपि शराः सन्ति ये वज्रिणः पराक्रमवसूनि । वाच्य—त्वाम् अभियोक्तुं न इच्छामः केन आदरेण (भूयते) परैः शरैः भूयते यैः पराक्रमवसुभिः (भूयते) [ काव्यलिङ्गालङ्कारः ] ॥५८॥

उक्तमर्थं निगमयति—तदिति । तत्तस्मात्तदीयविशिखस्यातिसर्ज्जनात प्रत्यर्पणात् वां युवयोः । 'षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ' इति वामादेशः । राघवप्लवगराजयो राममुग्रीवयोरिव यदृच्छया दैवादागतं गुरु महद्युक्तमनुरूपमितरेतराश्रयमन्योन्यविषयं प्रेम सख्यमस्तु ॥ ५७ ॥

৫৭। অতএব তাহার বাণ প্রত্যর্পণ কর—তাহাতে রামসুগ্রীবের ন্যায় দৈবাৎ আগত তোমাদের উভয়ের মধ্যে পরস্পরাশ্রয়যোগ্য মহান্ মিত্রতা ঘটুক।

५६। ये महात्मा, जब दूसरा कोई गर्वके साथ धूलकी एक कणिका भी लेने चाहता है, तो अत्यन्त क्रोध कर बैठते हैं पर जब उनके पास प्रार्थना करता है तो वे अपनी जान भी दे सकते हैं बन तो धारण वस्तु है।

५७। इस लिये उनका वाण लौटा दें तो आप दोनोंके बीचमें राम और सुग्रीवकी तरह दैवयोगसे प्राप्त हुई एक दूसरेको आपसके योग्य एक अच्छी मित्रता हो जय।

मार्गणैरथ तव प्रयोजनं
नाथसे किमु पतिं न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं
किं न यच्छति विजित्य मेदिनीम् ॥५९॥

अन्वयः । अथ तव मार्गणैः प्रयोजनं ( तर्हि ) भूभृतः पतिं किमु न नाथसे, स तद्विधं सुहृदम् अर्थिनम् एत्य मेदिनीं विजित्य न यच्छति किमु । वाच्य—भूभृतः पतिः न नाथ्यते, तेन दीयते ॥५९॥

ननु शरलोभात् मिथ्याभियुज्यसे इत्याह—नेति । त्वमनृतं मिथ्याभियोक्तुमभ्याख्यातुम् । युजोऽर्थग्रहणाद् द्विकर्म्मकता । 'मिथ्याभियोगोऽभ्याख्यानम्' इत्यमरः । अस्माभिरिति शेषः । नेष्यसे नेष्टोऽसि । कुतः ? तपस्वी मुनिः शोच्यश्च । 'मुनिशोच्यौ तपस्विनौ' इति शाश्वतः । तस्य विशिखेषु क आदरः कास्था, न काचिदित्यर्थः । हि यस्मान्नोस्माकं भूभृति शैले परेऽन्येऽपि शराः सन्ति ये शरा वज्रिणः शक्रस्य पराक्रमवसूनि पराक्रमधनानि शौर्य्यसर्व्वस्वभूता इत्यर्थः । वज्रिग्रहणाद्वज्रादप्यतिरिच्यन्ते इति सूच्यते । अत्र शरेषु पराक्रमसाधनेषु पराक्रमरूपेण वस्तुत्व्यज्यते ॥५८॥

अथ ते शरापेक्षा चेत्तर्हि तथोच्यतामित्याह—मार्गणैरिति । अथ उत तव मार्गणैः शरैः प्रयोजनं कार्य्यं तर्हि भूभृतो गिरेः पतिं प्रभुं किमु न नाथसे किमिति न याचसे । 'नाथृ नाधृ याच्ञोपतापैश्वर्य्याशीःषु' इति धातोर्लट् । न च याच्ञाभङ्गशङ्का कार्य्येत्याह—त्वदिति । सोऽस्मत्स्वामी तवेव विधा प्रकारो यस्य तं त्वद्विधं त्वादृशम् महानुभावमित्यर्थः । तथापि सुहृदं मित्रभूतमर्थिनमेत्य लब्ध्वा मेदिनीं विजित्य न यच्छति न ददाति किम् ? किं तु दास्यत्येव । किं पुनः शरानिति भावः ॥५९॥

५८। আমরা তোমাকে মিথ্যা অভিযুক্ত করিতে ইচ্ছা করি না। তপস্বীজনের শরে আমাদের আদর করিবার কি আছে ? আমাদের বাসভূমি এই পর্ব্বতে আরও বহু শর আছে, যে সকল শর বজ্রধারী ইন্দ্রেরও শৌর্য্যসর্ব্বস্ব স্বরূপ।

५८। हम सब आपके साथ व्यर्थ झगड़ने नहीं चाहते। गरीब और तपस्वी व्यक्तिके बाणके उपर क्या हम सबका आदर रहता है ? क्योंकि हम सबके रहनेके स्थान इस पर्वत पर अभी और भी असंख्य बाण है जो वज्र धारण करनेवाले इन्द्रके प्रधान बल के तुल्य हैं।

किञ्च—

तेन सूरिरुपकारिताधनः
कर्त्तुमिच्छति न याचितं वृथा ।
सीदतामनुभवन्निवार्थिनां
वेद यत्प्रणयभङ्गवेदनाम् ॥६०॥
शक्तिरर्थपतिषु स्वयंग्रहं
प्रेम कारयति वा निरत्ययम् ।

अन्वयः । तेन सूरिः ( अतः ) उपकारिताधनः ( सः ) याचितं वृथा कर्त्तुं न इच्छति, ( कुतः ) यत् सीदताम् अर्थिनां प्रणयभङ्गवेदनां स्वयम् अनुभवन् इव वेद । वाच्य—सूरिणा उपकारिताधनेन तेन न इष्यते, स्वयम् अनुभवता इव विद्यते ॥६०॥

यदुक्तम् 'त्वद्विधम्' इत्यादि तत्रोपपत्तिमाह—तेनेति । तेन कारणेन सूरिर्विद्वान् अतएवोपकारिताधन उपकारकत्वमात्रधनः स किरातभूपतिर्याचितं याच्ञां वृथा व्यर्थं कर्त्तुं नेच्छति । कुतः ? यद् येन कारणेन सीदतां क्लिश्यतामर्थिनां प्रणयभङ्गवेदनां याच्ञाभङ्गदुःखं स्वयमनुभवन्निव वेद वेत्ति । अतो न वैफल्यशङ्का कार्य्येत्यर्थः ॥ ६० ॥

৫৯। তোমার বাণের যদি প্রয়োজনই থাকে, তবে তুমি কেন শৈলস্বামীর নিকট প্রার্থনা কর না ? তিনি তোমার মত সুহৃদকে প্রার্থী পাইলে পৃথিবী জয়পূর্ব্বক কি দান করেন না ?

৬০। সেইহেতু বিদ্বান্, পরোপকারী, সেই কিরাতপতি কাহারও প্রার্থনা-পূরণে বিমুখ হয় না। যেহেতু তিনি ক্লেশভোগী যাচকগণের প্রার্থনা বিফল হওয়ার দুঃখ স্বয়ং অনুভব করিয়া অবগত আছেন।

५८। आपको जब बाणका ही प्रयोजन है तो क्यों नहीं पर्वतके स्वामी से मांग लेते ? वे आप ऐसे मित्रको याचना करने पाकर क्या पृथ्वी जीत कर दान नहीं करते ?

६०। इसलिये विद्वान् व्यक्ति बराबर उपकार करनेमें तत्पर रहनेवाले ये किरातराज, किसीकी प्रार्थना पूर्ण करनेसे मुंह नहीं फेरते। वे क्लेश भोगनेवाले याचकोंकी प्रार्थना भङ्ग होनेका दुःख अनुभव किये जान पड़ते हैं।

कारणद्वयमिदं निरस्यतः
प्रार्थनाधिकबले विपत्फला ॥६१॥

अस्त्रवेदमधिगम्य तत्त्वतः
कस्य चेह भुजवीर्यशालिनः।
जामदग्न्यमपहाय गीयते
तापसेषु चरितार्थमायुधम् ॥६२॥

अन्वयः। अर्थपतिषु शक्तिः स्वयंग्रहं कारयति, वा निरत्ययं प्रेम स्वयंग्रहं कारयति इदं कारणद्वयं निरस्यतः (पुंसः) अधिकबले प्रार्थना विपत्फला। वाच्य—शक्त्या स्वयंग्रहः कार्य्यते निरत्ययेन प्रेम्णा कार्य्यते ॥६१॥

अन्वयः। इह तापसेषु जामदग्न्यम् अपहाय अस्त्रवेदं तत्त्वतः अधिगम्य भुजवीर्य्यशालिनः कस्य वा आयुधं चरितार्थं गीयते। वाच्य—गायन्ति ॥ ६२ ॥

ननु स्वयं ग्राहिणः किं याच्ञादैन्यं तत्राह—शक्तिरिति। अर्थपतिषु विषये शक्तिः सामर्थ्यं स्वयंग्रहं स्वाम्यनुज्ञां विना ग्रहणं कारयति। यद्वा निरत्ययमपराधेऽप्यविकारि निर्बाधं प्रेमकर्तृ स्वयंग्रहं कारयति। प्रबलः प्रियो वा परस्य धनं स्वयं गृह्णातीत्यर्थः। अन्यथा दोषमाह—इदं पूर्वोक्तं कारणद्वयं निरस्यतस्त्यजतः पुंस इति शेषः। अधिकबले प्रबले विषये प्रार्थना तद्धनजिघृक्षा विपत्फलानर्थफलिका। अशक्तस्याप्रियस्य सतः प्रबलधनग्रहणाशा फणिशिरोमणिग्रहणसाहसवदनर्थाय कल्पत इत्यर्थः ॥६१॥

ननु शस्त्रार्थसम्पत्त्या शक्तत्वाभिमानः ;; तत्राह—अस्त्रवेदमिति। इह जगति तापसेषु तपस्विनां मध्ये 'यतश्च निर्धारणम्' इति सप्तमी। जमदग्नेरपत्यं पुमान् जामदग्न्यः, 'गर्गादिभ्यो यञ्'। तमपहाय

৬১। শক্তি থাকিলে স্বয়ং গ্রহণ করা যায়, আর যদি প্রগাঢ় প্রণয় থাকে, তাহাতেও স্বয়ং গ্রহণ করা যাইতে পারে। এই কারণদ্ব পরিত্যাগপূর্ব্বক কেহ যদি প্রবল ব্যক্তির ধন গ্রহণ করিতে ইচ্ছা করে, তবে তাহার পক্ষে অনর্থই ঘটে।

६१। शक्ति रहने पर स्वयंग्रह किया जा सकता है या अत्यन्त प्रेम रहने पर स्वयं ग्रहण किया जा सकता। इन दो कारणोंके न रहने कोई जो अत्यन्त बलवान् व्यक्तिका धन लेने जाय तो उसे अनर्थ ही प्राप्त होता है।

अभ्यघानि मुनिचापलात्त्वया
यन्मृगः क्षितिपतेः परिग्रहः ।
अक्षमिष्ट तदयं प्रमाद्यतां
संवृणोति खलु दोषमज्ञता ॥६३॥

अन्वयः । त्वया मुनिचापलात् क्षितिपतेः परिग्रहः मृगः यत् अभ्यघानि, तत् ( हननम् ) अयम् अक्षमिष्ट एव ( तथाहि ) प्रमाद्यतां दोषम् अज्ञता संवृणोति । वाच्य—त्वं मृगम् अभ्यवधीः तत् ( हननम् ) अनेन अक्षमि. अज्ञतया दोषः संव्रियते । ६३ ॥

परशुरामं विनेत्यर्थः । अस्त्रवेदं तत्त्वतोऽधिगम्य भुजवीर्य्येण शालते इति भुजवीर्य्यशालिनः, उभयसंपन्नस्येत्यर्थः । शालनक्रियापेक्षया समानकर्तृकत्वात् ल्यब्निर्देशः । कस्य वायुधं चरितः प्राप्तोऽर्थो येन तच्चरितार्थं सार्थकं गीयते न कस्यापीत्यर्थः । अतस्त्वमपि तापसत्वादकिञ्चित्करस्य तेन सह सख्यमेव युक्तमिति भावः ॥६२॥

ननु युष्मन्मृगवधशरहरणाभ्यां द्रोहिणो मम तेन कथं सख्यं स्यादित्याशङ्क्य सत्यं तथापि तावन्मृगवधापराधः क्षमिष्यते इत्याह—अभ्यघानीति । त्वया मुनिचापलात् ब्राह्मणचापल्यादित्यर्थः । क्षितिपतेरस्मत्स्वामिनः । परिगृह्यत इति परिग्रहः, तेन स्वीकृत इत्यर्थः । 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति विश्वः । यन्मृगोऽभ्यघान्यभिहत इति । हन्तेः कर्मणि लुङ् । तद्धननमयमस्मत्स्वाम्यक्षमिष्ट सोढवानेव । तथा हि—प्रमाद्यताम् अविमृश्यकारिणामित्यर्थः । दोषमपराधमज्ञता अज्ञानिता संवृणोति आच्छादयति नाज्ञस्यापराधो गण्यते इत्यर्थः ॥६३॥

৬২। এই পৃথিবীতে তপস্বীদিগের মধ্যে পরশুরামকে বাদ দিলে, প্রকৃত অস্ত্রশাস্ত্রজ্ঞ বাহুবলশালী অপর কেই বা আছে যাঁহার অস্ত্র সার্থক বলিয়া গীত হইয়া থাকে?

६२। इस पृथ्वीपर तपस्वियोंमें "परशुराम" को छोड़ कर असलमें अस्त्र ग्रहण करनेमें दूसरा कौन चतुर है जिसके अस्त्र-शस्त्रों की सफलताका गान हो।

৬৩। তুমি ব্রাহ্মণোচিত চঞ্চলতাবশে কিরাতপতির পরিগৃহীত পশু হনন করিয়াছ। সেই হননকার্য্য ( অন্যায় হইলেও ) তিনি ক্ষমা করিয়াছেন। অবিমৃষ্যকারীদিগের অপরাধ অজ্ঞতাই আবৃত করিয়া রাখে।

जन्मवेषतपसां विरोधिनीं
मा कृथाः पुनरमूमपक्रियाम् ।
आपदेत्युभयलोकदूषणी
वर्तमानमपथे हि दुर्मतिम् ॥ ६४ ॥

अन्वयः । जन्मवेषतपसां विरोधिनीम् अमूम् अपक्रियां पुनः मा कृथाः, हि अपथे वर्त्तमानं दुर्म्मतिम् उभयलोकदूषणी आपत् एति । वाच्य—विरोधिनी असौ अपक्रिया मा कारि, वर्त्तमानः दुर्म्मतिः उभयलोकदोषण्या आपदा ईयते । ६४ ।

अथ सुहृद्भावेन हितमुपदिशति—जन्मेति जन्म सत्कुले प्रसूतिः, वेषो जटावल्कलादिः तपो नियमः, तेषां विरोधिनीं विरुद्धाममूम् एवंविधाम् अपक्रियाम् अपकारं पुनः इतःपरमित्यर्थः । मा कृथा मा कुरु । करोतेः कर्त्तरि माङि लुङ् । 'वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्म्मणाम् । आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा ॥' इति स्मरणात् । उक्त वैपरीत्ये दोषमाह—आपदिति । हि यस्मात् अपथे वर्त्तमानं दुर्म्मतिम् पुरुषमिति शेषः । उभौ लोकौ दूषयति इन्तीत्युभयलोकदूषणी । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । आपदेति प्राप्नोति । समासविषये उभशब्दस्थाने उभयशब्दप्रयोग एव साधुः । यदाह कैयटः—'उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो माभूत् उभशब्दस्यैव रूपं यथा स्यादित्युभयतेत्यादि भवति' इति ॥ ६४ ॥

৬৪। তুমি উচ্চবংশে জাত জটাবল্কলধারী এবং তপস্বী, এই তিনেরই বিরোধী অপকার্য্য আর করিও না। কেন না বিপথগামী দুর্ম্মতি পুরুষকে উভয়-লোকনাশিনী বিপত্তি আসিয়া আক্রমণ করিয়া থাকে।

६३। आपने मुनियोंके स्वभावके अनुसार चञ्चलताके कारण ( ब्राह्मणोंकी स्वाभाविक चञ्चलता ) के कारण, किरातराजके इस पशुको मार डाला है। उसे ( उनके पशु मारनेका अन्यायको ) किरातराज सह गये। क्योंकि सोचे विचारे विना काम करनेवालेके अपराधको अज्ञानता छिपा डालती है।

६४। आप ऊंचे वंशमें उत्पन्न हुए हैं, जटा बल्कल धारण किये और तपस्वी हैं। इन तीनोंसे विरोधी बुरा काम कभी न करें, क्योंकि कुमार्गमें जानेवालोंको दोनों लोक बिगड़नेवाली विपत्ति भोगनी पड़ती है।

यष्टुमिच्छसि पितॄन्न सांप्रतं
संवृतोऽर्चिचयिषुर्दिवौकसः।
दातुमेव पदवीमपि क्षम
किं मृगेऽङ्ग विशिखं न्यवीविशः॥ ६५॥

अन्वयः। साम्प्रतं पितॄन् यष्टुं न इच्छसि (यतः) संवृतः (तथा) दिवौकसः अर्चिचयिषुः (न असि) अङ्ग, दातुम् एव क्षमः (सन्) अपि किं मृगे विशिखं न्यवीविशः।. वाच्य—न इष्यते, संवृतेन (भूयते) अर्चिचयिषुणा (भूयते) योग्य न विशिखः न्यवेशि। ६५॥

यदुक्तम् 'अभ्यघानि' इति तदेव स्फुटयति—यष्टुमिति। साम्प्रतं सम्प्रति 'सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः। पितॄन् कव्य-वाडादीन् यष्टुमर्च्चयितुं नेच्छसि, यतः संवृत एकान्ते स्थितः। तथा दिवौकसो देवान् अर्च्चिचयिषुरप्यर्च्चयितुमिच्छुरपि नासि? अतो न पित्रर्थेयं हिंसा, नापि देवतार्था, तदाराधने तद्विहितत्वादिति भावः। अथ 'सर्व्वत आत्मानं गोपायीतम्' इति श्रुतेरात्मरक्षार्थमिति चेत्तत्राह— दातुमिति। हे अङ्ग, पदवीं मार्गं दातुमेव, न तु हन्तुम्, मुनित्वा-दिति भावः। क्षमोऽपि योग्यः सन्नपि, किं किमर्थं मृगे विशिखं न्यवीविशो निवेशितवान्। विशतेर्ण्यन्ताल्लुङ्। अभिधावतो मृगादप-सरणेनैवात्मरक्षणे कर्त्तव्ये यदवधीस्तच्चापलमेव। 'मा हिंस्यात् सर्व्वा-भूतानि' इति श्रुतिनिषेधादिति भावः॥ ६५॥

৬৫। সম্প্রতি তুমি পিতৃলোকের অর্চ্চনা করিতে ইচ্ছুক নহ যেহেতু, নির্জ্জন স্থানে তোমার বাস এবং দেবগণের পূজায়ও তোমার অভিলাষ হয় নাই; সুতরাং এই পশুসংহার না করিয়া অনায়াসেই ত ইহাকে পথ ছাড়িয়া দিতে পারিতে। তথাপি তুমি কেন ইহার দেহে বাণ সন্ধান করিলে?

६५। इस समय आप पितृलोगोंकी अर्चना करने चाहते नहीं, निर्जन स्थानमें निवास करते है; और देवताओं की भीं पूजा नहीं करते चाहते। बल्कि इस पशुको मारे विना ही अनायास अपनी राहपर जाते छोड़ देते। तो फिर क्यों इसके शरीर पर बाण चलाया।

सज्जनोऽसि विजहीहि चापलं
सर्वदा क इव वा सहिष्यते ।
वारिधीनिव युगान्तवायवः
क्षोभयन्त्यनिभृता गुरूनपि ॥ ६६ ॥
अस्त्रवेदविदयं महीपतिः
पर्वतीय इति मावजीगणः ।
गोपितुं भुवमिमां मरुत्वता
शैलवासमनुनीय लम्भितः ॥ ६७ ॥

अन्वयः । (त्वं) सज्जनः असि (अतः) चापलं विजहीहि, सर्वदा कः इव वा सहिष्यते अनिभृता गुरून् अपि युगान्तवायवः वारिधीन् इव क्षोभयन्ति । वाच्य—सज्जनेन भूयते, चापलं हीयताम्, केन सहिष्यते, अनिभृतैः गुरवः अपि युगान्तवायुभिः वारिधयः इव क्षोभ्यन्ते ॥ ६६ ॥

अन्वयः । अयं महीपतिः अस्त्रवेदवित् (अतः) पर्वतीय इति मावजीगणः मरुत्वता इमां भुवं गोपितुम् अनुनीय शैलवासं लम्भितः । वाच्य—अनेन महीपतिना अस्त्रवेदविदा (भूयते) मरुत्वान् शैलवासं लम्भितवान् ॥६७॥

किं बहुना परमार्थः श्रूयतामित्याह—सज्जन इति । सज्जनोऽसि अतएव चापलं चपलस्य कर्म्म विजहीहि त्यज जहातेर्लोट् । 'आ च हौ' इतीकारः । सर्व्वदा क एव वा को वा सहिष्यति । इवशब्दो वाक्यालङ्कारे । वाशब्दोऽवधारणे । असहने कारणमाह—वारिधीनिति । अनिभृताश्चपलाः पुनः पुनरकार्य्यकारिणो गुरून् धैर्य्ययुक्तानपि । अन्यच्च विशालानपि युगान्तवायवः प्रलयपवना वारिधीनिव समुद्रानिव क्षोभयन्ति । उपमानुप्राणितोऽयमर्थान्तरन्यासः ॥ ६६ ॥

৬৬। তুমি সজ্জন, অতএব চঞ্চলতা ত্যাগ কর। কেই বা সর্ব্বদা চাপল্য সহ করিবে? যুগান্তকালীন প্রবল বায়ু যেমন বিশাল সাগরকেও ক্ষুব্ধ করে সেইরূপ চপলস্বভাব অকার্য্যকারীরা ধীরস্বভাব লোকদিগেরও ক্ষোভ জন্মাইয়া থাকে।

६६। आप साधु हैं बल्कि चञ्चलता छोड़ दें। कौन बार बार या सदा (हमेशा) बच्चना सहता रहेगा। प्रलय कालकी प्रबल अत्यन्त बड़े वायु समुद्र को जिस प्रकार चञ्चल कर देती है उसी प्रकार चञ्चल स्वभावके विचारशून्य लोग धीर स्वभाव वालको भी कुपित कर डालते हैं।

तत्तितिक्षितमिदं मया मुने-
रित्यवोचत वचश्चमूपतिः ।
बाणमत्रभवते निजं दिश-
न्नाप्नुहि त्वमपि सर्वसंपदः ॥६८॥

अन्वयः । तत् मुनेः इदं मया तितिक्षितम् इति चमूपतिः अवोचत, अत्रभवते निजं वाणं दिशन् त्वम् अपि सर्व्वसम्पदः आप्नुहि । वाच्य—इदम् अहं तितिक्षितवान् इति चमूपतिना अवाचि ; त्वया दिशता सर्व्वसम्पदः आप्यन्ताम् ॥६८॥

नन्वयं किरातः क्षुभितः किं करिष्यति तत्राह—अस्त्रेति । अयं महीपतिरस्त्रवेदवित् निग्रहानुग्रहसमर्थः इति भावः । अतः पर्व्वते भवः पर्व्वतीयः । 'पर्व्वताच्च' इति छप्रत्ययः । इति हेतोर्मावजीगणः । वनेचरबुद्ध्या मावज्ञासीरित्यर्थः । गणयतेर्माङि लुङ् । 'ई च गणः' इतीकारः । नन्वीदृग्वश्चेत् किमर्थमिह वने वससि तत्राह—गोपितुमिति । मरुत्वता इन्द्रेणेमां भुवं गोपितुं रक्षितुम् 'आयादय आर्द्धधातुके वा' इति विकल्पात् 'गुपूधूप—' इत्यादिना न आयप्रत्ययः । अनुनीय प्रार्थ्य शैलवासं लम्भितः प्रापितः । 'ण्यन्ते कर्त्तुश्च कर्म्मणः' इति वचनादणि कर्त्तुः कर्म्मणि क्तः । 'गतिबुद्धि—' इत्यादिनापि कर्त्तुः कर्म्मत्वम् ॥ ६७ ॥

उपसंहरति—तदिति । तत्तस्मात् मुनिचापलात् मुनेः सम्बन्धीदं मृगवधरूपम् मया तितिक्षितं सोढमिति वचश्चमूपतिरवोचत । शरद्रोहस्य प्रत्यर्पणमेव प्रतीकार इत्याह—अत्रभवते पूज्याय स्वामिने । अत्र भवान् व्याख्यातः । निजं वाणं तदीयमेव शरं दिशन् प्रत्यर्पन् त्वमपि सर्व्वसम्पद आप्नुहि । सख्येनेति भावः ॥ ६८ ॥

৬৭। এই কিরাতপতি ধনুর্ব্বেদে সুপণ্ডিত, ইহাকে পার্ব্বত্যবোধে অবজ্ঞা করিও না। ইন্দ্র, এই পৃথিবী রক্ষার জন্য অনুনয় করিয়া ইহাকে এই পর্ব্বতে বাস করিতে সম্মত করিয়াছিলেন।

६७। ये किरात राज धनुर्वेद में अत्यन्त विद्वान ( इस लिये ) शासन करने समर्थ हैं। आप पहाड़ी समझ कर उन्हें कुछ न समझें। इन्द्रने इस पृथ्वीकी रक्षा के लिये ही विशेष प्रार्थनाके साथ उन्हें इस पर्वत निवास करने कहा है।

आत्मनीनमुपतिष्ठते गुणाः
सम्भवन्ति विरमन्ति चापदः ।
इत्यनेकफलभाजि मा स्म भू-
दर्थिता कथमिवार्य्यसंगमे ॥ ६९ ॥

दृश्यतामयमनोकहान्तरे
तिग्मरश्मिरिति पृतनाभिरन्वितः ।

अन्वयः। आत्मनीनम् उपतिष्ठते, गुणाः सम्भवन्ति, आपदश्च विरमन्ति इति अनेकफलभाजि आर्य्यसङ्गमे अर्थिता कथम् इव मा स्म भूत्। वाच्य—आत्मनीनेन उपस्थीयते, गुणैः सम्भूयते, आपद्भिः विरम्यते, अर्थितया मास्म भावि ॥ ६९ ॥

ननु मह्यमेतत् सख्यमेव न रोचते, किं पुनस्तन्मूलाः सम्पदस्तत्राह—आत्मनीनमिति। आत्मने हितमात्मनीनम्। 'आत्मन् विश्वजनभोगोत्तरपदात् खः' उपतिष्ठते संगच्छते। 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु' इति वक्तव्यादात्मनेपदम्। गुणा विनयादयः सम्भवन्त्यापदश्च विरमन्ति। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। इत्यनेकफलभाजि नानाफलोत्पादक आर्य्यसङ्गमे साधुसङ्गतौ अर्थितापेक्षा कथमिव मा स्म भूत्। सर्व्वदा भवत्येव ॥ ६९ ॥

৬৮। আমি তোমার এই চাপল্য সহ্য করিলাম, আমাদের প্রভু এই কথা বলিয়া দিয়াছেন। তুমিও মাননীয় চমূপতির শর তাঁহাকে প্রত্যর্পণ করিয়া (সন্ধ্যস্থাপনান্তে) সকল সম্পদ্ লাভ কর।

৬৯। যাহাতে নিজের মঙ্গল হয়, বিনয়াদিগুণ সমুদ্ভূত হয় এবং সমুদয় বিপদ্ দূরীভূত হয়, এহেন প্রভূতফলদায়ক সাধুসঙ্গে কেন না আকাঙ্ক্ষা হইবে।

६८। इसीसे मैंने तुम्हारी इस स्वभावकी चञ्चलता सह लिया यह बात मेरे स्वामीने कहि है। आप भी माननीय मेरे सेनापतिका यह बाण उनके पास लौटा कर सारी सम्पत्तियोंका पात्र हो गये।

६९। जिससे अपना मङ्गल हो, विनय आदिक गुण उत्पन्न हों और उत्पन्न हुई विपत्तियां टूट हों इस प्रकार अत्यन्त फल देनेवाला, सज्जन समागम क्यों नहीं आकाङ्क्षित (अर्थात् पसन्द) होगा।

साह्विवीचिरिव सिन्धुरुद्धतो
भूपतिः समयसेतुवारितः ॥ ७० ॥

सज्यं धनुर्वहति योऽह्पितिस्थवीयः
स्थेयान् जयन् हरितुरङ्गमकेतुलक्ष्मीम् ।
अस्यानुकूलय मतिं मतिमन्ननेन
सख्या सुखं समभियास्यसि चिन्तितानि ॥७१॥

इति भारविकृतौ महाकाव्ये किरातार्ज्जुनीये त्रयोदशः सर्गः ॥

अन्वयः । तिग्महेतिपृतनाभिः अन्वितः साह्विवीचिः सिन्धुः इव उद्धतः ( किन्तु ) समयसेतुवारितः ( सन् ) अयं भूपतिः अनोकहान्तरे दृश्यताम् । वाच्य—अन्वितं साह्विवीचिं सिन्धुम् इव उद्धतं...वारितम् इमं भूपतिं पश्य ॥ ७० ॥

अन्वयः । स्थेयान् यः चमूपतिः हरितुरङ्गमकेतुलक्ष्मीं जयन् अह्पितिस्थवीयः सज्यं धनुः वहति हे मतिमन्, अस्य मतिम् अनुकूलय, सख्या अनेन सुखं चिन्तितानि समभियास्यसि । वाच्य—स्थेयसा येन चमूपतिना जयता अह्पितिस्थवीयसा सज्यं धनुः उह्यते, मतिः अनुकूल्यतां, चिन्तितानि समभियास्यन्ते । ७१ ॥

न चायं दूरे वर्त्तते इत्याह—दृश्यतामिति । तिग्महेतिभिस्तीक्ष्णायुधाभिः । 'हेतिर्ज्वालास्त्रसूर्य्यांशुषु' इति हेमचन्द्रः । पृतनाभिर्वाहिनीभिः । 'वाहिनी पृतना चमूः' इत्यमरः । अन्वितो भूपतिः साह्वयः ससर्पा वीचयो यस्य स सिन्धुः समुद्र इवोद्धतः किन्तु समयो मर्य्यादा सेतुरिव स समयसेतुस्तेन वारितः सन् । हस्तेन निर्द्दिशन्नाह—अयमनोकहान्तरे द्रुमान्तर्धाने । वर्त्तत इति शेषः । दृश्यताम् । 'अनोकहः कुटः शालः पलाशो द्रुद्रुमागमाः' इत्यमरः ॥ ७० ॥

७० । সসর্পবীচিমালাপূর্ণ সিন্ধুর ন্যায় উদ্ধত অথচ সময়রূপ সেতু দ্বারা নিবারিত ঐ দেখ কিরাতরাজ সুতীক্ষ্ণ অস্ত্রশস্ত্র ও সেনাসমন্বিত হইয়া, বৃক্ষান্তরালে দৃষ্ট হইতেছেন।

७० । यह देखिये कि किरातराज, अत्यन्त तीक्ष्ण अस्त्र शस्त्र और सेनाके साथ हो कर, सांपों और तरङ्गोंसे युक्त समुद्रको तरह उत्तेजित हो समय रूप सेतु ( पुल ) से रुके रह कर वृक्षोंके बीचमें खड़े दिखा दे पड़ रहे हैं।

# चतुर्दशः सर्गः ।

ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्य्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥ १ ॥

अन्वयः । ततः उद्धतैः किरातस्य वचोभिः अर्णवाम्बुभिः शैल इव पराहतः ( अतः ) कुपितोऽपि पाण्डवः धैर्य्यं न जहौ । तथाहि साधवः सुदुर्ग्रहान्तःकरणाः ॥ वाच्य—शैलेन इव पराहतेन कुपितेन पाण्डवेन धैर्य्यं न जहे साधुभिः + करणैः ( भूयते ) ॥१॥

अथास्य विज्ञापनमेवाह—सज्यमिति । स्थेयान् स्थिरतरः । 'प्रियस्थिर—' इत्यादिना स्थादेशः । यश्चमूपतिर्हरितुरङ्गमकेतोरिन्द्रध्वजस्य लक्ष्मीं शोभां जयन् अहिपतिः शेष इव स्थवीयः स्थूलतरम् 'स्थूलदूर—' इत्यादिना पूर्व्वगुणयणादिपरलोपौ । सह ज्यया सज्यं धनुर्वहति हे मतिमन्, अस्य चमूपतेर्मतिमनुकूलयानुकूलां कुरु सख्यं कुर्वित्यर्थः । मतिमत्तायाः फलमेतदिति भावः । कुतः ? सख्या अनेन चमूपतिना हेतुना सुखमक्लेशेन चिन्तितानि मनोरथान् समभियास्यसि प्राप्स्यसि । वसन्ततिलकावृत्तम् ॥७१॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्ज्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
त्रयोदशः सर्गः समाप्तः ॥

---

৭১। যে স্থিরতর চমূপতি ইন্দ্রধ্বজ শোভাকে জয় করিয়া, শেষাহিরাজের ন্যায় স্থূলতর জ্যাযুক্ত চাপ ধারণ করিতেছেন ; হে মহামতি ! তুমি তাঁহার চিত্ত তোমার প্রতি অনুকূল কর ; ইহার সহিত মিত্রতা স্থাপিত হইলে তোমার সমুদয় মনোরথ অনায়াসে অধিগত হইবে ।

७१। अत्यन्त दृढ़ जो सेनापति, इन्द्रधनुषकी शोभा जितनेवाले शेषनागके समान मोटे और प्रत्यञ्चा ( तांत ) चढ़े धनुषको धारण किये खड़े हैं, आप विचारवान् हैं इस लिये उनका चित्त अपनी ओर मिलाने लीजिये अर्थात् उनके साथ मित्रता कीजिये। उनके साथ पारिवारिक सम्बन्ध हो जानेके कारण आपके सभी मनोरथ अनायास पूर्ण हो जायेंगे ।

সলেশমুল্লিঙ্গিতশাত্রবেঙ্গিতঃ
কৃতী গিরাং বিস্তরতত্ত্বসংগ্রহে ।
অয়ং প্রমাণীকৃতকালসাধনঃ
প্রশান্তসংরম্ভ ইবাদদে বচঃ ॥ ২ ॥

অন্বয়ঃ। সলেশম্ উল্লিঙ্গিতশাত্রবেঙ্গিতঃ গিরাং বিস্তরতত্ত্বসংগ্রহে কৃতী, প্রমাণীকৃতকালসাধনঃ অয়ং প্রশান্তসংরম্ভ ইব বচঃ আদদে। বাচ্য—শাত্রবেঙ্গিতেন কৃতিনা + সাধনেন অনেন প্রশান্তসংরম্ভেণ ইব বচঃ আদদে ॥২॥

তত ইতি। ততঃ কিরাতবাক্যানন্তরমুদ্ধতৈঃ প্রগল্ভৈঃ কিরাতস্য বচোভিঃ। অর্ণবাম্বুভিঃ শৈল ইব পরাহতোঽভিহতো অত এব কুপিতোঽপি পাণ্ডবো ধৈর্য্যং নির্ব্বিকারচিত্তত্বং ন জহৌ ন তত্যাজ। উৎপন্নমপি কোপং স্তম্ভয়ামাসেত্যর্থঃ। তথাহি—সাধবঃ সজ্জনাঃ সুদুর্গ্রহং সুষ্ঠু দুরাসদমপ্রতিকূপ্যমন্তঃকরণং যেষাং তে সুদুর্গ্রহান্তঃকরণা হি অর্থান্তরন্যাসঃ ॥১॥

সলেশমিতি। সহ লেশৈঃ সলেশং সকলং যথা তথোল্লিঙ্গিতমুদ্ভূতলিঙ্গং কৃতম্। লিঙ্গৈস্তদ্বাক্যভঙ্গিভিরেব সম্যগবগতমিত্যর্থঃ। শত্রুরেব শাত্রবঃ স্বার্থে অণ্প্রত্যয়ঃ। তস্যেঙ্গিতমভিপ্রায়স্তদুল্লিঙ্গিতং যেন সঃ। গিরাং বাচাং সম্বন্ধিনি বিস্তরে তত্ত্বসংগ্রহেঽর্থসংক্ষেপে বৈভাষিকো দ্বন্দ্বৈকবদ্ভাবঃ। কৃতী কুশলঃ প্রমাণীকৃতং প্রধানীকৃতং কাল এব সাধনং যেন সঃ। অবসরোচিতং বিবক্ষুরিত্যর্থঃ। অয়ং পাণ্ডবঃ প্রশান্তসংরম্ভঃ সংক্ষোভরহিত ইব বচ আদদে উবাচেত্যর্থঃ ॥ ২ ॥

১। তদনন্তর পাণ্ডুপুত্র অর্জ্জুন সাগরতরঙ্গে প্রতিহত পর্ব্বতের ন্যায় কিরাতের উদ্ধতবাক্যে পরাহত ও ক্রুদ্ধ হইলেও ধৈর্য্য ত্যাগ করিলেন না। বস্তুতঃ সাধুগণের অন্তঃকরণ অতিশয় দুর্জ্ঞেয়।

২। পাণ্ডুপুত্র অর্জ্জুন শত্রুর বাক্যভঙ্গীতে মনের সমুদয় ভাব অবগত হইয়া সংক্ষেপ রচনায় কুশল এবং অবসরমতে উত্তর প্রদানে অভিলাষী ধীরভাবেই বলিতে আরম্ভ করিলেন।

১। কিরাতকী বাতেং সমাপ্ত হোনে পর, সমুদ্রকে তরঙ্গোসে চোট খাযে পর্ব্বতকী তরহ কিরাতকী সগর্ব্ব বাতোঁসে চোট খাযে অর্জুননে কুপিত হোনে পর ভী ধৈর্য্য ন ছোড়া। বাস্তবমেঁ সজ্জনো অন্তঃকরণ অত্যন্ত গম্ভীর হোতা হৈ।

विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्त्तते नाकृतपुण्यकर्म्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥३॥

अन्वयः—विविक्तवर्णाभरणा सुखश्रुतिः द्विषाम् अपि हृदयानि प्रसादयन्ती प्रसन्नगम्भीरपदा सरस्वती अकृतपुण्यकर्म्मणां न प्रवर्त्तते। वाच्य—विविक्तवर्णाभरणया सुखश्रुत्या प्रसादयन्त्या प्रसन्नगम्भीरपदया सरस्वत्या न प्रवृत्यते ।३।

सान्वयपूर्व्वकमेवाह—विविक्तेति। विविक्ताः संयोगादिनाश्लिष्टाः स्फुटोच्चारिता वर्णा अक्षराण्येवाभरणानि यस्याः सा। अन्यत्र तु विविक्तानि शुद्धानि वर्णो रूपमाभरणानि च यस्याः सा। 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' इत्युभयत्राप्यमरः। सुखा श्रुतिः श्रवणं यस्याः सा सुखश्रुतिः श्लाघ्येत्यर्थः। अन्यत्र श्रूयत इति श्रुतिर्वाक् सा सुखा यस्याः सा मञ्जुभाषिणीत्यर्थः। द्विषामपि हृदयानि प्रसादयन्ती किं पुनः सुहृदामिति भावः। प्रसन्नानि वाचकानि गम्भीराण्यर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा। अन्यत्र तु प्रसन्ना विमला गम्भीरपदा अलसचरणा सरस्वती वाक् स्त्रीरत्नञ्च। तथा चोक्तम्—'सरस्वती सरिद्भेदे गीर्वाग्देवतयोरपि स्त्रीरत्नञ्च' इति। न कृतं पुण्यकर्म्म यैस्तेषां न प्रवर्त्तते न प्रसरति किन्तु सुकृतिनामेवेत्यर्थः। भवद्वाणी चैवंविधेति धन्यो भवानिति भावः। अत्र काचिन्नायिका वाग्देवता च प्रतीयते। तत्रादौ समासोक्तिरलङ्कारः। विशेषणमात्रसाम्येनाप्रस्तुतप्रतीतेः अत एव न श्लेषः॥ ३॥

৩। পরিস্ফুটরূপে উচ্চারিত বর্ণরূপ আভরণশালিনী, শ্রুতিমধুরা শত্রুগণেরও হৃদয়গ্রাহিণী এমন প্রসন্নগম্ভীরপদযুক্তা বাক্ (অন্যার্থে নায়িকা) অপুণ্যকর্ম্মাদিগের দ্বারা প্রবর্ত্তিত হন না।

२। बातोंके [द्वाव भावसे] प्रभुके समस्त अभिप्राय समझकर लम्बी-चौड़ी बातोंमेंसे तत्त्व ग्रहण करनेमें चतुर पाण्डुपुत्र अर्जुनने समयके अनुसार उत्तर देनेकी इच्छासे धीरताके साथ बोलना आरम्भ किया।

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम् ॥४॥

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः ।

अन्वयः । विपश्चितां ( मध्ये ) ते सभ्यतमाः भवन्ति, ये मनोगतं वाचि निवेशयन्ति ; तेषु अपि उपपन्ननैपुणाः कतिचित् ( एव ) गभीरम् अर्थं प्रकाशतां नयन्ति । वाच्य—तैः सभ्यतमैः भूयते, यैः मनोगतं+निवेश्यते+उपपन्ननैपुण्यैः+अर्थः प्रकाशतां नीयते ॥४

भवन्तीति । ते पुरुषा विपश्चितां विदुषाम् । 'विद्वान् विपश्चिद्दोषज्ञः' इत्यमरः । मध्ये सभ्यतमाः सभायां साधुतमा निपुणतमाः । 'साधुः समर्थो निपुणस्य' इति काशिकायाम् । भवन्ति । ये मनोगतं मनसा गृहीतमर्थं वाचि निवेशयन्ति वाचा उद्गिरन्तीत्यर्थः । तेषु वक्तृषु अपि उपपन्ननैपुणाः सम्भावितकौशलाः कतिचिदेव गम्भीरं निगूढ़मर्थं प्रकाशतां स्फुटतां नयन्ति लोके तावज्ज्ञातार एव दुर्लभाः तत्रापि वक्तारः, तत्रापि निगूढ़ार्थप्रकाशकाः त्वयि सर्व्वमस्तीति स्तुतिः । वनेचरवाक्यरहस्य ज्ञातमिति स्वयमपि तादृश एवेति हृदयम् ॥ ४ ॥

४। যাহারা মনোগত ভাব কথায় প্রকাশ করিতে পারেন বিদ্বান্‌গণের মধ্যে তাঁহারাই সভ্য বলিয়া গণ্য হন। সে রূপ সভ্যদিগের মধ্যে আবার অতি অল্পসংখ্যক নিপুণ লোকই কথা দ্বারা নিগূঢ় অর্থ প্রকাশ করিতে সমর্থ হন।

३। शुद्ध वर्णं ( अक्षर या अङ्गोंके रंग ) रूप आभूषणोंसे हमेशा शोभा पानेवाली, मधुर स्वरसे बोलती ( इस लिये ) शत्रुओंके भी हृदय प्रसन्न करने ( अर्थात् चुमाने ) वाली इस प्रकारकी प्रसन्न और गम्भीर पदोंसे युक्त ' या निर्मल चरणोंसे धीरे चलनेवाली एक सुलक्षणा स्त्री की तरह ) बात, पुरुष नहीं किये वालोंके पास प्रवृत्त होती ( मुंह निकलती या आज्ञानुसार काम करती ) नहीं।

४। विद्वानोंके बीच वेही सभ्य ( सभामें चतुर ) समझाई जाते हैं जो अपनेका भाव शब्दोंसे प्रकाशित कर सकते। उसी प्रकार सभ्योंके बीचमें बहुत थोड़े पुरुष हैं कि जो अत्यन्त गुप्त अर्थको शब्दोंसे प्रकट कर सकते हैं।

इति स्थितायां प्रतिपुरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः ॥५॥
समस्य सम्पादयता गुणैरिमां
त्वया समारोपितभार भारतीम्।
प्रगल्भमात्मा धुरि धुर्य्य वाग्मिनां
वनेचरेणापि सताधिरोपितः ॥६॥

अन्वयः--( किञ्च केचित् ) गुर्वीं अभिधेयसम्पदं स्तुवन्ति। अपरे विपश्चितः उक्तेः विशुद्धिं ( स्तुवन्ति )। इति प्रतिपुरुषं रुचौ स्थितायां ( सत्यां ) सर्वमनोरमाः गिरः सुदुर्लभाः। वाच्य—गुर्वी अभिधेयसम्पत् स्तूयते। अपरैः विपश्चिद्भिः विशुद्धिः ( स्तूयते )+ सर्वमनोरमाभिः गीर्भिः सुदुर्लभाभिः ( भूयते ) ॥५

अन्वयः। हे धुर्य्य ! हे समारोपितभार ! इमां भारतीं गुणैः समस्य प्रगल्भं ( यथा स्यात् तथा ) सम्पादयता त्वया वनेचरेणापि सता आत्मा वाग्मिनां धुरि अधिरोपितः। वाच्य—सम्पादयन् त्वं वनेचरः अपि सन् आत्मानम्+अधिरोपितवान् ॥६॥

स्तुवन्तीति। किञ्च केचिद् गुर्व्वीं महतीमभिधेयसम्पदमर्थसम्पत्तिं स्तुवन्ति। अपरे विपश्चित उक्तेः शब्दस्य विशुद्धिं सामर्थ्यं स्तुवन्ति इति प्रतिपुरुषं रुचौ प्रीतौ स्थितायां व्यवस्थितायां सर्व्वमनोरमाः सर्वेषां शब्दार्थरुचीनां पुंसां मनोरमाः गिरः सुदुर्लभाः। त्वद्गिरस्तु सर्वमनोरमा उक्तसर्व्वगुणसम्पत्त्येति भावः ॥ ५ ॥

समस्येति। धुरं वहतीति धुर्य्यस्तत् सम्बोधने हे धुर्य्य हे कार्य्यनिर्व्वाहक ! 'धुरो यड्ढकौ' इति यत्प्रत्ययः। अत एव समारोपितभार ! स्वामिना निहितसन्ध्यादिकार्य्यभार हे तदाह मनुः—'दूते सन्धिविपर्य्ययौ'

৫। কেহ কেহ গভীর অর্থসম্পত্তিরই প্রশংসা করিয়া থাকেন, অপর অনেক বিজ্ঞব্যক্তি শব্দের বিশুদ্ধিরই প্রশংসা করেন। প্রত্যেক ব্যক্তির রুচি এইরূপ ভিন্ন ভিন্ন হওয়াতে সকল লোকের মনোহারী বাক্য একান্তই বিরল।

५। किसी किसीने गम्भीर अर्थ परिपूर्ण रहनेकी प्रशंसाकी है और कई विद्वान् लोग स्पष्ट शब्दों की प्रशंसा करते हैं। इस प्रकार प्रत्येक लोगों की भिन्न भिन्न रुचि होनेकी कारण सभीको प्रसन्न करनेवाली बात अत्यन्त दुर्लभ हैं।

प्रयुज्य सामाचरितं विलोभनं
भयं विभेदाय धियः प्रदर्शितम् ।
तथाभियुक्तश्च शिलीमुखार्थिना
यथेतरन् न्याय्यमिवावभासते ॥७॥

अन्वयः । साम प्रयुज्य विलोभनम् आचरितम् ; (तथा) धियः विभेदाय भयं प्रदर्शितम्, (किञ्च) शिलीमुखार्थिना (त्वया) तथा अभियुक्तं यथा इतरत् न्याय्यम् इव अवभासते । वाच— विलोभनम् आचरितवान्, भयं प्रदर्शितवान्, शिलीमुखार्थी (त्वं) तथा अभियुक्तवान्, यथा इतरेव न्याय्येन इव अवभासते ॥७॥

इति । इमां शान्तताविनययोगीत्यादिकां भारतीं वाचं गुणैर्विविक्तवर्णत्वादिभिः समस्य संयोज्य प्रगल्भं निर्भीकं यथा तथा सम्पादयता रचयता व्याहरतेत्यर्थः, त्वया वनेचरेणापीत्यर्थः, सता । अपिशब्दो विरोधद्योतनार्थम् । आत्मा स्वयं वाग्मिनां वाचोयुक्तिपटूनाम् । 'वाचयुक्तिपटुर्वाग्मी' इत्यमरः । 'वाचो ग्मिनिः' इति मत्वर्थीयो ग्मिनिप्रत्ययः । धुर्य्यग्रेऽधिरोपितः स्थापित इत्यर्थः । 'दृहः पोऽन्यतरस्याम्' । इति पकारः । अत्र मनुः—'वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते' इति ॥६॥

वाग्मितामेवाह—प्रयुज्येति । शान्ततावितययोगीत्यादिना साम सान्त्वम् । 'सामसान्त्वमुभे समे' इत्यमरः । प्रयुज्य नियुज्य विलोभनं प्रलोभनं 'मित्रमिष्टम्' इत्यादिनाचरितं सम्पादितम् । तथा धियो बुद्धेर्विभेदाय व्यामोहनार्थम् 'शक्तिरर्थपतिषु' इत्यादिना भ॰ प्रदर्शितम् । किञ्च शिलीमुखार्थिना न तु न्यायार्थिनेति भावः । त्वयेति शेषः ।

७। হে কার্য্যনির্ব্বাহক সন্ধিসমরাদিকার্য্যে ভারপ্রাপ্ত, তুমি এই গুণযুক্ত বাক্য নির্ভীকভাবে ব্যক্ত করিয়া বনেচর হইলেও নিজকে বাগ্মীদিগের শ্রেষ্ঠ বলিয়া প্রতিপন্ন করিয়াছ ।

६। हे कार्य्यनिर्व्वाह करनेवाले और सन्धि विग्रह (मेल या विद्रोह दोनों) का भार अपने पर लिये हुए, इस प्रकारकी यथोचित बातें निर्भयताके साथ कह कर जंगली होने पर भी अपनेको चतुर वक्ताओं में श्रेष्ठ सिद्ध कर दिया ।

विरोधि सिद्धेरिति कर्त्तुमुद्यतः
स वारितः किं भवता न भूपतिः।
हिते नियोज्यः खलु भूतिमिच्छता
सहार्थनाशेन नृपोऽनुजीविना ॥ ८

अन्वयः। सिद्धेः विरोधि इति कर्त्तुम् उद्यतः स भूपतिः भवता किं न वारितः? भूतिम् इच्छता सहार्थनाशेन अनुजीविना नृपः हिते नियोज्यः खलु। वाच्य—उद्यतं तं भूपतिं भवान् किं न वारितवान्? भूतिम् इच्छन् सहार्थनाशः अनुजीवी नृपं हिते नियुञ्जीत खलु ॥८॥

'नाभियोक्तुम्' इत्यादिना तथाभियुक्तं कथितं यथेतरत् न्यायादन्यत् अन्याय्यमित्यर्थः। न्याय्यं न्यायादनपेतमिवावभासत इत्युपमा। अनेन वाग्मिनामग्रेसरोऽसीति भावः ॥ ७ ॥

ततः किमत आह—विरोधीति। किन्तु सिद्धेः फलस्य विरोधि विघातकमितीदमस्मदास्कन्दनरूपं कर्म्म कर्त्तुमुद्यतः स भूपतिर्महीपतिः भवता धुर्य्येणेति भावः। किं न वारितो निवर्त्तितः। निवारणे हेतुमाह—भूतिमिच्छतेहामुत्र च श्रेयोऽर्थिना सह सहचरितावर्थनाशौ स्वार्थानर्थौ यस्य तेन सहार्थनाशेन समानसुखदुःखेनेत्यर्थः। अनुजीविना भृत्येन नृपः स्वामी हिते नियोज्यो नियम्यः खलु। अन्यथा स्वामिद्रोहपातकी श्रेयसो भ्रष्टः स्यादिति भावः ॥ ८ ॥

৭। তুমি সাম প্রয়োগ করিয়া প্রলোভন দেখাইয়াছ, বুদ্ধিমোহ উৎপাদনের জন্য ভয় প্রদর্শন করিয়াছ; শরণার্থী হইয়া এমন ভাবে বলিয়াছ—যাহা অন্যায় হইলেও ন্যায়ের মত বোধ হয়।

৮। কিন্তু ফললাভের বিরোধী এইরূপ কর্ম্ম করিতে উদ্যত তোমার ভূপতিকে তুমি বারণ করিলে না কেন? সমান সুখদুঃখভাগী মঙ্গলাকাঙ্ক্ষী ভৃত্যের পক্ষে নিজ প্রভুকে হিতপথে পরিচালনা করাই কর্ত্তব্য।

७। तुमने साम प्रयोग (शान्तिके लिये समझानेकी बातें) कर लोभ भी दिखलाया और बुद्धिको मोहित करनेके लिये भय भी दिखलाया, पर बाण पानेकी इच्छासे तुमने ऐसी बातें कहीं हैं जो अनुचित होने पर भी न्यायानुकूल मालूम पड़ती हैं।

ध्रुवं प्रणाशः प्रहितस्य पत्त्रिणः
शिलोच्चये तस्य विमार्गणं नयः ।
न युक्तमत्रार्य्यजनातिलङ्घनं
दिशत्यपायं हि सतामतिक्रमः ॥८॥

अतीतसंख्या विहिता ममाग्निना
शिलीमुखाः खाण्डवमत्तुमिच्छता ।

अन्वयः। प्रहितस्य पत्त्रिणः प्रणाशः ध्रुवम्, तस्य शिलोच्चये विमार्गणं नयः। अत्र आर्य्य-जनातिलङ्घनं न युक्तं; हि सताम् अतिक्रमः अपायं दिशति। वाच्य—प्रणाशेन ध्रु वं (भूयते)। विमार्गणेन नयेन (भूयते) आर्य्यजनातिलङ्घनेन न युक्तेन (भूयते)। अतिक्रमेण अपायः दिश्यते ॥८॥

तर्हि नो बाणः क्व गतः, किमत्र वा न्याय्यम्, तत्राह—ध्रुवमिति। प्रहितस्य प्रयुक्तस्य पत्त्रिणः शरस्य प्रणाशोऽदर्शनं ध्रुवं निश्चितम्। प्रहितत्वादिति भावः। तस्य नष्टस्य पत्त्रिणः शिलोच्चये शैले। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। विमार्गणमन्वेषणं नयो न्यायः। 'अन्वेषणं विचयनं मार्गणं मृगणा मृगः' इत्यमरः। अत्र विषये आर्य्यजनातिलङ्घनं सज्जनव्यतिक्रमो न युक्तम्। हि यस्मात् कारणात् सतामतिक्रमोऽपायमनर्थं दिशति ददाति ॥ ८ ॥

৯। প্রযুক্ত শর যে দৃষ্টির অগোচর হইবে, তাহা ত নিশ্চিত। পর্ব্বতপ্রদেশে তাহার সন্ধান করাই ন্যায়সঙ্গত কার্য্য। এ বিষয়ে সজ্জনব্যতিক্রম উচিত নহে; কেননা তাহাতে অনর্থই ঘটে।

८। फल पानेके विरुद्ध ऐसे कार्य्य करनेमें उद्यत अपने दलके स्वामीको क्यों नहीं रोका? दुःख सुखमें बराबर सम्बन्ध रखनेवाले भृत्यों (सेवकों) के लिये अपने स्वामीको हितके वास्ते पर चलाना उचित है।

८। काममें लगा गया बाण जो दिखाई नहीं पड़ता वह भी बात निश्चित है, पर उसको पर्व्वत खोजना ही उचित है, आर्य्य लोगोंका अपमान करना उचित नहीं क्योंकि सज्जनोंकी अपमानित करना अनर्थका खड़ा करता है।

अनाहृतस्यामरसायकेष्वपि
स्थिता कथं शैलजनाशुगे धृतिः ॥१०॥
यदि प्रमाणीकृतमार्य्यचेष्टितं
किमित्यदोषेण तिरस्कृता वयम्।
अयातपूर्वा परिवादगोचरं
सतां हि वाणी गुणमेव भाषते ॥११॥

अन्वयः। खाण्डवम् अत्तुम् इच्छता अग्निना मम अतीतसंख्याः शिलीमुखाः विहिताः, (अतः) अमरसायकेषु अपि अनाहृतस्य (मम) कथं शैलजनाशुगे धृतिः स्थिता? वाच्य—इच्छन् अग्निः अतीतसंख्यान् शिलीमुखान् विहितवान्।...धृत्या स्थितम् ॥१०॥

अन्वयः। आर्य्यचेष्टितं प्रमाणीकृतं यदि (तर्हि) अदोषेण वयं किम् इति तिरस्कृताः। हि परिवादगोचरम् अयातपूर्व्वा सतां वाणी गुणम् एव भाषते। वाच्य—आर्य्यचेष्टितेन प्रमाणीकृतेन (भूयते) यदि, अस्माभिः...तिरस्कृतैः (भूयते)। अयातपूर्व्वया वाण्या गुण एव भाष्यते ॥११॥

यदुक्तम् 'हन्तुमर्हसि' इति तत्रोत्तरमाह—अतीतेति। खाण्डव-मिन्द्रवनमत्तुं भक्षयितुमिच्छताग्निना ममातीतसंख्या असंख्याः शिलीमुखाः शरा विहिता दत्ताः। खाण्डवदाहेऽक्षयतूणीरदानमुक्तं भारते। अतोऽमरसायकेषु अपि अनाहृतस्यादररहितस्य भावे क्तः। ततो नञा बहुव्रीहिः। मम कथं शैलजनाशुगे किरातबाणे धृतिरास्था स्थिता। न कथञ्चिदित्यर्थः। अतो नापहारशङ्का कार्य्येत्यर्थः ॥१०॥

यदुक्तम् 'समर्थ्यते तनुभृताम्' इत्यादिना सदाचारः प्रमाणमिति तत्रोत्तरमाह—यदीति। आर्य्यचेष्टितं सच्चरितं प्रमाणीकृतं यदि साधुत्वे-

১০। খাণ্ডববন ভক্ষণে অভিলাষী অগ্নি আমাকে সংখ্যাতীত শর প্রদান করিয়াছেন; সুতরাং আমি দেবতাদিগের শর চাহি না; কিরাতের শর গ্রহণে কেন আমার মতি হইবে?

१०। खाण्डव वन जलानेके समय अग्निने मुझे असंख्य बाण दिये हैं। बल्कि मैं देवताओंके भी बाण नहीं चाहता तो किरातके बाण पर मेरा क्यों लोभ होगा?

गुणापवादेन तदन्यरोपणाद्-
भृशाधिरूढ़स्य समञ्जसं जनम् ।
द्विधेव कृत्वा हृदयं निगूहत:
स्फुरन्नसाधोर्विवृणोति वागसि: ॥१२॥

अन्वय: । गुणापवादेन तदन्यरोपणात्, समञ्जसं जनं भृशाधिरूढ़स्य निगूहत: असाधो: हृदयं स्फुरन् वागसि: द्विधा कृत्वेव विवृणोति । वाच्य—...स्फुरता वागसिना विव्रियते ॥१२॥

नाङ्गीकृतं यदीत्यर्थ: । तर्हि अदोषेण दोषाभावेऽपि । 'क्वचित् प्रसज्य-प्रतिषेधेऽपि नञ्समास:' इति भाष्यकार: । उपलक्षणे तृतीया । वयं किमिति तिरस्कृता: न युक्तमित्यर्थ: । हि यस्मात् परिवादगोचरं पर-निन्दास्पदमयातपूर्वा सतां वाणी गुणमेव भाषते न दोषम् अतस्ते त्वयादोषभाषिणो न सदाचारप्रामाण्यबुद्धिरिति भाव: । पूर्व्वं न यातेत्य-यातपूर्व्वा । सुप्सुपेति समास: । परत्वात् सर्व्वनाम्नो निष्ठाया: पूर्व्व निपात: । 'स्त्रिया: पुंवत्' इत्यादिना पुंवद्भाव: पूर्व्वलिङ्गता च, अर्थान्तरन्यास: ॥११॥

ननु अप्रत्यक्षा परबुद्धि: कथं दुष्टेति निश्चीयते तत्राह—गुणेति। गुणाप-वादेन विद्यमानगुणापह्नवेन तदन्यरोपणात्तस्माद्गुणादन्यस्य दोषस्य अविद्यमानस्यैवारोपणाच्च समञ्जसं जनं सुजनं भृशाधिरूढ़स्यातिमात्रमाक्रम्य स्थितस्य अभिचरितस्येत्यर्थ: । कर्त्तरि क्त: । निगूहतो हृदयं संवृण्वतोऽपि असाधोरनार्य्यस्य हृदयं कर्म्म स्फुरन् विलसन् वागेवासिर्द्विधा कृत्वा भित्त्वेव विवृणोति । अतिदुष्टया वाचैवैतत् पूर्व्विकाया बुद्धेरपि दोष्टमनु-मीयते इति भाव: । वागसिरित्यत्र रूपकं द्विधाकरणरूपकसाधकम् ॥१२॥

১১। সাধুজনের আচরণই যদি প্রমাণীকৃত হয়, তবে নির্দ্দোষ আমাকে কেন তিরস্কৃত হইতে হইল ? যাহা পরনিন্দা ব্যাপারে পূর্ব্বে কখনও ব্যাপৃত হয় নাই, তাদৃশ বাক্য সাধুদিগের গুণই প্রকাশ করিয়া থাকে।

११। साधुलोगोंके आचरण को जब प्रमाण समझते हो तो फिर दोष न रहने पर भी मुझे क्यों अपमानित करते हो ? जो दूसरोंकी निन्दा करनेमें पहले कभी प्रवृत्त न हुए, ऐसे साधुओंकी बातें गुण ही प्रकट करती है।

वनाश्रयाः कस्य मृगाः परिग्रहाः
शृणाति यस्तान् प्रसभेन तस्य ते।
प्रहीयतामत्र नृपेण मानिता
न मानिता चास्ति भवन्ति च श्रियः ॥१३॥

अन्वयः। वनाश्रयाः मृगाः कस्य परिग्रहाः ? यः तान् प्रसभेन शृणाति, ते मृगाः तस्य। अत्र नृपेण मानिता प्रहीयताम्, मानिता च अस्ति श्रियश्च भवन्ति (इति) न। वाच्य—वनाश्रयैः मृगैः कस्य परिग्रहैः (भूयते)। येन ते...शीर्य्यन्ते, तैः मृगैः तस्य (भूयते)। नृपः मानितां प्रजह्यात्, मानितया च भूयते श्रीभिश्च भूयते (इति) न ॥१३॥

यदुक्तम् 'अभ्यघानि' इति, तत्रोत्तरमाह—वनेति। वनाश्रया अत एव मृगाः कस्य परिग्रहाः न कस्यापीत्यर्थः। किन्तु यस्तान् मृगान् प्रसभेन बलात्कारेण शृणाति हिनस्ति। 'शॄ हिंसायाम्' इति धातोर्लट्। ते मृगास्तस्य हन्तुः परिग्रहाः परिग्राह्याः हन्ता चाहमेवेति भावः। ननु ममायमित्यभिमानात् नृपस्य स्वत्वमित्याशङ्क्याह—अत्रेति। अत्र मृगे नृपेण मानिता ममेत्यभिमानः प्रहीयतां त्यज्यताम्; कुत इत्याशङ्क्याभिमानमात्रेण स्वत्वाभावादित्याह—नेति। मानिता चास्ति श्रियः स्वानि च भवन्तीति न। किन्तु न भवन्ति एव। सत्यामभिमानितायामित्यर्थः। अभिमानमात्रेण स्वत्वेऽति चासङ्गादिति भावः ॥१३॥

১২। দুর্জ্জনগণ বিদ্যমান গুণের অপলাপ ও অবিদ্যমান দোষের আরোপণ করিয়া সাধু ব্যক্তিকে অতিশয় আক্রমণ করে; কিন্তু হৃদয়ের ভাব গোপন করিলেও, বাক্যরূপ অসি সেই অসাধুজনের হৃদয় দ্বিখণ্ডিত করিয়া প্রকাশিত করে।

১৩। পশুগণ বনে বাস করে, সুতরাং তাহারা কাহারও নিজস্ব নহে। যে ব্যক্তি বলপূর্ব্বক যখন যে পশু হনন করে, তখন সেই পশু তাহারই হইয়া থাকে। তোমার প্রভু ইহার উপর স্বত্বের অভিমান ত্যাগ করুন। অভিমান বজায় থাকিবে আবার সম্পদও হইবে কখনও ইহা সম্ভব নহে।

१२। वर्त्तमान गुणको छिपा कर और न रहनेवाले दोषको, प्रकाशित कर दुष्ट लोग, सज्जनों का अत्यन्त आक्रमण करते हैं। पर हृदयका भाव छिपा रखने पर भी, वाक्यरूपी तलवार, दुष्टों के उस हृदयको दो खण्ड कर प्रकाशित कर देती है।

न वर्त्म कस्मैचिदपि प्रदीयता-
मिति व्रतं मे विहितं महर्षिणा ।
जिघांसुरस्मान्निहतो मया मृगो
व्रताभिरक्षा हि सतामलंक्रिया ॥१४॥

मृगान् विनिघ्नन् मृगयुः स्वहेतुना
कृतोपकारः कथमिच्छतां तपः ।

अन्वयः। कस्मैचित् अपि वर्त्म न प्रदीयताम्; इति व्रतं महर्षिणा मे विहितम्। अस्मात् जिघांसुः मृगः मया निहतः। हि व्रताभिरक्षा सताम् अलंक्रिया। वाच्य—...वर्त्म न प्रदेहि (प्रददातु वा) इति व्रतं महर्षिः...विहितवान्। जिघांसुं मृगम् अहं निहतवान्। व्रताभिरक्षया...अलंक्रियया (भूयते) ॥१४॥

'यष्टुमिच्छसि पितॄन्' इत्यादिना यन्निष्कारणमवधीरित्युपालम्भि तत्रोत्तरमाह—नेति। कस्मैचिदपि वर्त्म न प्रदीयतामित्येवं व्रतं महर्षिणा व्यासेन मे मह्यं विहितम्, उपदिष्टमित्यर्थः। अस्मात् कारणात् जिघांसुर्हन्तुमिच्छुरापतन्नभिधावन्नयं मृगः मया निहतः, हि यस्माद् व्रताभिरक्षा सतामलंक्रिया न तु दोषः। अत आत्मरक्षणार्थमस्य वधः। न निष्कारणमित्यर्थः ॥१४॥

১৪ মহর্ষি ব্যাসদেব আমাকে এইরূপ ব্রতের আচরণই শিক্ষা দিয়াছিলেন যে, "কাহাকেও পথ ছাড়িয়া দিও না।" সেই কারণেই আমার প্রতি হিংসুক এই পশু আমি সংহার করিয়াছি। ব্রতরক্ষাই সাধুব্যক্তির পক্ষে অলঙ্কার স্বরূপ।

१३। पशु वनमें रहते हैं—बल्कि वे किसीको सम्पत्ति नहीं हैं। जब जो पुरुष उन्हें बलपूर्वक मारता है तो वे पशु उसीके हो जाते हैं। तुम्हारे स्वामी इसके ऊपर स्वत्व (साम्पत्तिक अधिकार) का अभिमान करें। अभिमान बनाये रखने पर फिर सम्पत्तियां कभी नहीं रह सकतीं।

१४। महर्षि व्यासदेवने मुझे ऐसा इस प्रकारके आचरण 'अर्थात् तपस्या भी उपदेश दिया है कि 'अपने स्थानसे हो जानेके लिये) किसीको राखा न देना। इस लिये मुझे मारने चाहनेवाले पशुको मैंने मारा। व्रतकी रक्षा ही साधुओंके लिये अलङ्कार है।

कृपेति चेदस्तु मृगः क्षतः क्षणा-
दनेन पूर्वं न मयेति का गतिः ॥१५॥

अनायुधे सत्त्वजिघांसिते मुनौ
कृपेति वृत्तिर्महतामकृत्रिमा।

अन्वयः। स्वहेतुना मृगान् विनिघ्नन् मृगयुः तपः दुहृतां कथं कृतोपकारः? कृपा इति चेत्, अस्तु मृगः क्षणात् क्षतः। अनेन पूर्व्वं मया न, इति का गतिः। वाच्य—विनिघ्नता मृगयुणा (भूयते)।...कृतोपकारेण (भूयते) भूयतां मृगेण क्षतेन। अयं (हतवान्) अहं न (हतवान्) इति कया गत्या (भूयते) ॥१५॥

'दुर्वचं तत्' इत्यादिना यत् सञ्जातं बन्धुत्वमुक्तं तन्नाचष्टे—मृगानिति। स्वमात्मैव हेतुस्तेन स्वहेतुना स्वार्थमित्यर्थः। 'सर्वनाम्नस्तृतीया च' इति तृतीया। मृगान् विनिघ्नन् प्रहरन्। मृगान् यातीति मृगयुर्व्याधः। 'मृगयुर्व्याधश्च' इत्यौणादिको युप्रत्ययान्तो निपातः। 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः। तप दुहृतां तपस्विनां कथं कृतोपकारः न कथञ्चिदित्यर्थः। अथ कृपेति चेत् व्याधस्यापोति शेषः। अस्तु किं शुष्ककलहेनेति भावः। परन्तु यदुक्तम् 'निघ्नतः परनिबर्हितम्' इत्यादिना तस्य प्रथमप्रहर्तृत्वं तदयुक्तमित्याह—मृगः क्षणात् क्षतः। आवाभ्यां युगपदेव विद्ध इत्यर्थः। एवं सति अनेन नृपेणैव पूर्व्वं हतो मया तु न इत्यत्र का गतिः किं प्रमाणम्? पौर्वापर्यस्य दुर्लक्षत्वादिति भावः। तथा च यदुक्तम् 'व्रीडितव्यम्' इत्युपालम्भस्तस्यैव किं न स्यादिति भावः ॥ १५ ॥

১৫। নিজের প্রয়োজনে পশু সংহার করিয়া ব্যাধ কিরূপে তাপসগণের উপকার সাধন করে? যদি বল, আমার প্রতি দয়াহেতুই পশু সংহার করা হইয়াছে, আমিও না হয় সেই কথা মানিয়া লইলাম। আমরা একযোগে শূকরদেহে বাণ বিদ্ধ করি. তোমার প্রভুই যে পূর্ব্বে মারিয়াছেন আমি পূর্ব্বে মারি নাই তাহার প্রমাণ কি?

१५। अपने प्रयोजनके लिये पशु मार कर व्याध (बहेलिया तपस्वियोंका उपकार कैसे करता है? और जो कहने चाहते हो कि आपके ऊपर दया है,

शरासनं बिभ्रति सज्यसायकं
कृतानुकम्पः स कथं प्रतीयते ॥१६॥
अथो शरस्तेन मदर्थमुज्झितः
फलञ्च तस्य प्रतिकायसाधनम्।
अविक्षते तत्र मयात्मसात्कृते
कृतार्थता नन्वधिका चमूपतेः ॥१७॥

अन्वयः। अनायुधे सत्त्वजिघांसिते मुनौ कृपा इति वृत्तिः महताम् अकृत्रिमा। सज्यसायकं शरासनं बिभ्रति (मयि) स कथं कृतानुकम्पः प्रतीयते। वाच्य—...कृपा इति वृत्त्या अकृत्रिमया भूयते।...तं कृतानुकम्पं प्रत्येमि ॥ १६ ॥

अन्वयः। अथ तेन मदर्थं शरः उज्झितः तस्य फलञ्च प्रतिकायसाधनम्, अविक्षते तत्र मया आत्मसात्कृते (सति) चमूपतेः अधिका कृतार्थता ननु। वाच्य—स शरम् उज्झितवान्, फलेन प्रतिकायसाधनेन (भूयते) अधिकतया कृतार्थतता (भूयते) ॥१७॥

पूर्व्वं 'कृपेति चेदस्तु' इत्युक्तम्, सम्प्रति तदप्यसहमान आह—अनायुधे इति। अनायुधे निरायुधे सत्त्वेन केनचित् प्राणिना जिघांसिते हन्तुमिष्टे। हन्तेः सन्नन्तात् कर्म्मणि क्तः। मुनौ विषये कृपेति वृत्तिर्व्यवहारो महतां महात्मनामकृत्रिमा अकपटा। सह ज्यया सज्यः सायको यस्मिन् तच्छरासनं धनुर्बिभ्रति दधति मयि स नृपः कथं कृतानुकम्पो मया प्रतीयते ज्ञायते। इणः कर्म्मणि लट्। अद्यमे कृपा विहिता न तु चम इत्यर्थः ॥ १६ ॥

১৬। অস্ত্রশস্ত্রহীন তপস্বিজনের উপর কোন জন্তু হিংসা করিলে, সেই তাপসের প্রতি অকপট দয়া প্রকাশ করাই মহাত্মার লক্ষণ। আমি সগুণ-শর শরাসনে ধারণ করিতেছি, তথাপি তোমার প্রভু আমার প্রতি কৃপালু - কিরূপে বুঝিব?
इसीसे पशुको मारा है,—मैं भी इसे मान लेता, पर हमलोगोंने एक ही साथ शूकरके शरीर पर वाण छोड़े तो, ऐसी अवस्थामें, "पहले तुम्हारे स्वामीने मारा और मैंने नहीं" इसमें प्रमाण क्या है?

१६। अस्त्रशस्त्रसे रहित तपस्वी पर कोई जन्तु हिंसा करता हो तो उस (तपस्वी) पर निष्कपट दया प्रकाशित करना महात्माका चिह्न है। मैं तो प्रत्यञ्चा और वाण चढ़े धनुषको धारण कर रहा हूं तब कैसे समझूं कि तुम्हारे स्वामीने मुझपर कृपा की है?

यदात्थ कामं भवता स याच्यता-
मिति क्षमं नैतदनल्पचेतसाम्।
कथं प्रसह्याहरणैषिणां प्रियाः
परावनत्या मलिनीकृताः श्रियः ॥१८॥

अन्वयः। स कामं भवता याच्यताम् इति यत् आत्थ, एतत् अनल्पचेतसां न क्षमम्। (कुतः) प्रसह्य आहरणैषिणां परावनत्या मलिनीकृताः श्रियः कथं प्रियाः? वाच्य—तं...भवान् याचताम् इति यत् उच्यते, एतेन...न क्षमेण (भूयते)।...मलिनीकृताभिः श्रीभिः कथं प्रियाभिः (भूयते) ॥१८॥

अथ कृपामभ्युपगम्याह—अथो इति। अथो प्रश्ने। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः। तेन नृपेण मदर्थं यथातथा। अर्थेन सह नित्यसमासः। शरः उज्झितस्त्यक्तस्तस्योज्झितस्य फलस्य प्रतिकायस्य प्रतिपक्षस्य साधनं वधः। 'साधनं निर्वृतौ मेढ्रे सैन्ये सिद्धौ वधे गतौ' इति विश्वः। अविक्षते अखण्डिते तत्र तस्मिन् फले मया आत्मसात्कृते स्वाधीनीकृते सति। 'तदधीनवचने' इति सातिप्रत्ययः। चमूपतेरधिका कृतार्थता साफल्यं ननु खलु। स्वायुधस्य परत्राणशत्रुवधपात्रप्रतिपादनाय एकहेलया सिद्धेरित्यर्थः। तथापि अयं शरलोभ इति कृपालुताया मूलान्यपि निकृन्ततीति भावः ॥१७॥

'मार्गणैरथ तव प्रयोजनम्' इत्यादिना यदुक्तं तन्निराचष्टे—यदिति। स नृपः कामं भवता याच्यतामिति यदात्थ मामिति शेषः। एतदनल्पचेतसां मनस्विनां न क्षमं न युक्तम्। कुतः? प्रसह्य बलादाहरणैषिणामाहर्तुमिच्छूनाम्। 'क्षत्रियस्य विजितम्' इति स्मरणादिति भावः। परावनत्या याच्ञादैन्येन मलिनीकृताः श्रियः कथं प्रियाः, न कथञ्चिदित्यर्थः ॥ १८ ॥

१७। স্বীকার করিয়া লইলাম যে, তিনি আমার উপকারের নিমিত্তই শর-ক্ষেপণ করিয়াছিলেন। তাহার ফলতো শত্রুসংহার? সেই অখণ্ডিত ফল আমি গ্রহণ করিলে তোমাদের সেনাধিনাথের নিশ্চিতই তাহাতে অধিকতর সাফল্য।

१७। नहीं तो स्वीकार करता है कि उन्होंने मुझपर कृपाकी कारण ह (सूअर पर) बाण चलाया है। बाण चलानेका फल तो शत्रुको मारना था जो अखण्ड फलको मैं ग्रहण करलूं तो तुम्हारे सेनापतिको अधिक सफल प्राप्त होगी।

कि—न

अभूतमासज्य विरुद्धमीहितं
बलादलभ्यं तव लिप्सते नृपः।
विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ॥१९॥

अन्वयः। तव नृपः अभूतम् आसज्य अलभ्यं विरुद्धम् ईहितं बलात् लिप्सते। हि अनयस्य रौद्रतां विजानतोऽपि मतिः अपाये परिमोहिनी भवति। वाच्य—...नृपेण...अलभ्यं विरुद्धम् ईहितं लप्स्यते।...मत्या परिमोहिन्या (भूयते) ॥१९॥

अथ परेङ्गितमुद्घाट्य भयं दर्शयति—अभूतमिति। तव नृपोऽभूतमनृतमासज्य मिथ्याभियुज्येत्यर्थः। 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः। अलभ्यं लब्धुमशक्यं विरुद्धं विपरीतफलकमीहितं मनोरथं बलात् लिप्सते लब्धुमिच्छति। न चैतच्चित्रमित्याह—हि यस्मादनयस्य दुर्नयस्य रौद्रतां भयङ्करत्वं विजानतोऽपि पुरुषस्य मतिः बुद्धिरपाये विनाशकाले परिमोहिनी भवति। परिमुह्यतीति परिमोहिनी। संपृचादिसूत्रेण ताच्छील्य घिनुण्प्रत्ययः। तथाचोक्तम्—"विनिर्म्मितः केन न दृष्टपूर्व्वो हेम्नः कुरङ्गो न च कुत्र वार्त्ता। तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः।" इति तस्मात् विनाशकाले बलात् विपरीतबुद्धिर्भवतीति भावः ॥१९॥

১৮। তুমি আমাকে যে বলিতেছ "সেই কিরাতপতির নিকট যথেষ্ট প্রার্থনা কর' মহাত্মাদিগের পক্ষে তাহা যুক্তিযুক্ত নহে। কেননা, বাহুবলে যাহারা সম্পদ্ লাভ করিতে অভিলাষী, পরের নিকট প্রার্থনা-দৈন্য-মলিনীকৃত সম্পদ্লাভ তাহাদের প্রিয় হইবে কেন?

১৯। তোমাদের রাজা একটা মিথ্যা অভিযোগ উপস্থিত করিয়া অলভ্য বিপরীত-ফলজনক বস্তু বলপূর্ব্বক লাভ করিতে অভিলাষী হইয়াছেন। বস্তুতঃ দুর্নীতির ভীষণতা জানিয়া শুনিয়াও বিনাশকালে লোকের মতি মোহিত হইয়া থাকে।

१८। तुम जो मुझे कहते हो कि, "किरातराजके पास जो खुशी हो मांग लीजिये" यह महात्माओंसे कहना उचित नहीं है। जो अपनी बलसे सम्पत्ति पानेकी इच्छा किया करता है, उसे दूसरेके पास सिर झुका कर मांगनेसे मैली (अर्थात् दूषित) सम्पत्तियां उन्हें प्रिय मालूम पड़ सकती है?

१९। तुम्हारे सेनापति एक व्यर्थ अभियोग (झगड़ेका व्यवहार) खड़ा कर, मिलने योग्य तो नहीं पर विपरीत वस्तु बलपूर्वक कर रहे हैं। वास्तवमें बुरी

असिः शरा वर्म्म धनुश्च नोच्चकै-
र्विविच्य किं प्रार्थितमीश्वरेण ते ।
अथास्ति शक्तिः कृतमेव याच्ञया
न दूषितः शक्तिमतां स्वयंग्रहः ॥२०॥

अन्वयः । असिः शराः वर्म्म उच्चकैः धनुश्च ते ईश्वरेण विविच्य किं न प्रार्थितम् ? अथ शक्तिः अस्ति, याच्ञया कृतम् एव । यतः शक्तिमतां स्वयंग्रहः न दूषितः । वाच्य—असिं शरान् वर्म्म उच्चकैः धनुश्च ईश्वरः...किं न प्रार्थितवान् ? शक्त्या भूयते...स्वयंग्रहेण न दूषितेन ( भूयते ) ॥२०॥

अथ सर्व्वथा लभ्यस्ते शरस्तर्हि किमनेन सुष्ठु विश्रब्धं याच्यतां शरोऽयमित्याह—असिरिति । असिः खड्गः शरा वर्म्म कवचम् उच्चकैरुत्कृष्टं धनुश्च धनुर्वा ते तवेश्वरेण स्वामिना विविच्य एकैकशो विभज्य किं न प्रार्थितम् ? न याचितम्, येन प्रयोजनं तद्दास्यामीति भावः । नपुंसकैकशेषः । अथास्य वीराभिमानिनो नृपस्य शक्तिरस्ति चेदिति शेषः । याच्ञया कृतमेवालमेव । साध्याभावान्न याचितव्यमेवेत्यर्थः । गम्यमानक्रियापेक्षया करणत्वात् तृतीयेत्युक्तं प्राक् । कृतमिति निषेधार्थमव्ययम् । यतः शक्तिमतां स्वयंग्रहो बलाद् ग्रहणं न दूषितः । किन्तु भूषणमेव वीराणामिति भावः । क्षत्रियाणां प्रसह्य वित्तापहरणं न दूषितमिति भारतोक्तम् ॥ २० ॥

२० । তোমাদের প্রভু অসি, বাণ, বর্ম্ম, উৎকৃষ্ট ধনু ইহার যেটী ইচ্ছা, প্রার্থনা করুন না কেন? তাঁহার প্রয়োজন যাহা আমি তাঁহাকে তাহা দিন। অথবা তোমার বীরাভিমানী প্রভুর যদি শক্তি থাকে, তবে, প্রার্থনার প্রয়োজন নাই ; বিক্রমশালীদিগের বলপূর্ব্বক বস্তুগ্রহণ দূষণীয় নহে ।

नीतिकी भयङ्करता जाने सुने लोगोंका बुद्धि विनाश पानेकी समय मोहित हो जाती है ।

२० । तलवार, बाण, ढाल और उत्तम धनुस इनमें जो इच्छा हो उसे तुम्हारे स्वामी क्यों नहीं मांग लेते ? उन्हें जिसका प्रयोजन होगा सो दे दूंगा । या जो तुम्हारे वीराभिमानी स्वामीमें शक्ति है तो प्रार्थनाका प्रयोजन नहीं ( शक्ति लड़ाकर ले लें ) । क्योंकि बलवानोंको, बलपूर्वक लेनेमें दूषित नहीं होता ।

सखा स युक्तः कथितः कथं त्वया
यदृच्छयासूयति यस्तपस्यते ।
गुणार्जनोच्छ्रायविरुद्धबुद्धयः
प्रकृत्यमित्रा हि सतामसाधवः ॥२१॥

वयं क्व वर्णाश्रमरक्षणोचिताः
क्व जातिहीना मृगजीवितच्छिदः ।

अन्वयः। स कथं त्वया योग्यः सखा कथितः, यः तपस्यते यदृच्छया असूयति ? हि गुणार्जनोच्छ्रायविरुद्धबुद्धयः असाधवः सतां प्रकृत्यमित्राः ( भवन्ति )। वाच्य—तं त्वं योग्यं सखायं कथितवान्, येन...असूय्यते। बुद्धिभिः असाधुभिः ( भूयते ) ॥२१॥

'राघवप्लवगराजयोरिव' इत्यादिना उपदिष्टं सख्यं प्रत्याचष्टे—सखेति। स नृपः कथं त्वया युक्तो योग्यः सखा कथितः। न कथञ्चित् कथनीय इत्यर्थः। कुतः ? यो नृपस्तपस्यते तपस्विने अनपराधिने इत्यर्थः। 'क्रुधद्रुह—' इत्यादिना सम्प्रदानत्वाच्चतुर्थी। यदृच्छया स्वैरवृत्त्या। 'यदृच्छा स्वैरिता' इत्यमरः। असूयति असूयां करोति। "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः। सतुरत शत्रुरेवायमित्याह—हि यस्मात् गुणानामर्ज्जने य उच्छ्राय उत्कर्षस्तस्य विरुद्धा विमुखा बुद्धिर्येषां ते तथा असाधवो दुष्टाः सतां सज्जनानां प्रकृत्यमित्राः प्रकृत्या शत्रवः। 'द्विड् विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः ॥ २१ ॥

২১। যে রাজা নিরপরাধ তাপসজনের প্রতি অসূয়া প্রকাশ করেন, কিরূপে তুমি তাঁহাকে সখার যোগ্য বলিয়া উল্লেখ করিতেছ ? বস্তুতঃ, গুণার্জ্জনের উৎকর্ষে যাহারা বিরুদ্ধবুদ্ধি ধারণ করে, সেই অসাধুগণ, সাধুগণের স্বাভাবিক শত্রু।

२१। जो राजा तपस्वी व्यक्तिको असूया करता है, उसे तुम योग्य मित्र क्यों कह रहे हो ? वास्तवमें गुणोंके संग्रहसे उत्पन्न उन्नति पर जिनकी बुद्धि विरुद्ध रहती ऐसे असाधु ( दुर्ज्जन ) साधुओंके स्वाभाविक शत्रु हैं।

सहापकृष्टैर्महतां न सङ्गतं
भवन्ति गोमायुसखा न दन्तिनः ॥२२॥
परोऽवजानाति यदज्ञताजड़-
स्तदुन्नतानां न विहन्ति धीरताम्।
समानवीर्य्यान्वयपौरुषेषु यः
करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥२३॥

अन्वयः। वर्णाश्रमरक्षणोचिताः विशुद्धवृत्तयः वयं क्व? जातिहीनाः मृगजीवितच्छिदः क्व? अपकृष्टैः सह महतां सङ्गतं न, (तथाहि) दन्तिनः गोमायुसखाः न भवन्ति। वाच्य—वर्णाश्रमरक्षणोचितैः विशुद्धवृत्तिभिः अस्माभिः क्व (भूयते), जातिहीनैः मृगजीवितच्छिद्भिः क्व (भूयते)... सङ्गतेन न (भूयते)। दन्तिभिः गोमायुसखैः न भूयते ॥२२॥

अन्वयः। अज्ञताजड़ः परः अवजानाति यत् तत् उन्नतानां धीरतां न विहन्ति। (किन्तु) समानवीर्य्यान्वयपौरुषेषु (मध्ये) यः अतिक्रान्तिं करोति (चेत्) असौ तिरस्क्रिया। वाच्य—अज्ञताजड़ेन परेण अवज्ञायते यत् तेन धीरता न विहन्यते।...येन अतिक्रान्तिः क्रियते, अमुया तिरस्क्रियया (भूयते) ॥२३॥

हीनजातिवृत्तित्वात् सख्यानर्हः स इत्याह—वयमिति। वर्णाश्रमरक्षणोचिता विशुद्धवृत्तयो वयं राजानः क्व। जातिहीना मृगजीवितच्छिदो हिंसाजीविनो व्याधाः क्व। फलितमाह—अपकृष्टैः निकृष्टैः सह उक्तरीत्या जात्या वृत्त्या च महताम् उत्कृष्टानां सङ्गतं सख्यं न घटत इति शेषः। तथाहि—दन्तिनो गजा गोमायूनां शृगालानां सखायो गोमायुसखा न भवन्ति। "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः। शृगालवञ्चकक्रोष्टु-फेरुफेरवजम्बुकाः॥" इत्यमरः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥२२॥

२२। বর্ণাশ্রমরক্ষক নির্ম্মলবৃত্তি মাদৃশ ক্ষত্রিয় জাতিই বা কোথায়? আর জাতিহীন হিংসাজীবী ব্যাধগণই বা কোথায়? অপকৃষ্টের সহিত উৎকৃষ্টদিগের সখ্য ঘটিতে পারে না। কখনো হস্তিগণ শৃগালের সখা হয় না।

२२। वर्ण और आश्रमकी रक्षा करनेवाली तथा निर्म्मल बुद्धिसम्पन्न क्षत्रिय-जाति कहां और जातिहीन तथा हत्यासे जीविका करनेवाले व्याधोंकी जाति कहां। उसी नीचोंके साथ उत्तम लोगोंकी मित्रता हो नहीं सकती, क्या हाथी गीदड़ोंके मित्र होते हैं?

यदा निगृह्णाति हतं तदा यश:
करोति मैत्रीमथ दूषिता गुणा: ।
स्थितिं समीक्ष्योभयथा परीक्षक:
करोत्यवज्ञोपहतं पृथग्जनम् ॥२४॥

अन्वय: । यदा विगृह्णाति, तदा यश: हतम्, अथ ( यदा ) मैत्रीं करोति ( तदा ) गुणा: दूषिता: । ( इति ) उभयथा स्थितिं समीक्ष्य परीक्षक: पृथग्जनम् अवज्ञोपहतं करोति । वाच्य—यदा विगृह्यते, तदा यशसा हतम्, अथ मैत्री क्रियते ( तदा ) गुणै: दूषितै: ( भूयते ),...परीक्षकेण पृथग्जन: अवज्ञोपहत: क्रियते ॥ २४ ॥

नीचसख्यं कथमधिक्षिप्यत इति चेत्तत्राह—पर इति । अज्ञतोजड़ो मोहान्ध: परोऽवजानाति यत्तदवज्ञानम् उन्नतानां महतां धीरतां निर्विकार चित्तत्वं न विहन्ति, न विकारं जनयतीत्यर्थः । क्रोष्टेव सिंहस्येति भाव: । किन्तु समानानि तुल्यानि वीर्यान्वयपौरुषाणि शक्तिकुलविक्रमा येषां तेषु मध्ये । निर्द्धारणे सप्तमी । य: कश्चिदित्यर्थ: । अतिक्रान्ति-मतिक्रमं करोति चेदसौ सहाग्नजनातिक्रमस्तिरस्क्रिया तिरस्कार: । यथा सिंहे सिंहस्येति भाव: ॥२३॥

तर्हि नीचे कीदृशी वृत्तिरित्याशङ्क्य सोपपत्तिकमाह—यदेति । यदा विगृह्णाति विरुणद्धि पृथग्जनेनेति शेष: । तदा यशो हतं नाशितं भवेत् । अथ यदा मैत्रीं करोति तदा गुणा दूषिता: भवेयुरिति शेष: । इति उभयथा स्थितिं समीक्ष्य प्रतर्क्य विमृश्य परीक्षको विवेचक: पृथग्जनं नीचजनमवज्ञया अनादरेणोपहतं तिरस्कृतं करोति उपेक्षत इत्यर्थ: ॥२४॥

২৩। মোহান্ধ নিকৃষ্ট ব্যক্তি যে অবজ্ঞা করে, তাহাতে মহৎ লোকের ধীরতা বিনষ্ট হয় না; কিন্তু যাহাদের বংশ, বল ও বিক্রম তুল্য তাহাদের মধ্যে কেহ অবজ্ঞা করিলে, তাহাকেই তিরস্কার বলা যায়।

२३। मोहसे अन्धे निकृष्ट व्यक्ति जो अनादर कर बैठते हैं उससे उत्तमलोगों की धीरता नष्ट नहीं हो सकती, क्योंकि वंश, बल और पराक्रममें बराबरी करनेवालों में से जो कोई अनादर करता है उसीको अनादर समझते हैं ।

मया मृगान् हन्तुरनेन हेतुना
विरुद्धमाक्षेपवचस्तितिक्षितम्।
शरार्थमेष्यत्यथ लप्स्यते गतिं
शिरोमणिं दृष्टिविषाज्जिघृक्षतः ॥२५॥

अन्वयः। अनेन हेतुना मया मृगान् हन्तुः विरुद्धम् आक्षेपवचः तितिक्षितम्। अथ शरार्थमेष्यति दृष्टिविषात् शिरोमणिं जिघृक्षतः गतिं लप्स्यते। वाच्य—...मया तितिक्षितवान्...एष्यते,...गतिः लप्स्यते॥ २५॥

उपसंहरन्नाह—मयेति। अनेन हेतुना सन्धिविग्रहानर्थत्वेन कारणेन मया मृगान् हन्तुर्व्याधस्य सम्बन्धि। हन्तेस्तृन्प्रत्ययः। अतएव 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः। विरुद्धमतिपरुषमाक्षेपवचस्तिर-स्कारवचनं तितिक्षितं सोढ़म्। ननु सख्यानङ्गीकारे बलात् शरं ग्रहीष्यतीत्याशङ्क्याह—शरेति। अथ शरार्थमेष्यति चेत् दृष्टौ विषं यस्य तस्माद् दृष्टिविषात् सर्पविशेषात् शिरोमणिं जिघृक्षतो ग्रहीतुमिच्छतो गतिं दशां लप्स्यते प्राप्स्यति ॥२५॥

२४। নীচজনের সহিত মহৎ ব্যক্তি যখন বিরোধ করেন, তখনই তাঁহার যশঃ নষ্ট হয়, যখন মিত্রতা করেন, তখনই গুণরাশি দূষিত হইয়া থাকে। এইরূপ উভয় প্রকারেই মর্য্যাদাহানি আলোচনা করিয়া বিবেচক ব্যক্তি নীচজনকে অনাদরের সহিত উপেক্ষা করিয়া থাকেন।

২৫। এই নিমিত্তই আমি মৃগঘাতী ব্যাধের অতি কর্কশ তিরস্কার বাক্য সহ্য করিয়াছি। এরপর সে যদি শরগ্রহণের জন্য আগমন করে, তবে দৃষ্টিবিষ সর্পের মস্তকস্থ মণিগ্রহণকারীর অবস্থা তাহাকে পাইতে হইবে।

२४। नीचोंके साथ जो महान् व्यक्ति विरोध करता है तो महान् व्यक्तिका यश नष्ट हो जाता है, और जब मित्रता करता है तब सभी गुण दूषित हो जाते हैं। इस तरह दोनों (विरोध और मित्रता) पर विचार कर परीक्षक लोग नीचोंको अनादर द्वारा उपेक्षा करते।

२५। इसी कारणसे मैंने बहेलियेकी कड़े अनादरसे भरी बातें सह ली हैं। इस पर जो बाणके लिये आयेगा तो दृष्टिविष सांपके मस्तकपरसे मणि ग्रहण करनेवालेकी दशा उसे प्राप्त होगी।

इतीरिताकूतमनीलवाजिनं
जयाय दूतः प्रतितर्ज्य तेजसा ।
ययौ समीपं ध्वजिनीमुपेयुषः
प्रसन्नरूपस्य विरूपचक्षुषः ॥२६॥

ततोऽपवादेन पताकिनीपते-
श्चचाल निर्ह्रादवती महाचमूः ।
युगान्तवाताभिहतेव कुर्वती
निनादमम्भोनिधिवीचिसंहतिः ॥२७॥

अन्वयः। इति ईरिताकूतम् अनीलवाजिनम् अर्जुनं दूतः जयाय तेजसा प्रतितर्ज्य ध्वजिनीम् उपेयुषः प्रसन्नरूपस्य विरूपचक्षुषः समीपं ययौ । वाच्य—दूतेन...समीपं ययौ । २६ ॥

अन्वयः। ततः पताकिनीपतेः अपवादेन निर्ह्रादवती महाचमूः युगान्तवाताभिहता निनादं कुर्व्वती अम्भोधिवीचिसंहतिः इव चचाल। वाच्य—निर्ह्रादवत्या महाचम्वा युगान्तवाताभिहतया निनादं कुर्व्वत्या अम्भोनिधिवीचिसंहत्या इव चेले ।२७।

इतीति। इतीत्थम् ईरिताकूतम् उक्ताभिप्रायम् अनीलवाजिनं श्वेताश्वमर्ज्जुनं दूतो जयाय तेजसा प्रतापेन प्रतितर्ज्य, अस्मान् जित्वा क्व गमिष्यसीति भीषयित्वेत्यर्थः। ध्वजिनीम् उपेयुषः सेनासङ्गतस्य प्रसन्नरूपस्य, अर्ज्जुनं प्रतीति शेषः। विरूपचक्षुषः त्र्यम्बकस्य समीपं ययौ ॥२६॥

तत इति। ततः पताकिनीपतेः सेनापतेरपवादेनादेशेन। 'अपवादोऽपि आदेशः' इति सज्जनः। निर्ह्रादवती शब्दवती महाचमूः सेना। युगान्तवातैरभिहता आन्दोलिता अत एव निनादं कुर्वती अम्भोनिधिवीचिसंहतिरर्णवोर्म्मिसमूह इव चचाल ॥२७॥

২৬। এইরূপে অর্জ্জুন আত্মমনোভাব বিকাশ করিলে, কিরাতদূত তাঁহাকে জয় করিবার জন্য তেজঃ প্রকাশ পূর্ব্বক তর্জ্জন করিয়া সেনাসমন্বিত প্রসন্নরূপী বিরূপাক্ষের নিকট গমন করিল।

२६। इस प्रकार जब अर्जुनने अपने मनका भाव प्रगट किया तब किरातदूत, उन्हें जीतनेके लिये धमकी देकर सेनाओं से घिरे और प्रसन्नरूप धारण किये विरूपाक्ष ( शिवजी ) के पास चला गया।

रणाय जैत्रः प्रदिशन्निव त्वरां
तरङ्गितालम्बितकेतुसन्ततिः।
पुरो बलानां सघनाम्बुशीकरः
शनैः प्रतस्थे सुरभिः समीरणः ॥२८॥
जयारवक्ष्वेडितनादमूर्च्छितः
शरासनज्यातलवारणध्वनिः।

अन्वयः। जैत्रः तरङ्गितालम्बितकेतुसन्ततिः सघनाम्बुशीकरः सुरभिः समीरणः रणाय त्वरां प्रदिशन् इव बलानां पुरः शनैः प्रतस्थे। वाच्य—जैत्रेण सन्ततिना शीकरेण, सुरभिणा समीरणेन... प्रदिशता इव शनैः प्रतस्थे ॥२८॥

रणायेति। जेता एव जैत्रो जयनशीलः अनुकूल इत्यर्थः। जयतेस्तृजन्तात् प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः। तरङ्गितं सञ्जाततरङ्गं यथातथा आलम्बिता अवस्थिताः केतुसन्ततयो येन सः। सह घनैः सान्द्रैरम्बुशीकरैर्वर्त्तमानः सघनाम्बुशीकरः सुरभिः सुगन्धः समीरणो वायुः रणाय त्वरां प्रदिशन्निव तरयन्निव बलानां सैन्यानां पुरोऽग्रे शनैः प्रतस्थे प्रस्थितः, ववौ इत्यर्थः ॥२८॥

जयेति। जयारवैर्बन्दिनां जय जयेतिशब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितो वर्द्धितः शरासनज्यानां धनुर्गुणानां तलवारणानाञ्च ध्वनिर्भूधर-

२७। তদনন্তর, কিরাত-সেনাপতির আদেশে কোলাহলকারিণী বিপুল সেনা প্রলয়কালীন বাত্যাভিহত সশব্দ সাগরতরঙ্গমালার ন্যায় ধাবিত হইল।

২৮। তখন বিজয়ের অনুকূল তরঙ্গিত পতাকারাজিসমন্বিত, সঘনসলিলশীকরবাহী সুরভি সমীরণ যুদ্ধের জন্যই যেন ত্বরান্বিত হইয়া সৈন্যদলের আগে আগে চলিতে লাগিল।

२७। इसके पीछे सेनापतिकी आज्ञासे अत्यन्त कोलाहल करती हुई बड़ी भारी सेना, प्रलय कालकी वायुसे झोंका खा गम्भीर गर्ज्जनो समुद्रकी लहर की तरह दौड़ पड़ी।

२८। उस समय विजयके अनुकूल, तरङ्गित पताकाओंसे युक्त सघन कणाओंको वहाती सुगन्ध वायु, जान पड़ता था कि युद्धके लिये ही झटपट सेनाओंके आगे चलने लगी।

कि—प

असम्भवन् भूधरराजकुक्षिषु
प्रकम्पयन् गामवतस्तरे दिशः ॥२९॥

निशातरौद्रेषु विकाशतां गतैः
प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहै-
र्विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥

अन्वयः। जयारवक्ष्वेड़ितनादमूर्च्छितः शरासनज्यातलवारणध्वनिः भूधरराजकुक्षिषु असम्भवन् (अतएव) गां प्रकम्पयन् दिशः अवतस्तरे। वाच्य—मूर्च्छितेन ध्वनिना...असम्भवता...प्रकम्पयता दिशः अवतस्तरिरे ।२९॥

अन्वयः। निशातरौद्रेषु वनेसदां हेतिषु भिन्नविग्रहैः (अतएव) विकाशतां गतैः (अतएव) ककुभाम् अन्तरं प्रदीपयद्भिः इव रश्मिमतः मरीचिभिः विपुस्फुरे। वाच्य—...भिन्नविग्रहाः गताः... प्रदीपयन्तः...मरीचयः विपुस्फुरुः ॥३०।

राजकुक्षिषु गिरिगुहासु असम्भवन् अमान् अवकाशमलभमान इत्यर्थः। अतएव गां भुवं प्रकम्पयन्। एतेन बलानां बाहुल्यमुक्तम्। दिशोऽवतस्तरे व्यानशे। 'ऋतश्च संयोगादेर्गुणः' इति गुणः। अत्र मूर्च्छापदार्थस्य विशेषणगत्या असम्भवनहेतुत्वात् काव्यलिङ्गरूपकम्। गिरिकुक्षिरूपापेक्षयास्य ध्वनेराधेयस्य आधिक्योक्तेरधिकालङ्कारस्य, तेष्वस्येयमसम्भवन्निति, व्यञ्जकं विना उत्थाप्यमानोपात्तमूर्च्छागुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा। तैरङ्गाङ्गिभावेन सङ्कीर्यत इति सङ्करः ॥२९॥

निशातेति। निशातास्तीक्ष्णा अतएव रौद्रा भीषणाश्च ये तेषु निशातरौद्रेषु। विशेष्यविशेषणयोरन्यतरविशेष्यत्वविवक्षायामिष्टत्वाद्विशेषण

২৯। বন্দিগণের জয় জয় শব্দ—সৈন্যগণের সিংহনাদ ও ধনুষ্টংকার এবং তলবারগণের (ঢালের) শব্দে বর্দ্ধিত হইয়া পর্ব্বতগুহামধ্যে স্থান সঙ্কুলন না হওয়ায় পৃথিবীতল কম্পিত করিয়া দশদিকে পরিব্যাপ্ত হইল।

२९। बन्दी लोगकी जयजयकार, सैनिकोंका सिंहनाद धनुषका टङ्कार और तलवारोंका शब्द अत्यन्त बढ़ जानेसे पर्वतकी कन्दराओंमें स्थान न पाकर पृथ्वीको कम्पित कर दश दिशाओंमें फैल गये।

उदूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः।
वितत्य पक्षद्वयमायतं बभौ
विभुर्गणानामुपरीव मध्यगः॥२१॥

अन्वयः। उदूढवक्षःस्थगितैकदिङ्मुखः विकृष्टविस्फारितचापमण्डलः विभुः आयतं पक्षद्वयं वितत्य गणानां मध्यगः (अपि) उपरि (स्थितः) इव बभौ। वाच्य--दिङ्मुखेन...मण्डलेन विभुना...मध्यगेन...बभे॥२१॥

समासः। वने सीदन्तीति वनेसदां वनेचराणाम्। 'सत्सूद्विष—' इत्यादिना क्विप्। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। हेतिषु आयुधेषु। 'हेतिः शस्त्रेऽपि पुंस्त्रियोः' इति केशवः। भिन्नविग्रहैः संक्रान्तमूर्त्तिभिरतएव विकाशतां विस्तृतरतां गतैरतएव ककुभां दिशामन्तरमवकाशं प्रदीपयद्भिः प्रज्वालयद्भिरिव स्थितैरित्युत्प्रेक्षा। रश्मिमतः सूर्य्यस्य। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य न वकारः। मरीचिभिः करैः। 'भानुः करो मरीचिः स्त्रीपुंसयोः' इत्यमरः। विपुस्फुरे बभासे। स्फुरतेर्भावे लिट्॥ २०॥

उदूढेति। उदूढेन उन्नतेन वक्षसा स्थगितमाच्छादितमेकमेकतरं दिङ्मुखं येन सः। विकृष्टमाकृष्टमतएव विस्फारितं निर्घोषितं चापमण्डलं येन सः, विभुः शिवः आयतं विस्तृतं पक्षद्वयं पार्श्वद्वयं वितत्य स्वमहिम्ना व्याप्य। 'पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु' इति वैजयन्ती। गणानां मध्यगो मध्यस्थोऽपि उपरि स्थित इव बभौ। सर्वोन्नतत्वात्तथा लक्षित इत्यर्थः॥२१॥

৩০। কিরাতগণের তীক্ষ্ণ ও ভীষণ অস্ত্রপুঞ্জে প্রতিফলিত হইয়া সর্ব্বতোভাবে বিস্তৃত রবিরশ্মি দিগ্‌দিগন্তর প্রদীপ্ত করিয়াই যেন স্ফুরিত হইতে লাগিল।

३०। व्याधोंके तीक्ष्ण और भयानक अस्त्रशस्त्रोंपर प्रतिफलित हो (अर्थात् झलक कर) तमाम चमचमाती सूर्य्यकी किरणें जान पड़ता था कि दिशाओंको प्रज्वलित कर छिटकने लगीं।

सुगेषु दुर्गेषु च तुल्यविक्रमै-
र्जवादहंपूर्विकया यियासुभिः ।
गणैरविच्छेदनिरुद्धमाबभौ
वनं निरुच्छ्वासमिवाकुलाकुलम् ॥३२॥

अन्वयः । सुगेषु दुर्गेषु तुल्यविक्रमैः जवात् अहंपूर्व्विकया यियासुभिः गणैः अविच्छेदनिरुद्धं (अतएव) आकुलाकुलं वनं निरुच्छ्वासम् इव आबभौ । वाच्य —अविच्छेदनिरुद्धेन आकुलाकुलेन वनेन निरुच्छ्वासेन...आबभे ॥३२॥

सुगेष्विति । सुखेन दुःखेन च गच्छन्ति एषु इति सुगेषु सुगमेषु दुर्गेषु दुर्गमेषु च समविषमदेशेष्वित्यर्थः । सुदुरोरधिकरणार्थे डो वक्तव्यः, अतएव टिलोपः । तुल्यविक्रमैस्तुल्यगमनात् समसञ्चारैः, जवादहंपूर्विकया अहमहमिकया । 'अहंपूर्व्वमहंपूर्व्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः । यियासुभिर्यातुमिच्छुभिः । यातेः सन्नन्तादुप्रत्ययः । गणैः प्रमथैः । मनोज्ञादित्वाद्वुञ्प्रत्ययः । पृषोदरादित्वात् ह्रस्वभावः 'गणाः प्रमथसङ्घौघाः' इति वैजयन्ती । अविच्छेदेन निरुद्धमतएवाकुलाकुलमाकुलप्रकारम् । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । वनं निरुच्छ्वासं निरुद्धप्राणमिव आबभवौ इत्युत्प्रेक्षा ॥३२॥

৩১। অত্যুন্নত বক্ষোদ্বারা সম্মুখবর্ত্তী দিঙ্মণ্ডল আচ্ছাদনকারী এবং আকর্ষণহেতু নির্ঘোষযুক্ত ধনুর্দ্ধারী মহাদেব, স্বকীয়তেজে বিস্তৃত পার্শ্বদ্বয় ব্যাপিয়া প্রমথগণের মধ্যে অবস্থান করিলেও মনে হইল যেন তাহাদের উপরি অবস্থান করিতেছেন।

৩২। সম-বিষম নতোন্নত প্রদেশে তুল্যবিক্রমপ্রকাশকারী শিবসৈন্যগণ, "আমি আগে আমি আগে" বলিয়া বেগে গমন করিতে অভিলাষী হইল। তাহাদের দ্বারা নিরন্তর নিরুদ্ধ বনপ্রদেশ যেন নিশ্বাসবন্ধের ন্যায় একান্ত আকুল হইয়া উঠিল।

३१। अपनी ऊंची छातीसे सामनेका दिग्मण्डल छिपाये और खींच जानेसे घोर शब्द करते धनुषको धारण किये महादेवजी अपने तेजसे दोनों पक्षसे फैला कर सैनिकगणोंके बीचमें रहने पर भी सभीसे ऊपर खड़े जान पड़ते थे।

३२। सुगम और दुर्गम स्थानों पर समान रूप पराक्रम दिखलानेवाले, शिवजीके सैनिकगण "मैं आगे, मैं आगे" कह कर तेजीके साथ जानेकी इच्छा करने लगे। महादेवजीसे तमाम रुक जाने कारण जङ्गली स्थान, जान पड़ते थे की श्वास बन्द हो जानेसे अत्यन्त व्याकुल हो पड़े।

तिरोहितश्वभ्रनिकुञ्जरोधसः
समश्नुवानाः सहसातिरिक्तताम् ।
किरातसैन्यैरपिधाय रेचिता
भुवः क्षणं निम्नतयेव भेजिरे ॥३३॥

पृथूरुपर्य्यस्तबृहल्लताततिर्-
र्जवानिलाघूर्णितशालचन्दना ।
गणाधिपानां परितः प्रसारिणी
वनान्यवाञ्चीव चकार संहतिः ॥३४॥

अन्वयः । किरातसैन्यैः तिरोहितश्वभ्रनिकुञ्जरोधसः (अतएव) भुवः सहसा अतिरिक्ततां समश्नुवानाः अपिधाय रेचिताः क्षणं निम्नतया भेजिरे इव । वाच्य—किरातसैन्यानि रोधसः भुवः समश्नुवानाः...रेचिताः भेजुः ॥३३॥

अन्वयः । पृथूरुपर्य्यस्तबृहल्लताततिः जवानिलाघूर्णितशालचन्दना परितः प्रसारिणी गणाधिपानां संहतिः वनानि अवाञ्चि इव चकार । वाच्य—तया...चन्दनया प्रसारिण्या संहत्या वनानि अवाञ्चि चक्रिरे ॥३४॥

तिरोहितेति । किरातसैन्यैस्तिरोहितानि छन्नानि श्वभ्रनिकुञ्ज-रोधांसि गर्त्तकुञ्जतटानि यासां ताः, अतएव भुवः प्रदेशाः सहसा अति-रिक्तताम् उत्तानतां समश्नुवानाः आप्नुवत्यः । तथा अपिधाय आच्छाद्य रेचिता रिक्तीकृताः मुक्ताः क्षणं निम्नतया गाम्भीर्य्येण भेजिरे इव प्राप्ता इवेत्युत्प्रेक्षा । सैन्यैः या भुवो व्याप्तास्ता उत्तानाः प्रतीयन्ते । तैर्मुक्तास्ता एव निम्नाः प्रतीयन्ते इत्यर्थः ॥३३॥

৩৩। কিরাতসৈন্য কর্ত্তৃক গর্ত্ত, কুঞ্জ ও তটদেশ আচ্ছাদিত হওয়ায় ভূভাগ সহসা উন্নতভাব ধারণ করিল, এবং আচ্ছাদিত করিয়া সৈন্যগণ চলিয়া যাওয়ায় উহা যেন তৎক্ষণাৎ নিম্নাকার প্রতীত হইতে লাগিল।

३३। आस पासके भूमि प्रदेश, शिवजीके सैनिकोंसे गड़े कुञ्ज (लताओंसे आच्छादित स्थान) और किनारे भर जाने पर ऊंचे और सैनिकोंके चले जाने पर नीचे जान पड़ते थे।

ततः सदर्पं प्रतनुं तपस्यया
मदस्रुतिक्षाममिवैकवारणम्।
परिज्वलन्तं निधनाय भूभृतां
दहन्तमाशा इव जातवेदसम् ॥३५॥

अन्वयः। ततः सदर्पं तपस्यया प्रतनुं (अतएव) मदस्रुतिक्षामम् एकवारणम् इव (पुनः) भूभृतां निधनाय परिज्वलन्तं (अतएव) आशा दहन्तं जातवेदसम् इव (स्थितम्)। वाच्य—सदर्पः... प्रतनुः मदस्रुतिक्षामः एकवारण इव परिज्वलन् आशा दहन् जातवेदा इव (स्थितः) ॥३५॥

पृथ्विति। पृथुभिर्विशालैः जरुभिः सक्थिभिः पर्य्यस्ताः छिन्नाः वृहत्यो लताततयो यया सा, जवानिलेन वेगमारुतेनाघूर्णिताः भ्रमिताः शालाः सर्ज्जतरवश्चन्दनानि च यया सा। 'प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः' इति शाश्वतः। परितः सर्व्वत्र प्रसारिणी प्रसरणशीला गणाधिपानां संहतिः समूहो वनानि अवाञ्चि न्युब्जानीव नीचानीव चकार इत्युत्प्रेक्षा। अवाञ्चति अधोभवति। अवपूर्व्वादञ्चतेः क्विप्। 'स्यादवाङप्यधोमुखः' इत्यमरः ॥३४॥

अथाष्टभिः श्लोकैरर्ज्जुनं विशिषयन् गणानां तदभियोगमाह—तत इत्यादिना। ततः सदर्पं सगर्वं सान्तःसारं तपस्यया तपश्चर्य्यया। तपस्यतेः क्यजन्तात् स्त्रियामप्रत्यये टाप्। प्रतनुं कृशम् अतएव मदस्रुत्या मदक्षरणेन क्षामं कृशम्। 'क्षायो मः' इति निष्ठातकारस्य मकारः। एकवारणमेकाकिनं गजमिव स्थितमित्युपमा। पुनः भूभृतां राज्ञां निधनाय नाशाय परिज्वलन्तं तेजस्विनमतएव आशा दिशो दहन्तं जातवेदसमग्निमिव स्थितमित्युपमालङ्कारः। 'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्' इत्यमरः ॥३५॥

৩৪। প্রমথগণ বিশাল উরুদ্বারা সুবৃহৎ লতাজাল বিপর্য্যস্ত ও গমনবেগোত্থিত বায়ুদ্বারা শাল ও চন্দনতরু সকল আঘূর্ণিত করিয়া সর্ব্বত্র সঞ্চরণ পূর্ব্বক সমগ্র বনপ্রদেশ যেন নিম্ন করিয়া তুলিল।

३४। सैनिकगण मोटी लम्बी जाघों से लतामण्डलको नष्टभ्रष्ट और वायुको वेगसे शाल (साखू) और चन्दनके वृक्षों को तोड़ मरोड़ कर तमाम चलने लगी तो जान पड़ा कि उन्होंने समस्त वनप्रदेशों को उलट डाला।

अनादरोपात्तधृतैकसायकं
जयेऽनुकूले सुहृदीव सस्पृहम् ।
शनैरपूर्णप्रतिकारपेलवे
निवेशयन्तं नयने बलोदधौ ॥३६॥

निषङ्गमापत्प्रतिकारकारणे
शरासने धैर्य्यमिवानपायिनि ।

अन्वयः । ( पुनश्च ) अनादरोपात्तधृतैकसायकम् अनुकूले सुहृदि इव जये सस्पृहम् अपूर्ण-प्रतिकारपेलवे बलोदधौ शनैः नयने निवेशयन्तम् । वाच्य—...सायकः...सस्पृहः...निवेशयन् ॥३६॥

अनादरेति । पुनश्च—अनादरेण अवगणनया उपात्तो निषङ्गात् उद्धृतो धृतश्च एकः सायको येन तं तथानुकूले सुहृदीव जये सस्पृहं जयमिच्छन्त-मित्यर्थः । पुनश्च—अपूर्णो न्यूनः प्रतिकारो बाणाहरणप्रत्यर्पणरूपो यस्य सः, अतएव पेलवो लघुस्तस्मिन् अपूर्णप्रतिकारपेलवे बलोदधौ सेनासमुद्रे शनैरसंभ्रमेण नयने दृष्टी निवेशयन्तमिति वीरस्वभावोक्तिः । बलम् उदधि-रिवेत्युपमितसमासः । 'पेषवासवाहनधिषु च' इत्युदकस्योदादेशः ॥३६॥

৩৫। অৰ্জ্জুন তপস্যায় ক্লিষ্ট, কিন্তু অন্তঃসারপূর্ণ,- যেন মদক্ষরণে ক্ষীণদেহ অদ্বিতীয় গজের ন্যায় অবস্থিত ; এবং ভূপালবৃন্দের বিনাশের জন্য, দিগ্‌দাহী প্রজ্বলিত হুতাশনের ন্যায় সমুদ্ধত ;—

৩৬। তিনি অবজ্ঞার সহিত তূণীর হইতে একটীমাত্র শর ধারণ করিয়াছেন, অনুকূল সুহৃদের ন্যায় জয়াভিলাষী হইয়াছেন এবং বাণাহরণের প্রতিকার পূর্ণ না হওয়ায় দুঃখিতচিত্তে সেনাসমুদ্রের প্রতি সসম্ভ্রমে দৃষ্টিপাত করিতেছেন :—

३५। भीतरसे बलवान्, तपस्यासे पतले ( इसलिये ) मद चूते रहनेसे चीण अकेले ( मदोन्मत्त ) हाथीके समान उठे, और राजाओंके समूह विनाश करनेके लिये, दिशाओंके जलानेवाली अत्यन्त धधकती आगकी तरह विराजमान—

३६। अवज्ञापूर्वक तरकससे एक बाण निकाल रखे, अनुकूल मित्रकी तरह जयकी और लालच किये, और बाण ले जानेके यत्नमें सफल न होने योग्यके कारण तुच्छ सेना ( रूप , समुद्रकी ऊपर धीरे २ दृष्टि देते हुए ।

अलङ्घनीयं प्रकृतावपि स्थितं
निवातनिष्कम्पमिवापगापतिम् ॥३७॥

उपेयुषीं बिभ्रतमन्तकद्युतिं
वधाददूरे पतितस्य दंष्ट्रिणः ।
पुरः समावेशितसत्पशुं द्विजैः
पतिं पशूनामिव हूतमध्वरे ॥३८॥

अन्वयः । (पुनश्च) आपत्प्रतिकारकारणे अनपायिनि शरासने धैर्य्ये इव निषण्णं प्रकृतौ स्थितम् अपि अलङ्घनीयम् (अतएव) निवातनिष्कम्पम् इव (स्थितम्) । वाच्य—निषण्णः...स्थितः अलङ्घनीयः निवातनिष्कम्पः आपगापतिः इव (स्थितः) ॥३७।

अन्वयः । (पुनश्च) अदूरे पतितस्य दंष्ट्रिणः वधात् उपेयुषीम् अन्तकद्युतिं बिभ्रतं (तथाच) द्विजैः अध्वरे हूतं समावेशितसत्पशुं पशूनां पतिम् इव (स्थितम्) । वाच्य—बिभ्रत्...हूतः.. समावेशितसत्पशुः पशूनां पतिः इव (स्थितः) ॥ ३८ ।

निषण्णमिति । पुनश्च—आपदां प्रतिकारस्य कारणसाधने अनपायिनि स्थिरे शरासने एवम्भूते धैर्य्ये इव निषण्णं स्थितं प्रकृतौ स्वभावे स्थितमपि निर्विकारमपीत्यर्थः । अतएवालङ्घनीयमनतिक्रमणीयमतएव निवातनिष्कम्पं वाताभावान्निश्चलम् । 'निवातावाश्रयावातौ' इत्यमरः । आपगापतिं समुद्रमिव स्थितम् ॥३७॥

उपेयुषीमिति । पुनश्च—अदूरे समीपे पतितस्य दंष्ट्रिणो वराहस्य । व्रीह्यादित्वादिनिप्रत्ययः । वधात् हेतोरुपेयुषीं प्राप्तामन्तकस्येव यमस्येव द्युतिस्तां बिभ्रतं धारयन्तम् । तथाच द्विजैर्ब्राह्मणैः, अध्वरे यज्ञे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । हूतमाहूतं पुरोऽग्रे समावेशितः स्थापितः सत्पशुर्यज्ञीयपशुर्यस्य तं पशूनां पतिं रुद्रमिव स्थितम् ॥ ३८ ॥

৩৭। আপৎপ্রতীকারসাধন স্থির ধনুক ধৈর্য্যের ন্যায় ধারণ. নির্ব্বিকার হইলেও অন্যের অনতিক্রমণীয়, সুতরাং নিবাতনিষ্কম্প সরিৎপতির ন্যায় অবস্থিত রহিয়াছেন;—

३७। विपत्ति निवारण करनेमें दृढ़ (इसलिये) धैर्य्यकी तरह धनुषकी सहायतासे डटे हुए, और निर्विकार होने पर भी दूसरोंके दबावमें न आ सकने योग्य, बल्कि वायु न लगनेसे निष्कम्प समुद्रकी तरह विराजमान ।

निजेन नीतं विजितान्यगौरवं
गभीरतां धैर्य्यगुणेन भूयसा।
वनोदयेनेव घनोरुवीरुधा
समन्धकारीकृतमुत्तमाचलम् ॥ ३९ ॥

महर्षभस्कन्धमनूनकन्धरं
बृहच्छिलावप्रघनेन वक्षसा।

अन्वयः। (पुनश्च) निजेन भूयसा धैर्य्यगुणेन विजितान्यगौरवं (यथा तथा) गभीरतां नीतम् (अतएव) घनोरुवीरुधा वनोदयेन समन्धकारीकृतम् उत्तमाचलम् इव (स्थितम्)। वाच्य—नीतः ...समन्धकारीकृतः उत्तमाचल इव (स्थितः) ॥३९॥

निजेनेति। पुनश्च—निजेन नैसर्गिकेण भूयसा बहुलेन धैर्य्यमेव गुणस्तेन विजितमन्येषां गौरवं गाम्भीर्य्यं यस्मिन् कर्म्मणि तथा गभीरतां दुरवगाहत्वं नीतम्। अतएव घनाः सान्द्रा उरवश्च महत्यो वीरुधो लताश्च यस्मिन् तेन घनोरुवीरुधा वनोदयेन अरण्यप्रादुर्भावेन समन्धकारीकृतं दुरवगाहीकृतम् उत्तमाचलमिव स्थितम्, समन्ततोऽन्धकारो यस्य स इति विग्रहः ॥ ३९ ॥

৩৮। অদূরে পতিত বরাহরূপী দানবের নিধনহেতু যমের ন্যায় দ্যুতিশালী এবং দ্বিজগণ কর্ত্তৃক যজ্ঞে আহূত, সম্মুখে স্থাপিত যজ্ঞীয় পশুবিশিষ্ট পশুপতির ন্যায় দৃষ্ট হইতেছিলেন।

৩৯। স্বাভাবিক বিপুল ধৈর্য্যগুণের দ্বারা পরকীয় গৌরববিজয় করিয়া গাম্ভীর্য্যপ্রাপ্ত, স্নতরাং স্নিগ্ধ সুবৃহৎ লতাজালপূর্ণ অরণ্যবহুল দুর্গম পর্ব্বতপতির ন্যায় অবস্থিত :—

३८। पासमें पड़े वराहरूपी दानवको मारने कारण यमराजका प्रताप धारण करते और ब्राह्मणोंसे किये यज्ञमें मारकर सामने रखे हुए यज्ञीय पशुके पास विराजमान पशुपति (रुद्र) की तरह।

३९। स्वाभाविक (अपने) विशाल धैर्य्यगुणसे दूसरेके गौरव पर विजय पाकर गम्भीरता धारण किये, बल्कि अत्यन्त विशाल और लताओंसे पूर्ण तथा घने जङ्गलके कारण नहीं जा सकने योग्य पर्वतोंको राना (हिमालयकी तरह) टूटे हुए—

कि—फ

समुज्जिहीर्षुं जगतीं महाभरां
महावराहं महतोऽर्णवादिव ॥४०॥
हरिन्मणिश्याममुदग्रविग्रहं
प्रकाशमानं परिभूय देहिनः ।
मनुष्यभावे पुरुषं पुरातनं
स्थितं जलादर्श इवांशुमालिनम् ॥४१॥

अन्वयः । महर्षभस्कन्धम् अनूनकन्धरं बृहच्छिलावप्रघनेन वचसा ( उपलक्षितं ) महतः अर्णवात् महाभरां जगतीं समुज्जिहीर्षुं महावराहम् इव ( स्थितं )। वाच्य—...स्कन्धः कन्धरः...समुज्जिहीर्षुः महावराह इव ( स्थितः ) ॥४०॥

अन्वयः । ( पुनश्च ) हरिन्मणिश्यामम् उदग्रविग्रहं देहिनः परिभूय प्रकाशमानं जलादर्शे अंशुमालिनम् इव मनुष्यभावे स्थितं पुरातनं पुरुषम् । वाच्य—...श्यामः...विग्रहः...प्रकाशमानः अंशुमाली इव...स्थितः पुरातनः पुरुषः ॥४१।

महर्षभेति । महर्षभस्य महावृषस्य स्कन्ध इव स्कन्धौ अंसौ यस्य तम् । उपमानपूर्वपदत्वादुत्तरस्कन्धलोपः । 'ऋषभो वृषभो वृषः' इत्यमरः । 'स्कन्धो भुजशिरोऽसोंऽस्त्री' इत्यमरः । अनूनकन्धरं स्थूलग्रीवम् । 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः । बृहच्छिलावप्रं महाशिलातटं तद्वत् घनेन कठिनेन वचसा उपलक्षितम् । महाभरां दुष्टैरतिभारवतीं जगतीं महीं समुज्जिहीर्षुं दुष्टराजकार्णवात् समुद्धर्त्तुमिच्छुम् । अतएव महतोऽर्णवाज्जगतीं समुज्जिहीर्षुमुक्तविशेषणविशिष्टं च महावराहमिव स्थितम् । अर्थसाधर्म्यादियमुपमा न श्लेषः । शब्दमात्रसाधर्म्येण तस्य विधानादिति रहस्यम् ॥४०॥

৪০। মহাবৃষভস্কন্ধ, স্থূলগ্রীব, সুবৃহৎ শিলাতলের ন্যায় কঠিনবক্ষা মহাসাগর হইতে গুরু ভারবতী পৃথ্বীর উদ্ধারসাধনে সমুৎসুক মহাবরাহের ন্যায় স্থিত ।

४०। बड़े सांड़का तरह कंधा, मोटी गर्द्दन और चट्टानकी तरह कड़ी छाती धारण किये ( इसलिये ), महासमुद्रसे अत्यन्त भारयुक्त पृथ्वीको उपलानेकी इच्छा करते महावराह ( वराह आकार धारण किये हुए ) विष्णुकी तरह विराजमान ।

गुरुक्रियारम्भफलैरलङ्कृतं
गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं
तपात्यये तोयघना घना इव ॥४२॥

अन्वयः । गुरुक्रियारम्भफलैः अलङ्कृतं जगत्प्रमाथिनः प्रतापस्य गतिम् अनीलवाजिनं गणाः तपात्यये तोयघना घना इव ( महाचलं ) समासेदुः ।. वाच्य—...अलङ्कृतः...गतिः - अनीलवाजि-गणैः...तोयघनैः घनैः इव समासेदे ॥४२॥

हरिदिति । पुनश्च—हरिन्मणिश्यामं मरकतमणिश्यामलम् उदग्र-विग्रहम् उदारमूर्त्तिं देहिनः सत्त्वान् परिभूय तिरस्कृत्य प्रकाशमानं जलमिवादर्शो मुकुरस्तस्मिन् अंशुमालिनं सूर्य्यमिव मनुष्यभावे मनुष्यरूपे स्थितं पुरातनं पुरुषं यो बदरीतपोवननिवासी नारायणसहचरो नरो नाम स एवायमित्यर्थः ॥ ४१ ॥

गुर्विति । गुरुभिः क्रियारम्भाणां फलैरलङ्कृतं सफलकर्म्मारम्भ-मित्यर्थः । जगत्प्रमाथिनः जगद्विजयिनः प्रतापस्य तेजसो गतिं स्थानम् अतोऽस्य बहूनामेकलच्यत्वञ्च युज्यत इति सन्दर्भाभिप्रायः । पूर्वोक्तविशे-षणविशिष्टमनीलवाजिनं श्वेताश्वमर्ज्जुनं गणाः प्रमथादयस्तपात्यये तोयघनाः तोयभरिताः वार्षिका इत्यर्थः, घना मेघा इव महाचलमिति शेषः । समासेदुः अवापुरित्यर्थः ॥४२॥

৪১। মরকতমণির ন্যায় শ্যামবর্ণ, প্রদীপ্তমূর্ত্তি দেহধারিগণাপেক্ষাও দীপ্যমানদেহ, জলরূপ মুকুরে সূর্য্যের ন্যায় মানবরূপে অবস্থিত পুরাণপুরুষ,—

৪২। গ্রীষ্মান্তে মেঘদল যেমন মহাচলে উপস্থিত হয়, সেইরূপ সফলকর্ম্মারম্ভ, বিশ্ববিজয়ী তেজের আধার অর্জ্জুনের নিকট শিবসৈন্যগণ উপস্থিত হইল।

४१। मरकतमणिकी तरह श्यामवर्ण, और प्रदीप्यमान मूर्त्ति धारण किये ( इस लिये ) देहधारण करनेवालों को दबाकर शोभा पा रहे ( इसलिये ) जलरूप दर्पणमें प्रकाशित सूर्य्यकी तरह मनुष्यरूपमें प्रवेश किये पुराण पुरुष—

४२। सभी कार्य्यों को ( अनायास ) आरम्भ करने और सारे संसारको जीतने वाले तथा तेजोंका आधार ( और ऊपर लेखोंमें वर्णन किया गया ) अर्ज्जुनके पास सैनिकगण पहुंच गये,—जिस प्रकार ग्रीष्मके अन्तमें बड़े पर्व्वतके पास चले आते हैं ।

## कुलकम् ।

यथास्वमाशंसितविक्रमाः पुरा
मुनिप्रभावक्षततेजसः परे ।
ययुः क्षणादप्रतिपत्तिमूढतां
महानुभावः प्रतिहन्ति पौरुषम् ॥४३॥

ततः प्रजह्रे सममेव तत्र तै-
रपेक्षितान्योन्यबलोपपत्तिभिः ।

अन्वयः । पुरा यथास्वम् आशंसितविक्रमाः परे मुनिप्रभावक्षततेजसः ( सन्तः ) अप्रतिपत्तिमूढतां ययुः । ( तथाहि ) महानुभावः पौरुषं प्रतिहन्ति । वाच्य—...विक्रमैः परैः...तेजोभिः...मूढता ययै । महानुभावेन पौरुषं प्रतिहन्यते ॥ ४३ ।

यथास्वमिति । पुरा पूर्व्वं स्वं स्वमनतिक्रम्य यथास्वम् अहमेवैनं जेष्यामिति आशंसिताः काङ्क्षिताः कथिता वा विक्रमा यैस्ते परे शत्रवो मुनिप्रभावात् क्षततेजसो हतप्रभावाः सन्तः क्षणात् अप्रतिपत्तिमूढता-मज्ञानमोहान्धतां ययुः । तथाहि—महानुभावोऽतिप्रतापः पौरुषं पुरुषस्य चेष्टितं प्रतिहन्ति नाशयन्ति ॥४३॥

तत इति । तत एकैकस्य अशक्तौ अपेक्षिता वाञ्छिता अन्योन्यबलोप-पत्तिरन्योन्यशक्त्यवष्टम्भो यैस्तैः प्रमथैस्तत्रार्ज्जुने । क्रियाधारत्वात् सप्तमी । समं युगपदेव प्रजह्रे प्रहृतम् । भावे लिट् । तथाहि—सहायसाध्याः सिद्धयः कार्य्यसिद्धयो महोदयानां महानुभावानामपि । सङ्घेन वृत्ति-र्व्यापारो येषां तेषां भावस्तत्ता तां सङ्घवृत्तितां संभूयकारितां प्रदिशन्ति । अतो गणानामपि संभूयकारित्वं न दोष इति भावः ॥४४॥

৪৩। শত্রুগণের প্রত্যেকেই পূর্ব্বে "আমিই উহাকে জয় করিব" এইরূপ গর্ব্বোক্তি করিয়াছিল; কিন্তু এক্ষণে মুনিবেশধারী অর্জ্জুনের প্রভাবে তাহারা তেজোহীন হইয়া মোহান্ধ হইল। বাস্তবিক, প্রচণ্ড প্রতাপ. পুরুষের চেষ্টা নষ্ট করিয়া থাকে।

४३। "मैं जाकर उसकी. पराभव करूंगा" इस प्रकार गर्वभरी वात अस्त्र उठानेके पहले सभोने कहो। पर मुनिवेश धारण किये अर्जुनकी प्रभावसे निस्तेज हो मोहित हो गये। वास्तवमें प्रचण्डप्रताप पुरुषोंकी चेष्टा विनष्ट कर देती है।

महोदयानामपि सङ्घवृत्तितां
सहायसाध्याः प्रदिशन्ति सिद्धयः ॥४४॥

किरातसैन्यादुरुचापनोदिताः
समं समुत्पेतुरुपात्तरंहसः।
महावनादुन्मनसः खगा इव
प्रवृत्तपत्रध्वनयः शिलीमुखाः ॥४५॥

अन्वय। ततः अपेक्षितान्योन्यबलोपपत्तिभिः तैः तत्र समं प्रजह्रे। (तथाहि) सहायसाध्याः सिद्धयः महोदयानाम् अपि सङ्घवृत्तितां प्रदिशन्ति। वाच्य—बलोपपत्तयः ते...प्रजह्रुः साध्याभिः सिद्धिभिः...वृत्तिता प्रदिश्यते ॥४४॥

अन्वयः। उरुचापनोदिताः उपात्तरंहसः प्रवृत्तपत्रध्वनयः शिलीमुखाः महावनात् उन्मनसः खगाः इव किरातसैन्यात् समं समुत्पेतुः। वाच्य—नोदितैः उपात्तरंहोभिः...ध्वनिभिः शिलीमुखैः उन्मनोभिः खगैः इव...समुत्पेते ॥४५॥

किरातेति। उरुभिः बृहद्भिश्चापैर्नोदिताः प्रक्षिप्ताः उपात्तरंहसः प्राप्तवेगाः प्रवृत्तपत्रध्वनयः सञ्जातपत्रस्वनाः शिलीमुखा बाणाः महावनात् उन्मनसः क्वापि गन्तुमुत्सुकाः तथा उक्तविशेषणविशिष्टाश्च खगाः पक्षिण इव किरातसैन्यात् समं समन्ततः समुत्पेतुः ॥४५॥

४४। অনন্তর কিরাতসৈন্যগণ একাকী অসমর্থ হেতু পরস্পরের শক্তি আশ্রয়পূর্ব্বক একযোগে অর্জ্জুনের উপর প্রহার করিতে লাগিল। বস্তুতঃ সহায়সাধ্য সিদ্ধি মহাবলশালীদিগকেও সম্মিলিতভাবে কার্য্য করিতে বাধ্য করে।

৪৫। মহাবন হইতে গমনোদ্যত বিহগগণের ন্যায়, বৃহৎ ধনুক দ্বারা নিক্ষিপ্ত, পক্ষশব্দযুক্ত, বেগশালী বাণসমূহ, কিরাতসৈন্য হইতে চতুর্দ্দিকে পতিত হইতে লাগিল।

४४। इसके उपरान्त शिवजीके सैन्यगण अकेला और असमर्थ समझकर आपसमें एक दूसरेकी शक्तिकी सहायतासे सबके सब एकसाथ अर्जुनपर प्रहार करने लगे। वास्तवमें, सहायकोंसे सिद्ध होने योग्य सिद्धि बड़े बलवानोंको भी मिल कर काम करनेके लिये विवश (लाचार) कर देती है।

४५। बड़े २ धनुवोंसे छूटे, पांखोंसे शब्द करते और वेगयुक्त बाण, बड़े जङ्गलसे किसी स्थान पर जानेमें उद्यत पक्षियोंकी तरह, किरातोंके सेनासे चारो ओर गिरने लगे।

गभीररन्ध्रेषु भृशं महीभृतः
प्रतिस्वनैरुन्नमितेन सानुषु ।
धनुर्निनादेन जवादुपेयुषा
विभिद्यमाना इव दध्वनुर्दिशः ॥४६॥

विधूनयन्ती गहनानि भूरुहां
तिरोहितोपान्तनभोदिगन्तरा ।
महीयसी वृष्टिरिवानिलेरिता
रवं वितेने गणमार्गणावलिः ॥४७॥

अन्वयः । गभीररन्ध्रेषु महीभृतः सानुषु प्रतिस्वनैः उन्नमितेन जवात् उपेयुषा धनुषो निनादेन दिशः विभिद्यमाना इव दध्वनुः । वाच्य –...दिग्भिः विभिद्यमानाभिः इव दध्वने ॥ ४६ ॥

अन्वयः । भूरुहां गहनानि विधूनयन्ती तिरोहितोपान्तनभोदिगन्तरा गणमार्गणावलिः अनिलेन ईरिता महीयसी वृष्टिः इव रवं वितेने । वाच्य– ...विधूनयन्त्या दिगन्तरया गणमार्गणावल्या... ईरितया महीयस्या वृष्ट्या इव रवो वितेने ॥४७।

गभीरेति । गभीररन्ध्रेषु गम्भीरगह्वरेषु महीभृतः सानुषु ये प्रतिस्वनास्तैः संगम् उन्नमितेन उत्थापितेन दीर्घीकृतेन जवादुपेयुषा प्राप्तवता धनुषां निनादेन दिशो विभिद्यमाना विदीर्य्यमाणा इव दध्वनुः ध्वनिं चक्रुः ॥४६॥

विधुनयन्तीति । भूरुहां गहनानि वनानि । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । विधूनयन्ती कम्पयन्ती तिरोहितानि

৪৬। গভীর গহ্বরশালী পর্ব্বতের সানুসমূহে যে সকল প্রতিধ্বনি উত্থিত হইল, তাহার সহিত মিলিত বেগপ্রাপ্ত ধনুর্নিনাদ অতিমাত্র দীর্ঘীকৃত হইয়া দিঙ্মণ্ডল বিদারণ করিয়াই যেন শব্দ করিতে লাগিল।

४६। गम्भीर कन्दराओंसे युक्त पर्व्वतके चट्टानोंमें जो प्रतिध्वनि हो रही थी उससे मिले, धनुषके वेगयुक्त शब्द, अत्यन्त बढ़ जानेके कारण, जान पड़ता था कि दिग्मण्डलको फाड़ रहे हैं।

त्रयीमृतूनामनिलाशिनः सतः
प्रयाति पोषं वपुषि प्रहृष्यतः।
रणाय जिष्णोर्विदुषेव सत्वरं
घनत्वमीये शिथिलेन वर्म्मणा ॥४८॥

अन्वयः। ऋतूनां त्रयीम् अनिलाशिनः सतः (तथापि) रणाय प्रहृष्यतः जिष्णोः वपुषि पोषम् प्रयाति (सति) शिथिलेन वर्म्मणा विदुषा इव सत्वरं घनत्वम् ईये। वाच्य— शिथिलं वर्म्म विद्वदिव घनत्वम् इयाय ॥४८॥

छादितानि उपान्तानि प्रान्तानि नभोऽन्तरीक्षं दिगन्तराणि च यया सा गणमार्गणावलिः प्रमथशरसंहतिः अनिलेन वायुना ईरिता प्रेरिता महीयसी वृष्टिरिव रवं वितेने विस्तारयामास ॥ ४७॥

त्रयीमिति। ऋतूनां त्रयीं षण्मासान्। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। अनिलाशिनो वायुभक्षकस्य कृशस्येत्यर्थः। सतस्तथापि रणाय रणं कर्त्तुं प्रहृष्यत उत्सहमानस्य। 'क्रियार्थोप—' इत्यादिना चतुर्थी। जिष्णोरर्ज्जुनस्य वपुषि पोषम् उपचयं प्रयाति गच्छति सति शिथिलेन प्रथममिति शेषः। वर्म्मणा कवचेन विदुषा इवानन्तरकरणीयं जानता इवेत्युत्प्रेक्षा। सत्वरं शीघ्रं घनत्वं दृढ़त्वमीये प्राप्तम्, अन्यथानुपयोगादिति भावः। इणः कर्म्मणि लिट् ॥४८॥

৪৭। শিবসৈন্যগণের বাণরাজি কানন কম্পিত এবং প্রান্তবর্ত্তী আকাশ ও দিগন্তরাল আচ্ছাদিত করিয়া বায়ুচালিত প্রচণ্ড বৃষ্টিধারার ন্যায় শব্দ করিতে লাগিল।

৪৮। অর্জ্জুন ছয় মাস বায়ুভক্ষণে অবস্থান করিয়া কৃশ হইলেও যুদ্ধের জন্য তাঁহার অতিশয় উৎসাহ ও শরীর স্ফীত হইল; সুতরাং তাঁহার দেহে যে বর্ম্ম লোল ছিল, অবিলম্বে তাহা বিজ্ঞজনের ন্যায় দৃঢ়তা ধারণ করিল।

४७। शिवजीके सैनिकोंके शरोंकेबाण (अर्थात् कलार या पांती से निकलने) वाण, जङ्गलको कम्पित कर तथा आसपासके आकाश और दिशाओंको आच्छादित कर, वायुसे भोंका होती वर्षाकी धाराकी तरह शब्द करने लगे।

पतत्सु शस्त्रेषु वितत्य रोदसी
समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥४९॥

दिशः समूहन्निव विक्षिपन्निव
प्रभां रवेराकुलयन्निवानिलम् ।

अन्वयः । शस्त्रेषु रोदसी समन्ततः वितत्य पतत्सु ( सत्सु ) धनुः दुधूषतः तस्य ( सम्बन्धिनी ) भीषणा विनिपातशंसिनी दृष्टिः उल्का इव बलेषु सरोषं पपात । वाच्य— भीषणया शंसिन्या दृष्ट्या उल्कया इव—पेते ॥४९।

पतत्स्विति । शस्त्रेषु रोदसी द्यावापृथिव्यौ । 'द्यावापृथिव्यौ रोदस्यौ' इत्यमरः । समन्ततो वितत्य व्याप्य पतत्सु सत्सु धनुः दुधूषतः कम्पितु मिच्छतः आस्फालयत इत्यर्थः । धूञः सन्नन्ताच्छतृप्रत्ययः । 'स्वरति सूतिसूयतिधूञूदितो वा' इति विकल्पादिडभावः । तस्यार्जुनस्य सम्बन्धिनी भीषयत इति भीषणा । नन्द्यादित्वाल्ल्युः । विनिपातशंसिनी विनाशसूचिका दृष्टिरुक्तविशेषणा उल्केव बलेषु सरोषं यथा तथा पपात ॥४९॥

४९। द्यावापृথিবী ব্যাপিয়া বাণরাশি পতিত হইতে লাগিল। তখন ধনুক আস্ফালনে অভিলাষী অর্জ্জুনের ভীষণ সংহারসূচক দৃষ্টি উল্কার ন্যায় সরোষে সেই শিবসৈন্যের উপর পতিত হইল।

४८। तीन ऋतुओं अर्थात् ६ महीनों तक केवल वायु पी कर रहने पर भी युद्धके लिये उनका अत्यन्त उत्साह हुआ तो शरीर फैल गया। बल्कि उनके देहपर पहलेसे ढीला कवच उस समय विद्वानों की तरह झट पट दृढ़ हो गया।

४९। पृथ्वी और आकाशके बीचमें फैले हुए बाण गिरने लगे। तब धनुष खींचनेकी इच्छा करनेवाले अर्जुनकी भयानक संहारकी सूचना ( खबर ) देती हुई दृष्टि, उल्काकी तरह, शिवजीके उन ( ऊपरलेख श्लोकों के अनुसार बाण चलानेवाले ) सैनिकों पर पड़ी।

मुनिश्चचाल चयकालदारुणः
क्षितिं सशैलां चलयन्निवेषुभिः ॥५०॥
विमुक्तमाशंसितशत्रुनिर्जयै-
रनेकमेकावसरं वनेचरैः।
स निर्जघानायुधमन्तरा शरैः
क्रियाफलं काल इवातिपातितः ॥५१॥

अन्वयः। चयकालदारुणः मुनिः इषुभिः दिशः समूहन् इव रवेः प्रभां विक्षिपन् इव (तथा) अनिलम् आकुलयन् इव सशैलां क्षितिं चलयन् इव चचाल। वाच्य—कालेन इव दारुणेन मुनिना—समूहता इव—विक्षिपता इव—आकुलयता इव (तथा) चलयता इव चेले ॥ ५० ॥

अन्वयः। आशंसितशत्रुनिर्जयैः वनेचरैः एकावसरं विमुक्तम् अनेकम् आयुधं स क्रियाफलम् अतिपातितः कालः इव अन्तरा शरैः निजघान। वाच्य—विमुक्तम् अनेकम् आयुधं तेन क्रियाफलम् अतिपातितेन कालेन इव निजघ्ने ॥५१॥

दिश इति। चयकालः कल्पान्तकाल इव। 'संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः। दारुणो रौद्रो मुनिरर्जुनः इषुभिर्बाणै-र्दिशः समूहन्निव एकत्र समाहरन्निव अन्यथा तासां पारदर्शनं न स्यादिति भावः। रवेः प्रभां विक्षिपन्निव अधःप्रक्षिपन्निव अन्यथा सा कथं न दृश्यत इति भावः। तथा अनिलं वायुम् आकुलयन् इषुभिरन्तराले आघूर्णयन्निव तस्य तथा गतिविघातादिति भावः। सशैलां क्षितिं चलयन्निव कम्पयन्निव तथा संक्षोभादिति भावः। चचाल गति-मकरोत्। सर्व्वत्र इवशब्द उत्प्रेक्षायाम् ॥५०॥

৫০। কল্পান্তকালের ন্যায় রুদ্রমূর্ত্তি সেই মুনিবেশধারী অর্জ্জুন বাণদ্বারা দিক্সমূহ একত্র সমাহৃত, রবিরশ্মি তিরস্কৃত, বায়ুতরঙ্গ আলোড়িত ও সশৈল পৃথিবীকে কম্পিত করিয়াই যেন চলিতে লাগিলেন।

५०। कल्पके अन्तसमयमें रुद्रमूर्त्तिकी तरह मुनिवेश धारण किये अर्जुनके बाण, दिशाओंको सङ्कुचित करते सूर्य्यकिरणोंको तिरस्कार करते, वायुतरङ्गोंको तिरस्कार करती और पर्व्वतोंसे युक्त पृथ्वीको कंपाने हुएसे चलने लगे।

गतैः परेषामविभावनीयतां
निवारयद्भिर्विपदं विदूरगैः ।
भृशं बभूवोपचितो बृहत्फलैः
शरैरुपायैरिव पाण्डुनन्दनः ॥५२॥

अन्वयः। पाण्डुनन्दनः परेषाम् अविभावनीयतां गतैः विपदं निवारयद्भिः विदूरगैः बृहत्फलैः शरैः उपायैः इव भृशम् उपचितः बभूव। वाच्य—पाण्डुनन्दनेन—उपचितेन बभूवे ॥५२॥

विमुक्तमिति। आशंसितः काङ्क्षितः शत्रुनिर्जयो यैस्तैः। अहमहमिकया शत्रुं विजिगीषद्भिरित्यर्थः। वनेचरैरेकावसरं समकालम्। अत्यन्तसंयोगे द्वितीया। विमुक्तं प्रयुक्तमनेकं बहु आयुधम्। जातावेकवचनम्। सोऽर्जुनः क्रियाफलमतिपातितोऽतिक्रान्तः काल इव। अतिक्रान्तकालस्य कर्मणो निष्फलत्वादिति भावः। अन्तरा मध्ये शरैर्निजघान ॥५१॥

गतैरिति। पाण्डुनन्दनोऽर्जुनः परेषामविभावनीयतां लघुप्रयोगादन्यच गूढ़प्रयोगाच्च अदृश्यतामप्रकाश्यतां च गतैर्विपदमनर्थं निवारयद्भिर्विदूरगैर्दूरलक्ष्यगैः परमण्डलप्रविष्टैश्च बृहत्फलैरायताग्रैर्महालाभैश्च। 'फलं बाणाग्रलाभयोः' इति शाश्वतः। शरैरुपायैः :सामादिभिरिव भृशमुपचितः प्रवृद्धो बभूव। अत्र शब्दमात्रसाधर्म्यात् प्रकृताप्रकृतश्लेषः। उपमेति केचित् ॥ ५२ ॥

৫১। শত্রুজয়াভিলাষী কিরাতগণের যুগপৎ নিক্ষিপ্ত বহু শর সেই অর্জ্জুন স্বীয় শর দ্বারা, ক্রিয়াফলাতিপাতী কালের ন্যায় মধ্যপথেই ছেদন করিয়া ফেলিলেন।

৫২। পাণ্ডুপুত্র অর্জ্জুন, অপরের অনভিভবনীয়, বিপন্নিবারক, দূরগামী, বৃহৎফলশালী কবচসমূহ দ্বারা অত্যন্ত বর্দ্ধিত হইয়া উঠিলেন।

५१। शत्रुपर विजय चाहनेवाले किरातों के एक साथ छूटे असंख्य बाणों को अर्जुनने अपने उन बाणों से क्रियाफलको नष्ट करनेवाले कालके (अधिक विलम्ब अर्थात् अधिक समय बीतने पर उचित क्रिया भी फलवती नहीं होती) तरह बीचमें ही काट डाला।

दिवः पृथिव्याः ककुभां नु मण्डलात्
पतन्ति बिम्बादुत तिग्मतेजसः।
सकृद्विकृष्टादथ कार्मुकान्मुनेः
शराः शरीरादिति तेऽभिमेनिरे ॥५३॥
गणाधिपानामविधाय निर्गतैः
परासुतां मर्मविदारणैरपि।

अन्वयः। शराः दिवः पृथिव्याः ककुभां मण्डलात् नु उत तिग्मतेजसः बिम्बात् अथ सकृत् विकृष्टात् कार्मुकात् मुनेः शरीरात् (वा पतन्ति) इति ते अभिमेनिरे। वाच्य—शरैः—पत्यते, तैः अभिमेने ।५३॥

दिव इति। शरा दिवोऽन्तरीक्षात् पृथिव्या भूगोलाद्वा ककुभां मण्डलान्नु दिशां मण्डलाद्वा, उत तिग्मतेजसः अर्कस्य बिम्बात् मण्डलाद्वा, अथवा सकृद्विकृष्टात् कार्मुकाद्वा मुनेः शरीराद्वा पतन्तीति ते गणा अभिमेनिरे ज्ञातवन्तः। अन्यथा कथममी विश्वमन्तर्धाय शराः सम्भाव्यन्त इति भावः। अत्र सर्व्वतः शरसम्पातदर्शनात् सम्भावनया पृथिव्यादीनामन्यतमस्यापादानत्वोत्प्रेक्षा। सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नुशब्दादयस्तु संशये॥ ५३ ॥

৫৩। শরসমূহ আকাশ হইতে, পৃথিবী হইতে, সূর্য্যমণ্ডল হইতে না মুনির সবলে আকৃষ্ট শরাসন হইতে কিংবা তাঁহার দেহ হইতে পতিত হইতেছে, কিরাতসৈন্যগণ তাহাই ভাবিতে লাগিল।

५२। पाण्डुके पुत्र अर्ज्जुन, दूसरोंसे अतिक्रमण (अर्थात् खण्ड) न कर सकने योग्य, विपत्ति निवारण करनेवाले और विशाल फलों लोहेसे बनी नोकीली धार से युक्त बाणोंके कारण अत्यन्त चढ़ बढ़ गये।

५३। बाण आकाशसे, पृथ्वीसे, सूर्य्यके मण्डलसे या नहीं तो मुनि (अर्जुन) के खींचे धनुषसे अथवा इसके देहसे आ गिरते हैं इसी प्रकार शिवलोकगण चिन्ता करने लगी।

जवादतीये हिमवानधोमुखैः
कृतापराधैरिव तस्य पत्रिभिः ॥५४॥

द्विषां क्षतीर्याः प्रथमे शिलीमुखा
विभिद्य देहावरणानि चक्रिरे ।
न तासु पेते विशिखैः पुनर्मुने·
ररुन्तुदत्वं महतां ह्यगोचरः ॥५५॥

अन्वयः । मर्म्मविदारणैः अपि गणाधिपानां परासुताम् अविधाय निर्गतैः तस्य पत्रिभिः कृतापराधैः इव अधोमुखैः ( सद्भिः ) जवात् हिमवान् अतीये । वाच्य—मर्म्मविदारणाः—निर्गताः—पत्रिणः कृतापराधाः अधोमुखाः—हिमवन्तम् अतीयुः ॥५४॥

अन्वयः । प्रथमे शिलीमुखाः द्विषां देहावरणानि विभिद्य याः क्षतीः चक्रिरे, तासु पुनः मुनेः विशिखैः न पेते । हि ( तथाहि ) अरुन्तुदत्वं महताम् अगोचरः । वाच्य—शिलीमुखैः या क्षतयः चक्रिरे विशिखाः न पेतिरे ॥५५॥

गणेति । मर्म्मविदारणैरपि मर्म्मस्थानान्येव विदारयद्भिरपीत्यर्थः । गणाधिपानां परासुतां मरणमविधाय अकृत्वा निर्गतैः, तेषाममर्त्यत्वादिति भावः । तस्य मुनेः पत्रिभिः शरैः कृतापराधैरिव स्वामिकार्य्याकरणात् सापराधैरिवेत्युत्प्रेक्षा । अधोमुखैः सद्भिर्जवात् हिमवानतीयेऽतिचक्रमे । तत्र प्रविष्टमित्यर्थः । लज्जितस्य क्वचिन्निलनयनमुचितमिति भावः ॥५४॥

द्विषामिति । प्रथमे प्रथममुक्ता इत्यर्थः । शिलीमुखा मुनिशराः द्विषां देहावरणानि वर्म्माणि विभिद्य याः क्षतीः प्रहारांश्चक्रिरे तासु क्षतिषु

৫৪। সেই মুনিবেশধারী অর্জ্জুনের শরসমূহ মর্ম্মভেদী হইলেও কিরাতসৈন্যগণের প্রাণ সংহার না করিয়া নির্গত হওয়াতে যেন অপরাধীর ন্যায়ই অধোমুখে সবেগে হিমালয় ত্যাগ করিয়া চলিয়া গেল।

५४ मुनिवेश धारण किये अर्जुनके वे बाण मर्म्मके भेदनेवाले होते हुए भी शिवजीके सैनिकके प्राण संहार न कर निकल जानेसे जान पड़ता था कि अपराधीको तरह मुंह नीचे किये झट पट हिमालयको त्याग कर भग चले।

समुज्झिता यावदराति निर्यती
सहैव चापान्मुनिबाणसंहतिः।
प्रभा हिमांशोरिव पङ्कजावलिं
निनाय सङ्कोचमुमापतेश्चमूम् ॥५६॥

अन्वयः। यावत् अराति (यथा तथा) समुज्झिता चापात् सह एव निर्यती मुनिबाणसंहतिः उमापतेः चमूं हिमांशोः प्रभाः पङ्कजावलिम् इव सङ्कोचं निनाय। वाच्य— समुज्झितया— निर्यत्या मुनिबाणसंहत्या—चमूः प्रभया पङ्कजावलिः इव सङ्कोचं निन्ये ॥५६॥

पुनः पश्चात् प्रयुक्तैर्मुनेर्विशिखैर्न पेते न पतितम्। पिष्टपेषणदोषापाता-दिति भावः। तथाहि—अरुन्तुदत्वं पीड़ितपीड़नं सतामगोचरोऽविषयं हि, सन्तः पीड़ितपीड़ां न कुर्व्वन्तीत्यर्थः। 'न हन्याद् व्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्' इति निषेधस्मरणादिति भावः। अरुर्व्रणं तुदतीति अरुन्तुदः। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः ॥५५॥

समुज्झितेति। यावन्तोऽरातयो यावदराति। 'यावदवधारणे' इत्यव्ययीभावः। यावदराति यथा तथा समुज्झिता अरातिसमसंख्यया मुक्ता मुनिचापात् सह संभूयेव निर्यती निष्क्रामन्ती। तादृक् तस्य कौशल-मिति भावः। यातेः शतरि ङीप्। मुनिबाणसंहतिरुमापतेश्चमूं हिमांशोः प्रभा पङ्कजावलिमिव सङ्कोचं निनाय प्रापयामास। दुहादि पाठान्नयतिर्द्विकर्म्मकः ॥ ५६ ॥

৫৫। প্রথম নিক্ষিপ্ত অর্জ্জুনের বাণসকল শত্রুদিগের দেহস্থ বর্ম্ম ভেদ করিয়া যে ক্ষত উৎপাদন করিয়াছিল, পুনর্ব্বার নিক্ষিপ্ত বাণসমূহ আর সেই ক্ষতে পড়িল না। বস্তুতঃ পীড়িতপীড়ন সাধুগণের অগোচর অর্থাৎ সাধুগণ পীড়িতকে পীড়া দেন না।

५५। अर्ज्जुनके पहले छूटे बाणोंने शत्रुओंके देहके कवच छेद कर जो घावें की थीं, उन पर फिरसे छूटे (दूसरे) बाण न पड़े। वास्तवमें पीड़ितोंको पीड़ा देना महात्माओंमें नहीं पाया जाता है। अर्थात् साधुलोग पीड़ितोंको नहीं पीड़ित करते।

अजिह्ममोजिष्ठममोघमक्लमं
क्रियासु बह्वीषु पृथङ् नियोजितम् ।
प्रसेहिरे सादयितुं न सादिताः
शरौघमुत्साहमिवास्य विद्विषः ॥५७॥

अन्वयः । अजिह्मम् ओजिष्ठम् अमोघम् अक्लमं बह्वीषु क्रियासु पृथक् नियोजितम् अस्य शरौघं, उत्साहम् इव सादिताः विद्विषः सादयितुं न प्रसेहिरे । वाच्य—अजिह्मः ओजिष्ठः अमोघः अक्लमः—नियोजितः शरौघः उत्साह इव सादितैः विद्विड्भिः न प्रसेहे ।५७॥

अजिह्ममिति । अजिह्मं स्वरूपतो गत्या वा अवक्रम् । अन्यत्र तु जिह्मस्थानप्रवृत्तो न भवतीति अजिह्मस्तम् । ओजिष्ठम् ओजस्विनं सारवत्तमं तेजिष्ठञ्च । उभयत्रापि ओजस्विशब्दाद्विन्नन्तादिष्ठन् । 'विन्मतोर्लुक्' इति लुक् टिलोपश्च । अमोघमवन्ध्यमक्लमं निरन्तरव्यापारेऽप्यश्रान्तं बह्वीषु क्रियासु छेदनभेदनपातनादिकर्म्मसु पृथग्भेदेन नियोजितम् । कर्म्मानुगुण्येन विनियुक्तमित्यर्थः । अस्य मुनेः शरौघमुत्साहमौत्सुक्यमिव वीररसस्य स्थायिभावभूतं प्रयत्नविशेषमिवेत्यर्थः । सादिताः कर्षिताः विद्विषः शत्रवः सादयितुं प्रतिकर्त्तुं न प्रसेहिरे न शेकुः । तस्योत्साहवदेव शरवर्षं दुर्धर्षमभूदिति भावः ॥५७॥

৫৬। চন্দ্রকিরণ যেমন পদ্মসমূহকে সঙ্কুচিত করে, সেইরূপ মুনিবেশধারী অর্জ্জুনের শত্রুসংখ্যানুসারে নিক্ষিপ্ত বাণসকল অর্জ্জুনের শরাসন হইতে মুক্ত হইয়াই যেন শিব-সৈন্যগণকে সঙ্কুচিত করিয়া দিল।

৫৭। স্বভাবসরল, ওজস্বী, অমোঘ, অক্লান্ত ও বহু ভিন্ন ভিন্ন কাজে ভিন্ন ভিন্ন ভাবে নিয়োজিত অর্জ্জুনের শরসমূহ, উৎসাহের ন্যায় নিপীড়িত শত্রুগণ সহ্য করিতে পারিল না।

५६। चन्द्रमाकी किरणें जिस प्रकार कमलको सङ्कुचित करती है, मुनिवेश धारण किये अर्ज्जुनके, शत्रुओंके संख्यानुसार ( अर्ज्जुनके ) धनुषसे छूटे बाणोंने उसी प्रकार शिवजीके सैनिकोंको सङ्कुचित कर दिया।

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषुमयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत् प्रजा इव ॥५८॥

अन्वयः। अनेकदेशगाः शिवध्वजिन्यः उग्रेषुमयूखमालिनम् एकदेशस्थं (मुनिम्) अर्कं प्रजाः इव युगपत् प्रतियोधम् अग्रतः स्फुरन्तं निदध्युः। वाच्य—अनेकदेशगाभिः शिवध्वजिनीभिः—साली देशस्थः (मुनिः) अर्कः प्रजाभिः इव— स्फुरन् निदध्ये ॥५८॥

शिवेति। अनेकदेशगा नानादेशस्थाः शिवध्वजिन्यो हरसेनाः। उग्रा इषवो मयूखाः इवेत्युपमितसमासः। अन्यत्र तु उग्रेषव इव मयूखा इति। मयूरव्यंसकादित्वात् समासः। तेषां माला अस्यास्तीति तमुग्रेषुमयूखमालिनम्। व्रीह्यादित्वादिनिः। एकदेशस्थमेकत्रैव स्थितं तं मुनिमर्कं प्रजा इव युगपत् प्रतियोधं योधं योधं प्रति। 'अव्ययं विभक्ति—' इत्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः। अग्रतः स्फुरन्तं निदध्युर्ददृशुः। यथा एकोऽर्क एकत्रैव स्थितोऽपि नानादेशस्थानामपि प्रतिपुरुषं ममैवाग्रे वर्त्तत इति युगपत्प्रतीयते तद्वत् बाणवर्षी मुनिरपि प्रतियोधं तथैव प्रत्यभादित्यर्थः ॥५८॥

৫৮। নানাদেশস্থ লোকসমূহ যেমন একস্থানস্থিত কিরণমালী সূর্য্যকে নিজেরই সম্মুখে উদিত হইতে দেখে, নানাস্থানস্থিত শিবসৈন্যগণও সেইরূপ একস্থানস্থিত তীক্ষ্ণ-বাণরূপ ময়ূখশালী অর্জ্জুনকে একই সময়ে প্রত্যেক যোদ্ধার সম্মুখে প্রদীপ্ত দেখিতে লাগিল।

५७। स्वभावसे ही सीधे, तेजस्वी, निष्फल कभी नहीं हुए अक्रान्त (मुर्झाये नहीं अर्थात् दृढ़) और भिन्न भिन्न कार्य्योंमें भिन्न भिन्न रूपसे लगाये गये। (इसलिये) उत्साहकी तरह अर्जुनके बाणोंको शत्रु सब न सह सके।

५८। अनेक देशोंमें रहनेवाले लोग जिस प्रकार एकही स्थान पर ठहरे और किरणोंको धारण किये सूर्य्यको अपने ही सामने उदय होते देखते हैं अनेक स्थानोंमें बाणरूप खड़े शिवजीके सैनिकोंने भी उसी प्रकार तीक्ष्ण बाण किये

मुनेः शरौघेण तदुग्ररंहसा
बलं प्रकोपादिव विष्वगायता ।
विधूनितं भ्रान्तिमियाय सङ्गिनीं
महानिलेनेव निदाघजं रजः ॥५९॥

तपोबलेनैष विधाय भूयसी-
स्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम् ॥६०॥

अन्वयः । प्रकोपात् विष्वक् आयता उग्ररंहसा मुनेः शरौघेण महानिलेन निदाघजं रजः इव विधूनितं तत् बलं सङ्गिनीं भ्रान्तिम् इयाय । वाच्य— निदाघजेन रजसा इव विधूनितेन बलेन सङ्गिनी भ्रान्तिः ईये ।५९।

अन्वयः । एष तपोबलेन भूयसीः अदृश्याः तनूः विधाय इषून् निरस्यति स्वित ? (अथवा) अमुष्य (मुनेः) मायाविहतं स्वम् (इव) आयुधं प्रतीपम् आगत्य नः निहन्ति किमु ? वाच्य— एतेन—इषवः निरस्यन्ते । मायाविहतेन स्वेन आयुधेन—निहन्यते ॥६०।

मुनेरिति । प्रकोपादमर्षादिव विष्वक् समन्तादायता आगच्छता उग्ररंहसा तीव्रवेगेन मुनेः शरौघेण उक्तविशेषणेन महानिलेन वात्यया निदाघजं ग्रीष्मार्थं रज इव विधूनितं व्याहतं तद्बलं प्रमथानां सैन्यं सङ्गिनीमनुबन्धिनीम् अविच्छिन्नमिति यावत् । भ्रान्तिमनवस्थानम् इयाय प्राप ॥ ५९ ॥

৫৯। কোপভরে চতুর্দ্দিক্ হইতে আগত তীব্রবেগগামী অর্জ্জুন বাণাবলীরূপ বাতাসে গ্রীষ্মকালীন ধূলিপটলের ন্যায় ঘূর্ণিত শিবসৈন্যগণ নিরন্তর বিভ্রান্ত হইতে লাগিল।

और एक स्थान पर और एक स्थान पर अर्जुनको एक हो समय प्रत्येक योद्धाओं के सामने आते देखा ।

५९ । कोपसे पूर्ण अर्ज्जुनके चारो भारसे आते बाणोंसे घिरे और ग्रीष्मकालमें वायुसे उड़ती धूलोंके मण्डलको तरह घूमते ( चकराते ); शिवजीके भी सैनिकगण निरन्तर ( लगातार ) विभ्रान्त ( बेठेकाने ) हो गये ।

हृता गुणैरस्य भयेन वा मुने-
स्तिरोहिताः स्वित् प्रहरन्ति देवताः।
कथं न्वमी सन्ततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः ॥६१॥

अन्वयः। ( यद्वा ) अस्य मुनेः गुणैः भयेन वा हृता देवताः तिरोहिताः ( सत्यः ) प्रहरन्ति स्वित् ? ( अन्यथा ) अस्य अमी सायकाः जलधेः ऊर्मयः इव कथं नु सन्ततम् अनेके भवन्ति। वाच्य— हृताभिः...देवताभिः तिरोहिताभिः प्रह्रियते अमीभिः सायकैः ऊर्मिभिः इव...अनेकैः भूयते ॥६१॥

अथ त्रिभिर्विशेषकमाह—तप इत्यादिना। एष मुनिस्तपोबलेन तपःसामर्थ्येन भूयसीर्बह्वीरदृश्यास्तनूरात्मनः शरीराणि विधाय सृष्ट्वा इषून्निरस्यति स्वित् क्षिपति किम्? अथवा अमुष्य अस्य मुनेः मायया विहतं प्रतिहतं स्वं स्वकीयमिव आयुधं प्रतीपं प्रतिकूलमागत्य प्रत्यावृत्त्येत्यर्थः। नोऽस्माकं निहन्ति किमु? 'जासिनिप्रहण—' इत्यादिसूत्रेण कर्मणि षष्ठी। शेषाविवक्षायां तु द्वितीया॥ ६० ॥

हृता इति। यद्वा—अस्य मुनेर्गुणैः शान्त्यादिभिर्हृता आकृष्टाः वशीकृता इति यावत्। भयेन डरेण वा। भयाद् बिभ्यत्य एवेत्यर्थः। देवतास्तिरोहिताः सत्यः प्रहरन्ति स्वित्। तत् कुतः? अन्यथा अस्य मुनेरमी सायका जलधेः ऊर्मय इव कथं नु सन्ततमनेके असंख्याः भवन्ति। एतच्चोक्तान्यतमपक्षासम्भवेन न सम्भवतीत्यर्थः। किमिति पृच्छन्ती देवता युध्यन्त इत्याह—गुणैः हृता भयेन वा। एतेन गुणैः आवर्त्तिताः प्रीत्या अस्माद् वर्त्तमाना इत्यर्थः। किमस्य वितर्कत्रयस्य मूलमित्याह—कथमिति।

৬০। কিংবা এই মুনি কি তপস্যাপ্রভাবে বহুপ্রকার অদৃশ্য দেহ উৎপাদন করিয়া শরক্ষেপণ করিতেছেন? না আমাদের স্বীয় বিক্ষিপ্ত বাণই ইহার মায়ায় প্রতিহত হইয়া বিরুদ্ধভাব ধারণপূর্ব্বক আমাদিগকেই নিহত করিতেছে?

६०। अथवा यह मुनि क्या तपस्याके बलसे अनेक प्रकारके अदृश्य शरीर उत्पन्न कर बाण छोड़ रहा है? या नहीं तो हमलोगोंके जो बाण अपने छोड़े बाण, उसको मायासे वक कर विरोधका चिह्न धारण करते, हमलोगोंको ही मार रहे हैं?

कि—भ

जयेन कच्चिद्विरमेदयं रणाद्-
भवेदपि स्वस्ति चराचराय वा ।
ततापे कीर्णा नृपसूनुमार्गणै-
रिति प्रतर्काकुलिता पताकिनी ॥६२॥

अन्वयः । कच्चित् अयं रणात् जयेन विरमेत् ? अपि चराचराय स्वस्ति भवेत् । इति प्रतर्काकुलिता नृपसूनुमार्गणैः कीर्णा पताकिनी ततापे । वाच्य—...अनेन विरम्येत ; स्वस्ति भूयेत ; इति प्रतर्काकुलितया...कीर्णया पताकिन्या तेपे ॥६२॥

अस्मात् कथं जलधेः ऊर्म्मयः यथा एकस्यैव सायकाः सन्ततम् अतिबहवो भवन्ति । एतस्यैवामन्यसपत्नसम्भवेन न सम्भवति इत्यर्थः । एकशब्दस्य एकशेषे कृत एक इति रूपम् इति केचित् । नुशब्दस्त्वन्यार्थे ॥६१॥

जयेनेति । कच्चिदयं रणाज्जयेन विरमेत् । अस्मान् जित्वा कच्चिदयं युद्धमुपसंहरेदित्यर्थः । अपि चराचराय स्वस्ति भवेत् ? कच्चित् अपि स्थावरजङ्गमं जगत् न विनश्येदित्यर्थः । अपिशब्दः सम्भावनायाम् । प्रार्थनायां लिङ् । इति प्रतर्काकुलिता पूर्वोक्ता ये वितर्कास्तैराकुलिता विह्वलाः । अत्र सहेतुकं विशेषणमाह—नृपसूनुमार्गणैरर्ज्जुनवाणैः कीर्णा क्षिप्ता पताकिनी सेना किरातपतेरिति शेषः । ततापे तापं प्राप ॥६२॥

৬১। অথবা দেবগণ এই মুনির গুণে বা ভয়ে আকৃষ্ট হইয়া অদৃশ্যভাবে অবস্থান করিয়া প্রহার করিতেছেন ? যদি তাহা না হইবে, তবে ইঁহার নিক্ষিপ্ত শর সকল সাগর-তরঙ্গের ন্যায় নিরন্তর দেখা যাইতেছে কেন ?

৬২। যুদ্ধে জয়লাভ করিয়াই কি ইনি বিরত হইবেন ? কিংবা চরাচরের মঙ্গল হইবে ? এইরূপ জল্পনাকল্পনায় বিহ্বল অর্জ্জুনবাণাহত কিরাতসৈন্যগণ অনুতপ্ত হইতে লাগিল।

६१। या देवता लोग मुनिके गुणों वा भयके कारण वशीभूत हो छिपे रह कर रहे है ? यह नहीं ता मुनिके छोड़े वाण समुद्रके तरङ्गोंकी तरह लगातार क्यों दिखाई पड़ते हैं ?

अमर्षिणा कृत्यमिव क्षमाश्रयं
मदोद्धतेनेव हितं प्रियं वचः ।
बलीयसा तद्विधिनेव पौरुषं
बलं निरस्तं न रराज जिष्णुना ॥६३॥

अन्वयः । अमर्षिणा क्षमाश्रयं कृत्यम् इव मदोद्धतेन हितं प्रियं वचः इव बलीयसा विधिना पौरुषम् इव जिष्णुना निरस्तं तत् बलं न रराज । वाच्य—क्षमाश्रयेण कृत्येन इव...हितेन प्रियेण वचसा इव...पौरुषेण इव निरस्तेन तेन बलेन न रेजे ॥६३॥

अमर्षिणेति । अमर्षिणा क्रोधवता क्षमाश्रयं शान्तिसाध्यं कृत्यमिव । यथा मदोद्धतेन पुंसा हितं प्रियं वचो निरस्तं तिरस्कृतमिव । यथा बलीयसा बलवत्तरेण विधिना दैवेन निरस्तं पौरुषमिव बलिष्ठदैवप्रतिहतपुरुषव्यापारस्य निष्फलत्वादिति भावः । तथा जिष्णुनार्ज्जुनेन निरस्तं क्षिप्तं बलं किरातसैन्यं न रराज । मालोपमा ॥६३॥*

৬৩। ক্রুদ্ধজন কর্তৃক ক্ষমার্হ কার্য্যের ন্যায়, মদোদ্ধত ব্যক্তিকর্তৃক হিতকর প্রিয়বাক্যের ন্যায়, বলবান্ দৈবকর্তৃক পুরুষকারের ন্যায়, কিরাতসৈন্যগণও অর্জ্জুনকর্তৃক পরাজিত হইয়া নিস্তেজ হইল।

६२। युद्धमें विजय पाकर हो ये निवृत्त होंगे क्या? चराचरका मङ्गल होगा क्या, इस प्रकार कई तरह सोच विचारमें व्याकुल हो अर्जुनसे चोट खाये, शिवजीके सैनिकगण अत्यन्त दुखी हुए।

६३। क्रूर ( चिढ़कनेवाले ) लोगोंके, क्षमासे सिद्ध होने कार्य्यकी तरह क्यो मदोन्मत्तलोगोंके यह हितकारक और प्रिय मालूम पड़ते वाक्योंकि तरह बलवान्

* पुस्तकान्तरे व्याख्या—जिष्णुना निरस्तं बलं न रराज । किमिव केन क्षिप्तं न शोभते क्षमाश्रयं कृत्यं कार्य्यम् अमर्षिणा निरस्तम् । यथा—क्षमासाध्यं हि कृत्यम् इव सामर्षैः निरस्यते तच्चानिरस्तं न शोभते । यथा च मदोद्धतेन पुंसा हितं प्रियवचनम् इव तिरस्कृतं न राजते । मदः पौरुषादिधर्मः तेनोद्धतोऽवलिप्तः, तेन बलीयसा च विधिना दैवेन पौरुषम् इव निरस्तं सत् न राजते । बलीयसा दैवेन प्रतिहतपुरुषव्यापारस्य नैष्फल्यादेः जिष्णुरपि बलीयानिति भावः ।

प्रतिदिशं प्लवगाधिपलक्ष्मणा
विशिखसंहतितापितमूर्त्तिभिः ।
रविकरग्लपितैरिव वारिभिः
शिवबलैः परिमण्डलता दधे ॥६४॥
प्रविततशरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।

अन्वयः । प्लवगाधिपलक्षणा विशिखसंहतितापितमूर्त्तिभिः शिवबलैः रविकरग्लपितैः वारिभिः इव प्रतिदिशं परिमण्डलता दधे । वाच्य—...तापितमूर्त्तीनि शिवबलानि रविकरग्लपितानि वारीणि इव...परिमण्डलतां दधुः ॥६४॥

प्रतिदिशमिति । प्लवगानामधिपोऽधीशो लक्ष्म यस्य तेन वानरचिह्नेन । 'कपिप्लवङ्गप्लवग—' 'चिह्नं लक्ष्म च लक्ष्मणम्' इति चामरः । अर्जुनेन विशिखसंहतितापितमूर्त्तिभिरिति । विशिखा बाणास्तेषां संहतयः समूहाः । 'स्त्रियां तु संहतिर्वृन्दम्' इत्यमरः । ताभिस्तापिताः पीड़िता मूर्त्तयो देहा येषां तैस्तथाभूतैः । शरनिकरकर्त्तितकलेवरैरित्यर्थः । शिवबलैः प्रमथसैन्यैः कर्त्तृभिः रविकरैण ग्लपितैः तप्तैः सूर्य्यकिरणशोषितैर्वारिभिरुदकैरिव प्रदिदिशं दिक्षु परिमण्डलता परितश्चक्राकारमण्डलता इति यावत् । दधे अधारि प्रतिदिशं मण्डलाकारेण स्थितमित्यर्थः । धाञः कर्मणि लिट् । आतपतप्तं हि नीरं परिभ्रमति तद्वत् मुनिपीड़ितं सैन्यं बभ्रामेत्यर्थः । द्रुतविलम्बितं छन्दः—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥६४ ॥

७४ । কপিধ্বজ অর্জ্জুনের বাণসমূহে পীড়িতদেহ শিবসৈনিকগণ সূর্য্যকরে শোষিত জলসমূহের ন্যায় চতুর্দ্দিকে মণ্ডলাকারে অবস্থান করিতে লাগিল ।

दैवसे पुरुषार्थकी तरह किरात सैनिकगण भी अर्जुनसे पराजित होकर निर्लज्ज हो गये ।

६४ । कपिध्वज अर्जुनको बाणों से कटे देह धारण किये शिवजीके सैनिकगण सूर्यकी किरणों से जलकी तरह मण्डलाकार हो दिशाओंमें ठहरने लगे ।

कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे ॥६५॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये अर्जुनाभिगमनो नाम
चतुर्दशः सर्गः ॥१४॥

अन्वयः। प्रविततशरजालच्छन्नविश्वान्तराले पाण्डुसूनौ आविर्मण्डलं धनुः विधुवति भीतभीता (इव) जयलक्ष्मीः कथम् अपि विषमनयनसेनापक्षपातं विहातुं विषेहे। वाच्य—...भीतभीतया इव जयलक्ष्म्या पक्षपातः विषेहे ।६५।

प्रवितते ति। प्रविततानि विस्तृतानि यानि शरजालानि तैश्छन्नम् आच्छादितं विश्वान्तरालं येन तस्मिन् शरसमूहपूरितब्रह्माण्डोदरे पाण्डुसूनौ अतएव आविर्मण्डलम् आविर्भूतमण्डलं धनुः। आविर्भूतं मण्डलं यस्य धनुष इति वृत्तौ भूतार्थस्यानुप्रवेशात् भूतशब्दस्याप्रयोगः। विधुवति कम्पयति आस्फालयति सति भीतभीतेव भीतप्रकारेव जयलक्ष्मीर्विजयश्रीः कथमपि केनचित् प्रकारेण महता कष्टेन वा विषमनयनसेनापक्षपातं शिवसैन्यानुरागं विहातुं त्यक्तुं विषेहे शशाकेत्यर्थः। मालिनीवृत्तम्। लक्षणं तु उक्तम् ॥६५॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
चतुर्दशः सर्गः समाप्तः ॥१४॥

---

৬৫। যখন পাণ্ডুতনয় অর্জ্জুন ব্রহ্মাণ্ডোদর শরজালে আচ্ছন্ন করিয়া মণ্ডলীভূত শরাসন আস্ফালন করিতে লাগিলেন, তখন বিজয়লক্ষ্মী যেন ভীত হইয়াই কোন প্রকারে শিবপক্ষ ত্যাগ করিতে সমর্থ হইল।

চতুর্দ্দশ সর্গ সমাপ্ত।

---

६५। पाण्डुके पुत्र अर्जुन ब्रह्माण्डके भीतर तमाम बाणोंसे भरकर जब मण्डलाकार धनुषको खींचने लगे, विजयलक्ष्मी उस समय डरी हुई सी किसी प्रकार (अर्थात् बड़े कष्टसे) शिवजीका पक्ष छोड़नेमें समर्थ हुई अर्थात् इच्छा नहीं रहनेपर भी डर कर छोड़ दिया।

---

# पञ्चदशः सर्गः ।

—:—*—:—

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥१॥
अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ॥२॥

अथेति। अथ अनन्तरं तत्र रणे भूतानि सर्वप्राणिनः वृत्रं हतवानिति वृत्रहा इन्द्रः। 'ब्रह्मभ्रूणवृत्रेषु क्विप्'। तस्यापत्यं पुमान् वार्त्रघ्नोऽर्जुनः। 'तस्यापत्यम्' इत्यण्प्रत्ययः। तस्य शरेभ्यस्तत्रसुर्बिभ्युः। 'वा जॄभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपाभावः। सा चमूश्च इषवोऽस्यन्ते एभिरितीष्वासाः धनूंषि। धनुश्चापोऽस्त्रमिष्वासः' इति हेमचन्द्रः। 'अकर्त्तरि च कारके संज्ञायाम्' इति करणे घञ्। परित्यक्ता महान्त इष्वासा यया सा परित्यक्तायुधेत्यर्थः। दिशो भेजे पलायाञ्चक्रे इत्यर्थः। अत्र भूतत्राससेनापलायनयोः समुच्चयकथनाद् भिन्नविषयः क्रियासमुच्चयोऽलङ्कारः। 'गुणक्रियायौगपद्यं समुच्चय.' इति सामान्यलक्षणम्। तस्य यमकेन संसृष्टिः। उपान्तयमकम् ॥१॥

अपश्यद्भिरिति। गणैः प्रमथैः ईशानं स्वामिनं शिवम्। पुरोवर्त्तिनमिति भावः। अपश्यद्भिरिव रणान्निववृते निवृत्तम्। भावे लिट्। तथाहि—कृच्छ्रेषु आपत्सु संभ्रमेण साध्वसेन ज्वलितं तप्तम्। 'संभ्रमः साध्वसेऽपि स्यात्' इति विश्वः। मनो मुह्यत्येव। अतः पुरोवर्त्तिनोऽप्यदर्शनमुपपद्यत इति भावः ॥२॥

खण्डिताशंसया तेषां पराङ्मुखतया तया ।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम् ॥३॥

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥४॥

स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥५॥

एकाक्षरपादः ।

खण्डितेति । खण्डिता ध्वस्ता आशंसा जयाशा यस्यास्तया तेषां गणानां सम्बन्धिन्या तया अतिसन्निकृष्टया इत्यर्थः । पराङ्मुखतया रणवैमुख्येन पलायनेनेत्यर्थः । केतौ ध्वजे कृतः आरोपितः उच्चैः उन्नतो वानरो हनूमान् येन तं नरं पुरुषं कपिध्वजमित्यर्थः । कृपा करुणा आविवेश । तदीयदुर्दशां दृष्ट्वा स कृपाविष्टोऽभूदित्यर्थः । यमकालङ्कारः ॥३॥

ननु शत्रुषु कथं करुणा तत्राह—आस्थामिति । आस्थां यत्नम् आलम्ब्य 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः । वशं नीतेषु क्षुद्रेषु दुष्टेषु अरातिषु शत्रुषु विषयेऽनुकम्पया कृपया महतां वीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटतामायाति प्राप्नोति । स्वपौरुषनिर्ज्जितेषु अरातिषु अपि करुणा भूषणमेव महतामिति भावः ॥४॥

स सासिरिति । सहासिना वर्त्तमानः सासिः सखड्गः असून् सुवन्ति प्रेरयन्तीति असुसुवो बाणाः । 'षु' प्रेरणे इति धातोः 'सत्सूद्विष—' इत्यादिना क्विप् । असुसूभिः सह वर्त्तते इति सासुसूः सबाणः । अस्यन्ते क्षिप्यन्ते शरा अनेनेति आसः धनुः । 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ् । आसेन सह वर्त्तते इति सासः सचापः । सर्वत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । येया यातव्या यानसाध्याः अयेया अयातव्या यानं विनैव साध्याः । 'अचो यत्' इति यत्प्रत्ययः । येयाश्च अयेयाश्च येयायेयास्तेषां इयानामाये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयाययः । अयः शुभा-

त्रासजिह्मं यतश्चैतान्मन्दमेवान्वियाय सः ।
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः ॥६॥

अथाग्रे हसता साचिस्थितेन स्थिरकीर्त्तिना ।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥७॥

निरौष्ठ्यम् ।

मा विहासिष्ट समरं समरन्तव्यसंयतः ।
क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः ॥८॥

पादान्तादियमकम् ।

वह्वदेवं यातीत्ययय: । येयायेयायययश्च असौ अयययश्चेति येयायेयायययायय: । याधातोरुभयत्रापि 'आतोऽनुपसर्गे कः' इति कप्रत्यय: । अतो ललति विलसतीति लल: । 'लल विलासे' पचाद्यच् । अलोलोऽचपल: शशिन: ईश: शिवस्तस्य शिशुः स्कन्दस्तं शृणाति हिनस्तीति शशीशशिशुशी: । क्विप् । शशन् प्लुतगतिं कुर्वन् 'शश प्लुतगतौ' इति धातोः शतृप्रत्यय: । सोऽर्जुनो लीलां शोभां ललौ प्राप । 'ला आदाने' कर्त्तरि लिट् । एकाक्षरपाद: ॥ ५ ॥

त्रासेति । सोऽर्जुन: त्रासजिह्मं भयक्लिष्टं यथा तथा यतो गच्छतः पलायमानानित्यर्थः । एतान् गणान् मन्दमेवान्वियाय अनुजगाम । तथाहि महौजसो महानुभावाः भग्नान् अतिपीडयितुं न इच्छन्ति ॥६॥

अथेति । अथ अग्रे बलानामित्यर्थः । हसता तद्भङ्गदर्शनात् स्मयमानेन साचिस्थितेन तन्निवारणाय तिर्य्यग्व्यवस्थितेन । 'तिर्य्यगर्थे साचि तिरः' इत्यमरः । स्थिरकीर्त्तिना स्वयम् अभङ्गत्वादिति भावः । किञ्चिदीषदायस्तं खिन्नं चेतो यस्य तेन स्वकीयगणभङ्गात् ईषत् खिन्नचित्तेन सेनान्या स्कन्देन । 'पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः' इत्यमरः । ते गणाः प्रमथादयो जगदिरे उक्ताः । ओष्ठ्यवर्णाभावान्निरौष्ठ्यमेतत् ॥७॥

अथैकविंशतिभिः श्लोकैः स्कन्दवाक्यमेवाह—मा विहासिष्टेत्यादिना ।

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥९॥
वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम्।
बाणैर्वाणैः समासक्तं शङ्केऽशं केन शाम्यति ॥१०॥

पादादियमकम्।

रन्तव्यं रमणं क्रीड़ा। बहुलग्रहणाद्भावे तव्यप्रत्ययः। संयद्युद्धम्। 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः। समे रन्तव्यसंयती येषां ते समरन्तव्यसंयतः तुल्यक्रीडासङ्गरा इति तेषां सम्बोधनम्। यूयं समरं संग्रामं मा विहासिष्ट न त्यजत। जहातेर्माङि लुङ् मध्यमपुरुष बहुवचनम्। जुषाः पराजिता असुरगणा येस्तैः भवद्भिरिति शेषः। अगणैरिव गणेभ्यो अन्यैरिव किं किमर्थं यशः च्युतं नाशितम्। नैतद्युक्तं महाशूराणां भवादृशानामित्यर्थः ॥८॥

विवस्वदिति। विवस्वदंशुसंश्लेषेण सूर्य्यकिरणसम्पर्केण द्विगुणीकृतानि उत्तेजितानि तेजांसि येषां ते तथोक्ताः, मोघं व्यर्थमुद्गूर्णा उद्यताः। 'गुरी उद्यमने' इति धातोः कर्म्मणि क्तः। वो युष्माकममी महासयः खड्गा हसन्तीवेत्युत्प्रेक्षा। किं पलायमानानां खड्गैरिति हासः ॥९॥

वन इति। वनसदां वनेचराणामवने रक्षके वने मार्गं मृगसम्बन्धिनं मार्गं पन्थानमुपेयुषां पलायमानानामित्यर्थः। युष्माकमिति शेषः। वाणो ध्वनिरेषामस्तीति तैर्वाणैर्ध्वनियुक्तैः। 'वण संशब्दने' इति धातोर्घञ्। ततो 'अर्श आदिभ्यः—' इत्यच्प्रत्ययः। यमकत्वाद् बवयोरभेदः। उक्तञ्च —'रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्' इति। बाणैः शरैः समासक्तं समासञ्जितमशं दुःखं तत् केन शाम्यतीति शङ्के। केनोपायेन शाम्येदिति विचारयामीत्यर्थः ॥१०॥

कि—म

पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्त्तिभिः ।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥११॥

गोमूत्रिकाबन्धः ।

ना सु रो ऽयं न वा नागो धरसंस्थो न राक्षसः ।
ना सु खो ऽयं नवाभोगो धरणिस्थो हि राजसः ॥१२॥

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥१३॥

पातितेति । पातितं भ्रमितमुत्तुङ्गमाहात्म्यमुन्नतभावो यैस्तैः संहृता प्राहृता आयता विस्तृताः कीर्त्तयो यैस्तैः युष्माभिरिति शेषः । कां गुर्वीमापदं हन्तुम्, न काञ्चिदपीत्यर्थः । आवृत्तिर्युद्धान्निवृत्तिः । सैव साहसं कृतम् । अतः पापादन्यन्न किञ्चित् फलमस्तीति भावः । तदुक्तं मनुना—'यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः । भर्त्तुर्यद् दुष्कृतं किञ्चित् तत् सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्ज्जितम् । भर्त्ता तत् सर्व्वमादत्ते परावृत्तहतस्य तु ॥' इति ॥११॥

नेति । किञ्च अयमसुरो दैत्यो न । नागो गजो वा पन्नगश्च न । धर इव संस्था यस्य सः धरसंस्थः पर्व्वताकारः । 'अहार्य्यधरपर्व्वताः' इत्यमरः । 'संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु' इति वैजयन्ती । राक्षसो न । किं त्वयं सुखयतीति सुखः सुखसाध्य इत्यर्थः । नवाभोगोऽभिनवप्रयत्नः, महोत्साह इत्यर्थः । 'आभोगो वरुणच्छत्रे पूर्णता यत्नयोरपि' इति विश्वः । धरणिस्थो भूतलचारी राजसो रजोगुणप्रधानो ना पुरुषो हि, कश्चित् मानुष इत्यर्थः । 'पुरुषाः पूरुषा नरः । मनुष्या मानुषा मर्त्त्या मनुजा मानवा नराः' इत्यमरः । अतो न पलायनमुचितमिति भावः । गोमूत्रिकाबन्धः—'वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ॥' इति लक्षणात् षोड़शकोष्ठद्वये अर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥१२॥

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥१४॥
वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान्नालङ्कारश्च्युतोपलः ॥१५॥

मन्दमिति । एष मुनिर्दृष्टं यया कृपया इषुं लतां शाखामिव मन्दमस्यन् क्षिपन् वो युष्मान् पशूनिवागतावज्ञं यथा तथा जघनेषु प्रणुदति चोदयति । किमतः परं कष्टमस्तीति भावः ॥१३॥

नेति । पदच्छेदस्तावत्—न ना ऊननुन्नः नुन्नोनः ना अना नानाननाः ननु । नुन्नः अनुन्नः ननुन्नेनः ना अनेनाः नुन्ननुन्ननुत् । अथ योजना—हे नानानना नानाप्रकाराण्याननानि येषां ते । नानाविधास्या इत्यर्थः । ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न । तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना ननु अपुरुषः खलु । ऊनाद् भीतः पलायमानस्तु किं वक्तव्यमिति भावः । किन्च, नुन्न इनः स्वामी यस्य स नुन्नेनः । स न भवतीति ननुन्नेनः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । स नुन्नो विद्धोऽप्यनुन्नोऽविद्ध एव । यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भावः । तथा नुन्नं नुन्ननुदतिशयेन नुन्ना नुन्ननुन्नास्तान् नुदतीति नुन्ननुन्ननुदतिपीडितपीडको ना पुरुषोऽनेना निर्दोषो न भवतीति । किन्तु सदोष एवेति । 'नार्त्तं नातिपरिक्षतम्' इति निषेधादित्यर्थः । अयं तु नेताऽदृश्य इति न पलायितव्यमिति भावः । अयमेकव्यञ्जनः । अन्त्यस्तकारस्तु न दोषावहः । 'नान्त्यवर्णस्तु भेदकः' इत्यभ्यनुज्ञानात् ॥१४॥

वरमिति । कृताः पूर्वमुत्पादिताः पश्चात् ध्वस्ता नष्टास्ते कृतध्वस्ताः । 'पूर्वकाल—' इत्यादिना समासः । कृतध्वस्ताः गुणाः यस्य तस्मात् पुंसो अत्यन्तमतिशयेनागुणो निर्गुणः पुमान् वरं मनाक्प्रियः । किञ्चित् प्रियं इत्यर्थः । 'वरं क्लीबे मनाक्प्रिये' इत्यमरः । तथाहि—प्रकृत्या स्वभावेनामणिर्मणिरहितो अलङ्कारः श्रेयान् । च्युतोपलो भ्रष्टरत्नो न श्रेयान् । 'उपलः प्रस्तरे रत्ने' इति विश्वः । पलायितुः

स्यन्दना नो चतुरगाः सुरेभा वाविपत्तयः ।
स्यन्दना नो च तुरगाः सुरेभावा विपत्तयः ॥१६॥

समुद्गकः ।

भवद्भिरधुनारातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥१७॥

वेत्रशाककुजे शैलेऽलेशेजेऽकुकशाकवे ।
यात किं विदिशो जेतुं तुञ्जेशो दिवि किं तया ॥१८

प्रतिलोमानुलोमपादः ।

समरादसमर एव वरमिति भावः । अत्र समानविषयारोपयोः प्रतिबिम्बकरणाद् दृष्टान्तालङ्कारः ॥ १५ ॥

स्यन्दना इति । स्यन्दन्ते प्रद्रवन्तीति स्यन्दनाः जवनाः । स्यन्दनाः रथा नो सन्ति । नन्द्यादित्वात् ल्युः । चतुरं गच्छन्तीति चतुरगाः । तुरगाश्चाश्वा नो सन्ति । सुरेभाः शोभनवृंहणाः । सुरेभा वा सुरगजाश्च नो सन्ति । अविपत्तयो विपत्तिरहिताः । विपत्तयो वा विशिष्टाः पदातयो नो सन्ति । अतो न भेतव्यमिति भावः । अत्र पूर्वोत्तरार्द्धगतानां विशेषणानां चोद्देशोद्देश्यीभूतानां यथासंख्यसम्बन्धानुक्रमाद् यथासंख्यालङ्कारो यमकेन संसृष्टः ॥ १६ ॥

भवद्भिरिति । अधुना अरातिभिः परिहापितानि त्याजितानि पौरुषाणि येस्तैर्भवद्भिः । अर्कनिष्पीतैरर्केण संशोषितैर्ह्रदैरिव । दुरुत्तरो दुस्तरः पङ्क इव पङ्को दुष्कीर्त्तिः प्राप्तः ॥१७॥

वेत्रेति । वेत्राणि वंशाः फलिन्यो वा शाकाः बर्बराश्च कुजा वृक्षा यस्मिन् तस्मिन् वेत्रशाककुजे । प्रचुरवेत्राद्युपेते इत्यर्थः । 'वेत्रं वंशफलिन्योश्च' इति विश्वः । 'शाकबर्बरवर्द्धकाः' इत्यमरः । लेशेन स्तोकेनाप्येजते कम्पत इति लेशेजः, स न भवतीत्यलेशेजस्तस्मिन् । अत्यन्ताकम्पने इत्यर्थः । 'एजृ कम्पने' पचाद्यच् । न कौकते नादत्ते इत्यकुको

अयं वः क्लैव्यमापन्नान् दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् ॥१९॥
ननु हो मथना राघो घोरा नाथमहो नु न ।
तयदातवदा भीमा माभीदा वत दायत ॥२०॥

प्रतिलोमानुलोमार्द्धः ।

ग्रहणासमर्थाः अत्रवो यस्मिन् तस्मिन् अकुकशात्रवे । 'कुक आदाने' पचाद्यच् । अले पर्व्वते । केषां भावः किंता कुत्सितता तयोपलक्षिताः सन्तः । 'कुत्सा[प्रश्न] निन्दावितर्केषु चेपि किंशब्द इष्यते' इति शाश्वतः । विदिशो जेतुं यात गच्छत किम् ? यातेः संप्रश्ने लोट् । मध्यमपुरुषबहुवचनम् । दिवि स्वर्गेऽपि । तुञ्जेश इति तेषां सम्बोधनम् । तुञ्जन्त इति तुञ्जा हिंसका दैत्याः, 'तुजि हिंसायाम्' पचाद्यच् । तेभ्यो दैत्येभ्य ईशत इति तुञ्जेशाः, ईशेः क्विप् । तेभ्योऽपि शक्ता इत्यर्थः । स्वर्गेऽप्यसुरविजयिनां युष्माकमत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनमनुचितमिति भावः ॥१८॥

अथेशे तिष्ठति पलायनमेतद्वो न युक्तमित्याह—अयमिति । अयमीशः स्वामी शिवः क्लैब्यं निष्पौरुषत्वमापन्नान् प्राप्तांस्तथारातिना दृष्टपृष्ठान् । पलायमानानित्यर्थः । वो युष्मांश्च्युताचारान् स्खलितव्रतान् दारान् कलत्राणीव । 'अथ पुंभूम्नि दाराः' इत्यमरः । निगोपितुं गोप्तुम् । ऊदित्त्वादिड्विकल्पः । दारदोषं भर्त्तेव स्वमहिम्ना युष्मद्दोषं संवरितुमिच्छति । अतः कुतो युष्माकमनर्थः इत्यर्थः ॥ १९ ॥

नन्विति । नन्वित्यामन्त्रणे । हः इत्याह्वाने । 'हे है व्यस्तौ समस्तौ च इतिसम्बोधनार्थयोः । हो ही चैवंविधौ ज्ञेयौ सम्बुद्ध्याह्वानयोरपि' इति विश्वः । मथ्नन्तीति मथनाः । 'मन्थ विलोडने' कर्त्तरि ल्युट् । राघन्ति समर्था भवन्तीति राघः । 'राघृ सामर्थ्ये' क्विप् । घोराः क्रूराः । शत्रूणामिति भावः । नाथं महयन्ति पूजयन्तीति नाथमहः । इग्रिग्रहणात् कर्म्मणि उपपदे क्विप् । तयन्ति रक्षन्तीति तयाः रक्षकाः । पचाद्यच् । दायन्तीति दाताः शुद्धाः । 'दैप् शोधने' कर्त्तरि क्तः । वदन्तीति

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः ।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता ॥२१॥
निशितासिरतोऽभीको न्येजतेऽमरणा रुचा ।
सारतो न विरोधी नः स्वाभासोऽभरवानुत ॥२२॥

वदाः वक्तारः । पचाद्यच् । तेषां द्वन्द्वस्तंयदातवदाः । भीमा भयङ्करा माभीः । नञर्थमाशब्दस्य सुप्सुपेति समासः । तान् ददतीति माभीदाः अभयप्रदाः, एवंविधा यूयमिति शेषः । वतेति खेदे बवयोरभेदः । न दायत नु न शुद्धाः किम् ? नु पृच्छायाम् । किन्तु शुद्धा एव । काकुस्वरानुसन्धेयः । दैप् शोधने' लोट् मध्यमपुरुषबहुवचनम् ॥ २० ॥

किमिति । अपास्त अवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो यैस्तैः, अतिदेवमानुषैरित्यर्थः । मनुष्याणां भावो मानुष्यकम् । 'योपधात् गुरूपोत्तमाद् वुञ्' । ज्वलिता उज्ज्वलिताः प्रकाशिता इति यावत् । अन्यगुणा असदृशगुणा ये: तैः, 'अन्यौ विभिन्नासदृशौ' इति वैजयन्ती । ईदृशैः भवद्भिरिति शेषः । तेजसि प्रतापे स्थिता प्रतापैकशरणा मानिता शूरत्वाभिमानिता किमिति त्यक्ता । किमिति निर्लज्जैः पलायत इति भावः ॥२१॥

निशितेति । हे अमरणा मरणरहिताः, निशितासिरतो अतितीक्ष्णखड्गरतो अभीको निर्भीको रुचा तेजसोपलक्षितः सुष्ठु आभासत इति स्वाभासो रमणीयः । पचाद्यच् । उताऽत्यर्थमतिशयेन भरवान्, रणभरसहिष्णुरित्यर्थः । 'उतात्यर्थविकल्पयोः' इति विश्वः । ईदृशो नोऽस्माकं विरोधी शत्रुः सारतो बलतो न न्येजते न कम्पते, न प्रचलतीत्यर्थः । 'एजृ कम्पने' लट् । अतो भवद्भिरपि स्थातव्यमेव, न चलितव्यमिति भावः ॥२२॥*

* एतन्मते "विरोधी नः" इत्यत्र सविसर्गपाठः । प्रतिलोमे निर्विसर्गपाठे 'पदान्ते सविसर्गाविसर्गयोः' इत्येतादृशकाव्ये ऐक्यस्वीकारात् । अन्ये तु इनः सूर्य इव स्वभास इनस्वाभास इत्येकं पदमाहुः ।

तनुवारभसो भास्वानधीरो विनतोरसा।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि ॥२३॥

प्रतिलोमानुलोमेन श्लोकद्वयम्।

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥२४॥

ननु अयं न चलतीति कथं ज्ञायते। तत्राह—तन्विति। तनुमावृणोत्याच्छादयतीति तनुवारं वर्म्म। कर्म्मण्यण्। तेन वर्मणि भासते इति तनुवारभसः। 'भस दीप्तौ' पचाद्यच्। भास्वांस्तेजस्वी चारुणा भास्वता विनतेनोन्नतेनोरसा वक्षःस्थलेनोपलक्षितः। एवंविधोऽप्यधीरो धैर्य्यरहितो रसितेन शब्दितेनैवाश्नाति ग्रसतीति रसिताशी तस्मिन्। रवेणैव निखिलप्राणहारिणीत्यर्थः। आभीक्ष्ण्ये णिनिः। जन्ये युद्धे। 'युद्धमायोधनं जन्यम्' इत्यमरः। अभीतः निर्भीकः सन् को रमते कः क्रीडति। यदि रमते तर्ह्ययमेवेति भावः। निर्भयसञ्चारादेवास्य निश्चलत्वं निश्चीयत इत्यर्थः॥२३॥

अथ पञ्चभिः कुलकमाह—विभिन्नेत्यादिभिः। आहवं विशिनष्टि।—विभिन्नानि विदारितान्यतएव पातितानि आश्वीया अश्वसमूहाश्च ते तथा। 'पूर्व्वकाल—' इति समासः। तैरश्वसमूहैर्निरुद्धानि रथानां वर्त्मानि यस्मिन् तथोक्ते। 'द्वन्द्वे त्वश्वीयमाश्ववत्' इत्यमरः। 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः। हतास्ताड़िता द्विपा गजा एव

---

केचित्तु विरोधी शत्रुः पूर्वविशेषणविशिष्टो न, अपि तु पूर्वविशेषणविशिष्ट एवेति काक्वर्थेन नकारमाहुः। परे तु सारतो न विरोधी न। न रतम् अरतम्, अरतेन सह वर्त्तमानाः सारता मुनयः तान् जनयन्ति मारणेन न्यूनान् कुर्व्वन्तीति सारतीना दैत्यास्तेषां विरोधी विष्णुः स नायम्। अतः कथं पलायन्ते। न स्वाभासः। स्वेन धनेन चाभासत इति स्वाभासः कुवेरः सोऽपि नायम्। अतः कथं पलायन्ते। न स्वाभासः। स्वेन धनेन आभासत इति स्वाभासः कुवेरः सोऽपि नायम्। न भरवान् भं नक्षत्रं राति। आतोऽनुपसर्गे कः। भरश्चन्द्रस्तद्वान् शिवोऽपि न, अतः पलायनं न उचितमित्याहुः इत्यपरिष्टात्। एव क्वचित् पुस्तके पाठविशेषः।

दे वा का नि नि का वा दे
वा हि का स्व स्व का हि वा ।
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि ॥२५॥

इति सर्व्वतोभद्रः ।

नगाः शैलाः । 'शैलवृक्षौ नगावगौ' इत्यमरः । तैः ष्ठ्यूतानि उज्झितानि । ष्ठीवतेः कर्म्मणि क्तः । 'च्छ्वोः शूड्नुनासिके च' इत्यूटादेशः । तानि रुधिराण्येवाम्बूनि तेषां नदैः प्रवाहैराकुले व्याप्ते ॥ २४ ॥

देवेति । पुनश्च । देवानाकनयति उद्दीपयति उत्साहयतीति देवाकानी तस्मिन् देवाकानिनि । 'कन दीप्तौ' इति धातोर्ण्यन्तात् णिनिः । यद्वा "कै शब्दे" इति धातोराङ्पूर्वस्य भावे लुगटि आकानम् आशब्दनम् ईषद्वचनमिति यावत् देवानां तद्वतीत्यर्थः । कावादः ईषत् वादो वाक्कलहः । 'ईषदर्थे' इति कुशब्दस्य कादेशः । तद्वति कावादे । 'अर्श आदिभ्योऽच्' वाहिका पर्य्यायेण रणभारोद्वहनम् । वहेः पर्य्याये धात्वर्थनिर्देशे ण्वुल् वक्तव्यः । वाहिकया क्रमप्राप्तरणक्रियया सुष्ठु शोभनं यथा तथा अस्वकान् परान् आजिहीतेऽभियुङ्क्ते योजयतीति यावत् । वाहिकास्वस्वकाहास्तस्मिन् । योद्धृधर्मौ युद्धे उपचर्य्यते । 'ओहाङ् गतौ' इति धातोर्विच्प्रत्ययः । सोमपाशब्दवत् प्रक्रिया । वाशब्दश्चार्थे । कं मदोदकमाकिरन्तीति काकाराः मदस्राविणः । किरतेराङ्पूर्वात् कर्म्मण्यण् । एवंविधा इभभरा गजघटा यत्र तस्मिन् काकारेभभरे । काका इव काकाः गर्ह्या इति लक्षणया तेषामामन्त्रणम् । निस्वाः निरुत्साहाः भव्याः सोत्साहास्तानुभयान् व्ययन्ति संवृण्वन्तीति निस्वभव्यव्याः । 'व्येञ् संवरणे' । 'आतोऽनुपसर्गे कः' । तैर्भन्ति भासन्त इति निस्वभव्यव्यभस्वांस्तस्मिन् । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । सर्वतो भ्रमणात् सर्व्वतोभद्राख्यश्चित्रबन्धः । यथाह दण्डी—'तदिदं सर्व्वतो-

प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि ॥२६॥

स स त्व र ति दे नि त्यं
स द रा म र्ष ना शि नि ।
त्व रा धि क क सं ना दे
र म क त्व म क र्ष ति ॥२७॥

इति अर्द्धभ्रमकः ।

भद्रं भ्रमणं यदि सर्व्वतः' इति । उद्धारस्तु । "अष्टकोष्ठचतुष्टयं लिखित्वा तत्र श्लोकं क्रमेण लिखित्वा सर्व्वतो वाचनात् सर्व्वतोभद्रः" इति ॥२५॥*

प्रनृत्तेति । प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैस्तुरगै-राक्षिप्ता अवधूताः सारथयो यत्र तस्मिन् । तथा मारुतेनापूर्णैर्व्याप्तैः तूणीरैर्निषङ्गैर्विक्रुष्टाः शब्दायमानाः, हताः ताड़िताः सादिनस्तौरङ्गिका यत्र तस्मिन् । यद्वा मारुतापूर्णतूणीरैर्विकृष्टा आकर्षिता, अत एव हता मारिताः सादिनोऽश्ववारा यत्र तस्मिन् ॥२६॥

ससत्त्वेति । ससत्त्वानां सत्त्ववतां रतिदे रागप्रदे नित्यं सदराणां सभयानाममर्षनाशिनि क्रोधहारिणि त्वरयोत्साहेनाधिकं कसन्तो विकसन्तो नादाः यत्र तस्मिन् रमयतीति रमकः । रमधातोर्वुञ् । तस्याकादेशः तद्भावो रमकत्वम् । रणकर्म्मणा परञ्जकत्वम् अकर्षत्यप-नुदति वीराणां परस्परमुत्साहं रणकर्म्मणा स्फोरयतीत्यर्थः ॥२७॥

* अत्र पुस्तकान्तरे एवम्पाठः—चतुष्कोष्ठे चतुरर्द्धबन्धक्रमेणाद्यपंक्तिचतुष्टये पादचतुष्टयं विलि-ख्यानन्तरपंक्तिचतुष्टयेऽप्यधःक्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथमः पादः सर्व्वतो वाच्यते, द्वितीयादिषु द्वितीय इति ।

कि—४

आसुरे लोकविच्चासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥२८॥

कुलकम् ।

इति शासति सेनान्यां गच्छतस्ताननेकधा ।
निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा ॥२९॥

निरौष्ठ्यम् ।

मुनीषुदहनातप्तान् लज्जया निविवृत्सतः ।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥३०॥

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे ।
भीताः शितशराभीताः शङ्करं तत्र शङ्करम् ॥३१॥

पादाद्यन्तयमकम् ।

आसुर इति । एवंविधे आसुरे असुरसम्बन्धिनि लोकविच्चासविधायिनि लोकभयङ्करे महाहवे महायुद्धे युष्माभिरुन्नतिं वृद्धिं नीतं प्रापितं पौरुषं पुरुषकर्म्म निरस्तं नाशितमिह संग्रामे ॥२८॥

इतीति । इतीत्थं सेनान्यां स्कन्दे शासत्याज्ञापयत्यनेकधा गच्छतः पलायमानान् तान् गणान्निषिध्य निवार्य्यान्धकारिणा हरेण किञ्चित् हसता तस्थे स्थितम् । भावे लिट् ॥ २९ ॥

मुनीति । 'मुनेरिषव एव दहनस्तेनातप्तान् पीड़ितान् तथा लज्जया रणभङ्गात् शालीनत्वेन निविवृत्सतो निवर्त्तितुकामान् । 'वृद्भ्यः स्यसनोः' इति विकल्पात् परस्मैपदम् । तान् गणान् शिवः निषेधः मा भैष्ट मा पलायतेति निवारणवचनं स एव हिमाम्बु शीतोदकं स एव प्रह्लादयामास । रूपकालङ्कारः ॥३०॥

दूना इति । दूनाः सन्तप्ताः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । अरिबलाच्छत्रुबलादूनाः जनबलाः । 'पञ्चमी विभक्ते' इति पञ्चमी । निरेभाः

महेषुजलधौ शत्रोर्वर्त्तमाना दुरुत्तरे।
प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥३२॥
स बभार रणापेतां चमूं पश्चादवस्थिताम्।
पुरः सूर्य्यादुपावृत्तां छायामिव महातरुः ॥३३॥
मुञ्चतीशे शरान् जिष्णौ पिनाकस्वनपूरितः।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥३४॥
तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥३५॥

द्विचतुर्थयमकम्।

निःशब्दाः। कुतः भीताः त्रस्ताः। कुतः यतः शितैस्तीक्ष्णैः शरैः अभीताः अभिव्याप्ताः। इणः कर्म्मणि क्तः। ते गणाः तत्र रणे शङ्करमभयवचनेन सुखकरं शङ्करं शिवं बहु यथा तथा मेनिरे अमन्यन्त ॥३१॥

महेष्विति। दुरुत्तरे दुस्तरे शत्रोः सम्बन्धिनि महेषुजलधौ महति बाणसागरे वर्त्तमाना पताकिनी सेना ईशानं शिवं पारं परतीरमिव। 'पारावारे परार्वाची' इत्यमरः। प्राप्याशश्वास प्राणिति स्म ॥३२॥

स इति। स शिवो रणापेतां रणादपवृत्तां पराङ्मुखीभूतामतएव पश्चात् पृष्ठभागे अवस्थितां चमूं पुरोऽग्रे स्थितः सूर्य्यः सूर्य्यकिरणः तस्मादपावृत्तां परावृत्तां छायां महातरुरिव बभार। छायां तरुरिवात्मैकशरणां तां चमूं न मुमोचेत्यर्थः ॥३३॥

मुञ्चतीति। ईशे हरे कर्त्तरि जिष्णौ अर्ज्जुने विषये शरान् मुञ्चति सति पिनाकस्य शिवकार्मुकस्य स्वनेन ध्वनिना, पूरितोधराधरः इन्द्रकीलः स्फुटन्निव विदीर्य्यमाण इवेत्युत्प्रेक्षा। आशा दिशः ध्वनयन् शब्दयुक्ताः कुर्व्वन् दध्वान शब्दमकरोत्। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ॥३४॥

परिमोहयमाणेन शिक्षालाघवलीलया ।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना ॥३६॥

अवद्यन् पत्त्रिणः शम्भोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥३७॥

आद्यन्तयमकम् ।

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः ।
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥३८॥

द्व्यक्षरः ।

तदिति । भीमं तयोः हरपाण्डवयोः तत् प्रसिद्धं युद्धं गणाः प्रमथाः चित्रसंस्थाः चित्राकाराः अचलाः शैला इव । तथा चित्रे आलेख्ये संस्था स्थितिः येषां ते चित्रसंस्थाः चित्रलिखिता इवाचला आश्चर्यवशान्निश्चलाः सन्तो विस्मयेन ददृशुः ॥ ३५ ॥

परीति । शिक्षालाघवलीलयाभ्यासपाटवातिशयेन हेतुना परिमोहयमाणेन व्यामोहयता । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदे प्राप्ते 'न पादमि' इत्यादिना तत्प्रतिषेधादात्मनेपदं शानच् । 'शेर्विभाषा' इति णत्वस्य नत्वं वा णत्वम् । पिनाकिना हरेण जिष्णोरर्जुनस्येयं जैष्णवी विशिखश्रेणी बाणसंघातः परिजह्रे निरस्ता ॥३६॥

अवद्यन्निति । पाण्डवोऽर्जुनः अवसायकैः अवसानकरैः । स्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः । सायकैर्बाणैः शम्भोः पत्त्रिणः शरानवद्यन् खण्डयन् । द्यतेः शतृप्रत्ययः । 'ओतः श्यनि' इत्योकारलोपः । शिक्षया शक्तुं प्रभवितुमिच्छया । उत्साहेनेत्यर्थः । रणे शिक्षयाभ्यासेन च परिचक्राम । उत्साहनैपुणाभ्यां चचारेत्यर्थः ॥ ३७ ॥

चारेति । चारैर्गतिविशेषैर्वित्त इति चारचुञ्चुः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्ययः । चिरमारेचयति रिक्तीकरोति शत्रूनिति चिरारेची । चञ्चतश्चलतश्चीरस्य वल्कलस्य रुचा प्रभया । रोचते इति

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥३९॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुचा इवारब्धाः सावित्रीमंशुसंहतिम् ॥४०॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥४१॥

तेन व्यातेनिरे भीमा भीमार्जुनफलाननाः ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥४२॥

शृङ्खलायमकम् ।

रुचः शोभमानः । 'इगुपध—' इति कः । रुचिरः सुन्दरः । चञ्चूर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात् पचाद्यच् । 'चरफलोश्च' इति नुमागमः । 'यङोऽचि च' इति यङो लुक् । आचारस्य शुद्धव्यवहारस्य चञ्चरो भृशमाचरितः स मुनिश्चारु यथा तथा चारैश्चक्रादिबन्धैर्गतिविशेषैश्चचार । 'चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः' इति विश्वः ॥३८॥

स्फुरदिति । स मुनिरर्जुनः स्फुरन्ती पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत् तथोक्तम् । 'नद्यृतश्च' इति कप्प्रत्ययः । बृहद्धनुर्गाण्डीवं धुनानः कम्पयन् । उल्कैवानलस्तेन धृतो योगो येन तेनांशुमतार्केण सूर्येण तुल्यं बभौ । उपमा ॥३९॥

पार्थेति । पार्थबाणाः अर्जुनशराः पशुपतेर्विशिखावलीं शरसङ्घातम् । सवितुरियं सावित्री तामंशुसंहतिं किरणसमूहमरब्धाः निविडाः पयोमुचो मेघा इव । आवव्रुस्तिरोदधुः ॥४०॥

शरेति । त्रिलोचनः शिवः । सव्येन सचते समवेतीति तेन सव्यसाचिनार्जुनेनोदस्तां क्षिप्तामुर्वीं महतीं शरवृष्टिं मार्गणैः शरैर्विधूय निरस्य तपनस्य रवेर्मार्गं रुरोधावव्रे ॥४१॥

द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥४३॥

इति गूढचतुर्थपादः—

विलङ्घ्य पत्रिणां पंक्तिं भिन्नः शिवशिलीमुखैः ।
ज्यायो वीर्य्यमुपाश्रित्य न चकम्पे कपिध्वजः ॥४४॥

जगतीशरणे युक्तो हरिकान्तः सुधासितः ।
दानवर्षी कृताशंसो नागराज इवाबभौ ॥४५॥

अर्थत्रयवाची ।

तेनेति । तेन शिवेन भीमाः भयङ्कराः तथा भियो भयस्य मार्ज्जनं निरासः तदेव फलं प्रयोजनं येषां तानि आननानि अग्राणि येषां तेषां ते भीमार्ज्जुनफलाननाः । तथा शिखाधराः मयूरास्तेषु जातानि शिखाधरजानि बर्हाणि तानि वासांसीव वासांसो पक्षा येषां ते शिखाधरजवाससः मयूरपक्षिण इत्यर्थः । विशिखाः बाणा अनुकम्प्य कृपां कृत्वा न व्यातेनिरे इति न । किंत्वनुकम्प्यैवेत्यर्थः । अर्जुनजिघृक्षुत्वादिति भावः । सम्भाव्य निषेधने द्वौ प्रतिषेधौ इत्युक्तम् ॥४२॥

द्युवियदिति । द्यां स्वर्गं वियदन्तरिक्षञ्च गामिनो व्यापिनो द्युवियद्गामिनो ते इव व्यापिनो । द्वितीयाप्रकरणे श्रितादिषु गम्यादीनामुपसंख्यानात् समासः । तारेणोच्चैस्तरेण संरावेण नादेन विहताः ताड़िता विहाः श्रुतयः कर्णा यया सा तथोक्ता । हैमी हेममयीषुमाला शिवशरावलिः विंद्युतां संहतिरिवोक्तविशेषणा विद्युन्मालेव शुशुभे । चतुर्थपादवर्णानां त्रिपाद्यां सम्भवात् गूढ़ चतुर्थपादमाहुः ॥४३॥

विलङ्घ्येति । शिवशिलीमुखैः पत्रिणां पङ्क्तिं निजशरावलिं विलङ्घ्यातिक्रम्य भिन्नो विद्धः कपिध्वजोऽर्ज्जुनो । ज्यायः प्रशस्तम् । 'वृद्धप्रशस्ययोर्ज्यायान्' इत्यमरः । वीर्य्यं सत्त्वमुपाश्रित्यावस्थाय न चकम्पे न चचाल । किन्तु तान् सहमानतस्थौ इत्यर्थः ॥ ४४ ॥

विफलीकृतयत्नस्य च्युतबाणस्य शम्भुना।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥४६॥

स पिशङ्गजटावलिः किरन्
उरु तेजः परमेण मन्युना।

जगतीति। अर्थत्रयवाचो श्लोकोऽयम्। तत्र आदौ अगराज इति पदच्छेदमाश्रित्य प्रथमोऽर्थो अभिधीयते—ईशस्य रणे युक्तः शक्तः, अन्यत्र जगतीशरणे भूरक्षणे युक्तः स्थितः विधिनेति शेषः। हरिः सिंह इव कान्तो मनोहरः, अन्यत्र हरीणां सिंहानां कान्तः आवासदानात् प्रियः। सुष्ठु दधाति पालयति प्रजा इति सुधा। क्विबन्तः। असितः कृष्णवर्णः, ततो विशेषणसमासः। अन्यच्च सुधा लेपद्रव्य विशेषस्तद्वत् सितो धवलः। दानवर्षी बहुप्रदः कृताशंसः कृतजयाभिलाषः। अन्यत्र दानवैर्दैत्यैः ऋषिभिः इना कामिन च कृताशंसा नानाफलाभिलाषो यस्मिन् स ना नरोऽर्जुनः। अगराजः हिमवान् इव जगति आबभौ इति एकोऽर्थः। [१]। अथैरावतसाम्यमुच्यते—जगतीं भुवं घ्नन्ति तं कुर्वन्तीति ते जगतीशाः राक्षसाः तेषां रणः तत्र युक्तो विहितः समर्थः। हरिकान्तः इन्द्रप्रियः। उभयत्रापि समानमेतत्। सुधासितः अमृतस्वच्छः एकत्र शीलतः, अन्यत्र वर्णत इति विवेकः। दानवर्षी धनप्रदो मदस्रावी च। कृताशंसः उभयत्र कृतजिगीषः पार्थः नागराज इव ऐरावत आबभौ इति द्वितीयोऽर्थः। [२]। अथ शेषौपम्यमुच्यते—जगतीशरणे भूरक्षणे युक्तो नियुक्तः देवेनेति शेषः। 'शरणं गृहरक्षित्रोः' इत्यमरः। हरिकान्तः कृष्णप्रियः। उभयत्रापि तुल्यम्। सुष्ठु दधातीति सुधा, वसुधेति केचित्। एकदेशग्रहणात् समुदायग्रहणम्। तत्र सितो बद्धः। 'षिञ् बन्धने' क्तः। अन्यत्र सुधयामृतेन सितो बद्धः अमृतप्रिय इत्यर्थः। दानवाश्च ऋषयश्च ईर्लक्ष्मीश्च तैः कृताशंसो विहितप्रशंसः, उभयत्रापि तुल्यमेतत्। सोऽर्जुनः नागराजः शेषः इव आबभौ इति तृतीयोऽर्थः। [३] ॥ ४५ ॥

ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥४७॥

शतशो विशिखानवद्यते
भृशमस्मै रणवेगशालिने ।
प्रथयन्ननिवार्य्यवीर्य्यतां
प्रजिघायेषुमघातुकं शिवः ॥४८॥

शम्भोर्धनुर्मण्डलतः प्रवृत्तं
तं मण्डलादंशुमिवांशुभर्त्तुः ।
निवारयिष्यन् विदधे सिताश्वः
शिलीमुखच्छायवृतां धरित्रीम् ॥४९॥

विफलोति । शम्भुना कृतबाणस्य अतएव विफलीकृतयत्नस्य निष्फलप्रयत्नस्य गाण्डीवं धनुर्यस्य तस्य गाण्डीवधन्वनोऽर्ज्जुनस्य । 'वा संज्ञायाम्' इत्यनङादेशः । खेभ्यः इन्द्रियरन्ध्रेभ्यः । 'खमिन्द्रिये सुखे खगे' इति विश्वः । हुताशनोऽग्निर्निश्चक्राम निष्क्रान्तः क्रोधादिति भावः ॥४६॥

स इति । पिशङ्गजटावलिः पिशङ्गजटाजुटः परमेणोत्कृष्टेन मन्युना क्रोधेनोरु महत्तेजः किरन् विक्षिपन् सोऽर्ज्जुनः ज्वलिता ओषधयस्तृणज्योतींषि जातवेदा दवाग्निश्च यस्मिन् तेन हिमशैलेन समं तुल्यं हिमाद्रिरिव विदिद्युते हिमाद्रिवत् शुशुभे इति विम्बप्रतिविम्बभावोपमा ॥४७॥

शतश इति । शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने रणसंरम्भशोभिनेऽस्मै पार्थाय भृशमत्यर्थमनिवार्य्यवीर्य्यताम् निजामिति शेषः । तस्मै प्रथयन् दर्शयन् । किन्तु अघातुकममारकम् । 'लषपत—' इत्यादिना उक्तेरुकञ् । इषुम् । जातावेकवचनम् । प्रजिघाय प्रयुयुजे । 'हि गतौ' इति धातोर्लिट् 'हेरचङि' इति कुत्वम् ॥४८॥

घनं विदार्य्यार्जुनबाणपूगं
ससारबाणोऽयुगलोचनस्य ।
घनं विदार्य्यार्जुनबाणपूगं
ससार बाणोऽयुगलोचनस्य ॥५०॥

अर्द्धावलिः ।

सृजन् महेषून् बहुधाशुपातिनो
मुहुः शरौघैरपवारयन् दिशः ।

शम्भोरिति । सिताश्वोऽर्ज्जुनः शम्भोर्धनुर्मण्डलतो धनुर्वलयात् प्रवृत्तं निष्क्रान्तं तमिषुम् । अंशुभर्त्तुरर्कस्य मण्डलात् प्रवृत्तमंशुमिव । अत्रापीषुवज्जातावेकवचनम् । निवारयिष्यन् निवारयितुकामः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । धरित्रीं भुवं शिलीमुखानां छाया शिलीमुखच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तेन वृतां व्याप्तां व्याप्तां विदधे कृतवान् । शरजालच्छायावृतां धरित्रीमकरोदित्यर्थः । उपमालङ्कारः ॥ ४९ ॥

घनमिति । अयुगलोचनस्य विषमनेत्रस्येशस्यालोचनस्य । लोच्यते असौ लोचनः । कर्म्मणि ल्युट् । न लोचनः अलोचनः तस्यालोचनस्याचाक्षुषज्ञानविषयस्य सम्बन्धी सारो बलं वाणः शब्दस्ताभ्यां सारवाणाभ्यां स्थिरशब्दाभ्यां सह वर्त्तते इति ससारवाणः । बवयोरभेद इत्युक्तम् । न युज्यते कुत्रापीत्ययुक् सङ्गरहितः । क्विप् । बाणः शरः जातावेकवचनम् । घनं सान्द्रमर्ज्जुनस्य बाणपूगं शरव्रातं विदार्य्य विभिद्य घनं निविड़ं विदार्य्यौ भूमिकूष्माण्डो लताविशेषा अर्ज्जुनाः ककुभवृक्षा बाणा नीलसैरेयकाः पूगाः क्रमुकास्तेषाम् । 'विभाषा वृक्ष—' इत्यादिना द्वन्द्वैकवद्भावः । विदार्य्यार्ज्जुनबाणपूगं ससार । निविवेशेत्यर्थः । 'सृ गतौ' । यद्वा तदानीमेव युगलोचनस्यार्ज्जुनस्य बाणः ससारेत्यर्थः ॥ ५० ॥

चलाचलोऽनेक इव क्रियावशान्
महर्षिसङ्घैर्बुबुधे धनञ्जयः ॥५१॥

विकाशमीयुर्जगतीशमार्गणा:
विकाशमीयुर्जगतीशमार्गणाः ।
विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः ॥५२॥

संपश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्य्यम् ।

रुजन्नित्यादि। बहुधाशुपातिनः शीघ्रमापततो महेषून् मुहुः शरौघै रुजन् भञ्जयन्। तथा दिशश्चापवारयन्नाच्छादयन् क्रियावशात् तत्तद्गतिवशात् युद्धकर्म्मायत्ततया चलाचलोऽतिचञ्चलो धनञ्जयोऽर्जुनो महर्षिसङ्घैरनेको बहुविध इव बुबुधे दृष्टो ॥५१॥

विकाशमिति। जगतीशस्य पृथिवीपतेरर्जुनस्य मार्गणा बाणा विकाशं विस्तारमीयुः। तथा जगति लोके ईशमार्गणाः शम्भुशरा विकाशं विषमगतिमीयुः प्रापुः भङ्गमीयुरित्यर्थः। तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्व्वन्तीति जगतीशा दानवाः। 'आतोऽनुपसर्गे कः'। तान् मारयन्तीति जगतीशमारः। म्रियतेर्ण्यन्तात् क्विप्। ते च ते गणाः प्रमथाश्च जगतीशमार्गणा विकाशमुल्लासमीयुः हर्षं प्रापुरित्यर्थः। अहो देवेऽप्यस्य पराक्रमप्रसरः इति विस्मयादिति भावः। तदानीं मार्गयन्तीति मार्गणा अन्वेषकाः कर्त्तरि ल्युट्। जगतीशस्य त्रैलोक्यनाथस्य मार्गणा अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां पक्षिणां काशो गतिरत्रेति विकाशमाकाशमीयुः। दिदृक्षयेति भावः ॥ ५२ ॥

अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं बिभरांबभूवुः ॥५३॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये
पञ्चदशः सर्गः ॥१५॥

संपश्यतामिति। इतीत्थं शिवेन वितायमानं विस्तार्यमाणम्। 'तनोतेर्यकि' इति वैकल्पिक आकारादेशः। लक्ष्मीवती जयश्रीमतः। 'मादुपधायाः—' इत्यादिना मतुपो मस्य वकारः। क्षितिपतेस्तनयस्यार्जुनस्य वीर्यं शौर्यं संपश्यतां तत्त्वविदामपि हरेरंशावतारोऽयमिति विदुषामपि किमुतान्येषामिति भावः। मुनीनामङ्गानि गात्राण्यभिन्नमविरलमञ्चिततरमतिरुचिरं रोमाञ्चं रोमहर्षं बिभराम्बभूवु र्बभ्रुः। 'भीह्री—' इत्यादिना विकल्पादाम्प्रत्ययः ॥५३॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किराताताजुर्नीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
पञ्चदशःसर्गः समाप्तः ॥१५॥

—

# षोड़शः सर्गः ।

—— * ——

ततः किराताधिपतेरलघ्वी-
माजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्क-
श्चिरं विचिन्वन्निति कारणानि ॥१॥

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढ़ाः ।
सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्तः ॥२॥

तत इति । ततोऽनन्तरं किराताधिपतेः सम्बन्धिनीमलघ्वीं गुर्वीमाजिक्रियां रणकर्म्म वीक्ष्य विवृद्धमन्युर्विवृद्धकोपो विविक्तो निष्कलङ्कस्तर्के ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभरशक्तिकारणानि विचिन्वन् विमृशन्नितीत्थं वक्ष्यमाणप्रकारेण तर्कयामासाभ्यूहितवान् ॥१॥

अथ त्रयोविंशतिश्लोकैर्वितर्कमेवाह—मदेत्यादि । इहास्मिन् युद्धे मदस्रुतिभिर्मदप्रवाहैः श्यामाः कृताः श्यामिता गण्डलेखाः कपोलभागा येषां ते विक्रान्ताः पराक्रमं कुर्वन्तः । कर्त्तरि क्तः । 'शूरो वीरश्च विक्रान्तः' इत्यमरः । तैर्नरैरधिरूढ़ाः सहिष्णवो रणभरक्षमा युधां युद्धानामभिज्ञाः । शिक्षिता इत्यर्थः । क्रद्योगात् कर्म्मणि षष्ठी । किञ्च नगानामुच्छ्रायं

विचित्रया चित्रयतेव भिन्नां
रुचं रवेः केतनरत्नभासा।
महारथौघेन न संनिरुद्धा
पयोदमन्द्रध्वनिना धरित्री ॥३॥

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपंक्ति।
विभिन्नमर्य्यादमिहाततनोति
नाश्वीयमाशा जलधेरिवाम्भः ॥४॥

पर्वतानामौन्नत्यम्। घञन्तेनोपसर्गस्य समासो नोपसृष्टाद्घञ् प्रत्ययः। 'श्रिणीभुवोऽनुपसर्गे इत्यत्रानुपसर्गं इति निषेधात्। आक्षिपन्तः प्रतिषेधयन्त इव स्थिता। तथोन्नता इत्यर्थः। नागा गजा इह संग्रामे न क्रामन्ति न चरन्ति। यथा युद्धान्तरेष्विति शेषः। एवमुत्तरत्रापि सर्वत्र द्रष्टव्यम्। तथापि कथं मे शक्तिह्रासोऽयमिति सर्वत्र तात्पर्य्यार्थः ॥ २ ॥

विचित्रेति। विचित्रया नानावर्णया केतनानां रत्नानि तेषां भासा प्रभया भिन्नां सम्वलितां रवे रुचं कान्तिं चित्रयता विचित्रवर्णां कुर्वतेव स्थितेनेति केतनौन्नत्यनिमित्तेयमुत्प्रेक्षा। पयोदमन्द्रध्वनिना मेघगम्भीर-घोषेण महतां रथानामोघेन समूहेन धरित्री न सन्निरुद्धा नावृता ॥३॥

समुल्लसदिति। इह युद्धे प्रासाः कुन्ताः। 'प्रासस्तु कुन्तः' इत्यमरः। ते महोर्म्मय इव तेषां मालाः समुल्लसन्त्यो यत्र तत् समुल्लसत् प्रासमहोर्म्मि-मालम्। चामराणि फेना इव चामरफेनास्तेषां पङ्क्तयः परिस्फुरन्त्य-श्चामरफेनपङ्क्तयो यत्र तत्तथोक्तम्। अश्वीयमश्वसमूहः। 'द्वन्द्वे त्वश्वीयमाश्ववत्' इत्यमरः। जलधेरम्भ इव विभिन्नमर्य्यादमुच्छृङ्खलं यथा तथाशा दिशो नातनोति नावृणोति ॥ ४ ॥

हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे
विवस्वदंशुज्वलिताः पतन्ति ॥५॥

अभ्यायतः सन्ततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि मातरिश्वा ॥६॥

भूरेणुना रासभधूसरेण
तिरोहिते वर्त्मनि लोचनानाम् ।

हतेति। हत प्रहरताहत विध्यत। हन्तेर्लोट् मध्यमपुरुष-बहुवचनम्। 'अनुदात्तोपदेश—' इत्यादिनानुनासिकलोपः। आहते-त्यत्र कर्मणः प्रयोगासम्भवेऽपि हन्तेः स्वाभाविकसकर्मकत्वस्यान-पायात्। अकर्मकत्वस्य चात्र विवक्षितत्वेन कर्मनिवृत्तेव तन्निवृत्तेः 'आङो यमहनः' इत्यात्मनेपदम्। इत्येवमुद्धताः प्रगल्भा भीमाश्च घोषा येषां तैर्योद्धृभिर्योधैरभ्यमित्रममित्रानभि समुज्झिता मुक्ता विवस्वतः अंशुभिः प्रतिफलितैरिति भावः। ज्वलिता दीपिता अतएव प्राप्ता-स्तडितां त्विष इव त्विषो याभिस्ता हेतयः शस्त्राणि खे न पतन्ति। समु-न्नमन्तो न दृश्यन्त इत्यर्थः। 'हेतिः स्यादायुधे' इति विश्वः ॥५॥

अभ्येति। अभ्यायतो वीरान् हन्तुमभ्यागच्छतः। इणः शतृप्रत्ययः। अन्तकस्य कालस्य सम्बन्धि सन्ततं सततं धूमवद् धूम्रं व्यापि व्यापकं प्रभाजालमिव स्थितं प्रतूर्णैर्वेगवद्भिरश्वैः रथाङ्गैः रथचक्रैश्च नुन्नं प्रेरितं रजो मातरिश्वा मरुद्व्योमनि अन्तरिक्षे न तनोति न विस्तारयति ॥६॥

नास्त्यत्र तेजस्विभिरुत्सुकाना-
मह्नि प्रदोषः सुरसुन्दरीणाम् ॥७॥

रथाङ्गसंक्रीडितमश्वहेषा
बृहन्ति मत्तद्विपबृंहितानि ।
संघर्षयोगादिव मूर्च्छितानि
ह्रादं निरुन्धन्ति न दुन्दुभीनाम् ॥८॥

अस्मिन् यशः पौरुषलोलुपाना-
मरातिभिः प्रत्युरसं क्षतानाम् ।

भूरेणुनेति । अत्राहवे रासभो गर्दभस्तद्वद् धूसरेणेषत् पाण्डुना । 'रासभो गर्दभः खरः' इत्यमरः । 'ईषत्पाण्डुस्तु धूसरः' इति च । भुरेणुना रजसा लोचनानां वर्त्मनि चक्षुर्मार्गे तिरोहिते सति तेजस्विभिस्तेजस्विषु वीरेषूत्सुकानाम् वीरवरणार्थमागतानामित्यर्थः । 'प्रसितोत्सुकाभ्यां तृतीया च' इति विकल्पात्तृतीया । सुरसुन्दरीणामह्नि दिवसे एव प्रदोषो रात्रिमुखं नास्ति अन्धकारवत्त्वाद्दृष्टेस्तिरोधानात् रात्रिभ्रमः स्यादिति भावः ॥७॥

रथाङ्गेति । रथाङ्गसंक्रीडितं रथचक्रकूजितमश्वानाञ्च हेषा ह्रेषितानि शब्दितानि । 'अश्वानां हेषा ह्रेषा च निःस्वनः' इत्यमरः । बृहन्ति महान्ति मत्तद्विपानां बृंहितानि । 'बृंहितं करिगर्जितम्' इत्यमरः । सङ्घर्षयोगादिव परस्परस्पर्द्धासम्बन्धादिव मूर्च्छितानि वृद्धिं गतानि सन्ति 'नपुंसकमनपुंसक—' इत्यादिना नपुंसकैकशेषः । दुन्दुभीनां भेरीणां ह्रादं निर्घोषम् । 'स्वाननिर्घोषनिर्ह्राद—' इत्यमरः । न निरुन्धन्ति न तिरस्कुर्वन्ति ॥८॥

मूर्च्छान्तरायं मुहुरुच्छिनत्ति
नासारशीतं करिशीकराम्भः ॥९॥

असृङ्नदीनामुपचीयमानै-
र्विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैः
पङ्कैरिवाश्यानघनैस्तटानि ॥१०॥

परिक्षते वक्षसि दन्तिदन्तैः
प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानां
मन्दारमाला विरलीकरोति ॥११॥

अस्मिन्निति। अस्मिन् रणे यशःपौरुषयोर्लोलुपानां उरश्छूनामत एवारातिभिः प्रत्युरसमुरसि। 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तः। क्षतानां विद्धानां सम्बन्धिनं मूर्च्छैवान्तरायो रणविघ्नस्तमासारशीतं वर्षधाराशीतलम्। 'धारासम्पात आसारः' इत्यमरः। करिणां शीकर एवाम्भः कर्तृ मुहुर्नोच्छिनत्ति न नाशयति ॥९॥

असृगिति। असृङ्नदीनां तटान्युपचीयमानैरुपचयं नीयमानैस्तथा ध्वजिन्याः पदवीं विदारयद्भिर्दुःसञ्चारां कुर्वद्भिः। 'विदूरयद्भिः' इति पाठे विदूरां दूरसञ्चारां कुर्वद्भिः। आश्याना ईषच्छुष्काः। 'संयोगादेरातो धातोर्यण्वतः' इति श्यायतेर्निष्ठानत्वम्। घनाः सान्द्रास्तैराश्यानघनैः शोणितौघैः पङ्कैरिवोच्छ्रायं वृद्धिं नायान्ति न प्राप्नुवन्ति ॥१०॥

परीति। इह रणे दन्तिदन्तैर्गजदन्तैः परिक्षते ताडिते वक्षसि नभसः पतन्ती प्रियाया अङ्क इव शीता शीतला सुखकरी मन्दारमाला। सुर

निषादिसंनाहमणिप्रभौघे
परीयमाणे करिशीकरेण ।
अर्कत्विषोन्मीलितमभ्युदेति
न खण्डमाखण्डलकार्मुकस्य ॥१२॥

महीभृता पक्षवतेव भिन्ना
विगाह्य मध्यं परवारणेन ।
नावर्तमाना निनदन्ति भीम-
मपां निधेराप इव ध्वजिन्यः ॥ १३ ॥

महारथानां प्रतिदन्त्यनीक-
मधिस्यदस्यन्दनमुत्थितानाम् ।

स्तुरैर्मुक्तेति शेषः। प्रियं येषां तेषां प्रियसाहसंसानाम्। यतो गजाभियायिनामिति भावः। प्रमोहं प्रहारमूर्च्छां न विरलीकरोति:न मन्दीकरोति। नापनयतीति यावत् ॥११॥

निषादीति। करिणां शीकरेण पुष्करतुषारेण परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहा 'हस्त्यारोहा निषादिनः' इत्यमरः। तेषां संनाहाः कवचानि तेषां मणिप्रभौघे रत्नांशुजालेऽर्कस्य त्विषा तेजसोन्मीलितमुत्पादितमाखण्डलकार्मुकस्येन्द्रधनुषः। 'आखण्डलः सहस्राक्षः' इत्यमरः। खण्डं नाभ्युदेति ॥१२॥

महीति। पक्षवता सपक्षेण महीभृता मैनाकेनेव परवारणेन शत्रुगजेन मध्यं विगाह्य प्रविश्य भिन्नाः क्षोभिता ध्वजिन्यः सेनाः। 'ध्वजिनी वाहिनी सेना' इत्यमरः। अपां निधेः सागरस्याप इव। आवर्तमाना भ्रमन्त्यः सत्यः। 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। भीमं न निनदन्ति ॥ १३ ॥

कि—स

आमूललूनैरतिमन्युनेव
मातङ्गहस्तैर्व्रियते न पन्था: ॥१४॥

धृतोत्पलापीड इव प्रियाया:
शिरोरुहाणां शिथिल: कलाप: ।
न बर्हभार: पतितस्य शङ्को-
र्निषादिवक्ष:स्थलमातनोति ॥१५॥

उज्झत्सु संहार इवास्तसंख्य-
मह्नाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्यु: ॥१६॥

महारथानामिति । प्रतिदन्त्यनीकं दन्तिसैन्यं प्रति । 'अनीकस्तु रणे सैन्ये' इति विश्व: । अधिस्यदा महारया स्यन्दना रथा यत्र तत्तथा । 'रंहस्तरसी तु रय: स्यद:' इत्यमर: । उत्थितानां प्रस्थितानां महारथानां रथिकविशेषाणाम् । 'आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नर: । स महारथसंज्ञ: स्यादित्याहुर्नीतिकोविदा:' इति लक्षणात् । पन्था मार्ग आमूलं लूनैश्छिन्नैर्मातङ्गहस्तैर्नागकरैरतिमन्युनातिक्रोधेनेव न व्रियते न निरुध्यते ॥१४॥

धृतेति । पतितस्य वक्षसि मग्नस्य शङ्कोस्तोमरस्य सम्बन्धी । 'वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्' इत्यमर: । बर्हभारस्तन्मूलबद्धो लाञ्छनपिच्छकलापो धृत उत्पलापीड: कुवलयशेखरो यस्मिन् स प्रियाया: सम्बन्धी शिथिल: स्रस्त: शिरोरुहाणां कलाप: केशपाश इव निषादिनो हस्त्यारोहस्य वक्ष:स्थलं नातनोति न व्याप्नोति ॥१५॥

उज्झत्स्विति । अत्राहवे संहारे कल्पान्त इव तेजस्विषु वीरेष्वस्तसंख्यमसंख्यं यथा तथाह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमर: ।

इयं च दुर्वारमहारथाना-
माक्षिप्य वीर्यं महतां बलानाम्।
शक्तिर्ममावस्यति हीनयुद्धे
सौरीव ताराधिपधाम्नि दीप्तिः ॥१७॥
माया स्विदेषा मतिविभ्रमो वा
ध्वस्तं नु मे वीर्यमुताहमन्यः।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते ॥१८॥

जीवितान्युज्झतस्तु त्यजतस्तु सतस्तु मृत्युर्लोकत्रयस्यास्वादने भक्षणे लोलाग्रभुजिह्वा यस्मिंस्तदाननं न व्याददाति न विवृणोति। 'आङो दोऽनास्यविहरणे' इत्यत्रानास्यविहरण इति निषेधादात्मनेपदम् ॥१६॥

सत्यमेवं। तथापि किमेतत् कुत्सितम्। तत्राह—इयमिति। इयं मम शक्तिश्च दुर्वाराः पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्यमाक्षिप्य निरस्य ताराधिपधाम्नि चन्द्रतेजसि। सूर्यस्येयं सौरी। 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति स्त्रियां ङीष् यकारस्य लोपः। दीप्तिरिव हीनयुद्धे किरातरणेऽवस्यत्यवसीदति। एतच्च विरुद्धमत्यद्भुतं चेति भावः। 'षोऽन्तकर्मणि' इति धातोर्लट् ॥१७॥

मायेति। एषा शक्तिह्रासरूपा माया स्वित् देवताक्षोभणं नाम। मतिविभ्रमो बुद्धिविपर्ययो वा। अथवा मे वीर्यं ध्वस्तं नष्टं नु। उताहमन्योऽर्जुनो न वा। कुतः। हि यस्मात् गाण्डीवमुक्ता मे शराः पुरा यथापूर्व्वम्। परिपन्थिष्विवेत्यर्थः। किराते न पराक्रमन्ते अप्रतिबन्धेन न प्रवर्त्तन्ते। 'उपपराभ्याम्' इति वृत्तावात्मनेपदम्। वृत्तिरप्रतिबन्धः ॥१८॥

पुंसः पदं मध्यममुत्तमस्य
द्विधेव कुर्वन् धनुषः प्रणादैः ।
नूनं तथा नैष यथास्य वेषः
प्रच्छन्नमप्यूहयते हि चेष्टा ॥१९॥

धनुः प्रबन्धध्वनितं रुषेव
सकृद्विकृष्टा वि.तेव मौर्वी ।
सन्धानमुत्कर्षमिव व्युदस्य
मुष्टेरसंभेद इवापवर्गे ॥२०॥

अंसाववष्टब्धनतौ समाधि
शिरोधरायाः रहितप्रयासः ।

पुंस इति । किञ्च । उत्तमस्य पुंसः पुरुषोत्तमस्य मध्यमं पदमाकाशं धनुषः प्रणादैः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । द्विधा कुर्व्वन्निव विदारयन्निव स्थित एष किरातो नूनं तथा तथाभूतो न । कीदृशस्तत्राह—अस्य पुरुषस्य यथा यथाभूतो वेषः । वर्त्तत इति शेषः । वेषत एवायं किरातो न स्वरूपा इत्यर्थः । कुतः । हि यस्माच्चेष्टा व्यापारः प्रच्छन्नमपि निगूढमपि स्वरूपमूहयते तर्कयति । तस्याः स्वभावादव्यभिचारादिति भावः ॥ १९ ॥

अथ चतुर्भिर्व्वेष्टामेवाचष्ट—धनुरिति । धनू रुषेव प्रबन्धेनाविच्छेदेन ध्वनितम् । ध्वनतेः कर्त्तरि क्तः मौर्वी च सकृद्विकृष्टा विततैवैकवाराकर्षणादेव विततेव स्थिता । सन्धानं वाणसन्धानमुत्कर्षं तूणादुद्धरणं व्युदस्येव वर्ज्जयित्वा । किन्तु कृतमिति शेषः । अपवर्गे वाणमोक्षेऽपि मुष्टेरसंभेदोऽसंघटनमिव । मुष्टिबन्धं विनैव वाणमोक्षः कृत इवेति हस्तलाघवोक्तिः ॥२०॥

धृता विकारांस्त्यजता सुखेन
प्रसादलक्ष्मीः शशलाञ्छनस्य ॥२१॥

प्रहीयते कार्य्यवशागतेषु
स्थानेषु विष्टब्धतया न देहः ।
स्थितप्रयातेषु ससौष्ठवश्च
लक्ष्येषु पातः सदृशः शराणाम् ॥२२॥

परस्य भूयान् विवरेऽभियोगः
प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा
न सम्भवत्येव वनेचरेषु ॥२३॥

अंसाविति । किञ्च । अंसावष्टब्धौ स्थिरावृत्थापितौ च तौ नतौ । चावष्टब्धनतौ शिरोधरायाः कन्धरायाः सम.धिः संस्थादविशेषे रहितः प्रयासो यस्य स तथोक्तः । निःप्रयास इत्यर्थः । तथा विकारांस्त्यजता । जितश्रमत्वान्निर्विकारेणेत्यर्थः । सुखेन शशलाञ्छनस्येन्दोः प्रसादलक्ष्मी- र्धृता । असम्भवत् सम्बन्धो निदर्शनालङ्कारः ॥२१॥

प्रहीयत इति । कार्य्यवशेन प्रयोजनवशेनागतेषु स्थानेष्वालीढादि- स्थानकेषु देहो विष्टब्धतया स्थिरतया कर्त्र्या न प्रहीयते न त्यज्यते । किन्तु स्थिर एव तिष्ठतीत्यर्थः । सुष्ठु भावः सौष्ठवं लाघवम् । युवादिभ्यो- दण्प्रत्ययः । तेन सह वर्त्तमानः ससौष्ठवः शराणां पातश्च स्थितान्यचलानि प्रयातानि चलानि तेषु स्थितप्रयातेषु चलाचलेषु लक्ष्येषु विषये सदृश एकरूपः ॥२२॥

परस्येति । किञ्च परस्य विवरे रन्ध्रे । अल्पेऽपीति शेषः । भूयान् भूयिष्ठः प्रसह्यझटिति अभियोगो ग्रहाद्बलम् । परस्य रन्ध्रग्रहाद्बलात् प्रहार उद्योग इत्यर्थः । आत्मनो रन्ध्रे विवरे अनल्पेऽपीति शेषः । प्रसह्य झटिति

अप्राकृतस्याहवदुर्मदस्य
निवार्यमस्यास्त्रबलेन वीर्यम् ।
अल्पीयसोऽप्यामयतुल्यवृत्ते-
र्महापकाराय रिपोर्विवृद्धिः ॥२४॥

स सम्प्रधार्य्यैव महार्य्यसारः
सारं विनेष्यन् सगणस्य शत्रोः ।
प्रस्वापनास्त्रं द्रुतमाजहार
ध्वान्तं घनानद्ध इवार्द्धरात्रः ॥२५॥

संरक्षणं गोपनञ्च । भूयिष्ठमिति शेषः । इदं द्वयं भीष्मेऽपि गुरौ वा द्रोणे वाप्यसम्भाव्यं दुर्वितर्क्यम् । वनेचरेषु न सम्भवत्येव । अतो नायं किरातः किंत्वेष तिरोहितवेषः कोऽप्यमानुषः पुरुष इति भावः ॥२३॥

अप्राकृतस्येति । अप्राकृतस्योक्तरीत्यासाधारणस्याहवदुर्मदस्य रणमत्तस्यास्य किरातस्य वीर्य्यं तेजोऽस्त्रबलेन दिव्यास्त्रमहिम्ना निवार्यं निवारणीयम् । अन्यथानिवार्य्यत्वमस्येति भावः । तथाहि—अल्पीयसोऽप्यत्यल्पस्याप्यामयतुल्यवृत्ते रोगसमानविक्रियस्य । 'रोगव्याधिगदामयाः' इत्यमरः । रिपोर्विवृद्धिर्महापकाराय । किन्त्वयं महानुभाव इति भावः ॥२४॥

स इति । महार्य्यसारोऽनिवार्य्यवीर्य्यः सोऽर्जुन एवं संप्रधार्य्य निश्चित्य सगणस्य सानुगस्य शत्रोः सारं सत्त्वं विनेष्यन्नपनेष्यन् । प्रस्वाप्यन्ते शाय्यन्तेऽनेनेति प्रस्वापनं तदेवास्त्रम् घनानद्धो मेघव्याप्तोऽर्धरात्रो निशीथः 'अर्द्धरात्रनिशीथौ द्वौ' इत्यमरः । 'अर्द्धं नपुंसकम्' इति समासः । 'अहः सर्वैकदेश—' इत्यादिना समासान्तः 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता । ध्वान्तमिव द्रुतमाजहाराचकर्ष ॥ २५ ॥

प्रसक्तदावानलधूमधूम्रा
निरुन्धती धाम सहस्ररश्मेः।
महावनानीव महातमिस्रा
छाया ततानेश्वलानि काली ॥२६॥

आसादिता तत्प्रथमं प्रसह्य
प्रगल्भतायाः पदवीं हरन्ती।
सभेव भीमा विदधे गणानां
निद्रा निरासं प्रतिभागुणस्य ॥२७॥

गुरु स्थिराण्युत्तमवंशजत्वाद्
विज्ञातसाराण्यनुशीलनेन।
केचित् समाश्रित्य गुणान्वितानि
सुहृत्कुलानीव धनूंषि तस्थुः ॥२८॥

प्रसक्तेति। प्रसक्तः सन्ततो यो यो दावानलधूमस्तद्वद्धूम्रा धूसरा सहस्ररश्मेर्धाम तेजो निरुन्धत्याद्वृण्वती काली कृष्णवर्णा। 'जानपद—' इत्यादिना ङीष्। छाया कान्तिः। ईश्वचलानि महातमिस्रा महती तमः सन्ततिः। 'तमिस्रा तु तमस्ततिः' इति विश्वः। महावनानीव ततान व्यानशे ॥ २६ ॥

आसादितेति। तदेवासादनं प्रथमं तत्प्रथमं यथा तथा प्रसह्यासादिता प्राप्ता कल्पिता प्रगल्भताया व्यवहारधार्ष्ट्यस्य पदवीं हरन्ती भीमा भयङ्करी निद्रा उक्तविशेषणा सभा संसदिव। गणानां प्रतिभा प्रज्ञाशक्तिः सैव गुणस्तस्य निरासं प्रतिभाक्षयं विदधे चक्रे ॥ २७ ॥

गुर्विति। केचिदुत्तमवंशजत्वाद्वंशो वेणुः कुलं च। 'वंशो वेणौ कुले च' इति विश्वः। गुरूणि महान्ति स्थिराणि दृढानि च गुरुस्थिराण्य-

कृतान्तदुर्वृत्त इवापरेषां
पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।
अतर्कितं पाणितलान्निपेतुः
क्रियाफलानीव तदायुधानि ॥२९॥

अंसस्थलैः केचिदभिन्नधैर्य्याः
स्कन्धेषु संश्लेषवतां तरूणाम् ।
मदेन मीलन्नयना सलीलं
नागा इव स्रस्तकरा निषेदुः ॥३०॥

तिरोहितेन्दोरथ शम्भुमूर्द्ध्नः
प्रणम्यमानं तपसां निवासैः ।
सुमेरुशृङ्गादिव बिम्बमार्कं
पिशङ्गमुच्चैरुदियाय तेजः ॥३१॥

अनुशीलनेन परिचयबलेन विज्ञातः सारो बलं येषां तानि गुणैर्मौर्व्वीभिः शौर्य्यादिभिश्चान्वितानि धनूंषि सुहृत्कुलानि मित्रकुलानीव समाश्रित्य तस्थुः । धनूंष्यवष्टभ्य निदध्युरित्यर्थः ॥२८॥

कृतान्तेति । कृतान्तदुर्वृत्ते दैवदुश्चेष्टित इव । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मसु' इति विश्वः । पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि सति प्रतिकूलवर्त्तिनि सति तदा तस्मिन्काले अपरेषामायुधानि क्रियाफलानि इव कृष्यादिफलानीव । अतर्कितमविचारितमेव पाणितलान्निपेतुः ॥२९॥

अंसेति । अभिन्नधैर्य्यास्तदानीमप्यच्युतधैर्य्याः केचिदंसस्थलैरंसभागैः सह संश्लेषवतां सङ्गच्छतां तरूणां स्कन्धेषु प्रकाण्डेषु मदेन मीलन्ति नयनानि येषां तैः नागा गजा इव स्रस्तकराः स्रस्तहस्ताः सन्तः सलीलं निषेदुर्निषण्णाः ॥३०॥

छायां विनिर्धूय तमोमयीं तां
तत्त्वस्य संवित्तिरिवापविद्याम् ।
ययौ विकाशं द्युतिरिन्दुमौले-
रालोकमभ्यादिशती गणेभ्यः ॥३२॥

त्विषां ततिः पाटलिताम्बुवाहा
सा सर्वतः पूर्वसरीव सन्ध्या ।
निनाय तेषां द्रुतमुल्लसन्ती
विनिद्रतां लोचनपङ्कजानि ॥३३॥

पृथग्विधान्यस्त्रविरामबुद्धाः
शस्त्राणि भूयः प्रतिपेदिरे ते ।
मुक्ता वितानेन बलाहकानां
ज्योतींषि रम्या इव दिग्विभागाः ॥३४॥

तिरोहितेति । अथ तिरोहितेन्दोः किरातमायया छन्नचन्द्राच्छम्भु-मूर्ध्नः सकाशात् । सुमेरुशृङ्गादर्कसम्बन्धि बिम्बमिव । तपसां निवासै-स्तापसैः प्रणम्यमानमभिवन्द्यमानं पिशङ्गं तेज उच्चै रूर्द्धमुदियाय प्रकटी-बभूव तत्र तत्र अटन्निति भावः तच्च न चान्द्रमिति ॥३१॥

छायामिति । इन्दुमौलेर्द्युतिः कान्तिः । तत्त्वस्य सम्वित्तिस्तत्त्वज्ञान-मपविद्यामिव तां तमोमयीं छायां निद्रां विनिर्धूय निरस्य गणेभ्य आलोकं वस्तुप्रकाशमभ्यादिशती वितरन्ती विकाशं विस्तारं ययौ ॥३२॥

त्विषामिति । सर्वतः पाटलिताः पाटलीकृताः अम्बुवाहा यया सा तथोक्ता त्विषां तेजसां ततिः । पूर्वां सरतीति पूर्वसरी । 'पूर्वे कर्तरि' इति टप्रत्यये ङीप् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वाशब्दस्य पुंवद्भावः । सन्ध्या प्रातः सन्ध्येवोल्लसन्ती प्रसरन्ती तेषां गणानां लोचन-पङ्कजानि द्रुतं विनिद्रतां विकासं निनाय ॥३३॥

द्यौरुन्ननामेव दिशः प्रसेदुः
स्फुटं विसस्रे सवितुर्मयूखैः ।
क्षयं गतायामिव यामवत्यां
पुनः समीयाय दिनं दिनश्रीः ॥३५॥
महास्त्रदुर्गे शिथिलप्रयत्नं
दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान् भुजवीर्य्यशाली
प्रबन्धनाय प्रजिघाय जिष्णुः ॥३६॥
जिह्वाशतान्युल्लसयन्त्यजस्रं
लसत्तड़िल्लोलविषानलानि ।

पृथगिति। अस्त्रविरामेण प्रस्वापनास्त्रोपरमेण बुद्धा विनिद्रास्ते गणा बलाहकानां वितानेन मेघपटलेन मुक्ता अत एव रम्या दिग्विभागा दिगन्ता ज्योतींषि नक्षत्राणीव। 'ज्योतिस्ताराग्निभाज्वालादृ ङ्क्प्रकाशरमात्मसु' इति वैजयन्ती। पृथग्विधानि नानाविधानि शस्त्राणि भूयः प्रतिपेदिरे। जगृहुरित्यर्थः ॥३४॥

द्यौरिति। तदा यामवत्यां रात्रौ क्षयं गतायां विभातायामिव द्यौरन्त-रिक्षमुन्ननामेवोर्ध्वमुत्पपातेवेत्युत्प्रेक्षा। दिशः प्रसेदुः। सवितुर्मयूखैः स्फुटं स्पष्टं विसस्रे विसृतम्। भावे लिट्। दिनश्रीर्घस्रकान्तिः पुनर्दिनं समीयाय संजगाम। अत्र वैयधिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयो-ऽलंकारः। तस्य च समुन्नमनोत्प्रेक्षयैव शब्दवाच्यानुप्रवेशलक्षणः सङ्करः। दिक्प्रसादो गुणः। शेषाः क्रियाः ॥३५॥

महास्त्रेति। भुजवीर्य्यशाली जिष्णुरर्जुनो महास्त्रं प्रस्वापनास्त्रं तद्-दुर्गमिव तस्मिन्महास्त्रदुर्गे दिग्वारणेन दिग्गजेनेव परेण शत्रुणा शिथिल-प्रयत्नमल्पप्रयासं यथा तथा रुग्णे भग्ने सति। 'रुजो भङ्गे'। कर्मणि क्तः। 'ओदितश्च' इति निष्ठातकारस्य नत्वम्। प्रबन्धनाय प्रकर्षेण बन्धनाय भुजङ्गा एव पाशास्तान् प्रजिघाय प्रहितवान् ॥३६॥

त्वासान्निरस्तां भुजगेन्द्रसेना
नभश्चरैस्तत्पदवीं विवव्रे ॥३७॥

दिङ्नागहस्ताकृतिमुद्वहद्भि-
र्भोगैः प्रशस्तासितरत्ननीलैः ।
रराज सर्पावलिरुल्लसन्ती
तरङ्गमालेव नभोऽर्णवस्य ॥३८॥

निःश्वासधूमैः स्थगितांशुजालं
फणावतामुत्फणमण्डलानाम् ।
गच्छन्निवास्तं वपुरभ्युवाह
विलोचनानां सुखमुष्णरश्मिः ॥३९॥

प्रतप्तचामीकरभासुरेण
दिशः प्रकाशेन पिशङ्गयन्त्यः ।

जिह्वेति । लसन्तस्तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि जिह्वाशतान्यजस्रमुल्लसयन्तो चलयन्तो भुजगेन्द्रसेना त्वासाद्भयान्नभश्चरैर्निरस्तां त्यक्तां तेषां नभश्चराणां पदवीं मार्गं विवव्रे विशेषेण रुरोध॥३७॥

दिङ्नागेति । दिङ्नागहस्ताकृतिमुद्वहद्भिर्दिक्करिकराकारैस्तथा प्रशस्तानि समीचीनान्यसितरत्नानीन्द्रनीलमणयस्तद्वन्नीलैर्भोगैः कायैरुपलक्षिता सर्पावलिरुल्लसन्ती प्रजृम्भन्ती नभ एवार्णवस्तस्य तरङ्गमालेव रराज । रूपकोत्थापितेयमुत्प्रेक्षा ॥३८॥

निःश्वासेति । उष्णरश्मिरस्तं गच्छन्निवोन्नमितानि फणामण्डलानि येषां तेषां फणावतां सर्पाणां निःश्वासेषु ये धूमास्तैः स्थगितमाच्छादितमंशुजालं यस्य तत्तथोक्तम् । अत एव विलोचनानां सुखं सुखकरं वपुरभ्युवाह ॥ ३९ ॥

निश्चक्रमुः प्राणहरेक्षणानां
ज्वाला महोल्का इव लोचनेभ्यः ॥४०॥

आक्षिप्तसम्पातमपेतशोभ-
मुद्वह्नि धूमाकुलदिग्विभागम् ।
वृत्तं नभो भोगिकुलैरवस्थां
परोपरुद्धस्य पुरस्य भेजे ॥४१॥

तमाशु चक्षुःश्रवसां समूहं
मन्त्रेण तार्क्ष्योदयकारणेन ।
नेता नयेनेव परोपजापं
निवारयामास पतिः पशूनाम् ॥४२॥

प्रतप्तेति । प्राणहराणीक्षणानि येषां तेषां प्राणहरेक्षणानां दृष्टिविषाणां सर्पविशेषाणां लोचनेभ्यो नेत्रेभ्यः । लोचनं नयनं नेत्रमित्यमरः प्रतप्तं यच्चामीकरं सुवर्णं तद्वद्भासुरेण । 'भञ्जभासमिदो घुरच्' इति घुरच् प्रत्ययः । प्रकाशेन तेजसा दिशःपिशङ्गयन्त्यो ज्वाला महोल्का इव निश्चक्रमुर्निर्जग्मुः ॥४०॥

आक्षिप्तेति । आक्षिप्तः प्रतिषिद्धः सम्पातः सञ्चारो यस्मिंस्तत् । सिद्धानां पक्षिणां चेति शेषः । अपेता गता शोभा यस्मात्तदपेतशोभं गतश्रीकम् । उन्नतः प्रदीप्तो वह्निर्यस्मिंस्तदुन्नतवह्नि सर्वत उद्भूतदहनम् । धूमैराकुला व्याप्ता दिग्विभागा दिगन्ताः यस्मिन् तत् । भोगिकुलैः सर्पकुलै-र्वृतमावृतं नभः परोपरुद्धस्य शत्रुवेष्टितस्य पुरस्यावस्थामिवावस्थां दशां भेजे । उक्तरीत्या तत्साधर्म्यं प्राप्तमित्यर्थः । निदर्शनालङ्कारः ॥४१॥

तमिति । पशूनां पतिः शिवस्तं चक्षुःश्रवसां सर्पाणां समूहं तार्क्ष्यो-दयकारणेन गरुडाविर्भावहेतुना मन्त्रेण नेता नायको नयेन नीत्या परेषा-मुपजापं परोपजापं परकृतं स्वमण्डलभेदमिव । "भेदोपजापावुपधा" इत्यमरः । आशु निवारयामास ॥४२॥

प्रतिघ्नतीभिः कृतमीलितानि
द्युलोकभाजामपि लोचनानि।
गरुत्मतां संहतिभिर्विहायः
क्षणप्रकाशाभिरिवावतेने ॥४३॥

ततः सुपर्णव्रजपक्षजन्मा
नानागतिर्मण्डलयन् जवेन।
जरत्तृणानीव वियन्निनाय
वनस्पतीनां गहनानि वायुः ॥४४॥

मनःशिलाभङ्गनिभेन पश्चात्
निरुध्यमानं निकरेण भासाम्।
व्यूढैरुरोभिश्च विनुद्यमानं
नभः ससर्पेव पुरःखगानाम् ॥४५॥

प्रतीति। द्युलोकभाजामप्यनिमेषाणामपि कृतं मीलनं निमेषो येषां तानि लोचनानि दृष्टीः प्रतिघ्नतीभिः प्रतिबध्नतीभिः। हन्तेः शतरि ङीप्। गरुत्मतां तार्क्ष्याणां संहतिभिः समूहैः क्षणप्रकाशाभिर्विद्युद्भिरिव। तासां सौवर्णत्वादिति भावः। विहायोऽन्तरिक्षमवतेने व्यानशे ॥४३॥

तत इति। ततः सुपर्णव्रजानां तार्क्ष्यकुलानां पक्षेभ्यो जन्म यस्य स नानागतिर्विचित्रगतिर्वायुर्वनस्पतीनां वृक्षाणां गहनानि जरत्तृणानि जीर्णतृणानीव जवेन मण्डलयन् भ्रमयन् वियदन्तरिक्षं निनाय ॥४४॥

मनःशिलेति। मनःशिला धातुविशेषस्तस्या भङ्गश्छेदस्तन्निभेन तत्सदृशेन भासां निकरेण कान्तिपुञ्जेन पश्चाद्भागे निरुध्यमानमाव्रियमाणं व्यूढैर्विशालैरुरोभिर्वक्षोभिश्च। 'उरो वत्सं च वक्षश्च' इत्यमरः। विनुद्यमानं प्रेर्यमाणं नभः खगानां गरुडानां पुरः ससर्पेव ससारेव। उत्तरोत्तर-

दरीमुखैरासवरागताम्रं
विकासि रुक्मच्छदधाम पीत्वा।
जवानिलाघूर्णितसानुजालो
हिमाचलः क्षीब इवाचकम्पे ॥४६॥

प्रवृत्तनक्तन्दिवसन्धिदीप्तै-
र्नभस्तलं गां च पिशङ्गयद्भिः।
अन्तर्हितार्कैः परितः पतद्भिः
छायाः समाचिक्षिपिरे वनानाम् ॥४७॥

स भोगिसङ्घः शममुग्रधाम्नां
सैन्येन निन्ये विनतासुतानाम्।

देशतिरोधानेन गच्छतां खगानामपूर्वोऽपि पुरोभागः साहश्यात् पूर्ववदुपलभ्यमानतया नभस एव छेदनात् पुरः ससर्पेवेत्युत्प्रेक्षा ॥४५॥

दरीति। जवानिलेनाघूर्णितानि भ्रमितानि सानुजालानि यस्य स हिमाचलः। आसवस्य रागो रक्तता तद्वत् ताम्रम्। गुणयोरेवोपमानोपमेयभावः। विकासि विकस्वरं रुक्मच्छदाः सुवर्णपक्षास्ताक्ष्या-स्तेषां धाम तेजो दरीभिर्मुखैरिव दरीमुखैः पीत्वा क्षीबो मत्त इवाचकम्पे आचचाल। उपमाव्यापितेयमुत्प्रेक्षा ॥४६॥

प्रवृत्तेति। नक्तञ्च दिवा च नक्तन्दिवम्। 'अचतुर—' इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वे कवङ्गावनिपाते समासान्तः। लक्षणया त्वहोरात्रमात्रवाची। प्रवृत्तः प्रादुर्भूतो यो नक्तन्दिवस्य सन्धिः सन्ध्या तद्वद्दीप्तैः शोभितैर्नभस्तलं गां भुवञ्च पिशङ्गयद्भिः पिशङ्गीकुर्वद्भिरन्तर्हित आच्छादितोऽर्को यैस्तैः पतद्भिः पक्षिभिः परितः सर्वतो वनानां छायाः समाचिक्षिपिरे समाक्षिप्ताः। अन्तर्बहिश्च तेजःप्रकाशात् क्वाप्यन्तर्हिता इत्यर्थः ॥४७॥

महाध्वरे विध्यपचारदोषः
कर्म्मान्तरेणेव महोदयेन ॥४८॥

साफल्यमस्त्रे रिपुपौरुषस्य
कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः
समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥४९॥

ऊर्द्धं तिरश्चीनमधश्च कीर्णै-
र्ज्वालासटैर्लङ्घितमेघपंक्तिः ।
आयस्त सिंहाकृतिरुत्पपात
प्राण्यन्तमिच्छन्निव जातवेदाः ॥५०॥

स इति । स भोगिसङ्घः सर्पसमूहः उग्रधाम्नां तेजस्विनां विनतासुतानां तार्क्ष्याणां सैन्येन महाध्वरे महाक्रतौ विध्यपचारदोषः कर्म्मस्खलनदोषो महोदयेन महासामर्थ्येनाथवा महता फलेन । तन्मूलेन प्रकृतक्रियासिद्धेरिति । कर्म्मान्तरेण प्रायश्चित्तेनेव शमं शान्तिं निन्ये प्रापितः ॥४८॥

साफल्यमिति । अस्त्रे सर्पास्त्रे । भाग्ये प्रागभवीये शुभे कर्म्मणि इव । रिपुपौरुषस्य रिपुपराक्रमस्य साफल्यं कृत्वापवर्गमवसानं समाप्तिं गते सति । स्वनिवृत्त्या परसाफल्यात् सफलीकरणोपचारः । समन्युः सक्रोधो जिष्णुरर्ज्जुनोऽनिन्धनस्येन्धनं विनैवोत्पादितस्य ज्वलनस्य ज्वलनप्रदीपकमस्त्रमाग्नेयास्त्रं प्रसभं शीघ्रं समाददे जग्राह ॥४९॥

ऊर्द्धमिति । ऊर्द्धं तिरश्चीनं तिर्य्यक् । 'विभाषाञ्चेरदिक् स्त्रियाम्' इति खप्रत्ययः । अधश्च कीर्णैर्विस्तृतैर्ज्वाला एव सटाः केसराः । 'सटा जटाकेसरयोः' इति विश्वः । तैर्लङ्घितमेघपंक्तिरतिक्रान्तजलदावलिरायतस्य लङ्घनोद्यतस्य सिंहस्येवाकृतिर्यस्य स जातवेदा अग्निः प्राण्यन्तं प्राणिनां संहारमिच्छन् इवोत्पपात ॥५०॥

भित्त्वेव भाभिः सवितुर्मयूखान्
जज्वाल विष्वग्विसृतस्फुलिङ्गः ।
विदीर्य्यमाणाश्मनिनादघोरं
ध्वनिं वितन्वन्नकृशः कृशानुः ॥५१॥

चयानिवाद्रीनिव तुङ्गशृङ्गान्
क्वचित् पुराणीव हिरण्मयानि ।
महावनानीव च किंशुकानां
ततान वह्निः पवनानुवृत्त्या ॥५२॥

मुहुश्चलत् पल्लवलोहिनीभि-
रुच्चैः शिखाभिः शिखिनोऽवलीढ़ाः ।
तलेषु मुक्ताविशदा बभूवुः
सान्द्राञ्जनश्यामरुचः पयोदाः ॥५३॥

भित्त्वेति । भाभिस्तेजोभिः सवितुर्मयूखान् किरणान् । 'किरणोस्र-मयूखांशु—' इत्यमरः । भित्त्वेवाभिहत्येव विष्वक्समन्ताद्विसृताः स्फुलिङ्गा यस्य सः । स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वमुत्प्रेक्षते । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । अकृशोऽतनुः कृशानुर्वह्निर्विदीर्य्य-मानस्य विदलतोऽश्मनो निनादमिव घोरमुद्धतं ध्वनिं वितन्वन् जज्वाल ॥ ५१ ॥

चयानिति । वह्निः पवनानुवृत्त्या वायुवशेन चयानिव हिरण्मयान् प्राकारानिव । 'चयः समूहे प्राकारे' इति विश्वः । तुङ्गशृङ्गानद्रीनिव क्वचिद् हिरण्मयानीति 'दाण्डिनायन—' इत्यादिना निपातनात् साधुः । पुराणि नगराणीव तथा किंशुकानां पलाशतरूणाम् । 'पलाशे किंशुकः पर्णः' इत्यमरः । महावनानीव । पुष्पितानीति शेषः । ततान वितस्तार । तदाकारेण जज्वालेत्यर्थः ॥५२॥

लिलिक्षतीव क्षयकालरौद्रे
लोकं विलोलार्चिषि रोहिताश्वे।
पिनाकिना हूतमहाम्बुवाह-
मस्त्रं पुनः पाशभृतः प्रणिन्ये ॥५४॥

ततो धरित्रीधरतुल्यरोधस-
स्तडिल्लतालिङ्गितनीलमूर्त्तयः।
अधोमुखाकाशसरिन्निपातिनी-
रपः प्रसक्तं मुमुचुः पयोमुचः ॥५५॥

मुहुरिति। सान्द्राञ्जनश्यामरुचो घनकज्जलश्यामरुचः पयोदा मुहुस्खलन्त्यश्च ताः पल्लवलोहिन्यो लोहितवर्णाश्च ताभिस्खलत्पल्लवलोहिनीभिः। 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्। तकारस्य नकारः। शिखिनोऽग्ने रुच्चै रुन्नताभिः शिखाभिर्ज्वालाभिरवलीढाः दग्धा इत्यर्थः। अत एव तलेषु अधोभागेषु मुक्ताविशदा मौक्तिकधवला बभूवुः जलसंशोषणादिति भावः 'अधःस्वरूपयोरस्त्रीतलम्' इत्यमरः ॥५३॥

लिलिक्षतीति। क्षयकालरौद्रे कल्पान्तकालभयावहे विलोलार्चिषि चलज्ज्वाले रोहिताश्वे ज्वलने 'रोहिताश्वो वायुसखः' इत्यमरः। लोकं लिलिक्षति लेढुमिच्छति जिघत्सति सतीव। लिहेः सन्नन्ताच्छतृप्रत्ययः। पिनाकिना पुनर्हूताः आहूताः आकारिताः महाम्बुवाहाः येन तत्पाशभृतो वरुणस्यास्त्रं प्रणिन्ये प्रयुक्तम् ॥ ५४ ॥

तत इति। ततो वरुणास्त्रप्रयोगानन्तरं धरित्रीधरतुल्यरोधसः पर्वतसमप्रान्ताः। 'रोधः स्यात् प्रान्तकूलयोः' इति विश्वः। तडिल्लताभिरालिङ्गिता नीलमूर्त्तयो नीलाङ्गानि येषां ते पयोमुचो मेघा अधोमुखी आकाशसरिदिव निपतन्तीत्यधोमुखाकाशसरिन्निपातिनीः। 'कर्त्तर्युपमाने' इति णिनिः। अपो जलानि प्रसक्तमनुबन्धमविच्छिन्नं यथा तथा मुमुचुः। इतः प्रभृति वंशस्थवृत्तम् ॥५५॥

पराहतध्वस्तशिखे शिखावतो
वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं
पयोनिपाताः प्रथमे वितेनिरे ॥५६॥

महानले भिन्नसिताभ्रपातिभिः
समेत्य सद्यः क्वथनेन फेनताम् ।
व्रजद्भिरार्द्रेन्धनवत् परिक्षयं
जनैर्वितेने दिवि धूमसन्ततिः ॥५७॥

स्वकेतुभिः पाण्डुरनीलपाटलैः
समागताः शक्रधनुःप्रभाभिदः ।
असंस्थितामादधिरे विभावसो-
र्विचित्रचीनांशुकचारुतां त्विषः ॥५८॥

पराहतेति । पराहता आसाराभिहता अतो ध्वस्ता निर्वापिताः शिखा ज्वाला यस्य तस्मिन् पराहतध्वस्तशिखे । अधिक्षिप्तं प्रहारितं नाशितम् ; ताडितमिति यावत् । अतः समिद्धं झटिति प्रदीप्तं तेजो यस्य तस्मिन् शिखावतोऽग्नेर्वपुषि स्वरूपे तप्ते अयसि लोह इव कृतास्पदाः कृतस्थितयः । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । प्रथमे पयोनिपाता जलपाता ध्वनिं वितेनिरे विस्तारयामासुः ॥५६॥

महानल इति । महानलेऽग्नौ भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः 'कर्त्तर्युपमाने' इति णिनिप्रत्ययः । अत एव सद्यः क्वथनेन पाकेन फेनतां समेत्य प्राप्य परिक्षयं नाशं व्रजद्भिर्जलैराद्रेन्धनवदार्द्रकाष्ठतुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । दिवि गगने धूमसन्ततिर्वितेने विस्तारिता फेनादिकमार्द्रेन्धनेऽपि तुल्यम् ॥ ५७ ॥

जलौघसंमूर्च्छनमूर्च्छितस्वनः
प्रसक्तविद्युल्लसितैधितद्युतिः ।
प्रशान्तिमेष्यन् धृतधूममण्डलो
बभूव भूयानिव तत्र पावकः ॥५९॥

प्रवृद्धसिन्धूर्म्मिचयस्थवीयसां
चयैर्विभिन्नाः पयसां प्रपेदिरे ।
उपात्तसंध्यारुचिभिः सरूपतां
पयोदविच्छेदलवैः कृशानवः ॥६०॥

स्वकेतुभिरिति । पाण्डुरैर्नीलैः पाटलैश्च पाण्डुरनीलपाटलैर्विचित्रैः स्वकेतुभिर्धूमैः समागताः सङ्गताः अत एव शक्रधनुषः प्रभाभिद इन्द्रधनुर्द्युतिभाजो विभावसोरग्नेस्त्विषोऽसंस्थितामस्थिरां विचित्रस्य चीनांशुकस्य पट्टवस्त्रविशेषस्य चारुतामादधिरे दध्नुः ॥ ५८ ॥

जलौघेति । जलौघानामुदकप्रवाहाणां संमूर्च्छनेन मेलनेन मूर्च्छितस्वनः प्रवृद्धघोषः । 'मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा' इति सज्जनः । प्रसक्तैः सङ्गतैर्विद्युतां तडिल्लतानां लसितैः स्फुरणैरेधिता वर्द्धिता द्युतिर्यस्य स धृतधूममण्डलो जलाघातात् सम्भूतधूतधूमपटलः पावकः प्रशान्तिमेष्यन् तत्र देशे भूयानिव बभूव । भूयस्त्वस्यास्थायित्वादिवेत्युक्तम् ॥ ५९ ॥

प्रवृद्धेति । प्रवृद्धानां सिन्धोः समुद्रस्योर्म्मीणां चया राशय इव स्थवीयसां स्थूलतराणां पयसां चयैः पूरैर्विभिन्ना विश्लेषिताः कृशानवोऽग्नय उपात्तसंध्यारुचिभिः प्राप्तसन्ध्यारागैः पयोदानां विच्छिद्यन्ते इति विच्छेदा विच्छिन्ना विचिन्ना ये लवाः शकलास्तैः सरूपतां समानरूपतां प्रपेदिरे इत्युपमा ॥६०॥

उपैत्यनन्तद्युतिरप्यसंशयं
विभिन्नमूलोऽनुदयाय संक्षयम् ।
तथाहि तोयौघविभिन्नसंहतिः
स हव्यवाहः प्रययौ पराभवम् ॥६१॥

अथ विहितविधेयैराशु मुक्ता वितानै-
रसितनगनितम्बश्यामभासां घनानाम् ।
विकसदमलधाम्नां प्राप नीलोत्पलानां
श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः ॥६२॥

इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमरनयज्ञः सादयिष्यन्नरातिम् ।
विधिरिव विपरीतः पौरुषं न्यायवृत्तेः
सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः ॥६३॥

उपैतीति । अनन्तद्युतिर्महातेजा अपि विभिन्नमूलो नष्टमूलोऽसंशयं यथा तथानुदयाय पुनरनुत्थानाय संक्षयं नाशमुपैति । तथाहि—तोयौघैर्विभिन्ना संहतिः सङ्घातो यस्य स तथोक्तः हव्यवाहोऽग्निः पराभवं नाशं प्रययौ । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥६१॥

अथेति । अथाग्निनिर्वाणानन्तरं विहितविधेयैः कृतकृत्यैरसितनगस्याञ्जनाद्रेर्नितम्बः कटकस्तद्वच्छ्यामभासां घनानां वितानैः पटलैर्मुक्ता द्यौराकाशो वह्निदाहादिवेत्युत्प्रेक्षा । विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां नीलोत्पलानामधिकविशुद्धामत्युज्ज्वलां श्रियं प्राप । निदर्शनालङ्कारः ॥६२॥

इतीति । बहुसमरनयाननेकरणोपायान् जानातीति बहुसमरनयज्ञः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । न तु 'इगुपध—' इत्यादिनाकारान्तात् 'अनुपपदात् कर्मोपपदो भवति विप्रतिषेधेन' इति वार्त्तिकस्य

वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष जयिनीं भुजवीर्य्यलक्ष्मीम्।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णु-
र्वर्षिष्यता दिनकृतेव जलेषु लोकः ॥६४॥

इति भारविकृतौ महाकाव्ये किरातार्ज्जुनीये षोड़शः सर्गः ॥

स्थाने भाष्यकारेणार्थंग्रहणशब्दमुदाहृत्यास्यार्थंशब्दस्य कर्म्मोपपदत्वं दर्शितम्। सव्यसाची अर्ज्जुनोऽरातिं किरातपतिं सादयिष्यन् अवसादयितुकामः सन्नित्यर्थः। क्रियार्थक्रियायां लृटि तस्य शत्रादेशः। इति पूर्वोक्त-प्रकारेण विविधं यदस्त्रमुदासे प्रयुक्तवानित्यर्थः। 'उपसर्गादस्यत्यूह्यो-र्वेति वाच्यम्' इत्यात्मनेपदम्। विपरीतो विधिः प्रतिकूलं दैवम्। 'विधिर्विधाने दैवेऽपि' इत्यमरः। न्यायेन नीत्या वृत्तिर्वर्त्तनं यस्य तस्य नीतिनिष्ठस्य पौरुषमिव नीलकण्ठः शिवः सपदि तदस्त्रं रिक्ततां व्यर्थता-मुपनिन्ये संहृतवानित्यर्थः। मालिनीवृत्तम् ॥६३॥

वीतेति। भूतपतिना शम्भुना अनुग्रहीष्यतीति शेषः। अस्त्रेष्वपहृतेषु सत्सु वर्षिष्यतोत्तरत्र सहस्रगुणं वितरिष्यता दिनकृता सूर्य्येण जलेष्व-पहृतेषु सत्सु लोक इव वीतप्रभावो गतास्त्रमहिमा अन्यत्र गतशक्तिः। अतएव तनुः क्षीणो वीतप्रभावतनुस्तथाप्यतनुप्रभावो निसर्गतः सामर्थ्या-दधिकः। अन्यत्रोद्योगवान् ततो जिष्णुरर्ज्जुनो जयिनीं जयनशीलाम्। जिहृक्षि—'इत्यादिना निप्रत्ययः। भुजवीर्य्यलक्ष्मीं भुजपराक्रमसम्पदम् उभयत्रापि पुरुषकारमिति यावत्। तत्कालकुण्ठितामिति शेषः। प्रत्या-चकाङ्क्ष प्रत्याहर्त्तुमियेषेत्यर्थः। यथा लोको नद्यादिजलापहारेऽप्युपा-यान्तरेण कूपादिना जीवितुमिच्छति तद्वदस्त्रबलापहारेऽपि भुजबलेनैव जेतुमियेषेति भावः। वसन्ततिलकावृत्तम् ॥६४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्ज्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
षोड़शः सर्गः समाप्तः॥

# सप्तदशः सर्गः ।

———*———

अथापदामुद्धरणक्षमेषु
मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥१॥

भूरिप्रभावेण रणाभियोगात्
प्रीतो विजिह्मश्च तदीयवृत्त्या ।
स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः
सर्पन् महाधूम इवाद्रिवह्निः ॥२॥

अथ पञ्चभिः पार्थं विशेषयन्, षड्भिः कुलकमाह, अथेत्यादिभिः—अथ जयलक्ष्मीप्रत्याकाङ्क्षानन्तरमापदामुद्धरणक्षमेषु आपन्निवारणसमर्थेषु अस्त्रेषु प्रस्थापनादिषु तादृशेषु मित्रेषु इव तिरोहितेषु अन्तर्हितेषु सत्सु गुरुणा महता स्वपौरुषेणेव तादृशेन शरासनेन धृतिं धैर्यमभिपुष्यन् वर्द्धयन् । अद्यापि धनुषि पौरुषे च सति कियानयं किरात इति धैर्यमवलम्बमान इत्यर्थः । अतएव गुरुश्रीः प्रवृद्धशोभासम्पत्तिः । 'पद्मा मा लक्ष्मीः श्रीर्निगद्यते' इति शाश्वतः ॥१॥

भूरीति । पुनश्च—भूरिप्रभावेण महानुभावेन सह रणाभियोगाद् युद्धलाभात् प्रीतस्तदीयवृत्त्या शत्रुवृत्त्या विजिह्मो विच्छायश्च तथा स्पष्टं दीप्त्या प्रज्वलन्नप्यविस्पष्टो वपुः प्रकाशो यस्य सः कुतः ? सर्पन् प्रसरन् महान् धूमो यस्य स सर्पन्महाधूमोऽद्रिवह्निरिव स्थितः ॥२॥

तेजः समाश्रित्य परैरहार्य्यं
निजं महन्मित्रमिवोरुधैर्य्यम्।
आसादयन्नस्खलितप्रभावं
भीमे भुजालम्बमिवारिदुर्गे ॥३॥

वंशोचितत्वादभिमानवत्या
संप्राप्तया संप्रियतामसुभ्यः।
समक्षमादित्सितया भरेण
वध्वेव कीर्त्या परितप्यमानः ॥४॥

पतिं नगानामिव बद्धमूल-
मुन्मूलयिष्यं स्तरसा विपक्षम्।
लघुप्रयत्नं निगृहीतवीर्य-
स्त्रिमार्गगावेग इवेश्वरेण ॥५॥

तेज इति। पुनश्च—परैररिभिरहार्य्यमभेद्यं निजं स्वकीयं महत्तेजो वीर्य्यं मित्रमिव समाश्रित्य। अतएव भीमे भयानकेऽरिरेव दुर्गं तस्मिन्नरिदुर्गे शत्रुसङ्कटेऽस्खलितस्वभावमचलशीलमुरुमहद्धैर्यं भुजालम्बमिव हस्तावष्टम्भमिवासादयन् प्राप्नुवन्। ईदृशे सङ्कटेऽपि महावीरत्वाद्धैर्य्यमत्यजन्नित्यर्थः ॥३॥

वंशेति। पुनश्च। अभिमानो ममताबुद्धिस्तद्वत्या। विषयतया कर्म्मणि कर्त्तृधर्मोपचारः। अभिमानास्पदेनेत्यर्थः। अन्यत्र कुलशीलाद्यभिमानवत्या। वंशोचितत्वात् स्वकुलानुरूपत्वादसुभ्यः प्राणेभ्योऽपि संप्रियतां संप्राप्तया परेण शत्रुणाक्ष्णोः समीपे समक्षमक्ष्यग्रतः। 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तष्टच्प्रत्ययः। आदातुं ग्रहीतुमिष्टयादित्सितया। आजिहीर्षितयेत्यर्थः। आङ्पूर्वात् ददातः सन्नन्तात् कर्म्मणि क्तः। वध्वेव कीर्त्या हेतुना परितप्यमानः। कर्त्तरि शानच् 'हेतौ' इति तृतीया कन्यया शोक इतिवत् ॥४॥

संस्कारवत्त्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थः
शब्देषु भावार्थमिवाशशंसे ॥६॥

भूयः समाधानविवृद्धतेजा
नैवं पुरा युद्धमिति व्यथावान् ।
स निर्ववावास्त्रममर्षनुन्नं
विषं महानाग इवेक्षणाभ्याम् ॥७॥

पतिमिति । पुनश्च । नगानां पतिं हिमवन्तमिव बद्धमूलं विपक्षं शत्रुं तरसा बलेनोन्मूलयिष्यन् उत्पाटयिष्यन् । किञ्च । त्रिभिर्मार्गैर्गच्छतीति त्रिमार्गगा गङ्गा । उत्तरपदसमासः । तस्या वेग इव । ईश्वरेण लघुप्रयत्नमल्पप्रयासं यथा तथा निगृहीतवीर्य्यः प्रतिबद्धशक्तिः हतास्त्रशक्तिरिति यावत् । पुरा किल हिमाद्रिविदलनाय गगनात् पतन्तं गङ्गाप्रवाहं गङ्गाधरो निजजटाजूटेन निजग्राहेति पौराणी कथा तद्वत् इत्यर्थः ॥५॥

संस्कारेति । एवम्भूतः पार्थः संस्कारवत्त्वात् संस्कारश्चित्तवासना । अन्यत्र साधुत्वम् । असाधूनां प्रयोगानिषेधादिति भावः । अथवा संस्कारो व्युत्पत्तिस्तद्वत्त्वात् । चेतो रमयत्सु । प्रयोगः सन्धानमोक्षादिः शिक्षाभ्यासो गुणस्तदाहितोऽतिशयो मौर्वी वा । अन्यत्र तु प्रयोगोऽभियुक्तव्यवहारः शिक्षाभ्यासो गुणाः स्वरस्थानकरणादयः श्लेषप्रसादादयो वा ते भूषणं येषां तेषु यथा यथाभूता अर्था येषां तेषु यथार्थेषु । अन्यत्र नियतार्थेषु । शृणन्ति हिंसन्तीति शरास्तेषु जयम् । तन्निर्वाहकत्वात्तदाधारत्वविवक्षायां सप्तमी । शब्देषु उपपदेषु भावः प्रवृत्तिनिमित्तं सामान्यादिः स एवार्थस्तमिव । आशशंस आचकाङ्क्षे । शास्तशंसत्योराङ्पूर्वयोरिच्छायामात्मनेपदमुपसंख्यानात् । तथा शाब्दिकाः शब्दैरर्थं साधयन्ति तद्वदयं शरैर्जयं साधयितुमियेषेत्यर्थः ॥ ६ ॥

तस्याहवायासविलोलमौलेः
संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतप्तं
प्रस्नापयामास मुखं निदाघः ॥ ८ ॥
क्रोधान्धकारान्तरितो रणाय
भ्रूभेदरेखाः स बभार तिस्रः ।
घनोपरुद्धः प्रभवाय वृष्टे-
रूर्ध्वांशुराजीरिव तिग्मरश्मिः ॥ ९ ॥
स प्रध्वनय्याम्बुदनादि चापं
हस्तेन दिङ्नाग इवाद्रिशृङ्गम् ।

भूय इति । भूयः पुनरपि समाधानेन युद्धाय मनोव्यवस्थापनेन विवृद्धतेजाः प्रवृद्धप्रतापः पुरा पुरातनं युद्धमेवमित्यं प्रसादकरं न भवतीति हेतोर्व्यथावान् परितापवान् सोऽर्जुन ईक्षणाभ्यां दृष्टिभ्यां महानागो महासर्पो विषमिवामर्षेनुन्नं क्रोधोत्थापितमस्रमश्रु निर्वमन् निर्जगार । सात्त्विकानां रससाधारण्याद्रौद्रे अश्रूदयोक्तिः ॥७॥

तस्येति ॥ आहवायासेन युद्धायासेन विलोलमौलेः स्रस्तकेशबन्धस्य । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । संरम्भताम्रे कोपारुणे आयते विस्तृते लोचने यस्य । 'संरम्भः संभ्रमे कोपे' इति विश्वः । तस्यार्जुनस्य रोषतप्तं मुखं निदाघो घर्मो निर्वापयिष्यन् शिशिरीकरिष्यन्निवेत्युत्प्रेक्षा । प्रस्नापयामास सिषेच । स्वेदं जनयामासेत्यर्थः । स्नातेर्मित्त्वविकल्पितत्वात् ह्रस्वविकल्पः ॥ ८ ॥

क्रोधेति ॥ क्रोधोऽन्धकार इव तेनान्तरित आवृतः सोऽर्जुनो घनोपरुद्धो मेघावृतस्तिग्मरश्मो रविर्वृष्टेः प्रभवाय वर्षणाय तिस्र ऊर्ध्वांशूनां राजीरिव । अर्कस्योर्ध्वांशुरेखोदयो वृष्टिलिङ्गमित्यागमः । रणाय रणप्रवृत्तये तिस्रस्त्रिसंख्या भ्रूभेदो भ्रूभङ्गस्तस्य रेखाबभार ॥ ९ ॥

वलानि शंभोरिषुभिस्तताप
चेतांसि चिन्ताभिरिवाशरीरः ॥ १० ॥

गुणाभ्यसूयेव विपक्षपाती
सद्वादितेवाभिनिविष्टबुद्धौ ।
अगोचरे वागिव चोपरेमे
शक्तिः शराणां शितिकण्ठकाये ॥ ११ ॥

उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखा न व्यथयांबभूवुः ।

स इति ॥ सोऽर्जुनोऽम्बुदवन्नदतीत्यम्बुदनादि । 'कर्तर्युपमाने' इति णिनिः । चापं दिङ्नागो दिग्गजोऽद्रिशृङ्गमिव हस्तेन करेण प्रध्वनय्य ध्वनयित्वा शंभोर्बलानि सैन्यान्यशरीरोऽनङ्गः कामश्चेतांसि युवमनांसि चिन्ताभिः प्रयोजनध्यानरिवेषुभिस्तताप तापयामास । तपतिः सकर्मकः । इषुशब्दः स्त्रीलिङ्गः । अन्यथोपमानोपमेययोर्भिन्नलिङ्गतादोषात् । 'पत्री रोप इषुर्द्वयोः' इत्यमरः ॥ १० ॥

सद्वादितेति ॥ अभिनिविष्टा शास्त्रनिश्चिता बुद्धिर्यस्य स तस्मिन्नभिनिविष्टबुद्धौ शास्त्रनिश्चितमतौ विषये सद्वादिता प्रामाणिकार्थसमर्थकतेव । न हि सम्यगभ्यस्तशास्त्रं प्रति सद्वाद्यपि शक्नोतीति व्याचक्षते केचित् । अन्ये त्वभिनिविष्टबुद्धावाग्रहाविष्टचित्ते विषये सद्वादिता हितोपदेष्टृत्वमिव । न ह्याग्रही हितं गृह्णातीति भावः । विपक्षपाती वीतरागे विषये गुणाभ्यसूया गुणासहिष्णुतेव । स हि समदर्शी द्विषन्तमपि न द्वेष्टीति भावः । अगोचरेऽवाङ्मनसगोचरे ब्रह्मणि वागिव । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरिति भावः । शराणां शक्तिः शितिकण्ठकाये शिवशरीरे विषये उपरेमे उपरता । तस्याक्षोभ्यमहिमत्वादिति भावः । 'विभाषाऽकर्मकात्' इत्यस्य वैकल्पिकत्वात्पक्ष आत्मनेपदम् । मालोपमा ॥ ११ ॥

अभ्युत्थितस्याद्रिपतेर्नितम्ब-
मर्कस्य पादा इव हैमनस्य ॥ १२ ॥

संप्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम्।
विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ॥ १३ ॥

तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम्।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन ॥ १४ ॥

उमेति। पाण्डुसुतेन प्रणुन्नाः प्रक्षिप्ताः शिलो शल्यं मुखे येषां ते शिलीमुखा बाणा उमापतिं शिवमभ्युत्थितस्याभुन्नतस्याद्रिपतेर्नितम्बं कटकम्। हेमन्ते भवस्य हैमनस्य। 'सर्व्वत्राण् च तलोपश्च' इत्यण्प्रत्ययः। तकारलोपश्च। अर्कस्य पादा रश्मय इव। 'पादा रश्म्यङ्घ्रि तुर्यांशाः' इत्यमरः। न व्यथयाम्बभूवुः। 'मध्ये स्थितस्यासुमतां समूहमर्कस्य' इति पाठान्तरे मध्ये स्थितस्य हैमनस्यार्कस्य पादाः किरणा असुमतां प्राणिनां समूहमिवेति न दुःखमुत्पादयामासुरिति योजना ॥१२॥

समिति। गणानां पतिः शिवस्तीव्रं तस्यार्जुनस्य पराक्रमं वप्रे रोधस्यानतस्य परिणतस्य। तटप्रहारिण इत्यर्थः। सुरद्विपस्यासह्यं विषाणभेदं दन्तप्रहारं हिमवानिव संप्रीयमाणः संहृष्यन्ननुबभूवानुभवति स्म। तस्याक्षोभ्यत्वादनुजिघृक्षुत्वाच्चेति भावः ॥ १३ ॥

तस्मै हीति। तस्मै पार्थाय भारस्य भूभारस्योद्धरण उद्वहने समर्थं प्रतापं बाहुमिव। अवष्टम्भतयेति शेषः। अन्यथा भारोद्वहनस्य दुष्करत्वादिति भावः। 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः। प्रदास्यता वितरिष्यता कारणानां ब्रह्मादीनामपि कारणेन जनकेन देवेन

प्रत्याहतौजाः कृतसत्त्ववेगः
पराक्रमं ज्यायसि यस्तनोति ।
तेजांसि भानोरिव निष्पतन्ति
यशांसि वीर्यज्वलितानि तस्य ॥ १५ ॥

दृष्टावदानाद्व्यथतेऽरिलोकः
प्रध्वंसमेति व्यथिताच्च तेजः ।
तेजोविहीनं विजहाति दर्पः
शान्तार्चिषं दीपमिव प्रकाशः ॥ १६ ॥

ततः प्रयात्यस्तमदावलेपः
स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य
प्रतिद्विपस्येव मतङ्गजौघः ॥ १७ ॥

सोऽभिभवोऽर्जुनपरिभवस्तदानीं चिरं विषेहे सोढः । वात्सल्यादिति भावः ॥१४॥

अथ त्रिभिर्भंगवदभिप्रायमाविष्कुर्वंश्चतुर्भिः कलापकमाह—प्रत्याहतेति । प्रत्याहतौजाः परेण प्रतिहतबलः सन्नपि कृतसत्त्ववेगः कृतोत्साहातिशयः सन् यः पुमान् ज्यायसि स्वस्मादभ्यधिके :पराक्रमं तनोति तस्य पुंसो भानोरर्कस्य तेजांसीव वीर्य्येण शौर्य्येण ज्वलितानि प्रकाशितानि यशांसि निष्पतन्ति उद्भवन्तीत्यर्थः । हीनस्याधिकाभियोगो यशस्कर इति भावः ॥१४॥

ततः किमित्यत आह—दृष्टेति ॥ दृष्टमवदानं महत् कर्म्म यस्य तस्माद्दृष्टावदानाद्दृष्टपौरुषादरिलोकः शत्रुजनो व्यथते बिभेति । व्यथिताद्भीतात्तेजः प्रध्वंसं नाशमेति । तेजोविहीनं दर्पं उत्साहः शान्तार्चिषं निर्वाणज्वालं दीपं प्रकाश इव विजहाति त्यजति ॥ १६ ॥

एवं प्रतिद्वन्द्विषु तस्य कीर्त्तिं
मौलीन्दुलेखाविशदां विधास्यन् ।
इयेष पर्य्यायजयावसादां
रणक्रियां शंभुरनुक्रमेण ॥ १८ ॥

मुनेर्विचित्रैरिषुभिः स भूया-
न्निन्ये वशं भूतपतेर्बलौघः ।
सहात्मलाभेन समुत्पतद्भि
र्जातिस्वभावैरिव जीवलोकः ॥ १९ ॥

तत इति ॥ ततो दर्पहान्यनन्तरमस्तौ नयं गतौ मदावलेपौ मदगर्वौ यस्य सोऽरिलोको गन्धेन मदगन्धेनैव जेतुं जयनशीलस्य । शीलार्थे तृच् प्रत्ययः । प्रमुखागतस्याभिमुखागतस्य प्रतिद्विपस्यान्यो मतङ्गजौघो मत्त गजसमूह इव जिगीषोर्नायकस्य जय्यतायाः पदवीं प्रयाति प्राप्नोति । विजिगीषुणा जेतुं शक्यो भवतीत्यर्थः । 'क्षय्यजय्यौ शक्यार्थे' इति निपातः । अत्र श्लोकद्वये ज्यायसि पराक्रमकरणादीनां पूर्वपूर्वस्यो-त्तरोत्तरं प्रति कारणत्वकथनात् कारणमालाख्योऽलंकारः । लक्षणं तूक्तम् ॥ १७ ॥

एवमिति ॥ एवमुक्तरीत्या प्रतिद्वन्द्विषु प्रत्यर्थिषु मध्ये तस्यार्जुनस्य मौलीन्दुलेखाविशदां कीर्त्तिं विधास्यन् करिष्यन्ननुक्रमेणाविपर्यासेन पर्य्यायेण जयोऽवसादो भङ्गश्च तौ जयावसादौ यस्यां तां पर्य्यायजयावसादां रणक्रियामियेषेच्छति स्म । जयानन्तरं भङ्गो भङ्गानन्तरं जय इति पर्य्या-यार्थः । तस्य विपर्य्यासोऽन्यतरनैरन्तर्य्यं तदभावोऽनुक्रम इत्यपौन-रुक्त्यम् ॥ १८ ॥

मुनेरिति ॥ मुनेर्विचित्रैरिषुभिः स भूयानसंख्यो भूतपतेर्बलौघ आत्मलाभेन जन्मना सह समुत्पतद्भिराविर्भवद्भिः आजन्मसिद्धैरित्यर्थः । जातयो गोत्वमनुष्यत्वादयः । स्वभावा जातिनियता धर्म्मास्तैर्जातिस्वभावै-

वितन्वतस्तस्य शरान्धकारं
त्रस्तानि सैन्यानि रवं निशेमुः ।
प्रवर्षतः संततवेपथूनि
क्षपाघनस्येव गवां कुलानि ॥ २० ॥

स सायकान्साध्वसविप्लुतानां
क्षिपन्परेषामतिसौष्ठवेन ।
शशीव दोषावृतलोचनानां
विभिद्यमानः पृथगाबभासे ॥ २१ ॥

क्षोभेण तेनाथ गणाधिपानां
भेदं ययावाकृतिरीश्वरस्य ।
तरङ्गकम्पेन महाह्रदानां
छायामयस्येव दिनस्य कर्तुः ॥ २२ ॥

जीवलोकः प्राणिजातंमिव वश्यं निन्ये नीतः । कर्म्मणि लिट् । प्राणिनो जातिधर्म्मानिव गुणान् मुनिशरान्नातिक्रमितुं शेकुरित्यर्थः ॥१९॥

वितन्वत इति ॥ त्रस्तानि सैन्यानि संतत वेपथूनि निरन्तरकम्पानि गवां कुलानि वृन्दानि प्रवर्षतो वृष्टिं कुर्वतः क्षपाघनस्य रात्रिमेघस्येव शरैर्योऽन्धकारस्तं वितन्वतो विस्तारयतस्तस्य मुनेः संबन्धिनं रवं शरवर्षघोषं निशेमुः शुश्रुवुः । न तु किंचिद्दृदृशुः । चेष्टा तु दूरमास्तामति भावः ॥ २० ॥

स इति । अतिसौष्टवेनातिलाघवेन सायकान् शरान् क्षिपन् सोऽर्जुनः साध्वसेन विप्लुतानां भ्रान्तानां परेषां द्विषां दोषेण काचकामलादिरोगेणावृतलोचनानां दुष्टचक्षुषां शशीव पृथग्विभिद्यमान आबभासे । यथा सदोषचक्षुषैकश्चन्द्रो नानेव लक्ष्यते तद्वदेकोऽप्यनेक इव दृष्ट इति भावः ॥२१॥

प्रसेदिवांसं न तमाप कोपः
कुतः परस्मिन् पुरुषे विकारः।
आकारवैषम्यमिदञ्च भेजे
दुर्लक्ष्यचिह्ना महतां हि वृत्तिः ॥२३॥

विस्फार्य्यमाणस्य ततो भुजाभ्यां
भूतानि भर्त्रा धनुरन्तकस्य।
भिन्नाकृतिज्यां ददृशुः स्फुरन्तीं
क्रुद्धस्य जिह्वामिव तक्षकस्य ॥२४॥

क्षोभेणेति। अथ गणाधिपानां सम्बन्धिना तेन क्षोभेण कम्पेनेश्वरस्याकृतिराकारो मूर्त्तिर्महाह्रदानां तरङ्गकम्पेन छायामयस्य प्रतिबिम्बरूपस्य दिनस्य कर्त्तुर्दिवाकरस्याकृतिरिव भेदं विकारं ययौ प्राप। स्वयं निर्विकारोऽपि प्रतिमासूर्य्यवत्परसंसर्गात्तथा प्रतीयत इत्यर्थः ॥२२॥

यदि देवोऽपि विकृतस्तर्हि कोपः किं न कृतः तत्राह—प्रसेदिवांसमिति। प्रसेदिवांसमर्जुनं प्रति प्रसन्नचित्तं तं देवं कोपो नाप न प्राप। तत्राप्यनुग्रहं ययाविति भावः। तत्र हेतुः—परस्मिन् पुरुषे परात्मनि देवे। स्वतो निर्विकार इत्यर्थः। विकारः कोपरूपः कुतः। न कुतश्चिदित्यर्थः। ननु तस्य निर्विकारस्य कथं बहिराकारभेदः कारणाभावादिति चेत्तत्र विघ्न इत्याह—इदं पूर्वोक्तमाकारवैषम्यं च भेजे। किन्तु केनापि कारणेन न कुप्यतीत्यर्थः। ननु निर्विकारे कुत आकारभेदस्तत्राह—महतां वृत्तिश्चेष्टा दुर्लक्ष्यचिह्ना दुर्ग्रहहेतुका हि ॥२३॥

वैषम्यमेवाह—विस्फार्य्यमाणस्येति। ततोऽनन्तरं भूतानि भर्त्रा भूतपतिना। भृजस्तृच्प्रत्ययः। अत एव 'न लोक' इत्यादिना षष्ठीप्रतिषेधः। भुजाभ्याम्। कर्त्तृकरणयोस्तृतीया। विस्फार्य्यमाणस्याकृष्यमाणस्य धनुरन्तक इव तस्य धनुरन्तकस्य सम्बन्धिनीं स्फुरन्तीं चलन्तीमत एव भिन्ना द्विधेव दृश्यमानाकृतिर्यस्यास्तां ज्यां धनुर्गुणं क्रुद्धस्य तक्षकस्य

सव्यापसव्यध्वनितोग्रचापं
पार्थः किराताधिपमाशशङ्के ।
पर्यायसंपादितकर्णतालं
यन्ता गजं व्यालमिवापराद्धः ॥ २५ ॥

निजघ्निरे तस्य हरेषुजालैः
पतन्ति वृन्दानि शिलीमुखानाम् ।
ऊर्जस्विभिः सिन्धुमुखागतानि
यादांसि यादोभिरिवाम्बुराशिः ॥ २६ ॥

विभेदमन्तः पदवीनिरोधं
विध्वंसनं चाविदितप्रयोगः ।
नेतारिलोकेषु करोति यद्य-
त्तत्तच्चकारास्य शरेषु शंभुः ॥ २७ ॥

नागविशेषस्य जिह्वामिव ददृशुः। द्विधाभावात् भयङ्करत्वाच्चेति भावः ॥२४॥

सव्येति। पार्थः सव्यापसव्याभ्यां वामदक्षिणगतिभ्यां ध्वनितं नादितमुग्रचापं येन तं किराताधिपम्। अपराद्धः प्रमत्तो यन्ता पर्य्याये-णायौगपद्येन सम्पादितः कर्णयोस्ताल आस्फालनं येन तं व्यालं दुष्टम्। 'मेद्यलिङ्गः शठे व्यालः' इत्यमरः। गजमिवाशशङ्के। तच्चापचातुर्य्य-दर्शनात् दुर्ज्जयः कोऽप्ययमनर्थकरश्चेति शङ्कितवानित्यर्थः॥ २५॥

निजघ्निर इति। हरेषुजालैस्तस्यार्ज्जुनस्य पतन्त्यागच्छन्ति शिलीमुखानां शराणां वृन्दानि।· ऊर्जस्विभिः प्रबलैरम्बुराशेर्यादोभिर्जलग्राहैः सिन्धुमुखेन नदीमुखेनागतानि यादांसीव। "यादांसि जलजन्तव" इति वैजयन्ती। निजघ्निरे हतानि ॥२६॥

सोढ़ावगीतप्रथमायुधस्य
क्रोधोज्झितैर्वेगितया पतद्भिः।
छिन्नैरपि त्रासितवाहिनीकः
पेते कृतार्थैरिव तस्य बाणैः॥ २८॥

अलङ्कृतानामृजुतागुणेन
गुरूपदिष्टां गतिमास्थितानाम्।
सतामिवापर्वणि मार्गणानां
भङ्गः स जिष्णोर्धृतिमुन्ममाथ॥ २९॥

विभेदमिति। अन्तर्विभेदं व्यूहविश्लेषणमुपजापञ्च पदवीनिरोधं मार्गं एव प्रतिबन्धनमन्यत्र तु आसारप्रसारप्रतिबन्धं विध्वंसनं खण्डनं दुर्गलुण्ठनदाहादिकं चेत्यादि यद् यद् नेता नायको जिगीषुरविदितप्रयोगः संवृतमन्त्रत्वादविज्ञातोपायप्रयोगः सन् अरिलोकेषु शत्रुकुलेषु करोति। तत्तत् शम्भुरविदितप्रयोगोऽज्ञातबाणसन्धानमोचादिकः सन् अस्यार्जुनस्य शरेषु चकार कृतवान्। कर्त्तरि लिट्। श्लेषालङ्कारः॥२७॥

सोढ़ेति। सोढ़ानि परैरवगीतानि गर्हितानि प्रथमायुधानि पूर्व्वोत्सृष्टबाणाः यस्य तस्यार्जुनस्य सम्बन्धिभिः क्रोधोज्झितैः क्रोधाभिषिक्तैः पूर्व्वबाणवैफल्यात् कोपेन त्यक्तैः अतएव वेगितया वेगेन पतद्भिः, गतिं कुर्व्वद्भिः अतएव छिन्नैरपि त्रासिता वाहिन्यो यैः तैः अतएव कृतार्थैरिव बाणैः पेते। भावे लिट्, वस्तुतस्तु अकृतार्था एवेत्यर्थः॥२८॥

अलमिति। ऋजुता अवक्राकारत्वमवक्रशीलत्वञ्च सैव गुणस्तेनालङ्कृतानां गुरुभिर्धनुर्विद्या गुरुभिः धर्म्मशास्त्रगुरुभिश्च उपदिष्टां दर्शितां गतिं गमनमाचारञ्च आस्थितानां प्राप्तानां मार्गणानां शराणां सतां साधूनामिवापर्व्वणि अग्रन्थौ अन्यत्र अप्रस्तावे अकाण्ड इत्यर्थः। 'पर्व्वः स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे' इति विश्वः। स ईश्वरकृतो भङ्गश्छेदो व्यसनञ्च जिष्णोरर्जुनस्य कस्यचित् जित्वरस्य च। 'जिष्णुः शक्रे

बाणाच्छिदस्ते विशिखाः स्मरारे-
रवाङ्मुखीभूतफलाः पतन्तः ।
अखण्डितं पाण्डवसायकेभ्यः
कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥

चित्रीयमाणानतिलाघवेन
प्रमाथिनस्तान्भवमार्गणानाम् ।
समाकुलाया निचखान दूरं
बाणान्ध्वजिन्या हृदयेष्वरातिः ॥ ३१ ॥

तस्यातियत्नादतिरिच्यमाने
पराक्रमेऽन्योन्यविशेषणेन ।
हन्ता पुरां भूरि पृषत्कवर्षं
निरास नैदाघ इवाम्बु मेघः ॥ ३२ ॥

धनञ्जये जिष्णौ' इति विश्वः। धृतिं धैर्य्यम् उच्चमाथ जहारित्यर्थः। अकाण्डे साधुविपत्तिदर्शनादिव शरभङ्गदर्शनात् धैर्य्यभङ्गोऽभूदित्यर्थः ॥२९॥

बाणेति। बाणच्छिदः पार्थशरच्छेदिनस्ते स्मरारेर्विशिखाः अवाङ्मुखीभूतफला विमुखाग्रा विफलाश्च सन्तः पतन्तः पाण्डवसायकेभ्यः, क्रियाग्रहणाच्चतुर्थी। पाण्डवसायकानां कृतस्य फलभङ्गरूपस्य स्वकर्म्मणः सद्योऽखण्डितं प्रतिकारमापुः। अत्युत्कटं कर्म्म सद्यः फलं दर्शयतीति भावः ॥३०॥

पुनरर्जुनस्य जयमाह—चित्रीयमाणानिति। अरातिरर्जुनोऽतिलाघवेनातिशीघ्रत्वाच्चित्रीयमाणान् चित्रमाश्चर्य्यं कुर्व्वाणान्। 'नमोवरिवश्चित्रङः क्यच्'। भवमार्गणानां प्रमाथिनः खण्डयतस्तान् बाणान्। समाकुलायाः संक्षुभितायाः ध्वजिन्याः सेनाया हृदयेषु दूरं गाढं निचखान निखातवान् ॥३१॥

अनाम्रशन्तः क्वचिदेव मर्म
प्रियैषिणानुप्रहिताः शिवेन।
सुहृत्प्रयुक्ता इव नर्मवादाः
शरा मुनेः प्रीतिकरा बभूवुः ॥ ३३ ॥

अस्त्रैः समानामतिरेकिणीं वा
पश्यन्निषू[रिपू]णामपि तस्य शक्तिम्।
विषादवक्तव्यबलः प्रमाथी
स्वमाललम्बे बलमिन्दुमौलिः ॥ ३४ ॥

ततस्तपोवीर्यसमुद्धतस्य
पारं यियासोः समरार्णवस्य।
महेषुजालान्यखिलानि जिष्णो-
रर्कः पयांसीव समाचचाम ॥ ३५ ॥

तस्येति। तस्यार्जुनस्य पराक्रमेऽतियत्नाद्धेतोरन्योन्यस्य विशेषणेन अतिशयकरणेन अतिरिच्यमाने अतिक्रम्यमाणे सति पुरां हन्ता त्रिपुरविजयी हरो भूरि प्रभूतं पृषत्कवर्षं बाणवर्षम्। 'पृषत्कबाणविशिखाः' इत्यमरः। निदाघे भवो नैदाघो मेघोऽम्बुवाहोऽम्बुजलमिव निरास मुमोच, अस्यतेर्लिट्। निदाघग्रहणं वर्षणस्यातितीव्रत्वद्योतनार्थम् ॥३२॥

अनाम्रशन्त इति। प्रियैषिणा प्रियचिकीर्षुणा शिवेनानुप्रहिताः प्रयुक्ता अतएव क्वचिदेव मर्माण्यनाम्रशन्तोऽस्पृशन्तः ते शराः सुहृन्मित्रं सोऽपि प्रियैषी तेन प्रयुक्ताः उच्चारिता नर्मवादाः प्रियवादा इव मुनेरर्जुनस्य प्रीतिकराः प्रीतिजनका बभूवुः ॥३३॥

अस्त्रैरिति। अस्त्रैः स्वायुधैः समानां तुल्यामतिरेकिणीं ततोऽधिकां वा तस्य मुनेरिषूणामपि शक्तिं पश्यन् विषादेनोत्साहभङ्गेन वक्तव्यानि

रिक्तो सविस्रम्भमथार्जुनस्य
निषङ्गवक्त्रे निपपात पाणिः ।
अन्यद्विपापीतजले सतर्षं
मतङ्गजस्येव नगाश्मरन्ध्रे ॥ ३६ ॥

च्युतं स तस्मिन्निषुधौ शरार्थी-
ध्वस्तार्थसारे सहसैव बन्धौ ।
तत्कालमोघप्रणयः प्रपेदे
निर्वाच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥

निर्व्वाच्यानि बलानि सैन्यानि यस्य स प्रमाथी शत्रुमर्दन इन्दुमौलिर्म्महादेवः स्वं बलमात्मीयं महिमानमालम्बे स्वसामर्थ्यमवलम्बितवान् ।३४॥

तत इति। ततो महिमप्रादुर्भावानन्तरं देवस्तपोवीर्य्याभ्यां समुद्धतस्य प्रगल्भस्य समर एवार्णवस्तस्य पारमन्तं यियासोर्जिगमिषोर्जिष्णोरर्ज्जुनस्याखिलानि महेषुजालानि समग्रबाणसमूहान् अर्कः सूर्य्यः पयांसीव जलानीव समाचचाम संजहारेत्यर्थः ॥ ३५ ॥

रिक्त इति। अथ बाणान्तर्धानानन्तरमर्ज्जुनस्य पाणिः करो रिक्ते बाणशून्येऽपि निषङ्गवक्त्रे तूणीरमुखेऽन्यद्विपेन गजान्तरेणापीतजले पीततोये नगस्य अचलस्य अश्मरन्ध्रे शिलागर्त्ते कन्दर इत्यर्थः। सतर्षं सतृष्णं यथा स्यात्तथा इति क्रियाविशेषणम् मतङ्गजस्य पाणिर्लक्षणया कर इव सविस्रम्भं सन्ति एव बाणा इति सविश्वासं निपपात ॥३६॥

च्युत इति। शरा एवार्थो धनं यस्य तस्माच्युते भ्रष्टे तस्मिन्निषुधौ निषङ्गे सहसा झटिति ध्वस्तार्थसारेऽकाण्डे नष्टधनसारे बन्धौ इव तत्काले मोघो वितथः प्रणयः प्रीतिर्यस्य स प्रणयेन अर्थप्रार्थनात् पूर्व्वं कृतार्थ एवेति भावः। स पाणिः निर्व्वाच्यतां कृतघ्नत्वात् अपवादराहित्यं कामयत इति निर्वाच्यताकामः। 'शीलिकामि भक्ष्याचरिभ्योणः' स इवेत्युत्प्रेक्षा। आभिमुख्यं प्रपेदे यथा कश्चित् कृतघ्नस्तत्कालानुपकृतोपकारमपि बन्धुं पूर्व्वोपकारस्मरणात् पुनः पुनरनुबध्नाति तद्वदित्यर्थः ॥३७॥

आघट्टयामास गतागताभ्यां
सावेगमग्राङ्गुलिरस्य तूणौ।
विधेयमार्गे मतिरुत्सुकस्य
नयप्रयोगाविव गां जिगीषोः ॥ ३८ ॥

बभार शून्याकृतिरर्जुनस्तौ
महेषुधी वीतमहेषुजालौ।
युगान्तसंशुष्कजलौ विजिह्मः
पूर्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥

तेनानिमित्तेन तथा न पार्थ-
स्तयोर्यथा रिक्ततयानुतेपे।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं
शोचन्ति सन्तो ह्युपकारिपक्षम् ॥ ४० ॥

आघट्टयामासेति। अस्य मुनेरग्रा चासौ अङ्गुलिश्च इति अग्राङ्गुलिः। 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदात्' इति वामनः। विधेयमार्गे कर्त्तव्यान्वेषणे उत्सुकस्य प्रवृत्तस्य गां भुवं जिगीषोर्नायकस्य मतिर्बुद्धिर्नयः षाड्गुण्यः प्रयोग उपायस्तौ नयप्रयोगौ इव तूणौ निषङ्गौ सावेगं ससंभ्रमम्। 'इष्टानिष्टागमाज्ञानमावेगश्चित्तसंभ्रमः' इति शाश्वतः। गतागताभ्यां यातायाताभ्यामावापोद्वापाभ्यां चाघट्टयामास। अन्यत्र तु वितर्कयामास। शरग्रहणार्थं पुनः पुनस्तूणयोः पाणिं व्यापारयामासेत्यर्थः। ३८॥

बभारेति। शून्याकृतिरिष्टनाशान्निस्तेजस्करूपोऽर्जुनस्तौ वीतमहेषुजालौ वीतानि गतानि महेषुजालानि ययोस्तौ महेषुधी महानिषङ्गौ विजिह्मः शून्यो लोको युगान्ते संशुष्कजलौ। 'शुषः कः' इति निष्ठातकारस्य ककारः। पूर्वापरौ अम्बुराशी समुद्राविव बभार ॥३९॥

प्रतिक्रियायै विधुरः स तस्मात्
कृच्छ्रेण विश्लेषमियाय हस्तः ।
पराङ्मुखत्वेऽपि कृतोपकारा-
त्तूणीमुखान्मित्रकुलादिवार्यः ॥ ४१ ॥

पश्चात्क्रिया तूणयुगस्य भर्तु-
र्जज्ञे तदानीमुपकारिणीव ।
सम्भावनायामधरीकृतायां
पत्युः पुरः साहसमासितव्यम् ॥ ४२ ॥

तं शम्भुराक्षिप्तमहेषुजालं
लौहैः शरैर्मर्मसु निस्तुतोद ।

तेनेति । पार्थस्तयोस्तूणयोः रिक्ततया हेतुना यथानुतेपे शुशोच तथा तेनानिमित्तेन बाणक्षयरूपेण दुर्निमित्तेन न शुशोच । तथाहि—सन्तः स्वामापदं प्रोज्झ्य विसृज्य विपत्तिमग्नमुपकारिणां पक्षं वर्गं शोचन्ति । स्वव्यसनापेक्षया परकीयव्यसनमेव सतामनुतापकमित्यर्थः ॥४०॥

प्रतीति । प्रतिक्रियायै विधुरः प्रतिकर्त्तुमसमर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । अर्जुनस्य स हस्तः पाणिः । पराङ्मुखत्वेऽपि तत्कालवैमुख्येऽपि कृतोपकारात्तस्मात्तूणीमुखात् मित्रकुलादार्य्यः साधुः कृतज्ञ इव 'आर्य्यः साधुकुलीनयोः' इति विश्वः । कृच्छ्रेण महाकष्टेन विश्लेषमियाय । गौरादित्वात्तूणशब्दात् ङीष् ॥४१॥

पश्चादिति । तदानीं भर्त्तुः स्वामिनः कर्त्तरि षष्ठी । पश्चात्क्रिया पृष्ठतः करणं तूणयुगस्योपकारिणीव उपकारिकेव जज्ञे जाता । तथाहि—सम्भावनयां स्वयोग्यतायामधरीकृतायामफलीकृतायां पत्युः स्वामिनः पुरोऽग्रे आसितव्यमासितं स्थितिः । बहुलग्रहणाद्भावे तव्यप्रत्ययः । साहसं न क्षमं न योग्यम् । भर्त्रा सम्भावितस्यावसरेऽनुपकर्त्तुरनुजीविनस्तत्साम्मुख्यम् अनुचितमित्यर्थः ॥ ४२ ॥

हृतोत्तरं तत्त्वविचारमध्ये
वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३ ॥

जहार चास्मादचिरेण वर्म
ज्वलन्मणिद्योतितहैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं
तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४ ॥

विकोशनिर्धौततनोर्महासेः
फणावतस्त्व त्वचि विच्युतायाम् ।
प्रतिद्विपाबद्धरुषः समत्वं
नागस्य चाच्छिन्नमुखच्छदस्य ॥ ४५ ॥

तमिति । शम्भुराच्छिन्नान्याहृतानि महेषुजालानि यस्य तं मुनिं तत्त्वविचारमध्ये वादमध्ये हृतोत्तरं निरुत्तरीकृतं विपक्षं प्रतिवादिनं वक्ता वादी गुरुभिर्दोषैर्निग्रहस्थानैरिव लौहैर्लौहमयैः शरैर्मर्मसु निखुतोद व्यथयामास ॥ ४३ ॥

जहारेति । किञ्च—अस्मात् मुनेरचिरेण शीघ्रं ज्वलद्भिर्मणिभिर्द्योतिता हैम्यः सौवर्णो लेखा यस्य तत्तथोक्तं वर्म कवचम् । चण्डो मरुत्पवनः पतङ्गात् सूर्यादेकनीलं केवलं कृष्णवर्णम् । 'एके मुख्यान्य-केवलाः' इत्यमरः । तडित्वतस्तडिद्युक्तस्याम्बुदस्य खण्डमिव जहार । तदा भगवन्मायया मुक्तकञ्चुको मुनिर्मेघनिर्मुक्तः सूर्य इव दिदीपे इति भावः ॥४४॥

अथ युग्मेनाह—विकोशेति । सोऽर्जुनः तनुं त्रायत इति तनुत्रं वर्म । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । तेन विना विकोशः कोशादुद्धृतो निर्धौततनुः शाणोल्लीढमूर्त्तिः । ततो विशेषणसमासः । तस्य विकोशनिर्धौततनोर्महासेर्महाखड्गस्य तथा त्वचि विच्युतायां सत्यां फणावतस्त्व मुक्तकञ्चुकस्य अहेश्च प्रतिद्विपे प्रतिगजे आबद्धरुषो बद्धकोपस्य

विबोधितस्य ध्वनिना घनानां
हरेरपेतस्य च शैलरन्ध्रात् ।
निरस्तधूमस्य च रात्रिवह्ने-
र्विना तनुत्रेण रुचिं स भेजे ॥ ४६ ॥
युग्मकम् ।

अचित्ततायामपि नाम युक्ता-
मनुद्भुतां प्राप्य तदीयकृच्छ्रे ।
मही गतौ ताविषुधी तदानीं
विवव्रतुश्चेतनयेव योगम् ॥ ४७ ॥

स्थितं विशुद्धे नभसीव सत्त्वे
धाम्ना तपोवीर्य्यमयेन युक्तम् ।
शस्त्राभिघातैस्तमजस्रमीश-
स्त्वष्टा विवस्वन्तमिवोल्लिलेख ॥४८॥

समक्षं प्रतिगजस्य अग्रे आच्छिन्नमुखच्छन्दस्य निरस्तमुखावरस्य नागस्य गजस्य च ॥ ४५ ॥

विबोधितस्येति। घनानां ध्वनिना गर्ज्जितेन विबोधितस्य शैलरन्ध्रात् कन्दरादपेतस्य निष्क्रान्तस्य हरेः सिंहस्य च तथा निरस्तधूमस्य गतधूमस्य रात्रिवह्नेश्च रुचिं शोभां भेजे। एतेनास्य तीव्रत्वैरनिर्य्यातनत्वरणदुर्मदत्वमनस्वित्वतेजस्वित्वानि युक्तानि। अत्र रुचिमिव रुचिमिति साहश्याक्षेपादसम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारो मालया संसृष्टः ॥४६॥

अचित्ततायामिति। तदानीं कवचपतनसमये मही गतौ इषुधी निषङ्गौ अचित्ततायामप्यचेतनत्वेऽपि तदीयकृच्छ्रे स्वामिव्यसने युक्तां योग्याम्, नाम किल अकिञ्चित्करत्वादिति भावः। अनुद्भुतामवाङ्मुखत्वं प्राप्य चेतनया प्राणिसाधारणज्ञानेनेव योगं चैतन्यसम्बन्धं विवव्रतुरिवेत्युत्प्रेक्षा। अचेतनत्वेऽप्यवाङ्मुखत्वादिचेतनधर्म्मयोगादिति भावः ॥४७॥

संरम्भवेगोज्झितवेदनेषु
गात्रेषु चाधैर्य्य[वाधिर्य्य]मुपागतेषु।
मुनेर्बभूवागणितेषुराशे-
र्लौहस्तिरस्कार इवात्ममन्युः॥ ४९॥

ततोऽनुपूर्वायतवृत्तबाहुः
श्रीमान् क्षरल्लोहितदिग्धदेहः।
आस्कन्द्य वेगेन विमुक्तनादः
क्षितिं विधुन्वन्निव पार्ष्णिघातैः॥ ५०॥

स्थितमिति। विशुद्धे निर्म्मले नभसि इव सत्वे सत्वगुणे स्थितं तपो-वीर्य्यमयेन तपोवीर्य्याभ्यामागतेन धाम्ना तेजसा युक्तं तमर्ज्जुनमीशस्त्वष्टा विश्वकर्म्मा विवस्वन्तं सूर्य्यमिवाजस्रं निरन्तरं शस्त्राभिघातैः शस्त्रकर्षणै-रुल्लिलेख ततच्च॥ ४८॥

संरम्भेति। संरम्भवेगेन सम्भ्रमातिशयेनोज्झितवेदनेषु त्यक्तदुःखेषु गात्रेषु चाधैर्य्यं स्तैमित्यमुपागतेषु सत्सु न गणिता इषुराशयो येन तस्य अगणितेषुराशेर्मुनेरर्ज्जुनस्यात्ममन्युः स्वकोपो लोहस्य विकारो लौहः कार्ष्णायसः तिरस्क्रियते आच्छाद्यते अनेनेति तिरस्कारः कञ्चुक इव बभूव। रोषवशान्न किञ्चित्प्रहारदुःखमज्ञासीदित्यर्थः। क्रोधैकवर्म्मणां वीराणां किमन्यैर्लौहभारैरिति भावः॥ ४९॥

अथ युग्मेनाह—तत इति। ततोऽनन्तरमनुपूर्व्वौ पूर्व्वमनुगतौ गोपुच्छाकारावायतौ दीर्घौ वृत्तौ वर्त्तुलौ च बाहू यस्य स श्रीमान् शोभावान् क्षरल्लोहितदिग्धदेहः स्रवद्रुधिरलिप्तगात्रः पार्ष्णिघातैश्चरणतला-घातैः 'तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां पार्ष्णिरधस्तयोः' इत्यमरः। क्षितिं विधुन्वन् प्रकम्पयन्निव वेगेनास्कन्द्याभिद्रुत्य विमुक्तनादः सोऽर्ज्जुनः॥५०॥

कि—ह

सास्यं गतेनाशनिना मघोनः
शशाङ्कखण्डाकृतिपाण्डुरेण ।
शम्भुं बिभित्सुर्धनुषा जघान
स्तम्बं विषाणेन महानिवेभः ॥ ५१ ॥

युग्मम् ।

रयेण सा सन्निदधे पतन्ती
भवोद्भवेनात्मनि चापयष्टिः ।
समुद्धता सिन्धुरनेकमार्गा
परे स्थितेनौजसि जह्नुनेव ॥ ५२ ॥

विकार्मुकः कर्मसु शोचनीयः
परिच्युतौदार्य्य इवोपचारः ।
विचिच्छिदे शूलभृता सलीलं
स पत्रिभिर्दूरमदूरपातैः ॥ ५३ ॥

सास्यमिति। मघोन इन्द्रस्य अशनिना वज्रेण सह सास्यं गतेन वज्रकल्पेन शशाङ्कस्य खण्डं शकलं तस्य इव आकृतिपाण्डुरेण वक्राकारेणेति भावः। धनुषा शम्भुं बिभित्सुर्भेत्तुमिच्छुः सन् महानिभो गजो विषाणेन दन्तेन स्तम्बमिव जघान ॥५१॥

रयेणेति। रयेण वेगेन पतन्ती सा चापयष्टिर्भवस्य संसारस्योद्भव उत्पत्तिर्यस्मात् तेन भवोद्भवेनेश्वरेण परे ओजसि परमे ज्योतिषि स्थितेन जह्नुना राजर्षिणा समुद्धता अत्युत्कटा अनेकमार्गा त्रिस्रोताः सिन्धुर्गङ्गा इवात्मनि सन्निदधे सम्यक् निहिता अन्तर्निलायितेत्यर्थः ॥५२॥

विकार्मुक इति। विकार्मुको भग्नचापोऽतएव परिच्युतौदार्यो दानवर्जित उपचारः सत्कार इव कर्मसु रणक्रियासु कृत्येषु च शोचनीयः शोच्योऽपूज्यस्स सत्त्वावष्टम्भनाद् भग्नचित्तत्वाच्च सोऽर्जुनः शूलभृता शिवेन

उपोढकल्याणफलोऽभिरक्षन्
वीरव्रतं पुण्यरणाश्रमस्थः।
जपोपवासैरिव संयतात्मा
तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४ ॥

ततोऽग्रभूमिं व्यवसायसिद्धेः
सीमानमन्यैरतिदुस्तरं सः।
तेजः श्रियामाश्रयमुत्तमासिं
साक्षादहङ्कारमिवाललम्बे ॥ ५५ ॥

शरानवद्यानवद्यकर्मा
चचार चित्रं प्रविचारमार्गैः।

सलीलं सहेलं यथा तथा दूरपातैरतिगाढ़प्रहारैः पत्रिभिः शरैर्दूरमत्यन्तं विचिच्छिपे लुब्धः ॥५३॥

उपोढ़ेति। उपोढ़मासन्नं कल्याणफलमस्त्रलाभरूपं स्वर्गादिकं च यस्य सः वीरव्रतमाहवादनिवृत्तिरूपं तीव्रं तपश्च अभिरक्षन् पालयन् पुण्यो यो रण एवाश्रमस्तत्र तिष्ठतीति पुण्यरणाश्रमस्थः संयतात्मा नियमितचित्तो मुनिरर्जुनः कश्चित्तपस्वी च तैः शिवस्य महादेवस्य इषुभिः शरैर्जपोपवासैरिव तेपे तप्तः, तपतेः कर्मणि लिट् ॥५४॥

तत इति। ततस्तापान्तर्धानानन्तरं सोऽर्जुनोऽग्रभूमिं विपदि गन्तव्यस्थानम् शरणमित्यर्थः। कुतः? व्यवसायसिद्धेरुद्योगसिद्धेः सीमानमवधिम् साधकतममित्यर्थः। अन्यैः परैरतिदुस्तरं दुरतिक्रमं तेजःश्रियां प्रतापसम्पदामाश्रयम् हेतुमित्यर्थः। उत्तमासिं महाखड्गम् 'सन्महत्—' इत्यादिना समासः। साक्षादहङ्कारं सविग्रहमभिमानमिवाललम्बे जग्राह ॥५५॥

हस्तेन निस्त्रिंशभृता स दीप्तः
सार्काशुना वारिधिरूर्मिणेव ॥ ५६ ॥

यथा निजे वर्त्मनि भाति भाभि-
श्छायामयश्चाप्सु सहस्ररश्मिः ।
तथा भ्रमन्नाशु रणस्थलीषु
स्पष्टद्विमूर्त्तिर्ददृशे स भूतैः ॥ ५७ ॥

शिवप्रणुन्नेन शिलीमुखेन
त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणे-
र्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥

शरानिति । अनवद्यकर्मा अगर्ह्यकर्मा 'अवद्यपण्य—' इत्यादिना निपातः । शरान् अवद्यन् खण्डयन् वीरो निस्त्रिंशभृता खड्गयुक्तेन हस्तेन सार्कांशुनार्कांशुसहितेनोर्मिणा तरङ्गेन वारिधिरिव दीप्तो दीपितः सोऽर्जुनः प्रविचारमार्गैः खड्गिनां गतिभेदैश्चित्रं यथा तथा चचार ॥५६॥

यथेति । भाभिर्दीप्तिभिरुपलक्षितः 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । सहस्ररश्मिरर्को यथा निजे वर्त्मनि नभसि छायामयः प्रतिबिम्बरूपः सन् अप्सु स्पष्टद्विमूर्त्तिर्भाति तथा सोऽर्जुनो नभसि आकाशे रणस्थलीषु च स्पष्टे द्वे मूर्त्ती यस्य स स्पष्टद्विमूर्त्तिः सन् सोऽर्जुनः भ्रमन् तथाभूतैर्गणैर्ददृशे दृष्टः । यथैकोऽर्को नभसि अप्सु चानेक इव दृश्यते, तथा सोऽपि दिवि भुवि च अप्सु आसञ्चारात् यौगपद्यभ्रमादेवैकोऽप्यनेक इव गणैर्दृष्ट इत्युत्प्रेक्षा ॥५७॥

शिवेति । शिवेन प्रणुन्नः क्षिप्तस्तेन शिलीमुखेन त्सरुप्रदेशात् मुष्टिप्रदेशमवधिं कृत्वा 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । अपवर्जिताङ्गो लूनविग्रहः असिः खड्गस्तस्यार्जुनस्य पाणेः करात् घनस्य मेघस्य वप्रात्तटात् वैद्युतो विद्युत्सम्बन्ध्यग्निरिव ज्वलन् पपात ॥ ५८ ॥

आच्छिन्नचापावरणेषुजाल-
श्छिन्नोत्तमासिः स मृधेऽवधूतः।
रिक्तः प्रकाशश्च बभूव भूमे-
रुत्सादितोद्यान इव प्रदेशः॥ ५९ ॥

स खण्डनं प्राप्य परादमर्षवान्
भुजद्वितीयोऽपि विजेतुमिच्छया।
ससर्ज वृष्टिं परिरुग्णपादपां
द्रवेतरेषां पयसामिवाश्मनाम्॥ ६० ॥

नीरन्ध्रं परिगमिते क्षतं पृषत्कै-
र्भूतानामधिपतिना शिलावितानै।
उच्छ्रायस्थगितनभो दिगन्तरालं
चिक्षेप क्षितिरुहजालमिन्द्रसूनुः॥६१॥

आच्छिन्नेति। आच्छिन्नानि अपहृतानि चापावरणेषु जालानि धनुर्वर्म-बाणसमूहा यस्य स छिन्नोत्तमासिर्लूनमहाखड्गः मृधे रणे 'मृध-मास्कन्दनं संख्यम्' इत्यमरः। अवधूतो निरस्तः सोऽर्जुन उत्सादित-मुत्पाटितमुद्यानं यस्य स भूमेः प्रदेशो भूमिभाग इव रिक्तः शून्यः प्रकाशो निःसम्बाधश्च दृश्य इति यावत् बभूव॥ ५९ ॥

स इति। परात् परस्मात् शत्रोः। 'पूर्व्वादिभ्यो नवभ्यो वा' इति विकल्पात् न स्मादादेशः। खण्डनं भङ्गं प्राप्यामर्षवान् सोऽर्जुनो भुज-द्वितीयो भुजमात्रसहायः सन्नपि विजेतुमिच्छया द्रवेभ्य इतराणि तेषां द्रवेतरेषां कठिनानां पयसामिव करकाणामिवेत्यर्थः। अश्मनां सम्बन्धिनीं परिरुग्णा भग्नाः पादपाः यस्याः सा, तां वृष्टिं ससर्ज्ज अश्मभिर्जघान इत्यर्थः॥६०॥

निःशेषं शकलितवल्कलाङ्गसारैः
कुर्वद्भिर्भुवमभितः कषायचित्राम् ।
ईशानः सकुसुमपल्लवैर्नगैस्तै-
रातेने बलिमिव रङ्गदेवताभ्यः ॥६२॥

उन्मज्जन्मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥ ६३ ॥

नीरन्ध्रमिति । शिलावितानें शिलाजाले भूतानामधिपतिना शिवेन पृषत्कैर्बाणैः चयं परिगमिते नीते सतीन्द्रसूनुरर्जुनः उच्छ्रायेणोत्सेधेन स्थगितमाच्छादितं नभोदिशामन्तरालञ्च येन तन्नीरन्ध्रं सान्द्रम् । रोहन्तीति रुहाः । इगुपधलक्षणः कप्रत्ययः । क्षितौ रुहा वृक्षास्तेषां जालं चिक्षेप प्रेरयामास । 'उच्छ्रायं गमितवती' इति प्रामादिकः पाठः ॥६१॥

निःशेषमिति । ईशानः शिवः शानच्प्रत्ययः । निःशेषं यथा तथा शकलितानि वल्कलानि त्वचोऽङ्गानि शाखाः सारो मज्जा च येषां तैर्भुवमभितः कषायो यो रागः स्वरागेण रञ्जनमिति यावत् । 'रागे क्वाथे कषायोऽस्त्री' इति वैजयन्ती । तेन चित्रां विचित्रवर्णां कुर्वद्भिः सकुसुमपल्लवैस्तैर्नगैर्वृक्षै रङ्गे रणरङ्गे या देवतास्ताभ्यो बलिं पूजामिवातेने ॥६२॥

उन्मज्जन्निति । गाण्डीवो अर्जुन उन्मज्जन् उत्तरन् मकरो जलग्राहविशेषो अमरापगाया गङ्गाया इव बाणनद्या बाणप्रवाहाद्वेगेन प्रतिमुखमभिमुखमेत्यागत्य कनकशिलानिभम्, कनकग्रहणं काठिन्यातिशयद्योतनार्थम् । विषमविलोचनस्य त्र्यम्बकस्य वक्षो हृदयं भुजाभ्यामाजघ्ने ताड़ितवान् । अत्रात्मनेपदं विचार्य्यम् 'आङो यमहनः' इत्यत्राकर्मकाधिकारात् 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात् न च शिवस्य

अभिलषत उपायं विक्रमं कीर्तिलक्ष्म्यो-
रसुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनो-
रविनयमपि सेहे पाण्डवस्य स्मरारिः ॥६४॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये सप्तदशः सर्गः ।

प्रतिमुखमित्यन्वयात् कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्ष आजघ्ने इत्यर्थः इति वाच्यम्, अनौचित्याचरणात् । न हि युद्धाय सन्नद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनमाचरन्ति ; किन्तु स्वभुजास्फालनम् । किञ्च—अनन्तरं वक्ष्यमाणभवकर्तृकाविनयसहनविरोधाद्वक्ष एवेत्यन्वयस्याव्यवधानाच्च पूर्वैरेव दूषितत्वात्, अतो व्याकरणान्तराद् द्रष्टव्यम् । केचित्तु 'त्र्यम्बकस्य वक्षः प्राप्य' इत्यध्याहारं स्वीकृत्यात्मकर्मत्वादात्मनेपदमाहुः ॥ ६३ ॥

अभिलषत इति । कीर्त्तिलक्ष्म्योरुपायं साधनभूतमरिसैन्यैरसुगमं दुरासदं विक्रममभिलषतः । सूनुपक्षे यत्किञ्चित् महत्फलं प्रार्थयमानस्येत्यर्थः । अतएवाङ्कमन्तिकमभ्यागतस्योत्सङ्गसमारूढस्य च पाण्डवस्याविनयं स्मरारिः ? अनेन भक्तवात्सल्यमेव सहनकारणमिति सूच्यते । शिशुत्वे शैशवे सुप्रियस्य परमप्रेमास्पदस्य कुतः ? एक एव सूनुस्तस्यैकसूनोरविनयं जनक इव सेहे सोढवान् ॥६४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
सप्तदशः सर्गः समाप्तः ॥१७॥

———

# अष्टादशः सर्गः ।

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥

हरपृथासुतयोर्ध्वनिरुत्पत-
न्नमृदुसंवलिताङ्गुलिपाणिजः
स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥ २ ॥

तत इति । ततो मुष्टियुद्धानन्तरमुदग्रे महति द्विरदे गजे इव भीमे भुजौ एवायुधे यस्य तथाभूते रणमुपेयुषि मुनौ शङ्करः स्वयमपि सबाणधि सतूणं धनुरपास्य त्यक्त्वा मुष्टिभिर्घनैर्लोहमुद्गरैरिव प्रतिजघान । प्राङ्मुनिकृताघातस्य प्रतिघातं कृतवानित्यर्थः । 'घनाः कठिनसंघातमेघकाठिन्यमुद्गराः' इति वैजयन्ती । 'घनस्तु लोहमुद्गरे' इति विश्वः । यद्यपि मुष्टिशब्दः 'मुष्ट्या तु बद्धया सरत्निः स्यादरत्निस्तु निष्कनिष्टेन मुष्टिना' इत्यमरः । उभयथा प्रयोगाद्द्विलिङ्गस्तथाप्यत्रोपमानसारूप्यात् पुंलिङ्गो ग्राह्यः ; द्रुतविलम्बितं वृत्तम् ॥ १ ॥

हरेति । हरपृथासुतयोः शिवार्जुनयोरमृदु निविडं यथा तथा सम्वलिताः संघटिता अङ्गुलयो येषां मुष्टीकृता इत्यर्थः । तेषु पाणिषु जातस्तथोक्तः, स्फुटन्तीनां विदलन्तीनामनल्पशिलानामारव इव दारुणो भीषणो ध्वनिरुत्पतन् उद्गच्छन् दरीभृतो गिरेर्दरीषु गुहासु प्रतिननाद प्रतिदध्वान ॥२

शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः।
क इव नाम बृहन्मनसां भवे-
दनुकृतेरपि सत्त्ववतां क्षमः॥ ३॥

व्रणमुखच्युतशोणितशीकर-
स्थगितशैलतटाभभुजान्तरः।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः॥ ४॥

उरसि शूलभृतः प्रहिता मुहुः
प्रतिहतिं ययुरर्जुनमुष्टयः।
भृशरया इव सह्यमहीभृतः
पृथुनि रोधसि सिन्धुमहोर्मयः॥ ५॥

शिवेति। कपिध्वजः शिवस्य भुजाहतिभिर्मुष्टिघातैर्भिन्ना विदीर्णाः याः पृथवी महत्यः क्षतयः प्रहाराः व्रणास्ताः सुखमिवानुबभूव। दुःखकरीरपीति भावः। क्षतीर्दुःखं नाजीगणदित्यर्थः। ननु दुःसहदुःखवेगेषु कथमगणनेत्यत्राह—क इति। क इव नाम को नु खलु सत्त्ववतां सत्त्वाधिकानां बृहन्मनसां तेजस्विनामनुकृतेरनुकरणस्यापि क्षमो भवेत्। मनस्विनां चरितं नटवदनुकर्त्तुमपि न कश्चिदीष्टे, तस्य चरणं तु दूरापास्तम्। रौद्ररसाविष्टमनसां मनस्विनां कुतः सुखदुःखगणनेति भावः॥ ३॥

व्रणेति। व्रणमुखेभ्यश्च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलासदृशं भुजान्तरं वक्षो यस्य स तथोक्त उमापतिरभिनवमौषसरागं संध्यारागं बिभर्तीति तथोक्तेन जलधरेण समानं तुल्यं यथा तथा बभौ इत्युपमा॥ ४॥

उरसीति। शूलभृतः शिवस्य उरसि प्रहिताः प्रयुक्ताः अर्जुनस्य मुष्टयः

निपतितेऽधिशिरोधरमायते
समसरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले ॥ ६ ॥

अभिभवोदितमन्युविदीपितः
समभिसृत्य भृशं जवमोजसा ।
भुजयुगेन विभज्य समाददे
शशिकलाभरणस्य भुजद्वयम् ॥ ७ ॥

प्रववृतेऽथ महाहवमल्लयो-
रचलसञ्चलनाहरणो रणः ।

पृथुनि विशाले सह्यमहीभृतः सह्याद्रेः रोधसि तटे स्रोतरयास्तीव्रवेगाः सिन्धोः समुद्रस्य महोर्मय इव मुहुः प्रतिहतिं ययुः ॥ ५ ॥

निपतित इति । अयुगानि चक्षूंषि यस्य तस्यायुगचक्षुषस्त्रिलोचनस्य आयते दीर्घे अरत्नियुगे अरत्न्योर्बद्धमुष्ट्योर्हस्तयोर्युगे युग्मे 'हस्तो मुष्ट्या तु बद्धया सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः । प्रकृते तु मुष्टिमात्रविवक्षया प्रयोगः । शिरोधरायामधीति अधिशिरोधरम-धिकन्धरं समं युगपन्निपतिते सति किरीटिना अर्जुनेन मदादिव त्रीणि चत्वारि वा त्रिचतुराणि । 'संख्ययाव्ययासन—इत्यादिना बहुव्रीहिः । 'चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्' इति समासान्तोऽच्प्रत्ययः । तेषु त्रिचतुरेषु पदेषु लुलितदृष्टि घूर्णितनेत्रं यथा तथा चस्खले स्खलितम् भावे लिट् ॥ ६ ॥

अभिभवेति । अभिभवेनोक्तरूपेण परिभवेनोदित उत्पन्नो यो मन्युः क्रोधस्तेन विदीपितः प्रज्वलितः सोऽर्जुनो भृशं जवं समभिसृत्य समभिद्रुत्य ओजसा बलेन शशिकलाभरणस्य इन्दुमौलेः शिवस्य भुजद्वयं भुजयुगेन विभज्य वियोज्य समाददे जग्राह ॥ ७ ॥

करणशृङ्खलसंकलनागुरु-
र्गुरुभुजायुधगर्वितयोस्तयोः ॥ ८ ॥

अयमसौ भगवानुत पाण्डवः
स्थितमवाङ्मुनिना शशिमौलिना।
समधिरूढमजेन नु जिष्णुना
स्विदिति वेगवशान्मुमुहे गणैः ॥ ९ ॥

प्रचलिते चलितं स्थितमास्थिते
विनमिते नतमुन्नतमुन्नतौ।
वृषकपिध्वजयोरसहिष्णुना
मुहुरभावभयादिव भूभृता ॥ १० ॥

प्रववृत इति। अथ महाहवे महारणे मल्लयोर्बलीयसोः 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' इति विश्वः। गुरुभुजौ एवायुधं तेन गर्वितयोस्तयोः शिवार्जुनयोः करणानि करचरणबन्धनान्येव शृङ्खलानि येषां तेषां संकलना संघटना तया गुरुर्दुस्तरस्तथा अचलस्य हिमाद्रेः संचलनं कम्पस्तस्य आहरणः आरोपकः कर्त्तरि ल्युट्। रणः प्रववृते प्रावर्त्तत ॥ ८॥

अयमिति। अयं पुरोवर्त्ती पुमान् असौ भगवान् प्रसिद्धो देवः। तदुक्तम् 'इदमः समक्षरूपं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्' इति। उत पाण्डवः अयं हि तिष्ठदवस्थायां भ्रम इति वेदितव्यम्। अथ पतनावस्थायामाह—मुनिना अवाक् अधः स्थितम् उत शशिमौलिना अजेन देवेन नु समधिरूढमुपरिस्थितमथ जिष्णुना स्वित् अर्जुनेन वा समधिरूढमित्येवं गणैः प्रमथैर्वेगवशात् मुमुहे भ्रान्तम्। 'मुह वैचित्त्ये' भावे लिट् ॥ ९ ॥

प्रचलिते इति। असहिष्णुना तयोर्भारमसहमानेन भूभृता शैलेन अभावभयाद्विनाशभयादिव मुहुर्वृषस्य कपिश्च ध्वजे ययोस्तयोर्वृषकपि-

करणशृङ्खलनिःसृतयोस्तयोः
कृतभुजध्वनि वल्गु विवल्गतोः ।
चरणपातनिपातितरोधसः
प्रससृपुः सरितः परितः स्थलीः ॥ ११ ॥

वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षिति-
र्निजगृहे तिसृणां जयिनं पुराम् ॥ १२ ॥

ध्वजयोः प्रचलितेति चलने सति चलितं प्रचेले आस्थिते तूष्णोमवस्थाने स्थितं तथैव तस्थे । विनमिते सम्यगाक्रमणे सति नतं नम्रीभूतम् अनामीति यावत् । उन्नतौ उन्नमने सति उन्नतमुदनामि । सर्व्वत्र भावे क्तः ॥ १० ॥

करणेति । करणानि करचरणबन्धविशेषास्तान्येव शृङ्खलानि तेभ्यो निःसृतयोः मुहुस्त्यक्तबन्धयोरित्यर्थः । कृतो भुजध्वनिर्भुजास्फोटनशब्दो यस्मिन् कर्म्मणि तत्तथा वल्गु सुन्दरञ्च यथा तथा । विवल्गतोरुत्प्लवमानयोस्तयोर्हरपार्थयोश्चरणपातैः पादक्षेपैर्निपातितानि रोधांसि यासां ताः सरितो नद्यः स्थलीः परितः स्थलेषु प्रससृपुः प्रसृताः 'अभितः परितः—' द्वितीया । 'जानपद—' इत्यादिना अकृत्रिमार्थे ङीष् । कूलपातक्षोभात् उद्वेलसलिलाः सरितः, स्थलानि प्रामज्जयमित्यर्थः । एतेन तयोर्भार उक्तः ॥ ११ ॥

वियतीति । वियति अन्तरिक्षे वेगेन परिप्लुतमुत्पतितं तिसृणां पुरां जयिनं त्रिपुरान्तकम् । 'जिदृक्षि—' इत्यादिना इनिप्रत्ययः । कपिध्वजोऽर्जुनश्चरणाभ्यां पादाभ्यामानमितक्षितिः सन् रयेण वेगेन समभिसृत्याभिद्रुत्य अन्तरा मध्यमार्गे चरणयोः पदयोर्निजगृहे निगृहीतवान् । उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राहेत्यर्थः ॥ १२ ॥

विस्मितः सपदि तेन कर्म्मणा
कर्म्मणां क्षयकरः परः पुमान् ।
क्षेप्तुकाममवनौ तमक्षमं
निष्पिपेष परिरभ्य वक्षसा ॥ १३ ॥

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया ।
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥ १४ ॥

अथ हिमशुचिभस्मभूषितं
शिरसि विराजितमिन्दुलेखया ।
स्ववपुरतिमनोहरं हरं
दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५ ॥

विस्मित इति । तेन कर्म्मणा चरणग्रहणरूपेण सपदि विस्मितः सविस्मयः कर्म्मणां क्षयकरः मोक्षप्रद इत्यर्थः । परः पुमान् हरोऽवनौ क्षितौ क्षेप्तुं कामो यस्य तम् । 'तुं काममनसोरपि' इति मकारलोपः । अक्षमसक्तान्तं तं पार्थं वक्षसा परिरभ्य निष्पिपेष गाढ़मालिलिङ्गेत्यर्थः । रथोद्धतावृत्तम् ॥ १३ ॥

तपसेति । भगवान्देवोऽस्यार्जुनस्य विपुलसत्त्वतया बहुसत्त्वसम्पदा धैर्यसंपत्त्येति यावत् । यथा मुदं ययौ तथा तपसा मुदं न ययौ । तथा हि सतां गुणसंहतेस्तपःसेवादिगुणसंघातात् समतिरिक्तमतिशयितं निजं सत्त्वमेवोपकार्युपकारकमहो । प्रमिताक्षरावृत्तम् ॥ १४ ॥

अथेति । अथ हिमशुचिना हिमशुभ्रेण भस्मना भूषितं शिरसीन्दुलेखया विराजितं शोभितमतिमनोहरं सुन्दरं स्ववपुर्दधतम् किरातरूपं विहाय निजविग्रहं दधानं हरमुदीक्ष्य पाण्डवो ननाम प्रणतवान् ।

सहशरधि निजं तथा कार्म्मुकं
वपुरतनु तथैव संवर्म्मितम् ।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम् ॥ १६ ॥

सिषिचुरवनिमम्बुवाहाः शनैः
सुरकुसुममियाय चित्रं दिवः ।
विमलरुचि भृशं नभो दुन्दुभे-
र्ध्वनिरखिलमनाहतस्यानशे ॥ १७ ॥

आसेदुषां गोत्रभिदोऽनुवृत्त्या
गोपायकानां भुवनत्रयस्य ।

अपरवक्त्रं वृत्तम्—'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ' इति लक्षणात् ॥ १५ ॥

सहेति। वृषस्येव गतिर्यस्य सोऽर्जुनस्तस्मिन्समये सह शरधिभ्यां वर्तत इति सहशरधि सनिषङ्गम्। 'वोपसर्जनस्य' इति विकल्पात् सह-शब्दस्य न सभावः। निजं कार्मुकं गाण्डीवं तथैव पूर्ववदेव संवर्मितं सम्यक् कवचितमतनु महत् निजं वपुस्तथैव निहितं यथापूर्वं स्थापितम्। असिमपि खड्गं च तथैव पश्यन् विस्मयमुपाययौ। क्वचित्तु 'वृषभगतिम्' इति पाठः। तत्र वृषभगतिं शिवं च पश्यन् विस्मयमुपाययौ इत्यर्थः। प्रमुदितवदना वृत्तम्—'प्रमुदितवदना भवेन्नौ रलौ' इति लक्षणात् ॥ १६ ॥

सिषिचुरिति। अम्बुवाहाः शनैरवनिं सिषिचुः उक्षांचक्रुः। दिवोऽन्तरिक्षाच्चित्रं विचित्रं सुरकुसुमं मन्दारकुसुमानि जातावेकवचनम्। इयाय आजगाम। अनाहतस्याताड़ितस्य दुन्दुभेः जातावेकवचनम्। ध्वनिः शब्दो विमलरुचि प्रसन्नमखिलं नभो भृशमानशे व्याप। अताड़िता एव दुन्दुभयो नेदुरित्यर्थः। सर्व्वमिदमस्य सर्व्वलोकहितार्थत्वादिति वेदितव्यम् ॥ १७ ॥

रोचिष्णुरत्नावलिभिर्विमानै-
र्द्यौराचिता तारकितेव रेजे ॥ १८ ॥

हंसा बृहन्तः सुरसद्मवाहाः
संह्रादिकण्ठाभरणाः पतन्तः।
चक्रुः प्रयत्नेन विकीर्य्यमाणै-
र्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १९ ॥

मुदितमधुलिहो वितानीकृताः
स्रज उपरि वितत्य सान्तानिकीः।
जलद इव निषेदिवांसं वृषे
मरुदुपसुखयाम्बभूव नैष्वरम् ॥ २० ॥

आसेदुषामिति। गोत्रभिदः इन्द्रस्य अनुवृत्त्यानुस्मरणेन आसेदुषामासन्नानां भुवनत्रयस्य गोपायकानां रक्षकाणां लोकपालादीनाम्। 'गुपूधूप'—इत्यादिनायप्रत्ययः तदन्ताण्ण्वुल्। रोचिष्णवः प्रकाशनशीलाः रत्नावलयो येषां तैः। 'अलंकृञ्'—इत्यादिना इष्णुच्प्रत्ययः। विमानैः पुष्पकैराचिता व्याप्ता द्यौस्तारकिता संजाततारकेव रेजे। उत्प्रेक्षालंकारः ॥१८॥

हंसा इति। बृहन्तो महान्तः सुरसद्मानि विमानानि वहन्तीति सुरसद्मवाहाः। कर्मण्यण्। संह्रादीनि निर्ह्रादीनि मुखराणि कण्ठाभरणानि किङ्किण्यः येषां ते। पतन्तो धावन्तो हंसाः प्रयत्नेन विकीर्य्यमाणैर्विक्षिप्यमाणैरग्रपक्षैः पक्षाग्रैर्व्योम्नः परिष्वङ्गमालिङ्गनं चक्रुरिवेत्युत्प्रेक्षा ॥१९॥

मुदितेति। अथ मरुद्वायुः जलदे मेघे इव वृषे निषेदिवांसमुपविष्टमीश्वरं मुदिता मधुलिहो भृङ्गा याभिस्ता वितानीकृता उल्लोचाकाराः कृताः। 'अस्त्री वितानमुल्लोचः' इत्यमरः। सान्तानिकीः सन्तानकुसुमविकाराः स्रजः। मन्दारमाला इत्यर्थः। सन्तानशब्दाद्विकारार्थे ठक्।

कृतधृति परिवन्दितेनोच्चकै-
र्गणपतिभिरभिन्नरोमोद्गमैः।
तपसि कृतफले फलज्यायसी
स्तुतिरिति जगदे हरेः सूनुना ॥२१॥

शरणं भवन्तमतिकारुणिकं
भव भक्तिगम्यमधिगम्य जनाः।
जितमृत्यवोऽजित भवन्ति भये
ससुरासुरस्य जगतः शरणम् ॥ २२ ॥

'सन्तानः कल्पवृक्षश्च' इत्यमरः। उपरि वितस्य विस्तार्योपसुखयांबभूव प्रह्लादयामास ॥ २० ॥

कृतेति। अभिन्नरोमोद्गमैरविरलरोमाञ्चैर्गणपतिभिः प्रमथमुख्यै-रुच्चकैः परिवन्दितेन साधु साध्विति संस्तुतेन। 'वदि अभिवादन-स्तुत्योः' कर्मणि क्तः। हरेः सूनुनार्जुनेन तपसि कृतं फलं भगवत्साक्षात्-कारलक्षणं येन तस्मिन् कृतफले सति इत्यर्थः। कृतधृति कृतसन्तोषं यथा तथा फलज्यायसी फलाधिकेति वक्ष्यमाणा स्तुतिर्जगदे कथिता ॥२१॥

शरणमिति। हे अजित अपराजित! हे भव! अतिकारुणिकमति-दयालुम्। 'तदस्य प्रयोजनम्' इति ठक्। भक्तिगम्यं भक्तिमात्रसुलभं भवन्तं शरणं रक्षकमधिगम्य जितमृत्यवो विगतमरणाः अमरा भूत्वेत्यर्थः। जनाः ससुरासुरस्य जगतो भये आपदि शरणं स्वयं रक्षितारो भवन्ति। 'शरणं गृहरक्षित्रोः' इति विश्वः। प्रमिताक्षरावृत्तम् ॥ २२ ॥

विपदिति। हे ईश! यावत्तव नतिः प्रणामो न क्रियते पुरुषेणेति शेषः। तावदेवैकं पुरुषमेकाकिनं सन्तमवसादकरी क्षयकरी विपदेति प्राप्नोति। कामसम्पत् मनोरथसंपच्च नाभिकामयते नेच्छति। पुरुषाश्चान्ये लोकास्तमेकं पुरुषं तव स्तुतिमकुर्वाणं न नमन्ति न वशे वर्तन्ते। नानिष्ट-

विपदेति तावदवसादकरी
न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषा-
स्तव यावदीश न नतिः क्रियते ॥ २३ ॥

संसेवन्ते दानशीला विमुक्त्यै
सम्पश्यन्तो जन्मदुःखं पुमांसः ।
यन्निःसङ्गस्त्वं फलस्यानतेभ्य-
स्तत्कारुण्यं केवलं न स्वकार्य्यम् ॥२४॥

प्राप्यते यदिह दूरमगत्वा
यत्फलत्यमरलोकगताय ।
तीर्थमस्ति न भवार्णवबाह्यं
सार्वकामिकमृते भवतस्तत् ॥ २५ ॥

निवृत्तिः न पौष्टप्राप्तिरित्यर्थः । यदा तु त्वां प्रणमन्ति तदैव सर्व्वं लभ्यते इति भावः ॥ २३ ॥

संसेवन्त इति । दानं शीलं स्वभावो निजधर्मो येषां ते दानशीलाः त्वामेवोद्दिश्य दानं कुर्वन्त इत्यर्थः । 'तस्माद्दानं परमं वदन्ति' इति श्रुतेरिति भावः । कुतः ? यतो जन्मदुःखं सम्पश्यन्तः अनुभवन्तः पुमांसो विमुक्त्यै मोक्षाय संसेवन्ते भवन्तमिति शेषः । न च तच्चित्रं किन्त्वानतेभ्यः प्रपन्नेभ्यो निःसङ्गो निस्पृहस्त्वं यत् फलसि फलं ददासि । तेषां फलार्थित्वादिति भावः । तत्केवलं निरुपाधिकं कारुण्यं करुणा । स्वार्थे ष्यञ् । 'कारुण्यं करुणा घृणा' इत्यमरः । न स्वकार्य्यम् एतदेव चित्रम् केवलं परार्थत्वादिति भावः । शालिनीवृत्तम् ॥ २४ ॥

प्राप्यत इति । यत्तीर्थमिहास्मिन् लोके दूरमगत्वा प्राप्यते स्मृतिमात्रसुलभमित्यर्थः । गङ्गादिकं तु न तथेति भावः । यत्तीर्थमरलोक-

व्रजति शुचि पदं त्वयि प्रीतिमान्
प्रतिहतमतिरेति घोरां गतिम् ।
इयमनघ निमित्तशक्तिः परा
तव वरद ! न चित्तभेदः क्वचित् ॥ २६ ॥

दक्षिणां प्रणतदक्षिण ! मूर्त्तिं
तत्त्वतः शिवकरीमविदित्वा ।
रागिणापि विहिता तव भक्त्या
संस्मृतिर्भव ! भवत्यभवाय ॥ २७ ॥

गताय फलति फलं प्रयच्छति। अत्रापि स्मरणमात्रादेवेति भावः। भवः संसारः स एवार्णवस्ततो बाह्यं बहिर्भवं संसारातीतम् मोक्षप्रदमित्यर्थः। 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञप्रत्ययः। सर्वे कामाः प्रयोजनमस्येति सार्वकामिकम्। 'तदस्य प्रयोजनम्' इति ठक्। तत् तादृक् तरन्ति अनेनेति तीर्थं तारकं भवतस्त्वद्दृते। 'अन्यारात्—' इत्यादिना पञ्चमी। अन्यत्स्पष्टम्। औपच्छन्दसिकं वृत्तम् ॥ २५ ॥

व्रजतीति। हे वरद ! त्वयि प्रीतिमान् नरः शुचि निर्मलं पदं कैवल्यं मुक्तिं व्रजति। 'मुक्तिः कैवल्यनिर्वाण—'इत्यमरः। प्रतिहतमतिरुपहतबुद्धिः त्वद्द्वेषीत्यर्थः। घोरां गतिं तीव्रं नरकमेति प्राप्नोति। न चैतावता तव रागद्वेषकलङ्कपङ्क इत्याह—इयमिति। हे अनघ ! निष्कलङ्क ! इयं भक्ताभक्तयोरिति शेषः। विधेयप्राधान्यात् स्त्रीलिङ्गता। परा दुस्तरा निमित्तशक्तिर्निमित्तभूता शक्तिः स्वचेष्टितमहिमा। तव क्वचित् भक्ते द्वेषिणि वा कुत्रापि चित्तभेदो बुद्धिवैषम्यं नास्ति। स्वकर्मणैव जन्तुस्तरति पतति वा त्वं साक्षितया सर्वत्र सम इत्यर्थः ॥ २६ ॥

दक्षिणामिति। हे भव ! हे प्रणतदक्षिण ! प्रणतेषु दाक्षिण्यसम्पन्न ! दाक्षिण्यं परच्छन्दानुवर्तित्वम्। 'दक्षिणः सरलावामपरच्छन्दानुवर्तिषु' इति विश्वः। शिवकरीं श्रेयस्करीम्। 'कृञो हेतु—' इत्यादिना टप्र-

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥ २८ ॥

युक्ताः स्वशक्त्या मुनयः प्रजानां
हितोपदेशैरुपकारवन्तः।
समुच्छिनत्सि त्वमचिन्त्यधामा
कर्माण्युपेतस्य दुरुत्तराणि ॥ २९ ॥

त्यये ङीप्। तव दक्षिणां मूर्त्तिं तत्त्वतः याथार्थ्येनाविदित्वापि रागिणा रागद्वेषवतापि भक्त्या विहिता तव संस्मृतिः सम्यक्संस्मरणमभवाय संसारनिवृत्तये। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। भवति तत्त्वज्ञानं विनापि भक्तिपूर्विका तव संस्मृतिरेव मुक्तिनिदानमित्यर्थः। स्वागतावृत्तम् ॥ २७ ॥

दृष्ट्वेति। प्रेक्षया बुद्ध्या करोतीति प्रेक्षाकारी विमृश्यकारी दृश्यानि द्रष्टव्यानि दृष्ट्वा ज्ञात्वा आचरणीयानि विधाय कर्त्तव्यानि च कृत्वा अपायैर्मुक्तं नाशवर्जितं पदं याति। 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति श्रुतेः। ज्ञानकर्मभ्यां मुक्तिरित्यर्थः। किंतु तेऽपि ज्ञानकर्मणी त्वद्विषय एव मुक्तिसाधनं नान्यविषये इत्याशयेनाह—सम्यगिति। यः पुमान् परं पुरुषोत्तमत्वेन सर्वोत्कृष्टं त्वां पश्यति तस्य सम्यग्दृष्टिः सम्यग्ज्ञानम्। यश्च त्वामुपास्ते सेवते स एव साधु विधेयं विधत्ते साधुकारीत्यर्थः। मत्तमयूरं वृत्तम्। लक्षणं तूक्तम् ॥ २८ ॥

युक्ता इति। मुनयो व्यासादयः स्वशक्त्या निजयोगमहिम्ना युक्ताः, तथा हितोपदेशैर्विधिनिषेधवाक्यैः स्मृतीतिहासपुराणमुखेन प्रजानामुपकारवन्तः कृतोपकाराश्च। मोक्षप्रदस्तु तेषामन्येषां च त्वमेवेत्याह—समिति। अचिन्त्यधामा अचिन्त्यमहिमा त्वमेवोपेतस्य शरणं प्राप्तस्य

सन्निबद्धमपहर्त्तुमहार्य्यं
भूरि दुर्गतिभयं भुवनानाम् ।
अद्भुताकृतिमिमामतिमायः
त्वं बिभर्षि करुणामय ! मायाम् ॥ ३० ॥

न रागि चेतः परमा विलासिता
वधूः शरीरेऽस्ति न चास्ति मन्मथः ।
नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम् ॥ ३१ ॥

प्रपन्नस्य सम्बन्धीनि दुरुत्तराणि सुदुस्तराणि कर्माणि बन्धकानि पुण्यपापानि समुच्छिनत्सि नाशयसि । ते त्वत्रासमर्था एवेति भावः ॥ २९ ॥

सन्निबद्धमिति । अतिक्रान्तो मायां बन्धरूपामतिमायः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । हे करुणामय ! हे कृपालो ! सन्निबद्धं स्वकर्मणा दृढबद्धमत एवाहार्य्यमन्यैरनुच्छेद्यं भूरि प्रभूतं भुवनानां दुर्गतिभयं नरकभयम् । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । अपहर्त्तुमद्भुताकृतिं विचित्ररूपामिमां मायां दृश्यमानां लीलाविग्रहरूपां बिभर्षि । अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः । भवतस्तु परोपकारार्थं इत्यर्थः ॥ ३० ॥

न रागीति । हे देव ! चेतस्तव चित्तं रागि रागयुक्तं न परमयोगित्वादिति भावः । तथापि परमा निरतिशया विलासिता शृङ्गारादिचेष्टाशीलता भिक्षाटनादिषु विहरणेन तौर्यत्रिकव्यसनितया चेति भावः । किञ्च शरीरेऽर्द्धाङ्गे वधूरस्ति प्रसिद्धं चैतदिति भावः । तथापि मन्मथः कामस्तु नास्ति तस्य भस्मीकरणादिति भावः । किञ्च उषसि प्रातःसंध्यायां धातुर्ब्रह्मणो नमस्क्रिया वन्दनम् । स्वयं जगद्वन्द्यस्यापीत्यर्थः । इतीत्थं विरुद्धमिदमुक्तम् ईहितं चेष्टितं निसर्गतो दुर्बोधं

तवोत्तरीयं करिचर्म्म साङ्गजं
ज्वलन्मणिः सारशनं महानहिः।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति ॥ ३२ ॥

अविग्रहस्याप्यतुलेन हेतुना
समेत्य भिन्नद्वयमूर्त्ति तिष्ठतः।
तवैव नान्यस्य जगत्सु दृश्यते
विरुद्धवेशाभरणस्य कान्तता ॥ ३३ ॥

दुराकलनीयं दुर्ग्रहमित्यर्थः। अदृष्टपूर्वत्वादिति भावः। वंशस्थं वृत्तम् ॥ ३१ ॥

तवेति। हे देव! तव साङ्गजं सलोमकं करिचर्मोत्तरीयं संव्यानम्। 'संव्यानमुत्तरीयं च' इत्यमरः। दुःस्पर्शमिति भावः। ज्वलन्मणिर्ज्वलद्रत्नो महानहिः सारशनं कटिभूषाविशेषः। योऽन्येषां प्राणहर इत्यर्थः। 'क्लीबे सारशनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु' इत्यमरः। आस्यपङ्क्तिः कपालमाला स्रक् माल्यं शवभस्म चन्दनम्। उभयत्राप्यस्पृश्यममङ्गलं चेति भावः। किञ्च—एतानि वस्तूनि हिमांशोः कला च समं तुल्यतया चकासति दीप्यन्ते त्वदाश्रयवशादरम्यस्यापि रम्यतेति किमशक्यं तवेति भावः ॥ ३२ ॥

अविग्रहस्येति। अविग्रहस्य वस्तुतोऽशरीरस्यापि सतोऽतुलेन दुर्बोधत्वादसदृशेन हेतुना, केनापि कारणेनेत्यर्थः। समेता संगता भिन्ना विलक्षणा च द्वयी द्विविधा स्त्रीपुंसात्मिका मूर्त्तिर्यस्मिन् कर्म्मणि तत्समेत्यभिन्नद्वयमूर्त्ति यथा तथा तिष्ठतः अशरीरस्य शरीरमेव विरुद्धम्। तदपि नारीनरात्मकमिति किमतस्त्विस्मयोति भावः। एवंविधस्य तवैव जगत्सु विरुद्धे वेषाभरणे पूर्व्वोक्ते यस्य तस्य विरुद्धवेषाभरणस्यापि सतः कान्तता रमणीयता दृश्यते अन्यस्य न दृश्यते, तस्मादचिन्त्योऽसौ तव महिमेति भावः ॥ ३३ ॥

आत्मलाभपरिणामनिरोधै-
र्भूतसङ्घ इव न त्वमुपेतः ।
तेन सर्वभुवनातिग ! लोके
नोपमानमसि नाप्युपमेयः ॥ ३४ ॥

त्वमन्तकः स्थावरजङ्गमानां
त्वया जगत्प्राणिति देव ! विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि
त्वं कारणं कारणकारणानाम् ॥ ३५ ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।

आत्मेति । हे देव ! त्वं भूतसङ्घ इव शरीरादिसंघात इव आत्मलाभपरिणामनिरोधैर्जन्मजरामरणैरुपेतो युक्तो नासि । तेन कारणेन हे सर्व्वभुवनातिग ! सर्व्वलोकोत्तर ! उपमीयतेऽनेनेत्युपमानं नासि । उपमीयते यत्तदुपमेयमपि, नासि, न कश्चित्त्वात्सदृशोऽस्ति त्वमपि नान्यसदृशः । अनन्यसाधारणत्वादित्यर्थः । वृत्तमुक्तम् ॥ ३४ ॥

त्वमिति । हे देव ! त्वं स्थावरजङ्गमानामन्तकः संहर्त्ता । त्वया हेतुना विश्वं सर्व्वं जगत्प्राणिति जीवति त्वं योगिनां हेतुः प्रवर्त्तकं कर्म्म फलं भोगश्च ते हेतुफले रुणत्सि निवर्तयसि । तेषां त्वमेव बन्धविमोचक इत्यर्थः । किञ्च—त्वं कारणानि भूतानि तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां कारणकारणानां कारणं प्रकृत्यादि द्वारोत्पत्तिस्थानम् । अत्र सर्व्वत्र 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिः, प्रमाणमिति भावः ॥ ३५ ॥

पाविन्याः शरणागतार्त्तिहारिणे ते
माहात्म्यं भव ! भवते नमस्क्रियायाः ॥३६॥

तरसा भुवनानि यो बिभर्त्ति
ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते
शिव ! तस्मै पवनात्मने नमस्ते ॥ ३७ ॥

भवतः स्मरतां सदासने
जयिनि ब्रह्ममये निषेदुषाम्।
दहते भववीजसन्ततिं
शिखिनेऽनेकशिखाय ते नमः ॥ ३८ ॥

रक्षोभिरिति। रक्षोभिः राक्षसैः सुरमनुजैः सुराश्च मनुजाश्च तैर्देव-मनुष्यैर्दितेः सुतैर्दैत्यैर्वा लोकेषु यदविकलं संपूर्णमाधिपत्यमाप्तं प्राप्तं तत् हे भव ! शरणागतानामार्त्तिहारिणे दुःखनाशकायते भवते तुभ्यं नमस्क्रियायाः 'नमः स्वस्ति—'इत्यादिना चतुर्थी। पाविन्याः पापहारिण्या माहात्म्यं सामर्थ्यम्। 'न कस्य उन्नत्यै भवति शिरसस्त्वय्यवनतिः' इति भावः। प्रहर्षिणीवृत्तम् ॥ ३६ ॥

अथाष्टमूर्त्तिषु काश्चित् स्तुवन् वायुमूर्त्तिं तावदाह—तरसेति। यः पवनस्तरसा बलेन। 'तरसो बलरंहसो' इति विश्वः। भुवनानि बिभर्ति प्राणात्मना धारयति। यतो यत्प्रेरणात् पवित्रं परं परमं ब्रह्म वर्णात्मकं ध्वनति नदति। 'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् हि संजनयति' इति वचनात्। यः पवनः परितो दुरितानि पातकानि पुनीते शोधयति नाशयतीति यावत्। हे शिव ! तस्मै पावयतीति पवनो वायुः स एवात्मा यस्य तस्मै पवनात्मने ते तुभ्यं नमः। वृत्तमुक्तम् ॥ ३७ ॥

आबाधामरणभयार्च्चिषा चिराय
प्लुष्टेभ्यो भव ! महता भवानलेन ।
निर्व्वाणं समुपगमेन यच्छते ते
बीजानां प्रभव नमोऽस्तु जीवनाय ॥३९॥

यः सर्व्वेषामावरीता वरीयान्
सर्व्वैर्भावैर्नावृतोऽनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्ते
ऽविज्ञेयाय व्योमरूपाय तस्मै ॥ ४० ॥

अथाग्निमूर्त्तिं स्तौति—भवत इति । जयिनि विजयशीले सर्व्वोत्कृष्टे ब्रह्ममये ब्रह्मप्रधाने । तत्प्राप्त्युपायत्वात् सदासने सम्यगासने योगासने इत्यर्थः । निषेदुषामुपविष्टानां भवतः स्मरतां भवन्तं ध्यायताम् । 'अधीगर्थ—'इत्यादिना शेषे कर्म्मणि षष्ठी । भवबीजसन्ततिं संसारनिदान-समूहं भव निदानकर्म्मसंघातं दहते भस्मीकुर्व्वतेऽनेकशिखाय बहुज्वालाय शिखिने वह्निमूर्त्तये ते तुभ्यं नमः ॥ ३८ ॥

अथ जलमूर्त्तिं स्तौति—अबाधेति । हे भव ! बीजानां प्रभव ! कारणभूत ! 'जीवानाम्' इति पाठे तेषां त्वत्प्रतिबिम्बत्वादिति भावः । आबाधा आध्यात्मिकादिदुःखं मरणं पञ्चत्वं ताभ्यां भयं तदेवार्च्चिर्यस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं प्लुष्टेभ्यो दग्धेभ्यः समुप-गमेन संसेवया निर्व्वाणं सन्तापशान्तिं यच्छते ददते जीवयतीति जीवनं तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥ ३९ ॥

इदानीं नभोमूर्त्तिं स्तौति – य इति । भवेत्यनुवर्त्तते । भवत्यस्मा-दयं प्रपञ्च इति भवस्तत्सम्बुद्धौ सकलजगज्जनकेति यावत् । वरीयान् उरुतरः विभुरित्यर्थः । 'प्रियस्थिर—' इत्यादिना उरुशब्दस्य वरादेशः । यस्त्वं सर्व्वेषां वस्तूनामावरिता आच्छादयिता । वृणोतेस्तृच्प्रत्ययः सर्व्वै-र्भावैः पदार्थैर्नावृतः केनापि कदाचिदप्यनावृतः स्वयं व्यापकत्वादिति

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे ।
अतीत्य वाचां मनसां च गोचरं
स्थिताय ते तत्पतये नमो नमः ॥ ४१ ॥

असंविदानस्य ममेश संविदां
तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विरोध्य मोहात्पुनरभ्युपेयुषां
गतिर्भवानेव दुरात्मनामपि ॥ ४२ ॥

भावः । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्य असौ अनादिनिष्ठो नित्यः । 'निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । इन्द्रियाणां चक्षुरादीनां मार्गातीताय अतीन्द्रियाय । अतएवाविज्ञेयाय अपरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥ ४० ॥

अणीयस इति । भवेत्यनुवर्त्तते । हे भव ! अणीयसे सूक्ष्मतराय तथापि विश्वविधारिणे जगद्धारकाय ते तुभ्यं नमः । अन्तिकस्थायान्तर्यामितया सन्निकृष्टाय सते । तथापि दवीयसे दुर्ग्रहत्वाद् दूरतराय ते तुभ्यं नमः । वाचां मनसाञ्च गोचरं विषयमतीत्य स्थितायावाङ्मनसगोचराय । तत् पतये तेषां वाङ्मनसामध्यक्षाय । तदध्यक्षस्तैरेव न दृश्यत इति विरोधः । ते तुभ्यं नमो नमः । 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः । 'सम्भ्रमेण प्रवृत्तिश्चापलम्' इति काशिका । भक्त्युद्रेकाच्च सम्भ्रमः । विरोधाभासोऽलङ्कारः ॥ ४१ ॥

असंविदानस्येति । संविदां ज्ञानानामीशः । 'ईशानः सर्व्वविद्यानाम्' इति श्रुतेरिति भावः । 'प्रेक्षोपलब्धिश्चित् संवित्' इत्यमरः । असंविदानस्य अजानतः । 'समो गम्यृच्छि—' इत्यादिना विदेः संपूर्वादकर्मकात् शानच्प्रत्ययः । मम दुश्चरितं अस्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढ़ुम् । तिजेः सन्नन्तात् तुमुन्प्रत्ययः । त्वमर्हसि योग्योऽसि ।

आस्तिक्यशुद्धमवतः प्रियधर्म्म धर्म्मं
धर्म्मात्मजस्य विहितागसि शत्रुवर्गे ।
सम्प्राप्नुयां विजयमीश यया समग्रां
तां भूतनाथ विभुतां वितराहवेषु ॥ ४३ ॥

इति निगदितवन्तं सूनुमुच्चैर्म्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४ ॥

ननु तव महानपराधः कथं सोढ़व्यस्तत्राह—विरोध्येति । मोहादज्ञानात् विरोध्य वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चात् शरणागतानां दुरात्मनामपि भवानेव गतिः । त्वं हि शरणागतानामपराधं न गणयसीत्यर्थः ॥४२॥

सम्प्रति वरं याचते—आस्तिक्येति । हे प्रियो धर्मो यस्येति प्रियधर्म्म । 'समासान्तो विधिरनित्यः' इति न समासान्तोऽनिच्प्रत्ययः । परलोके मतिरस्तीत्यास्तिकः पारलौकिकः । 'अस्ति नास्ति दिष्टम्—' इति ठक् । तस्य भावः आस्तिक्यं विश्वासस्तेन शुद्धं विमलं धर्म्मं वैदिकाचारमवतः पालयतो धर्म्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापराधे शत्रुवर्गे विषये हे ईश ! यया समग्रास्त्रवैभवेन विजयं संप्राप्नुयां अजेयम् । हे भूतनाथ ! आहवेषु तां विभुतां विभूतिमस्त्रविद्यां वितर देहि ॥४३॥

इतीति । इत्युच्चैर्निगदितवन्तं प्रणतशिरसं मघोन इन्द्रस्य सूनुमर्जुनमीशो महादेवः सादरं यथा तथा सान्त्वयित्वा उपसान्त्व्य अस्मै अर्जुनाय ज्वलतानलेन तेजसा दीप्त्या परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं धनुःशब्दोपपदं वेदम् धनुर्वेदमित्यर्थः । अभ्यादिदेश ददौ, अध्यापयामासेत्यर्थः । 'धनुरुपपदं वेदम्' इत्यत्र धनुरुपपदत्वं वेदशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावादवाच्यवचनदोषमाहुरालंकारिकाः । तदुक्तम्—'यदेवावाच्यवचनम-

स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥४५॥

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै ।
अवितथफलमाशीर्व्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥ ४६ ॥

असंहार्य्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्व्वीं वोढुं स्थितमनवसादाय जगत ।

वाच्यवचनं हि तत्' इति । समाधानं तु धनुःशब्दविशेषितेन वेदशब्देन शब्दपरेणेत्यर्थः । परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथञ्चित् सम्पाद्यम् ॥ ४४ ॥

स इति । पिङ्गाक्षः पिङ्गलाक्षः श्रीमान् शोभावान् भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत् । त्रिगुणस्त्रिशिखः परिवारः आकारो यस्य तत्त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणमायुधं यस्य स तथोक्तः । सूर्य्यपक्षे तु गुणत्रयपरिवारस्त्रय्यात्मक इति योज्यम् । स धनुर्वेदः सुरगणैः स्तुतिभिरुपगीतः सन् ईशानं शिवं त्रिस्त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः । परीत्य प्रदक्षिणीकृत्य वीरं पाण्डोः सुतमर्जुनम् भास्वान् सूर्य्यो जलदमिव अभिययौ । शिखरिणीवृत्तम् ॥ ४५ ॥

अथेति । अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगा इन्द्रादयो लोकपालाः शशधरमौलेः शम्भोरभ्यनुज्ञामवाप्य पूर्णकामाय तस्मै पाण्डवाय अवितथफलममोघफलमाशीर्वादमारोपयन्तः प्रयुञ्जाना विजयि जयशीलं विविधं नानाविधमस्त्रमैन्द्रादिकं वितेरुर्ददुः । मालिनीवृत्तम् ॥४६॥

स्वधाम्ना लोकानां तमुपरि कृतस्थानममरा-
स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ॥४७॥
व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसङ्घैः ।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम ॥ ४८ ॥

इति भारविकृतौ किरातार्जुनीये महाकाव्ये
धनञ्जयास्त्रलाभो नाम
अष्टादशः सर्गः ।

असंहार्य्योत्साहमिति । तरसा बलेन वेगेन च जयिनं जयशील-मुदयमस्त्रलाभरूपमभ्युदयम् । अन्यत्र उदयाद्रिञ्च प्राप्य असंहार्य्योत्साहं संहर्त्तुमशक्यमुद्योगं जगतोऽनवसादाय क्षेमाय गुर्वीं धुरं दुष्ट-निग्रहभारं तमोऽपसंहाररूपं च भारं वोढुं स्थितम्, स्वधाम्ना स्वतेजसा लोकानामुपरि कृतस्थानं कृतस्थितिं कृतपदम् अन्यत्रोपरिवर्त्तमानम् । तपो-लक्ष्म्या दीप्तं तं पाण्डवममरा इन्द्रादयो दिनकृतं सूर्य्यमिवोच्चैरुपजगुः साधु महाभाग्योऽसीति तुष्टुवुः । शिखरिणीवृत्तम् ॥ ४७ ॥

व्रजेति । शिवेन व्रज स्वपुरं गच्छ अरिलोकं जयेति गदितः उक्तः । यतः पादपद्मानतः शिवपादपङ्कजानतः सन् । तथा देवसङ्घैः श्लाघितः स्तुतः अतएव धृता गुर्वी जयलक्ष्मीर्येन स पाण्डुपुत्रोऽर्जुनो निजगृहं स्वाश्रमं गत्वा प्राप्य अथ सादरं यथा तथा धर्मसूनुं युधिष्ठिरं ननाम नमश्चक्रे ॥४८॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्याया-
मर्जुनवरप्रदानो नाम अष्टादशः सर्गः ॥१८॥

———

समाप्तमिदं किरातार्जुनीयं नाम महाकाव्यम् ।

—[*]—

1-6. 10-9-35-

## किरातार्जुनीयस्य १५श सर्गे स्थितानां चित्रबन्धानामुद्धारः

—※—

### गोमूत्रिकाबन्धः । (१२श श्लोकः)

ना सु रो यं न वा ना गो ध र सं स्थो न रा क्ष सः

ना सु खो यं न वा भो गो ध र णि स्थो हि रा ज सः

### सर्वतोभद्रः । (२५श श्लोकः)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| दे | वा | का | नि | नि | का | वा | दे |
| वा | हि | का | स्व | स्व | का | हि | वा |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| का | का | रे | भ | भ | रे | का | का |
| वा | हि | का | स्व | स्व | का | हि | वा |
| दे | वा | का | नि | नि | का | वा | दे |

### अर्द्धभ्रमकः । (२७श श्लोकः)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स | स | त्व | र | ति | दे | नि | त्यं |
| स | द | रा | म | र्ष | ना | शि | नि |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | र्ष | ति |

# गभर्णमेण्टपरिगृहीत-काव्यमध्यपरीक्षायां

## किरातार्ज्जुनीयस्य प्रश्नाः ।

### १९१४ खृः ।

१ । सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन् कुरवश्चकासते ॥

(क) अधोरेखपदानामुपरि संक्षिप्तटीका क्रियताम् ।

(ख) 'वितन्वति' इत्यत्र 'वितन्वाने' इति पदं शुद्धमशुद्धं वा भवेत् ? चिराय इत्यस्य पदनिर्व्वाचनं कुरु ।

२ । विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्नपदं नृपश्रियः ॥
अवलीढ़सनाभिरश्वसेनः प्रसभं खाण्डवजातवेदसा वा ।
प्रतिकर्त्तुमुपागतः समन्युः कृतवैरो यदि वा वृकोदरेण ॥

(क) व्याख्यायतामिमौ श्लोकौ ।

(ख) (१) श्लोके को नामालङ्कारः ? अत्र कश्चिदलङ्कारदोषो वर्त्तते किं नवा ? वर्त्तते चेत् तं प्रदर्श्य समाधानं कुरु ।

(ग) आयति-शब्दस्य कोऽर्थः ? कथं वा एष निष्पन्नः ? 'पदं' इति केन सह अन्वितं ? "अगरीयान्" इत्यनेन चेत्, कथमस्य भिन्नलिङ्गरूपपदेन सह सामानाधिकरण्यम् ?

(घ) (२) श्लोकोक्तमैतिहासिकविवरणं सरलसंस्कृतभाषया विवृणु ।

### १९१५ खृः ।

१ । यशोऽधिगन्तुं सुखलिप्सया वा, मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ।
अतीतसंख्या विहिता ममाग्निना, शिलीमुखाः खाण्डवमत्तुमिच्छता ।
अनादृतस्यामरसायकेष्वपि स्थिता कथं शैलजनाशुगे धृतिः ॥

(क) वक्तृवोद्धव्यनिर्द्देशपूर्व्वकं अन्वयमुखेन अनयोः श्लोकयोः व्याख्या कार्य्या ।

(ख) प्रथमपद्यस्य प्रथमार्द्धे यदि कश्चिद्दोषः प्रतीयते स नामतः स्वरूपतश्च निर्द्दिश्यताम् । 'अतिवर्त्तितुं' 'उपैति' 'लिप्सा' इत्येतेषां प्रकृति-

भूतानां धातूनां लुङि ( ढाम् ) लिटि (ढ्याम्) प्रथमपुरुषैकवचने रूपाणि प्रदर्शय ।

(ग) द्वितीयपद्यसम्बद्धा पौराणिकी कथा स्वरचितेन संस्कृतेन वर्णनीया ।

१८१६ खृः ।

१ । (क) महौजसो मानधना धनार्च्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः ।
न संहतास्तस्य न भिन्नवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥

(ख) स्फुटता न पदैरपाकृता
न च न स्वीकृतमर्थगौरवम् ।
रचिता न पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित् ॥

(ग) निरीक्ष्य संरम्भनिरस्तधैर्य्यं
राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥

(घ) उपारताः पश्चिमरात्रिगोचरा-
दपारयन्तः पतितुं जवेन गां ।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं
गवां गणाः प्रस्नुतपीवरौधसः ॥

(ङ) श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि साधवः ॥

(च) विजिगीषते यदि जगन्ति युगपदथ संजिहीर्षति ।
प्राप्तुमभवमभिवाञ्छति वा वयमस्य नो
विषहितुं क्षमा रुचः ॥

उद्धृतानां श्लोकानां ये केचित् त्रयः श्लोकाः वक्तृबोद्धव्यप्रस्तावोल्लेख-पूर्व्वकं व्याख्येयाः ।

(क)—(ङ) चिह्नितश्लोकयोरलङ्कारनिर्द्देशः क्रियताम् ।

न संहताः, न भिन्नवृत्तयः, इत्युभयत्र कीदृशः समासः ? अर्थगौरवमित्यत्र षष्ठीसमासः कथं समर्थनीयः ? 'निरीच्य' इत्यत्र ल्यब्निर्द्देशः कथं साधुः ? पश्चिमरात्रिशब्दे कथं न समासान्तः ? विजिगीषते इत्यत्र कथमात्मनेपदम् ?

२। किरातार्ज्जुनीयस्य त्रयोदशचतुर्द्दशसर्गोक्तो वनेचरार्ज्जुनयोरुक्तिप्रत्युक्तिसारः सरलसंस्कृतेन निवध्यताम् ।

१८१७ खृः ।

१। (क) यदि प्रमाणीकृतमार्य्यचेष्टितं
किमित्यदोषेण तिरस्कृता वयम् ।
अयातपूर्व्वा परिवादगोचरम्
सतां हि वाणी गुणमेव भाषते ॥

(ख) यशोऽधिगन्तुं सुखलिप्सया वा ।
मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ।

(क) व्याख्या कार्य्या ।

(ख) अदोषेण इत्यत्र कः समासः ?

४। (क) इन्द्रार्ज्जुनयोरुक्तिप्रत्युक्तिसारमाकलय्य सरलसंस्कृतभाषया नातिविस्तरं समालोचना कार्य्या ।

(ख)। दुरचान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥

अत्र नीतानीति दुरचानिति च पदद्वयस्य सयुक्तिकं विभक्तिनिर्द्देशः कार्य्यः ।

(ग) यदा विगृह्णाति हृतं तदा यशः
करोति मैत्रीमथ दूषिताः क्रियाः ।
स्थितिं समीच्योभयथा परीचकः
करोत्यवज्ञोपहतं पृथग् जनम् ॥

विशदीक्रियतामयं श्लोकः ।

१९१८ खृः ।

१ । अलङ्कारनिर्द्देश-समर्थनपुरःसरं व्याख्यायन्ताम् सरलसंस्कृत-भाषया—

यदि प्रमाणीकृतमार्य्यचेष्टितं, किमित्यदोषेण तिरस्कृता वयम् ।
अयातपूर्व्वा परिवादगोचरं, सतां हि वाणी गुणमेव भाषते ॥

दूरत्थान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनम् ईदृशी भवितव्यता ॥

अथ क्षमामेव निरस्त-विक्रमश्चिराय पर्य्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्मकार्म्मुकं, जटाधरः सन् जुहुधीह पावकम् ॥

(क) अधोरेखशब्दानां व्याकरणानुगता व्याख्या क्रियताम् ॥

२ । भारव्युत्तरचरितयोः पञ्चशः अत्युत्तमाः श्लोकाः उद्ध्रियन्ताम् ।

१९१९ खृः ।

१ । वक्तृवोद्धव्य-निर्द्देश-पूर्व्वकं क्रियतामनुवादः स्वमातृभाषया—

"शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समागतिः ॥

२ । व्याख्यायन्तां स्वमातृभाषया—

श्रियं विकर्षत्यपहन्त्यघानि, श्रेयः परिस्नौति तनोति कीर्त्तिम् ।
सन्दर्शनं लोकगुरोरमोघं, तवात्मयोनेरिव किं न धत्ते ? (क)

(क)—चिह्नितश्लोके कस्तावदलङ्कारः ?

१९२४ खृः ।

१ । (क) अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥

(ख) यशोऽधिगन्तुं सुखलिप्सया वा, मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

(ग) क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः ।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥

(घ) प्रयुज्य सामाचरितं विलोभनं
भयं विभेदाय धियः प्रदर्शितम् ।
तथाभियुक्तञ्च शिलीमुखार्थिना
यथेतरन्न्याय्यमिवावभासते ॥

आश्रयालङ्कारनिर्द्देशपुरःसरमेतयोः द्वयोः कयोश्चित् व्याख्या कार्य्या ।

(क) श्लोके: क्रियामित्यत्र कथं द्वितीया ? (ख) श्लोके को दोषस्तत् समाधानञ्च कीदृशम् ? (ग) श्लोके प्रतिविशेषणसार्थक्य' प्रदर्शनीयम् । (घ) श्लोके "विभेदाये"त्यत्र कथं चतुर्थी ? पदस्य तस्यैव मूलभूत-धातोर्लुङि प्रथमपुरुषैकवचने रूपं कीदृशम् ? रेखाङ्कितपदेषु व्याकरणानुयायिनी टीका कार्य्या ।

(घ)—चिह्नितश्लोकः कस्य कस्य श्लोकस्य उत्तराय निबद्धः कविना ?

१८२५ खः ।

१। (क) शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलं क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥

(ख) दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥

(ग) अनुभाववता गुरु स्थिरत्वादविसंवादि धनुर्धनञ्जयेन ।
स्वबलव्यसनेऽपि पीड्यमानं गुणवन्मित्रमिवानतिं प्रपेदे ॥

वक्तृवोद्धव्य-निर्द्देशपूर्व्वकमेषां द्वयोः कयोश्चित् मल्लिनाथरीत्या व्याख्या कार्य्या ।

(क)—चिह्नितश्लोके कस्तावदलङ्कारः ? किञ्च तस्य लक्षणम् ?

(ख)—चिह्नितश्लोके रेखाङ्कितपदे व्याकरणानुयायिनी टीका कार्य्या ।

१८२६ खः ।

१। (क) अभिवर्षति योऽनुपालयन् विधिवीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोके इवाधितिष्ठति ॥

(ख) गुरून् कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥

(ग) वयं क्व वर्णाश्रमरक्षणोचिताः क्व जातिहीना मृगजीवितच्छिदः ।
सहापकृष्टैर्महतां न सङ्गतं भवन्ति गोमायुसखा न दन्तिनः ॥

एतेषां द्वयोर्वक्तृवोद्धव्यनिर्द्देशपूर्व्वकं मल्लिनाथरीत्या व्याख्या कार्य्या ।

"क" चिह्नितश्लोके शरदमित्यत्र कथं द्वितीया ? "ख" चिह्निते 'ह्रेपयन्ती"त्यत्र व्याकरणानुयायिनी टीका कार्य्या । "ग" चिह्नितश्लोकः कस्योत्तरम् ? श्लोकेऽस्मिन् अलङ्कारः सलक्षणं लिख्यताम् ।

